कर्मणो नास्ति संख्या मे महाज्ञाने विवर्तिनः ।
लोकानां हिंसकः सोऽहं स्त्रीभिर्दुःखेन मारितः ॥ २८ ॥

अतः प्रेतत्वमापन्नो दुर्दशां च वहाम्यहम् ।
वाताहारेण जीवामि दैवाधीनफलोदयात् ॥ २९ ॥

अहो बन्धो कृपासिन्धो भ्रातर्मामाशु मोचय ।
गोकर्णो वचनं श्रुत्वा तस्मै वाक्यमथाब्रवीत् ॥ ३० ॥

गोकर्ण उवाच–
त्वदर्थं तु गयापिण्डो मया दत्तो विधानतः ।
तत्कथं नैव मुक्तोऽसि ममाश्चर्यमिदं महत् ॥ ३१ ॥

गयाश्राद्धान्न मुक्तिश्चेदुपायो नापरस्त्विह ।
किं विधेयं मया प्रेत तत्त्वं वद सविस्तरम् ॥ ३२ ॥

प्रेत उवाच–
गयाश्राद्धशतेनापि मुक्तिर्मे न भविष्यति ।
उपायमपरं कञ्चित्त्वं विचारय साम्प्रतम् ॥ ३३ ॥

इति तद्वाक्यमाकर्ण्य गोकर्णो विस्मयं गतः ।
शतश्राद्धैर्न मुक्तिश्चेदसाध्यं मोचनं तव ॥ ३४ ॥

इदानीं तु निजं स्थानमातिष्ठ प्रेत निर्भयः ।
त्वन्मुक्तिसाधकं किञ्चिदाचरिष्ये विचार्य च ॥ ३५ ॥

धुन्धुकारी निजस्थानं तेनादिष्टस्ततो गतः ।
गोकर्णश्चिन्तयामास तां रात्रिं न तदध्यगात् ॥ ३६ ॥

प्रातस्तमागतं दृष्ट्वा लोकाः प्रीत्या समागताः ।
तत्सर्वं कथितं तेन यज्जातं च यथा निशि ॥ ३७ ॥

विद्वांसो योगनिष्ठाश्च ज्ञानिनो ब्रह्मवादिनः ।
तन्मुक्तिं नैव तेऽपश्यन् पश्यन्तःशास्त्रसञ्चयान् ॥ ३८ ॥

ततः सर्वैः सूर्यवाक्यं तन्मुक्तौ स्थापितं परम् ।
गोकर्णः स्तम्भनं चक्रे सूर्यवेगस्य वै तदा ॥ ३९ ॥

तुभ्यं नमो जगत्साक्षिन् ब्रूहि मे मुक्तिहेतुकम् ।
तच्छ्रुत्वा दूरतः सूर्यः स्फुटमित्यभ्यभाषत ॥ ४० ॥

श्रीमद्भागवतान्मुक्तिः सप्ताहं वाचनं कुरु ।
इति सूर्यवचः सर्वैर्धर्मरूपं तु विश्रुतम् ॥ ४१ ॥

सर्वेऽब्रुवन् प्रयत्नेन कर्तव्यं सुकरं त्विदम् ।
गोकर्णो निश्चयं कृत्वा वाचनार्थं प्रवर्तितः ॥ ४२ ॥

तत्र संश्रवणार्थाय देशग्रामाज्जना ययुः ।
पङ्ग्वन्धवृद्धमन्दाश्च तेऽपि पापक्षयाय वै ॥ ४३ ॥

समाजस्तु महाञ्जातो देवविस्मयकारकः ।
यदैवासनमास्थाय गोकर्णोऽकथयत्कथाम् ॥ ४४ ॥

स प्रेतोऽपि तदाऽऽयातः स्थानं पश्यन्नितस्ततः ।
सप्तग्रन्थियुतं तत्रापश्यत्कीचकमुच्छ्रितम् ॥ ४५ ॥

तन्मूलच्छिद्रमाविश्य श्रवणार्थं स्थितो ह्यसौ ।
वातरूपी स्थितिं कर्तुमशक्तो वंशमाविशत् ॥ ४६ ॥

वैष्णवं ब्राह्मणं मुख्यं श्रोतारं परिकल्प्य सः ।
प्रथमस्कन्धतः स्पष्टमाख्यानं धेनुजोऽकरोत् ॥ ४७ ॥

दिनान्ते रक्षिता गाथा तदा चित्रं बभूव ह ।
वंशैकग्रन्थिभेदोऽभूत्सशब्दं पश्यतां सताम् ॥ ४८ ॥

द्वितीयेऽह्नि तथा सायं द्वितीयग्रन्थिभेदनम् ।
तृतीयेऽह्नि तथा सायं तृतीयग्रन्थिभेदनम् ॥ ४९ ॥

एवं सप्तदिनैश्चैव सप्तग्रन्थिविभेदनम् ।
कृत्वा स द्वादशस्कन्धश्रवणात्प्रेततां जहौ ॥ ५० ॥

दिव्यरूपधरो जातस्तुलसीदाममण्डितः ।
पीतवासा घनश्यामो मुकुटी कुण्डलान्वितः ॥ ५१ ॥

ननाम भ्रातरं सद्यो गोकर्णमिति चाब्रवीत् ।
त्वयाहं मोचितो बन्धो कृपया प्रेतकश्मलात् ॥ ५२ ॥

धन्या भागवती वार्ता प्रेतपीडाविनाशिनी ।
सप्ताहोऽपि तथा धन्यः कृष्णलोकफलप्रदः ॥ ५३ ॥

कम्पन्ते सर्वपापानि सप्ताहश्रवणे स्थिते ।
अस्माकं प्रलयं सद्यः कथा चेयं करिष्यति ॥ ५४ ॥

आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्मभिः कृतम् ।
श्रवणं विदहेत्पापं पावकः समिधोयथा ॥ ५५ ॥

अस्मिन् वै भारते वर्षे सूरिभिर्देवसंसदि ।
अकथाश्राविणां पुंसां निष्फलं जन्म कीर्तितम् ॥ ५६ ॥

किं मोहतो रक्षितेन सुपुष्टेन बलीयसा ।
अध्रुवेण शरीरेण शुकशास्त्रकथां विना ॥ ५७ ॥

अस्थिस्तम्भं स्नायुबद्धं मांसशोणितलेपितम् ।
चर्मावनद्धं दुर्गन्धं पात्रं मूत्रपुरीषयोः ॥ ५८ ॥

जराशोकविपाकार्तं रोगमन्दिरमातुरम् ।
दुष्पूरं दुर्धरं दुष्टं सदोषं क्षणभङ्गुरम् ॥ ५९ ॥

कृमिविड्भस्मसंज्ञान्तं शरीरमिति वर्णितम् ।
अस्थिरेण स्थिरं कर्म कुतोऽयं साधयेन्न हि ॥ ६० ॥

यत्प्रातः संस्कृतं चान्नं सायं तच्च विनश्यति ।
तदीयरससम्पुष्टे काये का नाम नित्यता ॥ ६१ ॥

सप्ताहश्रवणाल्लोके प्राप्यते निकटे हरिः ।
अतो दोषनिवृत्त्यर्थमेतदेव हि साधनम् ॥ ६२ ॥

बुद्बुदा इव तोयेषु मशका इव जन्तुषु ।
जायन्ते मरणायैव कथाश्रवणवर्जिताः ॥ ६३ ॥

जडस्य शुष्कवंशस्य यत्र ग्रन्थिविभेदनम् ।
चित्रं किमु तदा चित्तग्रन्थिभेदः कथाश्रवात् ॥ ६४ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि सप्ताहश्रवणे कृते ॥ ६५ ॥

संसारकर्दमालेपप्रक्षालनपटीयसि ।
कथातीर्थे स्थिते चित्ते मुक्तिरेव बुधैः स्मृता ॥ ६६ ॥

एवं ब्रुवति वै तस्मिन् विमानमागमत्तदा ।
वैकुण्ठवासिभिर्युक्तं प्रस्फुरद्दीप्तिमण्डलम् ॥ ६७ ॥

सर्वेषां पश्यतां भेजे विमानं धुन्धुलीसुतः ।
विमाने वैष्णवान् वीक्ष्य गोकर्णो वाक्यमब्रवीत् ॥ ६८ ॥

गोकर्ण उवाच–
अत्रैव बहवः सन्ति श्रोतारो मम निर्मलाः ।
आनीतानि विमानानि न तेषां युगपत्कुतः ॥ ६९ ॥

श्रवणं समभागेन सर्वेषामिह दृश्यते ।
फलभेदः कुतो जातः प्रब्रुवन्तु हरिप्रियाः ॥ ७० ॥

हरिदासा ऊचुः–
श्रवणस्य विभेदेन फलभेदोऽत्र संस्थितः ।
श्रवणं तु कृतं सर्वैर्न तथा मननं कृतम् ।
फलभेदस्ततो जातो भजनादपि मानद ॥ ७१ ॥

सप्तरात्रमुपोष्यैव प्रेतेन श्रवणं कृतम् ।
मननादि तथा तेन स्थिरचित्ते कृतं भृशम् ॥ ७२ ॥

अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् ।
सन्दिग्धो हि हतो मन्त्रो व्यग्रचित्तो हतो जपः ॥ ७३ ॥

अवैष्णवो हतो देशो हतं श्राद्धमपात्रकम् ।
हतमश्रोत्रिये दानमनाचारं हतं कुलम् ॥ ७४ ॥

विश्वासो गुरुवाक्येषु स्वस्मिन्दीनत्वभावना ।
मनोदोषजयश्चैव कथायां निश्चला मतिः ॥ ७५ ॥

एवमादि कृतं चेत्स्यात्तदा वै श्रवणे फलम् ।
पुनः श्रवान्ते सर्वेषां वैकुण्ठे वसतिर्ध्रुवम् ॥ ७६ ॥

गोकर्ण तव गोविन्दो गोलोकं दास्यति स्वयम् ।
एवमुक्त्वा ययुः सर्वे वैकुण्ठं हरिकीर्तनाः ॥ ७७ ॥

श्रावणे मासि गोकर्णः कथामूचे तथा पुनः ।
सप्तरात्रवतीं भूयः श्रवणं तैः कृतं पुनः ॥ ७८ ॥

कथासमाप्तौ यज्जातं श्रूयतां तच्च नारद ॥ ७९ ॥

विमानैः सह भक्तैश्च हरिराविर्बभूव ह ।
जयशब्दा नमःशब्दास्तत्रासन् बहवस्तदा ॥ ८० ॥

पाञ्चजन्यध्वनिं चक्रे हर्षात्तत्र स्वयं हरिः ।
गोकर्णं तु समालिङ्ग्याकरोत्स्वसदृशं हरिः ॥ ८१ ॥

श्रोतॄनन्यान् घनश्यामान् पीतकौशेयवाससः ।
किरीटिनः कुण्डलिनस्तथा चक्रे हरिः क्षणात् ॥ ८२ ॥

तद्ग्रामे ये स्थिता जीवा आश्वचाण्डालजातयः ।
विमाने स्थापितास्तेऽपि गोकर्णकृपया तदा ॥ ८३ ॥

प्रेषिता हरिलोके ते यत्र गच्छन्ति योगिनः ।
गोकर्णेन स गोपालो गोलोकं गोपवल्लभम् ।
कथाश्रवणतः प्रीतो निर्ययौ भक्तवत्सलः ॥ ८४ ॥

अयोध्यावासिनः पूर्वं यथा रामेण सङ्गताः ।
तथा कृष्णेन ते नीता गोलोकं योगिदुर्लभम् ॥ ८५ ॥

यत्र सूर्यस्य सोमस्य सिद्धानां न गतिः कदा ।
तं लोकं हि गतास्ते तु श्रीमद्भागवतश्रवात् ॥ ८६ ॥

ब्रूमोऽत्र ते किं फलवृन्दमुज्ज्वलं
सप्ताहयज्ञेन कथासु सञ्चितम् ।
कर्णेन गोकर्णकथाक्षरो यैः
पीतश्च ते गर्भगता न भूयः ॥ ८७ ॥

वाताम्बुपर्णाशनदेहशोषणै-
स्तपोभिरुग्रैश्चिरकालसञ्चितैः ।
योगैश्च संयान्ति न तां गतिं वै
सप्ताहगाथाश्रवणेन यान्ति याम् ॥ ८८ ॥

इतिहासमिमं पुण्यं शाण्डिल्योऽपि मुनीश्वरः ।
पठते चित्रकूटस्थो ब्रह्मानन्दपरिप्लुतः ॥ ८९ ॥

आख्यानमेतत्परमं पवित्रं
श्रुतं सकृद्वै विदहेदघौघम् ।
श्राद्धे प्रयुक्तं पितृतृप्तिमावहे-
न्नित्यं सुपाठादपुनर्भवं च ॥ ९० ॥

इति श्रीपद्मपुराणे उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये
गोकर्णमोक्षवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः

कुमारा ऊचुः—
अथ ते सम्प्रवक्ष्यामः सप्ताहश्रवणे विधिम् ।
सहायैर्वसुभिश्चैव प्रायः साध्यो विधिः स्मृतः ॥ १ ॥

दैवज्ञं तु समाहूय मुहूर्तं पृच्छ्य यत्नतः ।
विवाहे यादृशं वित्तं तादृशं परिकल्पयेत् ॥ २ ॥

नभस्य आश्विनोर्जौ च मार्गशीर्षः शुचिर्नभाः ।
एते मासाः कथारम्भे श्रोतॄणां मोक्षसूचकाः ॥ ३ ॥

मासानां विप्र हेयानि तानि त्याज्यानि सर्वथा ।
सहायाश्चेतरे तत्र कर्तव्याः सोद्यमाश्च ये ॥ ४ ॥

देशे देशे तथा सेयं वार्ता प्रेष्या प्रयत्नतः ।
भविष्यति कथा चात्र आगन्तव्यं कुटुम्बिभिः ॥ ५ ॥

दूरेहरिकथाः केचिद्दूरेचाच्युतकीर्तनाः ।
स्त्रियः शूद्रादयो ये च तेषां बोधो यतो भवेत् ॥ ६ ॥

देशे देशे विरक्ता ये वैष्णवाः कीर्तनोत्सुकाः ।
तेष्वेव पत्रं प्रेष्यं च तल्लेखनमितीरितम् ॥ ७ ॥

सतां समाजो भविता सप्तरात्रं सुदुर्लभः ।
अपूर्वरसरूपैव कथा चात्र भविष्यति ॥ ८ ॥

श्रीभागवतपीयूषपानाय रसलम्पटाः ।
भवन्तश्च तथा शीघ्रमायात प्रेमतत्पराः ॥ ९ ॥

नावकाशः कदाचिच्चेद्दिनमात्रं तथापि तु ।
सर्वथाऽऽगमनं कार्यं क्षणोऽत्रैव सुदुर्लभः ॥ १० ॥

एवमाकारणं तेषां कर्तव्यं विनयेन च ।
आगन्तुकानां सर्वेषां वासस्थानानि कल्पयेत् ॥ ११ ॥

तीर्थे वापि वने वापि गृहे वा श्रवणं मतम् ।
विशाला वसुधा यत्र कर्तव्यं तत्कथास्थलम् ॥ १२ ॥

शोधनं मार्जनं भूमेर्लेपनं धातुमण्डनम् ।
गृहोपस्करमुद्धृत्य गृहकोणे निवेशयेत् ॥ १३ ॥

अर्वाक्पञ्चाहतो यत्नादास्तीर्णानि प्रमेलयेत् ।
कर्तव्यो मण्डपः प्रोच्चैः कदलीखण्डमण्डितः ॥ १४ ॥

फलपुष्पदलैर्विष्वग्वितानेन विराजितः ।
चतुर्दिक्षु ध्वजारोपो बहुसम्पद्विराजितः ॥ १५ ॥

ऊर्ध्वं सप्तैव लोकाश्च कल्पनीयाः सविस्तरम् ।
तेषु विप्रा विरक्ताश्च स्थापनीयाः प्रबोध्य च ॥ १६ ॥

पूर्वं तेषामासनानि कर्तव्यानि यथोत्तरम् ।
वक्तुश्चापि तदा दिव्यमासनं परिकल्पयेत् ॥ १७ ॥

उदङ्मुखो भवेद्वक्ता श्रोता वै प्राङ्मुखस्तदा ।
प्राङ्मुखश्चेद्भवेद्वक्ता श्रोता चोदङ्मुखस्तदा ॥ १८ ॥

अथवा पूर्वदिग्ज्ञेया पूज्यपूजकमध्यतः ।
श्रोतॄणामागमे प्रोक्ता देशकालादिकोविदैः ॥ १९ ॥

विरक्तो वैष्णवो विप्रो वेदशास्त्रविशुद्धिकृत् ।
दृष्टान्तकुशलो धीरो वक्ता कार्योऽतिनिःस्पृहः ॥ २० ॥

अनेकधर्मविभ्रान्ताः स्त्रैणाः पाखण्डवादिनः ।
शुकशास्त्रकथोच्चारे त्याज्यास्ते यदि पण्डिताः ॥ २१ ॥

वक्तुः पार्श्वे सहायार्थमन्यः स्थाप्यस्तथाविधः ।
पण्डितः संशयच्छेत्ता लोकबोधनतत्परः ॥ २२ ॥

वक्त्रा क्षौरं प्रकर्तव्यं दिनादर्वाग्व्रताप्तये ।
अरुणोदयेऽसौ निर्वर्त्य शौचं स्नानं समाचरेत् ॥ २३ ॥

नित्यं संक्षेपतः कृत्वा सन्ध्याद्यं स्वं प्रयत्नतः ।
कथाविघ्नविघाताय गणनाथं प्रपूजयेत् ॥ २४ ॥

पितॄन् सन्तर्प्य शुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ।
मण्डलं च प्रकर्तव्यं तत्र स्थाप्यो हरिस्तथा ॥ २५ ॥

कृष्णमुद्दिश्य मन्त्रेण चरेत्पूजाविधिं क्रमात् ।
प्रदक्षिणनमस्कारान् पूजान्ते स्तुतिमाचरेत् ॥ २६ ॥

संसारसागरे मग्नं दीनं मां करुणानिधे ।
कर्ममोहगृहीताङ्गं मामुद्धर भवार्णवात् ॥ २७ ॥

श्रीमद्भागवतस्यापि ततः पूजा प्रयत्नतः ।
कर्तव्या विधिना प्रीत्या धूपदीपसमन्विता ॥ २८ ॥

ततस्तु श्रीफलं धृत्वा नमस्कारं समाचरेत् ।
स्तुतिः प्रसन्नचित्तेन कर्तव्या केवलं तदा ॥ २९ ॥

श्रीमद्भागवताख्योऽयं प्रत्यक्षः कृष्ण एव हि ।
स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे ॥ ३० ॥

मनोरथो मदीयोऽयं सफलः सर्वथा त्वया ।
निर्विघ्नेनैव कर्तव्यो दासोऽहं तव केशव ॥ ३१ ॥

एवं दीनवचः प्रोच्य वक्तारं चाथ पूजयेत् ।
सम्भूष्य वस्त्रभूषाभिः पूजान्ते तं च संस्तवेत् ॥ ३२ ॥

शुकरूप प्रबोधज्ञ सर्वशास्त्रविशारद ।
एतत्कथाप्रकाशेन मदज्ञानं विनाशय ॥ ३३ ॥

तदग्रे नियमः पश्चात्कर्तव्यः श्रेयसे मुदा ।
सप्तरात्रं यथाशक्त्या धारणीयः स एव हि ॥ ३४ ॥

वरणं पञ्चविप्राणां कथाभङ्गनिवृत्तये ।
कर्तव्यं तैर्हरेर्जाप्यं द्वादशाक्षरविद्यया ॥ ३५ ॥

ब्राह्मणान् वैष्णवांश्चान्यांस्तथा कीर्तनकारिणः ।
नत्वा सम्पूज्य दत्ताज्ञः स्वयमासनमाविशेत् ॥ ३६ ॥

लोकवित्तधनागारपुत्रचिन्तां व्युदस्य च ।
कथाचित्तः शुद्धमतिः स लभेत्फलमुत्तमम् ॥ ३७ ॥

आसूर्योदयमारभ्य सार्धत्रिप्रहरान्तकम् ।
वाचनीया कथा सम्यग्धीरकण्ठं सुधीमता ॥ ३८ ॥

कथाविरामः कर्तव्यो मध्याह्ने घटिकाद्वयम् ।
तत्कथामनु कार्यं वै कीर्तनं वैष्णवैस्तदा ॥ ३९ ॥

मलमूत्रजयार्थं हि लघ्वाहारः सुखावहः ।
हविष्यान्नेन कर्तव्यो ह्येकवारं कथार्थिना ॥ ४० ॥

उपोष्य सप्तरात्रं वै शक्तिश्चेच्छृणुयात्तदा ।
घृतपानं पयःपानं कृत्वा वै शृणुयात्सुखम् ॥ ४१ ॥

फलाहारेण वा भाव्यमेकभुक्तेन वा पुनः ।
सुखसाध्यं भवेद्यत्तु कर्तव्यं श्रवणाय तत् ॥ ४२ ॥

भोजनं तु वरं मन्ये कथाश्रवणकारकम् ।
नोपवासो वरः प्रोक्तः कथाविघ्नकरो यदि ॥ ४३ ॥

सप्ताहव्रतिनां पुंसां नियमाञ्छृणु नारद ।
विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे ॥ ४४ ॥

ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् ।
कथासमाप्तौ भुक्तिं च कुर्यान्नित्यं कथाव्रती ॥ ४५ ॥

द्विदलं मधु तैलं च गरिष्ठान्नं तथैव च ।
भावदुष्टं पर्युषितं जह्यान्नित्यं कथाव्रती ॥ ४६ ॥

कामं क्रोधं मदं मानं मत्सरं लोभमेव च ।
दम्भं मोहं तथा द्वेषं दूरयेच्च कथाव्रती ॥ ४७ ॥

वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा ।
स्त्रीराजमहतां निन्दां वर्जयेद्यः कथाव्रती ॥ ४८ ॥

रजस्वलान्त्यजम्लेच्छपतितव्रात्यकैस्तदा ।
द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती ॥ ४९ ॥

सत्यं शौचं दयां मौनमार्जवं विनयं तथा ।
उदारमानसं तद्वदेवं कुर्यात्कथाव्रती ॥ ५० ॥

दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्मवान् ।
अनपत्यो मोक्षकामः शृणुयाच्च कथामिमाम् ॥ ५१ ॥

अपुष्पा काकवन्ध्या च वन्ध्या या च मृतार्भका ।
स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः ॥ ५२ ॥

एतेषु विधिना श्रावे तदक्षयतरं भवेत् ।
अत्युत्तमा कथा दिव्या कोटियज्ञफलप्रदा ॥ ५३ ॥

एवं कृत्वा व्रतविधिमुद्यापनमथाचरेत् ।
जन्माष्टमीव्रतमिव कर्तव्यं फलकाङ्क्षिभिः ॥ ५४ ॥

अकिञ्चनेषु भक्तेषु प्रायो नोद्यापनाग्रहः ।
श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः ॥ ५५ ॥

एवं नगाहयज्ञेऽस्मिन् समाप्ते श्रोतृभिस्तदा ।
पुस्तकस्य च वक्तुश्च पूजा कार्यातिभक्तितः ॥ ५६ ॥

प्रसादतुलसीमाला श्रोतृभ्यश्चाथ दीयताम् ।
मृदङ्गतालललितं कर्तव्यं कीर्तनं ततः ॥ ५७ ॥

जयशब्दं नमःशब्दं शङ्खशब्दं च कारयेत् ।
विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं च दीयताम् ॥ ५८ ॥

विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि ।
गृहस्थश्चेत्तदा होमः कर्तव्यः कर्मशान्तये ॥ ५९ ॥

प्रतिश्लोकं तु जुहुयाद्विधिना दशमस्य च ।
पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् ॥ ६० ॥

अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः ।
तन्मयत्वात्पुराणस्य परमस्य च तत्त्वतः ॥ ६१ ॥

होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये ।
नानाच्छिद्रनिरोधार्थं न्यूनताधिकतानयोः ॥ ६२ ॥

दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् ।
तेन स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः ॥ ६३ ॥

द्वादश ब्राह्मणान् पश्चाद्भोजयेन्मधुपायसैः ।
दद्यात्सुवर्णं धेनुं च व्रतपूर्णत्वहेतवे ॥ ६४ ॥

शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ।
तत्रास्य पुस्तकं स्थाप्यं लिखितं ललिताक्षरम् ॥ ६५ ॥

सम्पूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् ।
वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ॥ ६६ ॥

आचार्याय सुधीर्दत्त्वा मुक्तः स्याद्भवबन्धनैः ।
एवं कृते विधाने च सर्वपापनिवारणे ॥ ६७ ॥

फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ।
धर्मकामार्थमोक्षाणां साधनं स्यान्न संशयः ॥ ६८ ॥

कुमारा ऊचुः–
इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ।
श्रीमद्भागवतेनैव भुक्तिमुक्ती करे स्थिते ॥ ६९ ॥

सूत उवाच–
इत्युक्त्वा ते महात्मानः प्रोचुर्भागवतीं कथाम् ।
सर्वपापहरां पुण्यां भुक्तिमुक्तिप्रदायिनीम् ॥ ७० ॥

शृण्वतां सर्वभूतानां सप्ताहं नियतात्मनाम् ।
यथाविधि ततो देवं तुष्टुवुः पुरुषोत्तमम् ॥ ७१ ॥

तदन्ते ज्ञानवैराग्यभक्तीनां पुष्टता परा ।
तारुण्यं परमं चाभूत्सर्वभूतमनोहरम् ॥ ७२ ॥

नारदश्च कृतार्थोऽभूत्सिद्धे स्वीये मनोरथे ।
पुलकीकृतसर्वाङ्गः परमानन्दसम्भृतः ॥ ७३ ॥

एवं कथां समाकर्ण्य नारदो भगवत्प्रियः ।
प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः ॥ ७४ ॥

नारद उवाच–
धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः करुणापरैः ।
अद्य मे भगवाँल्लब्धः सर्वपापहरो हरिः ॥ ७५ ॥

श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः ।
वैकुण्ठस्थो यतः कृष्णः श्रवणाद्यस्य लभ्यते ॥ ७६ ॥

सूत उवाच–
एवं ब्रुवति वै तत्र नारदे वैष्णवोत्तमे ।
परिभ्रमन् समायातः शुको योगेश्वरस्तदा ॥ ७७ ॥

तत्राययौ षोडशवार्षिकस्तदा
व्यासात्मजो ज्ञानमहाब्धिचन्द्रमाः ।
कथावसाने निजलाभपूर्णः
प्रेम्णा पठन् भागवतं शनैः शनैः ॥ ७८ ॥

दृष्ट्वा सदस्याः परमोरुतेजसं
सद्यः समुत्थाय ददुर्महासनम् ।
प्रीत्या सुरर्षिस्तमपूजयत्सुखं
स्थितोऽवदत्संशृणुतामलां गिरम् ॥ ७९ ॥

श्रीशुक उवाच–
निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥ ८० ॥

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ ८१ ॥

श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां धनं
यस्मिन् पारमहंस्यमेवममलं ज्ञानं परं गीयते ।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् प्रपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥८२॥

स्वर्गे सत्ये च कैलासे वैकुण्ठे नास्त्ययं रसः ।
अतः पिबन्तु सद्भाग्या मा मा मुञ्चत कर्हिचित् ॥ ८३ ॥

सूत उवाच–
एवं ब्रुवाणे सति बादरायणौ
मध्ये सभायां हरिराविरासीत् ।
प्रह्लादबल्युद्धवफाल्गुनादिभि-
र्वृतः सुरर्षिस्तमपूजयच्च तान् ॥ ८४ ॥

दृष्ट्वा प्रसन्नं महदासने हरिं
ते चक्रिरे कीर्तनमग्रतस्तदा ।
भवो भवान्या कमलासनस्तु
तत्रागमत्कीर्तनदर्शनाय ॥ ८५ ॥

प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्तार्जुनोऽभूत् ।
इन्द्रोऽवादीन्मृदङ्गं जयजयसुकराः कीर्तने ते कुमारा
यत्राग्रे भाववक्ता सरसरचनया व्यासपुत्रो बभूव ॥ ८६ ॥

ननर्त मध्ये त्रिकमेव तत्र
भक्त्यादिकानां नटवत्सुतेजसाम् ।
अलौकिकं कीर्तनमेतदीक्ष्य
हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत् ॥ ८७ ॥

मत्तो वरं भाववृताद् वृणुध्वं
प्रीतः कथाकीर्तनतोऽस्मि साम्प्रतम् ।
श्रुत्वेति तद्वाक्यमतिप्रसन्नाः
प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ८८ ॥

नगाहगाथासु च सर्वभक्तै-
रेभिस्त्वया भाव्यमिति प्रयत्नात् ।
मनोरथोऽयं परिपूरणीय-
स्तथेति चोक्त्वान्तरधीयताच्युतः ॥ ८९ ॥

ततोऽनमत्तच्चरणेषु नारद-
स्तथा शुकादीनपि तापसांश्च ।
अथ प्रहृष्टाः परिनष्टमोहाः
सर्वे ययुः पीतकथामृतास्ते ॥ ९० ॥

भक्तिः सुताभ्यां सह रक्षिता सा
शास्त्रे स्वकीयेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवना-
च्चित्तं समायाति हि वैष्णवानाम् ॥ ९१ ॥

दारिद्र्यदुःखज्वरदाहितानां
मायापिशाचीपरिमर्दितानाम् ।
संसारसिन्धौ परिपातितानं
क्षेमाय वै भागवतं प्रगर्जति ॥ ९२ ॥

शौनक उवाच–
शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः ।
सुरर्षये कदा ब्राह्मैश्छिन्धि मे संशयं त्विमम् ॥ ९३ ॥

सूत उवाच–
आकृष्णनिर्गमात्त्रिंशद्वर्षाधिकगते कलौ ।
नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९४ ॥

परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये ।
शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९५ ॥

तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षगते सति ।
ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥ ९६ ॥

इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयानघ ।
कलौ भागवती वार्ता भवरोगविनाशिनी ॥ ९७ ॥

कृष्णप्रियं सकलकल्मषनाशनं च
मुक्त्येकहेतुमिह भक्तिविलासकारि ।
सन्तः कथानकमिदं पिबतादरेण
लोके हि तीर्थपरिशीलनसेवया किम् ॥ ९८ ॥

स्वपुरुषमपि वीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर भगवत्कथासु मत्तान्-
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ ९९ ॥

असारे संसारे विषयविषसङ्गाकुलधियः
क्षणार्धं क्षेमार्थं पिबत शुकगाथातुलसुधाम् ।
किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितकथे
परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०० ॥

रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा ।
कण्ठे सम्बध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०१ ॥

इति च परमगुह्यं सर्वसिद्धान्तसिद्धं
सपदि निगदितं ते शास्त्रपुञ्जं विलोक्य ।
जगति शुककथातो निर्मलं नास्ति किञ्चित्
पिब परसुखहेतोर्द्वादशस्कन्धसारम् ॥ १०२ ॥

एतां यो नियततया शृणोति भक्त्या
यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते
याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥ १०३ ॥

इति श्रीपद्मपुराणे उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये
श्रवणविधिकथनं नाम षष्ठोऽध्यायः ॥ ६ ॥

॥ समाप्तमिदं श्रीमद्भागवतमाहात्म्यम् ॥

# विषयानुक्रमणिका

अध्यायः विषयाः

## प्रथमस्कन्धः १-३५


१. मङ्गलाचरणम् । नैमिशक्षेत्रे सूतागमनम् । शौनकप्रश्नाः ।

२. सूतस्य प्रतिवचनप्रक्रमः । शुकप्रशंसाप्रमाणौ । भगवत्कथाश्रवणस्यावश्यकत्वकथनपूर्वकं तन्महिमवर्णनम् ।

३. पौरुषरूपमारभ्य कल्किपर्यन्तं भगवतश्चतुर्विंशत्यवतारवर्णनम् । भागवतपुराणोदयः ।

४. शौनकस्य भागवतोत्पत्त्यादिविषयप्रश्नः । सूतस्य प्रतिवचने व्यासावतारः । कृतानेककार्यस्य तस्यापरितोषो नारदागमनं च ।

५. व्यासनारदसंवादे व्यासस्य स्वापरितोषनिमित्तप्रश्नः । नारदस्य समाधिभाषया हरिगुणवर्णनग्रन्थरचनप्रार्थना । तत्पोपकतया स्वपूर्वजन्मवृत्तान्तकथनारम्भः ।

६. नारदपूर्वजन्मकथानुवृत्तिः । व्यासमामन्त्र्य तद्गमनं च ।

७. व्यासेन भागवतग्रन्थरचना शुकस्याध्यापनं च । परीक्षित्कथाकथनप्रतिज्ञा । तत्पीठिकतया पाण्डवकथोल्लेखः । अश्वत्थाम्नो वृत्तान्तः ।

८. कृष्णेन द्रौपद्याः सान्त्वनम् । कृष्णे प्रस्थिते उत्तराया अभिधावनं प्रार्थना च । कृष्णेन गर्भस्य रक्षणम् । कुन्तीस्तुतिः ।

९. धर्मराजव्यथा । विशसनं प्राप्य भीष्मदर्शनम् । मुनीनामागमो भीष्मोपदेशो भीष्मस्तुतिश्च ।

१०. कृष्णस्य द्वारकागमनम् । हस्तिनावत्यां प्रस्थानवैभवम् । स्त्रीणां वचनम् । धर्मराजेन सैन्यप्रेषणम् । द्वारकायामुत्सवः ।

११. परीक्षितो जन्म । धर्मराजसन्तोषः । विप्रैर्जातकफलकथनं च ।

१२. विदुरस्य हस्तिनपुरीप्रतिनिवर्तनम् । युधिष्ठिरस्य कुशलप्रश्नः । विदुरेण धृतराष्ट्रस्य बोधनम् । तेषां वनप्रवेशस्तत्र नाशो धर्मराजप्रलापो नारदेन तस्य सान्त्वनं च ।

१३. पार्थस्य द्वारकागमनम् । धर्मराजेन हस्तिनावत्यामनिष्टदर्शनम् । पार्थस्य प्रतिनिवृत्तिः । कान्तिहीनमुखं तं दृष्ट्वा धर्मराजस्य प्रश्नाः ।

१४. पार्थप्रलापः, कृष्णतिरोधानकथनं कृष्णमहिमानुसन्धानं च ।

१५. कृष्णगतिं श्रुत्वा पाण्डवानां वीराध्वगमनं युधिष्ठिरस्य लयचिन्तनं च ।

१६. परीक्षितो राज्यप्राप्तिः । कलिप्रवेशं श्रुतवतस्तस्य जैत्रयात्रा । धराधर्मसंवादश्च ।

१७. परिक्षिता कलेः सन्तर्जनम् । धराधर्मयोराश्वासनं संवादश्च । भीताय कलये अवस्थानार्थं पञ्चस्थानदानं च ।

१८. परीक्षितो मृगयागमनम् । आश्रमे विप्रतिरस्कारः । तत्सुतशापश्च ।

१९. परिक्षितः पश्चात्तापः । गङ्गायां प्रायोपवेशः । तत्र मुनीनामागमनंच ।

२०. तत्र शुकागमनम् । राज्ञा तस्य प्रशंसा । श्रोतव्यादिविषये प्रश्नश्च ।


## द्वितीयस्कन्धः ३६-५४


१. शुकप्रतिवचनारम्भः । मुमूर्षोः कर्तव्यवर्णनम् । भागवतप्रवचनप्रतिज्ञा । खट्वाङ्गोल्लेखेन राज्ञः प्रोत्साहनम् । विराडुपोपासूनविधिश्च ।

२. हृदयाकाशागतरूपोपासनम् । योगधारणयोत्क्रान्तिः ।

३. मुमूर्षुणा यदकर्तव्यं कर्तव्यं च । पुनः शौनकप्रश्नो हरिसेवाविहीनस्य निन्दनं च ।

४. सूतेन राजप्रश्नानामनुवादः शुकस्य मङ्गलाचरणं च ।

५. ब्रह्मनारदसंवादे नारदकृतपूर्वपक्षस्य ब्रह्मणा निराकरणम् । हरिमाहात्म्यप्रतिपादनाय सृष्टिकथनं च ।

६. अण्डान्तः सृष्टिकथनानुवृत्तिः । ब्रह्मणो यज्ञकरणम् । भगवत्स्तुतिश्च ।

७. ब्रह्मणा नारदाय हरेरवताराणां वर्णनं लोकेषु तद्विपुलीकरणादेशश्च ।

८. परीक्षितो विशेषप्रश्नाः प्रतिवचने शुकस्योपामन्त्रणं च ।

९. शुकस्य प्रतिवचनोपक्रमः । ब्रह्मण सृष्टिः । तस्य तपः । वैकुण्ठदर्शनम् । हरिणा तस्य वरदानं चतुःश्लोकीभागवतोपदेशः । भागवतागतिक्रमश्च ।

१०. पुराणस्य दशलक्षणानि । अण्डान्तः ब्रह्मशरीरसृष्टिस्तत्र देवानां प्रवेशः । भगवतो रूपद्वयस्य प्रशंसा । विदुरमैत्रेयसंवादविषये शौनकप्रश्नश्च ।

## तृतीयस्कन्धः ५५-११६

१. धृतराष्ट्रापचारदर्शनेन विदुरस्य तीर्थयात्रा । यमुनातटे उद्धवदर्शनं, यादवानां क्षेमप्रश्नश्च ।

२. उद्धवस्य प्रतिवचनम् । कृष्णमहिम्नः प्रशंसा । कृष्णजन्मारभ्याशरद्विहारं तस्य लीलाभिध्यानकथने ।

३. कंसवधमारभ्य प्रभासयात्रापर्यन्तं तस्य लीलाभिध्यानकथने ।

४. प्रभासे यादवानां नाशः । वदरीं गन्तुमुद्धवस्यादेशः । तत उद्धवस्य गमनं च ।

५. हरद्वारे विदुरमैत्रेयसमागमः । उपसत्तिपूर्वकं तत्वोपदेशप्रार्थना ।

६. मैत्रेयप्रतिवचनम् । सृष्टिकथनम् । ब्रह्माण्डनिर्माणे तत्वदेवानामशक्तिः प्रार्थनं च ।

७. ब्रह्माण्डसृष्टिः । तदन्तः ब्रह्मशरीरसृष्टिः । तत्र तत्वदेवानां सव्यापाराणां प्रवेशश्च ।

८. सृष्ट्यादिभगवद्व्यापारविषये विदुरस्य प्रश्नः । मैत्रेयस्य समाधानम् । पुनः सविस्तरं विदुरप्रश्नाः ।

९. विदुरप्रश्नोत्तरतया भागवतकथनप्रतिज्ञा । शेषद्वारा भागवतागतिक्रमः । ब्राह्मकल्पे ब्रह्मणः सृष्टिः । ब्रह्मणः स्वमूलान्वेषणं भगवद्दर्शनं च ।

१०. ब्रह्मणः स्तुतिः । भगवतः प्रसन्नता आश्वासनं च ।

११. ततो ब्रह्मणः सृष्टिः षड्विधा त्रिविधा च ।

१२. कालस्वरूपम् । युगमानादि । पाद्मकल्पः वराहकल्पश्च ।

१३. ब्रह्मणा सनकादीनां रुद्रप्रजापतिमनूनां च सृष्टिः । ब्रह्माण्डान्तः सर्वसृष्टिश्च ।

१४. स्वायम्भुवमनुचरितविषये विदुरप्रश्नः । मनोर्भूमिस्थापनयत्नः । वराहावतारश्च ।

१५. हिरण्यकयोरुत्पत्तिविषये विदुरप्रश्नः । मैत्रेयप्रतिवचनम् । दितेर्निर्बन्धः दितिकाश्यपसंवादः । काश्यपेन पौत्रगुणकथनेन दितेः सान्त्वनं च ।

१६. देवानां चतुर्मुखोपसत्तिः । ब्रह्मणा जयविजययोः शापप्रसङ्गकथनम् । ताभ्यां सनकादीनां रोधः शापश्च ।

१७. भगवतो बहिरागमनम् । सनकादिभिः संवादः । तच्छापोरीकरणं दूतयोराश्वासनं च ।

१८. हिरण्यकयोर्जन्म । अपशकुनानि । हिरण्याक्षदिग्विजयश्च ।

१९. हरिहिरण्याक्षसमागमस्तयोर्युद्धं च ।

२०. युद्धानुवृत्तिः । हिरण्याक्षवधः ।

२१. पुनः सङ्क्षेपेण सृष्टिकथनम् । यक्षादिमानुपान्तदेहसृष्टिश्च ।

२२. विन्दुसरसि कर्दमस्य तपश्चरणम् । भगवदाविर्भावः कर्दमस्यादेशः । देवहूत्या सह स्वायम्भुवमनोर्बिन्दुसरोगमनम् । कर्दमप्रश्नश्च ।

२३. मनुना देवहूतीविवाहस्य प्रस्तावः । ससमयं कर्दमस्याङ्गीकारः । कर्दमदेवहूतीविवाहश्च ।

२४. देवहूत्याः कर्दमानुग्रहः । दुहितॄणामुत्पत्तिः । प्रव्रज्याकामं कर्दमं प्रति देवहूत्याः प्रार्थनम् ।

२५. पत्न्या आश्वासनम् । कपिलावतारः । कर्दमप्रव्रज्या तद्गतिश्च ।

२६. देवहूत्याः कपिलोपसत्तिः । कपिलोपदेशः । सतां लक्षणम् । भक्तिस्वरूपस्य तन्माहात्म्यस्य च निरूपणम् ।

२७. तत्वानां सङ्ख्यानम् । तल्लक्षणानां च कथनम् ।
२८. अध्यात्मसाधनतया मनोऽसङ्गत्वाभ्यासः । प्रकृतिपुरुषयोर्वियोगे देवहूतीप्रश्नः कपिलस्य तत्परिहारश्च ।
२९. योगलक्षणम् । आसनाद्यष्टाङ्गानि । ध्येयमूर्तिवर्णनम् ।
३०. भक्तियोगप्रकाराणां निरूपणम् ।
३१. वैराग्यार्थे जीवसृतिनिरूपणम् । वार्धक्यमरणनरकदुःखानि च ।
३२. जीवस्य गर्भवासजननादिदुःखम् । ऋषिजीवस्य विशेषः ।
३३. योगिनां गतिः । अर्चिरादिमार्गगतानामेवानिवृत्तिः । तस्या भक्त्यैकसाध्यत्वम् ।
३४. देवहूत्याः कपिलस्तुतिः । कपिलेन मातुराश्वासनम् । कपिलस्य गमनम् । देवहूत्यास्तपो भगवत्प्राप्तिश्च ।

## चतुर्थस्कन्धः ११७-१७८

१. स्वायम्भुवदौहित्रवंशचारित्र्यम् । यज्ञदत्तावतारौ नरनारायणावतारश्च ।
२. दाक्षायणीकथा । विश्वसृजां यज्ञे रुद्रस्य तिरस्कारः । शापप्रतिशापौ ।
३. दक्षस्य बृहस्पतिसवोद्यमः । सत्याः प्रार्थना । शिवस्यासम्मतिरपायसूचना च ।
४. सत्या गमनम् । यज्ञशालायामवज्ञा । सत्या रोषवचनानि ।
५. लयचिन्तनेन योगाग्नौ सत्या देहत्यागः । दक्षिणाग्नौ भृगोर्होमश्च ।
६. वीरभद्रादिभिः सह शिवेन दक्षाध्वरस्य भङ्गः ।
७. देवैः सह ब्रह्मणः कैलासगमनं शिवप्रशंसा च ।
८. शिवस्य प्रसादः । वरदानम् । यज्ञशालामागत्य यज्ञपूर्तिश्च ।
९. स्वायम्भुवपुत्रवंशचरितम् । सुरुचिवाचा ध्रुवस्य निर्गमनं, नारदसमागम उपदेशौ, ध्रुवस्य तपश्च ।
१०. ध्रुवस्य वासुदेवसाक्षात्कारः । तत्स्तुतिः प्रतिनिवर्तनं च ।
११. ध्रुवस्य पुण्यजनैर्युद्धं मनुवाक्येनोपशमश्च ।
१२. धनदस्यागमनं तत्संवादश्च । ध्रुवस्य राज्यशासनं ध्रुवलोकप्राप्तिश्च ।
१३. ध्रुववंशः । अङ्गस्य यज्ञे देवानामनागमनम् । वेनजन्म, तस्य हिंसाचारः ।
१४. भृग्वादिभिर्वेनस्योपदेशः । तत्तिरस्कारः । वेनस्यासदादेशः । मुनिभिः तस्य हननम् ।
१५. पृथोः पट्टाभिषेकः । तस्य स्वप्रशंसाप्रतिषेधश्च ।
१६. सूतादिभिः प्रशंसाव्याजेन भवितव्यस्य पृथुचरितस्य गानम् ।
१७. पृथोः धरायै क्रोधः । धरायास्तत्स्तुतिश्च ।
१८. धराया उपायप्रतिपादनम् । वत्सदोहनभेदेन पृथोः सर्वदोहनम् ।
१९. शताश्वमेधदीक्षितस्य पृथोर्यज्ञवैभवम् । राज्यसमृद्धिः । अन्तिमे यज्ञे शक्रेणाश्वस्य हरणम् । पाषण्डसृष्टिः । अन्ततः सन्धानं च ।
२०. भगवदादेशः । इन्द्रस्य क्षमापणं च ।
२१. पुनः पुरप्रवेशः । सत्रयागः । प्रजासम्बोधनं तासां वाचश्च ।
२२. तत्र सनकाद्यागमनम् । राज्ञः प्रार्थना । सनत्कुमारोपदेशो राज्ञो धन्यतावचनानि च ।
२३. पृथोस्तपोवनगमनम् । लयचिन्तनेन देहत्यागः । अर्चिषो गतिश्च ।

२४. पृथोर्वंशे बर्हिष्मतो जन्म । प्रचेतसां जन्म । तेषां रुद्रदर्शनं तदुपदेशो रुद्रगीता च ।
२५. नारदागमनम् । बर्हिष्मतः प्रार्थनया पुरञ्जनचरितकथनोपक्रमः । पुरञ्जनासादितपुरीवर्णनम् । तस्य प्रमदोत्तमप्राप्तिस्तयोर्दाम्पत्यं च ।
२६. पुरञ्जनस्य मृगया । प्रतिनिवृत्तेन तेन पुरञ्जन्याः सान्त्वनं च ।
२७. तयोः सुखेन कालयापनम् । प्रज्वारकालकन्यासहितगन्धर्वैः पुर्यारोधः ।
२८. पुरीपातः । पुरञ्जनस्य विदर्भराजकुमारितया जन्म । पाण्ड्येशेन विवाहः । तपोवने पाण्ड्येशनाशः । पुरञ्जनस्य विलापः । अविज्ञातसखस्य बोधनं च ।
२९. बर्हिष्मत्प्रार्थनया नारदेन विविच्य सर्वस्यार्थस्य कथनम् ।
३०. प्रचेतसां तपः । भगवत्साक्षात्कारः । वार्क्षीविवाहो दक्षजन्म च ।
३१. प्रचेतसां प्रव्रजनम् । तेषां नारदसमागमः संवादश्च । विदुरस्य प्रतिनिवर्तनं च ।

## पञ्चमस्कन्धः १७९-२१४

१. प्रियव्रतकथा । तस्य विवाहः । आग्नीध्रादिसुतोत्पत्तिः । तस्य महिमा गतिश्च ।
२. आग्नीध्रतपः । पूर्वचित्तिप्राप्तिः । नाभ्यादिसुतप्राप्तिः । तस्य गतिश्च ।
३. नाभेर्यज्ञः । भगवदाविर्भावे सति पुरोधसां वचनानि । ऋषभावतारश्च ।
४. ऋषभस्य राज्याभिषेकादिः । नाभेर्गतिः । ऋषभस्य जयन्त्यां सुतशतोत्पत्तिः ।
५. ऋषभस्य स्वपुत्रान् प्रत्युपदेशः अवधूतचर्या योगसिद्ध्यादिश्च ।
६. ऋषभावतारसमाप्तिस्तस्य महिमा च ।
७. भरतकथा । पुलहाश्रमं गत्वा तस्य तपश्चरणम् ।
८. भरतस्य हरिणीशावप्राप्तिः । तत्रातिस्नेहः । तेन हरिणजन्मप्राप्तिश्च ।
९. आङ्गिरसकुले जन्म । जडताविडम्बनम् । देहानभिमतिर्मरणादभीतिश्च ।
१०. भरतरहूगणसमागमः । तयोः संवादः । रहूगणस्य शरणागतिश्च ।
११. भरतोपदेशः । हरिगुरुचरणोपासनाया मनोजयसम्पादनादेशः ।
१२. रहूगणप्रश्नः । भरतने स्ववाचां विवरणं स्वपूर्वजन्माभिख्यापनं च ।
१३. भरतोपदेशः संसारस्वरूपवर्णनम् । राज्ञः प्रशंसावचनानि च ।
१४. पूर्वाध्याये परोक्ष्येण कथितस्य संसारस्वरूपस्य विविच्य कथनम् ।
१५. प्रियव्रतान्वाये गयस्य जन्म । तन्महिमा । प्रियव्रतवंशकथनसमाप्तिश्च ।
१६. भूमण्डलवर्णनम् । तत्र मेरोरिलावृतस्य जम्बूद्वीपस्य च वर्णनम् ।
१७. भागीरथीगयम् । मेरोश्चतुर्दिशं तस्याः शाखाः । इळावृते भवस्योपासनं च ।
१८. जम्बूद्वीपगतभद्राश्वहरिवर्षादिखण्डानां तत्रत्यानामुपासनस्य च वर्णनम् ।
१९. जम्बूद्वीपगतकिम्पुरुषभारतवर्षाणां वर्णनम् । भारतवर्षप्रशंसा च ।
२०. प्लक्षकुशक्रौञ्चशाकपुष्करद्वीपानां लोकालोकपर्वतस्य च वर्णनम् ।
२१. ज्योतिश्चक्रानुवर्णनम् । तत्र विशिष्य सूर्यगतिवर्णनम् ।
२२. सूर्यगतिविवेचनम् । चन्द्रादिग्रहाणां वर्णनम् । शिंशुमाररूपस्य च वर्णनम् ।

२३. भूविवराणामतळादिसप्तलोकानां वर्णनम् । शेषस्य महिमा च ।
२४. विविधनरकाणां तन्निमित्तभूतदुष्कर्मणां च कथनम् ।

## षष्ठस्कन्धः २१९-२४९

१. राज्ञो नरकनिवारणोपायप्रश्नः । अजामिळकथा । विष्णुदूतानां प्रश्नः । यमदूतानामुत्तरदानं च ।
२. विष्णुदूतानां प्रतिवचनम् । अजामिळस्योद्बोधः । अन्ते सद्गतिश्च ।
३. यमस्य स्वदूतैः संवादः । विष्णूत्कर्षकथनं वैष्णवप्रशंसा च ।
४. प्रचेतसां कथा । दक्षजन्म । तस्य विवाहः तपश्चरणम् । भगवदाविर्भावः । हंसगुह्यस्तोत्रम् । भगवदनुग्रहश्च ।
५. हर्यश्वानां जन्म । तेषां नारदस्य कूटप्रश्नाः प्रव्रज्या च । एवं शबलाश्वानामपि ।
६. ब्रह्मणा दक्षस्यानुनयः । षष्टिदुहितॄणां प्राप्तिः । तासां वंशः । विश्वरूपवरणं च ।
७. इन्द्रेण गुरोस्तिरस्कारः । अरिभ्यः पराभवः । विश्वरूपोपसत्तिः । तस्य प्रतिश्रवश्च ।
८. नारायणवर्म, सन्न्यासं, सफलश्रुति ।
९. विश्वरूपवधः । तेन प्राप्तया ब्रह्महत्याया विभागः । वृत्रजन्म । देवानां तपः भगवदाश्वासनं च ।
१०. देवानां दधीच्युपसत्तिः । तेन स्वास्थिदानम् । वज्रनिर्मितिः । इन्द्रस्य युद्धोद्यमः । दैत्यानां पलायनं च ।
११. वृत्रस्य संरम्भः । इन्द्रमुद्दिश्य वचनानि ।
१२. वृत्रस्य युद्धं वचनानि च । इन्द्रस्य तत्प्रशंसा । वृत्रवधश्च ।
१३. ब्रह्महत्यया इन्द्रस्यानिर्वृतिः । हयमेधयागो नृसिंहध्यानं पापविधूननं च ।
१४. वृत्रस्य पूर्ववृत्तान्तः । शूरसेनाधिपतेश्चित्रकेतोः कथा । पुत्रप्राप्तिर्मृतिश्च ।
१५. अङ्गिरोनारदाभ्यां पुनरागमनं चित्रकेतोरुद्बोधनं च ।
१६. नारदमृतजीवयोः संवादः । नारदाङ्गिरोभ्यां चित्रकेतोरुपदेशः । मन्त्रदानम् । चित्रकेतोः सिद्धिर्विद्याधरत्वप्राप्तिश्च ।
१७. चित्रकेतोः पार्वतीशापः । त्वष्टुर्दक्षिणाग्नौ वृत्रतया जन्म च ।
१८. अदितिवंशकथनानुवृत्तिः । दितेर्वंशः । दित्या काश्यपं प्रलोभ्य वरादानम् । काश्यपस्यासन्तोषः । दितेर्व्रतधारणम् । मरुतां जन्म च ।
१९. पुंसवनव्रतनिरूपणम् ।

## सप्तमस्कन्धः २५०-२८१

१. भगवतो वैषम्याद्यभावविवेचनम् । नारदधर्मराजसंवादे चैद्यविषये प्रश्नः । नारदस्योत्तरम् । जयविजययोर्जन्मत्रयोल्लेखः ।
२. हिरण्याक्षवधेन हिरण्यकशिपोरमर्षः । मन्त्रणम् । कपोतकथोल्लेखेन रुशद्भ्रान्वादीनां सान्त्वनं च ।
३. हिरण्यकशिपोस्तपश्चरणम् । देवानां विरिञ्चिप्रार्थना । तस्यागमनं वरदानं च ।
४. हिरण्यकशिपोर्दर्पः । दिक्पालान् विजित्य महेन्द्रभवनवासः । दैवैर्भगवदुपसर्पणम् । हरेरभयदानं च ।
५. शण्डामर्काध्यापनम् । पितुः पुरतः प्रह्लादस्योक्तिः । निर्बन्धेन त्रिवर्गोपदेशः । द्वितियवारं प्रह्लादस्योक्तिः । हिरण्यकशिपो रोपश्च ।
६. प्रह्लादेन दैत्यबालकानां विष्णुधर्मोपदेशः ।
७. स्वस्य नारदात् तत्वज्ञानप्राप्तिप्रकारवचनम् । पुनरुपदेशः ।
८. सुतं स्वयमेव हन्तुं हिरण्यकस्य निर्धारः । तथोद्यमः । नृसिंहावतारः । तन्महिमा दैत्यवधो ब्रह्मादीनां तत्स्तवनं च ।
९. प्रह्लादकृता नृसिंहस्तुतिः । वरस्वीकारप्रेरणा च ।

१०. कामासंरोहपितृपूतत्वयोर्वरणम् । हिरण्यकवरदानविषये हरिब्रह्मसंवादः । प्रह्लादस्याभिषेचनम् । देवानां स्वस्वधामगमनं च ।

११. त्रिपुरवधेऽशक्तस्य हरस्य हर्यनुग्रहो त्रिपुरदाहश्च ।

१२. नारदेन युधिष्ठिरस्य नृणां स्त्रीणां च साधारणधर्माणां ब्राह्मणादिवर्णधर्माणां च निरूपणम् ।

१३. ब्रह्मचारिवनस्थधर्मयोर्निरूपणम् । सर्वाश्रमसाधारणधर्मनिरूपणं च ।

१४. सह्यसानुनि प्रह्लादेनावधूतस्य दर्शनम् । पृष्टेनावधूतेन स्ववृत्तवर्णनं च ।

१५. धर्मराजप्रश्नोत्तरतया नारदेन विशिष्य गृहस्थधर्माणामुपदेशः ।

१६. कर्मज्ञानयोगयोः प्रपञ्चस्वरूपस्य लयादीनां च वर्णनम् । नारदस्य पूर्वजन्मवृत्तान्तः । युधिष्ठिरस्य श्रीकृष्णपूजा च ।

## अष्टमस्कन्धः २८२-३२०

१. यज्ञेन स्वायम्भुवमनोः रक्षा । स्वारोचिषोत्तममन्वन्तरयोर्वर्णनम् । चतुर्थे तापसमन्वन्तरे गजेन्द्रमोक्षप्रस्तावः ।

२. त्रिकूटपर्वताभ्याशे सरसि गजेन्द्रस्य ग्राहग्रहः । स्वतः परतो वा मोचनासमर्थस्य गजेन्द्रस्य हरिशरणागतिः ।

३. गजेन्द्रस्तोत्रम् । हरिणा गजेन्द्रस्य मोक्षणम् ।

४. देवानां पुष्पवर्षः । ग्राहस्यापि देवलक्षापनिवृत्तिः । फलश्रुतिश्च ।

५. रैवतचाक्षुषमन्वन्तरयोर्वर्णनम् । चाक्षुषे क्षीरसमुद्रमथनप्रस्तावः दुर्वाससः शापेन पराजितैर्देवैः सह गत्वा विरिञ्चस्य हरिस्तवनं च ।

६. हरेराविर्भावः । ब्रह्मणः स्तोत्रम् । हरेरुपायोपदेशो मन्दरानयनं च ।

७. समुद्रमथनम् । स्थानविनिमयः । कूर्मरूपेण मन्दरोद्धारः । अजितस्य स्वयं निर्मथनम् । हालाहलोत्पत्तिः रुद्रेण तस्य पानं च ।

८. पुनर्मथने कामधेन्वाद्युत्पत्तिः । रमाया आविर्भावः । तस्या अभिषेकः । तस्या हरिवरणम् । धन्वन्तर्याविर्भावः । अमृतकलशहरणं हरेर्वञ्चनं च ।

९. देवदानवयुद्धम् । आसुरीमायासृष्टिः । हरेराविर्भावेन तन्नाशश्च ।

१०. पुनर्युद्धम् । बलिवासवसंवादः । बलिनमुच्योर्वधः । ब्रह्मप्रेषितनारदवचनेन देवानां युद्धान्निवृत्तिः । उशनसा मृतसञ्जीविन्या बल्यादीनामुज्जीवनं च ।

११. हरस्य मोहिनीरूपदर्शनम् । अन्ततो हरिणा तस्य समाश्वासनं च ।

१२. वैवस्वतादीन्द्रसावर्ण्यन्तसप्तमन्वन्तरवर्णनम् । अष्टमे सावर्णिमन्वन्तरे वामनावतारप्रस्तावश्च ।

१३. प्रतिमन्वन्तरं मन्वादिहर्यवतारान्तानां षण्णां पृथक्कर्मनिरूपणम् ।

१४. राज्ञो वामनचरितबुभुत्सा । बलेः भृगूणामुपसत्तिः । दिग्विजयः । स्वर्गरोधे शक्रादीनां स्वर्गपरित्यागः । बलेस्त्रिलोकपालनं च ।

१५. पुत्रार्थे विषण्णाया अदितेः कश्यपेन पयोव्रतविधानोपदेशः ।

१६. अदित्या व्रतधारणम् । हरेः प्रादुर्भावः । तत्स्तुतिर्वरदानम् । हरेरदितिगर्भप्रवेशे सति ब्रह्मणः स्तुतिः ।

१७. वामनावतारः । तस्योपनयनम् । यज्ञवाटप्रवेशः । बलेस्तत्पूजा वरप्रेरणा च ।

१८. वामनस्य बलिकुलप्रशंसा । पदत्रयभूमियाञ्चा । बलेरसन्तोषः । वामनस्य निर्बन्धः । शुक्रेण बलेर्बोधनं च ।

१९. बलेः स्वप्रतिश्रवपूर्तिनिर्बन्धः । शुक्रस्य शापः । बलेर्वामनपादप्रक्षालनम् । पुष्पवृष्टिः । त्रिविक्रमरूपेण पदद्वयेनैव सर्वक्रमणं च ।

२०. ब्रह्मणा स्वलोकागतस्य विष्णुपादस्यार्चनम् । गङ्गाजन्म । जाम्बवतो भेरीघोषः । बल्यनुचराणां कदनोद्यमः । बलेः सान्त्वनम् । बलिबन्धः । वामनवचनं च ।

२१. बलेः स्वशीर्षदानम् । प्रह्लादस्य त्रिविक्रमस्तवनम् । बल्यनुग्रहकृते ब्रह्मणः प्रार्थना । हरिणा बलेः सुतलाधिपत्यदानं रक्षाप्रतिश्रवश्च ।

२२. बलेः प्रह्लादस्य कृतज्ञतानिवेदनम् । हर्याज्ञया शुक्रस्य प्रायश्चित्तविधिपूर्वकं यज्ञसमापनम् । इन्द्रस्य स्वर्गप्राप्तिः । उपेन्द्रस्य महाभिषेकश्च ।
२३. मत्स्यावतारचरितम् ।

## नवमस्कन्धः ३२१-३५७

१. वैवस्वतमनोर्वंशप्रश्नः । प्रथमं वसिष्ठस्य मनोः प्रजार्थे इष्टिः । इळोत्पत्तिः । तस्य सुद्युम्नता पुनः स्त्रीत्वं च ।
२. इळावर्तमहिमा । इळाया बुधेन विवाहः । पुरूरवस उत्पत्तिः । वसिष्ठमहिम्ना व्यवस्थया पुंस्त्वम् । इळायाः पुत्रत्रयप्राप्तिः । पुरूरवसे राज्यं दत्वा वनगमनं च ।
३. पुत्रार्थे मनोस्तपश्चरणम् । इक्ष्वाकादिदशसुतोत्पत्तिः । पृषध्रकथा । करूशादीनां वंशः । दिष्टवंशे मरुत्तस्य जन्म तन्महिमा च ।
४. शर्यातेर्दुहितुः सुकन्यायाः कथा । च्यवनमहिमा । शर्यातिवंशे रेवतस्य जन्म । रेवतीकथा च ।
५. नाभागकथा । आङ्गिरसः सत्रे रुद्रेण तस्य भूरिवित्तदानम् ।
६. नाभागपुत्रस्याम्बरीषस्य कथा ।
७. अम्बरीषसुतवंशः । मनोरिक्ष्वाकुजन्म । तस्य पुत्रशतम् । विकुक्षिकथा । ककुत्स्थजन्म तन्महिमा च । युवनाश्वजन्म । तस्येष्टिः । मान्धातृजन्म । तस्य पञ्चाशत्कन्याः । सौभरि-कथा । मान्धातृवंशे त्रिशङ्कुजन्म ततो हरिश्चन्द्रस्य । रोहितकथा ।
८. रोहितान्वये सगरजन्म । तस्य कथा । भगीरथस्य गङ्गावतारणम् । तदन्वये खट्वाङ्गजन्म । रघुजन्म । रामावतारः ।
९. रामस्य यज्ञाचरणम् । सीतापरित्यागः । वाल्मीक्याश्रमे कुलवोत्पत्तिः । शत्रुघ्नदिग्विजयः । रामस्य शासनप्रकारश्च ।
१०. कुशमारभ्य सुमित्रान्तं मनुवंशकीर्तनम् ।
११. इक्ष्वाकुतनयस्य निमेः कथा । वसिष्ठशापः । जनकजन्म । तस्य वंशश्च ।
१२. सोमवंशकथनोपक्रमः । अत्रिकुले सोमजन्म । बुधोत्पत्तिः । बुधादिळायां पुरूरवस उत्पत्तिः । तस्योर्वशीप्रणयकथा ।
१३. पुरूरवसवंशे गाधिजन्म । जगदग्न्युत्पत्तिः । परशुरामावतारः । तच्चरितं हैहयकुलनाशश्च ।
१४. परशुरामकथा । मात्रादिहननमुज्जीवनं च । भूमारहरणम् । यागकरणम् । गोधेर्विश्वामित्रजन्म । शुनःशेपकथा । पुरूरवसो वंशे दीर्घतमसस्ततो धन्वन्तरेश्च जन्म । क्षत्रवृद्धवंशः ।
१५. नहुषस्य वंशः । तत्र ययातिदेवयानीकथा । द्रुह्यादीनां जन्म ।
१६. ययातेर्बस्तकथानिरूपणं निर्वेदो हरेश्चरणोपसत्तिश्च ।
१७. पुरुवंशवर्णनम् । तत्र दुष्यन्तजन्म तत्कथा च । भरतस्य जन्म तस्य महत्कर्म च । तस्य वितथेऽन्वये भरद्वाजजन्म ।
१८. वितथान्वये बृहत्क्षेत्रगर्गरन्तिदेवानां जन्म । रन्तिदेवमहिमा । गर्गवंशे दिवोदासस्य तत अहल्याया ततः शतानन्दस्य ततः शारद्वतस्य ततः कृप्याः कृपस्य च जन्म ।
१९. दिवोदासवंशे द्रुपदजन्म । बृहत्क्षेत्रपौत्रवंशे कुरुजन्म । कुरुवंशे प्रदीपजन्म । ततो देवापिशन्तुबाह्लिकानाम् । शन्तनुवंशे बादरायणाद् धृतराष्ट्रपाण्डुविदुराणामुत्पत्तिः । पाण्डवसन्ततिश्च ।
२०. अनुद्रुह्य-तुर्वसु-यदूनां वंशवर्णनम् । यदुवंशे कार्तवीर्यार्जुनस्य महिमा । तद्वंशे ज्यामघस्य शैब्यायां विदर्भजन्म ।
२१. यदुवंशवर्णनानुवृत्तिः । वसुदेवस्य देवक्यां श्रीकृष्णस्य सुभद्रायाश्च जन्म ।

## दशमस्कन्धः पूर्वार्धः ३५८-४३४

१. राज्ञो कृष्णकथाश्रवणार्थं विशेषप्रश्नः । शुकस्य प्रतिवचनारम्भः । तत्रादौ देवकीविवाहः । कंससारथ्यम् । देवकीवधोद्योगः । वसुदेवेन तस्या मोचनं च ।

२. वसुदेवदेवक्योः कीर्तिमदुत्पत्तिः । कंसस्यार्जवम् । देवकार्यसिद्धये नारदस्य कंसाय रहस्यकथनम् । कंसेन वसुदेवदेवक्योः कारागारप्रक्षेपः । षण्णां शिशूनां बधो यदुभिर्विरोधश्च ।

३. देवक्या सप्तमगर्भधारणम् । दुर्गया गर्भस्य रोहिण्युदरे स्थापनम् । हरिणा वसुदेवे ततो देवक्यां च प्रवेशः । कंसस्य भीतिः । ब्रह्मरुद्रयोर्गर्भस्थस्तुतिः देवक्याः समाश्वासनं च ।

४. श्रीकृष्णावतारः । पित्रोः स्तुतिः । भगवदादेशाद् कृष्णं व्रजे न्यस्य ततो दुर्गामादाय नन्दस्य मथुरागमनम् ।

५. स्त्रीशिशुहनने कंसस्योद्यमः । तस्याः प्रबोधनेन कंसस्य पश्चात्तापः । देवकीवसुदेवाबुन्मुच्य क्षमायाचनम् । मन्त्रिभिः समालोच्याशेषशिशुवधमन्त्रणं च ।

६. व्रजे नन्दस्य पुत्रोत्सवाचरणम् । गोपानामुल्लासः । कंसाय वार्षिकं दत्त्वा वसुदेवेन सङ्गस्य तद्वचनान्नन्दस्य व्रजगमनं च ।

७. पूतनासंहारः । मातॄणां रक्षाविधानम् । पूतनाविष्टोर्वश्याः सद्गतिः । पूतनादेहनिर्हरणम् । नन्दस्य व्रजप्राप्तिः ।

८. औत्थानिके कर्मणि शकटासुरवधः । विप्राणां स्वस्तिवाचनम् । तृणावर्तसंहारः । जृम्भमाणस्य शिशोर्मुखे यशोदाया ब्रह्माण्डदर्शनम् ।

९. गर्गस्य रहसि बालयोर्नामकरणम् । तयोर्माहात्म्यख्यापनम् । बालयोश्चङ्क्रमणं वत्सानां विकर्षणं शृङ्गयादिभिः क्रीडा पद्भ्यां चलनं च । दध्यादिस्तेयेन गोपीनां मुत् । मृद्भक्षणम् । यशोदया तस्यास्ये ब्रह्माण्डदर्शनम् । नन्दयशोदयोः कृष्णेऽतिशयभक्तौ तयोस्तपसः कारणत्वनिरूपणम् ।

१०. यशोदाया दधिनिर्मथनम् । कृष्णस्य त्यागः । दधिभाण्डभञ्जनम् । यष्ट्या भीषयित्वा दामभिर्बन्धनोद्योगः । कृष्णेन भक्तवश्यतायाः प्रकटनम् । उलूखले बद्धस्य तस्य यमलार्जुनमध्ये प्रवेशः ।

११. नळकूबरमणिग्रीवयोः शापस्य कारणम् । उलूखलं विकर्षतो यमळार्जुनोद्धारः । नळकूबरमणिग्रीवयोः कृष्णस्तुतिः । भगवदाज्ञया स्वलोकगमनं च ।

१२. नन्देन कृष्णस्योलूखलान्मोचनम् । गोपानां विस्मयः । कृष्णस्य नृत्तगानादिलीला । उपनन्दवचनाद् वृन्दावनगमनम् । वत्सपालकत्वं वेण्वादिभिः क्रीडा च । वत्सासुरस्य बकस्य च संहारः । नन्दस्य गर्गवचःस्मरणम् ।

१३. कृष्णरामयोः पशुपालनं क्रीडा च । बलरामेण ताळवने धेनुकभञ्जनम् । सायङ्काले यशोदारोहिणीभ्यां कृष्णरामयोर्मण्डनादि । यमुनाविषजलपानेन मृतानां गोगोपालानां स्ववीक्षणेन कृष्णेन पुनरुज्जीवनम् ।

१४. यामुनह्रदे कालियनिर्मथनम् । नर्तनम् । तद्वधूस्तुतिप्रसन्नेन तस्य मोचनम् । कालियेन कृष्णं स्तुत्वा रमरकद्वीपगमनम् ।

१५. रमणकं हित्वा कालियस्य यमुनागमने निमित्ततया गरुडविरोधकथनम् । गरुडस्य सौभरिशापं ज्ञात्वा तत्र कालियागमनम् । कृष्णे जलान्निःसृते गोपानां प्रमोदः । रात्रौ दवाग्निपानं च ।

१६. ग्रीष्मागमः । गोपानां नृत्तं गानं क्रीडा च । बलरामेण च्छद्मगोपरूपिणः प्रलम्बस्य वधः । गोपानां देवानां च मोदः ।

१७. मुञ्जाटव्यां गवां मार्गभ्रंशः । कृष्णाह्वानं श्रुत्वा प्रतिनिवर्तनम् । पुनर्दावाग्निं पीत्वा सायाह्ने व्रजगमनम् । एतच्छ्रुत्वा सर्वे विस्मयश्च ।

१८. प्रावृड्वर्णनम् । गोपैः सह कृष्णस्य तदुचिता क्रीडा । ततः शरदागमः ।

१९. शरदि वनं प्रविश्य कृष्णस्य वेणुगानम् । गोपीनां तच्छ्रवणं प्रशंसा च ।

२०. हेमन्तागमः । व्रजकुमारीणां कात्यायनीव्रतम् । तासां वस्त्रापहरणम् । वासांसि दत्वा तासां समाश्वासनं च । ततो गोपैः सह गवां चारणम् ।

२१. क्षुधार्दितैः गोपैः कृष्णस्य प्रार्थना । तद्वचनेनान्नार्थे यजतां विप्राणामुपसर्पणम् । तैर्निराकृते पुनः कृष्णवचनेन तत्पत्नीनामुपसत्तिः । ताभिः स्वयमागत्य स्वन्नस्य दानम् । विप्राणां पश्चात्तापश्च ।

२२. कृष्णस्येन्द्रयागभङ्गः इन्द्रमन्युजनकवचनानि च । गिरिमुद्दिश्य यागं निर्वर्त्य सर्वैः व्रजं प्रत्यागमनम् ।

२३. इन्द्रस्य कोपः । संवर्तकमेघैरासारवर्षः । कृष्णस्य गोवर्द्धनोद्धरणम् । सप्ताहान्तं इन्द्रस्यानुतापः । गोपैः कृष्णस्य प्रशंसा च ।

२४. गोपानां विस्मयवचनम् । नन्दस्य गर्गवचनैस्तेषां विस्मयोपशमनं च ।
२५. इन्द्रेणागत्य कृष्णं स्तुत्वा क्षमायाचनम् । कृष्णस्य सान्त्वनम् । सुरभिक्षीरेण कृष्णमभिषिच्य गोविन्देति नामकरणं च ।
२६. द्वादश्यामकाले स्नातुं यमुनां गतस्य नन्दस्य वरुणलोकनयनम् । कृष्णस्य तत्प्रतिनिवर्तनम् । कुतूहलिनां गोपानां स्वलोकदर्शनं च ।
२७. शरन्निशि वेणुगानम् । गोपीनामागमनम् । गोपीभिः कृष्णस्य संवादः । कृष्णस्य ताभी रमणं तासां मदं वीक्ष्यादर्शनं च ।
२८. गोपीनां पश्चात्तापः । कृष्णान्वेषणम् । कृष्णेन सह गताया गोप्या अवस्था । चन्द्रास्तमयश्च ।
२९. गोपीगीता ।
३०. कृष्णस्याविर्भावः । गोपीनां हर्षः । तासां साकूतप्रश्नः कृष्णस्योत्तरं च ।
३१. रासोत्सवः । कृष्णकृतगोप्यभिमर्शनविषये राज्ञः शुकस्योत्तरं च ।
३२. देवयात्रायामम्बिकावने नन्दस्याजगरेण ग्रासः । कृष्णस्य तन्मोचनम् । अजगरस्य सुदर्शनविद्याधरत्वप्राप्तिः कृष्णं स्तुत्वा गमनम् । शङ्खचूडवधश्च ।
३३. वेणुगीता ।
३४. वृषभरूपिणोऽरिष्टासुरस्य वधः । ततो नारदेनागत्य कंसाय तज्जन्मरहस्यकथनम् । कंसस्य मन्त्रालोचनम् । रामकृष्णौ हन्तुं गोकुलं प्रति केशिनः प्रेषणम् । कुवलयापीडेन तयोर्वधं विचिन्त्य धनुर्यागमिषेण रामकृष्णावानेतुमक्रूरस्य गोकुलप्रेषणम् ।
३५. व्रजमागतस्य केशिनः कृष्णेन वधः । नारदेन कृष्णस्य भाविकार्यशंसनम् । व्योमासुरवधश्च ।
३६. अक्रूरस्य कृष्णसञ्चिन्तनया गोकुलप्राप्तिः । रामकृष्णदर्शनं तत्कृतसत्कारश्च ।
३७. परदिनेऽक्रूरेण कंससन्देशस्य कथनम् । गोपानां प्रयाणसम्भ्रमः । गोपीनां खेदः । रामकृष्णावादायाक्रूरस्य ततो रथे प्रस्थानम् । मध्येमार्गं यमुनायां भगवद्दर्शनं च ।
३८. अक्रूरस्तोत्रम् ।
३९. रथं प्राप्य पुनः प्रस्थानम् । मथुराप्राप्तिः । गोपैः सह मथुरादर्शनम् । रजकप्रसङ्गः । वायकस्य सुदाम्नः कृष्णसेवा ।
४०. पुनर्मार्गे त्रिवक्राया अनुभवः । ततो धनुश्शालां प्रविश्य धनुर्भङ्गः । कंसस्य त्रासो दुश्शकुनानि प्रजागरश्च । परदिने मञ्चेषु सर्वेषां समावेशः ।
४१. कुवलयापीडं हत्वा रामकृष्णयो रङ्गप्रवेशः । प्रजानां कृष्णरामविक्रमसंस्तवनम् । मल्लयुद्धे चाणूरस्य कृष्णाह्वानम् ।
४२. कृष्णचाणूरयोर्बलमुष्टिकयोर्नियुद्धम् । स्त्रीणामनुकम्पा । चाणूरमुष्टिकयोर्वधः । साधूनां हर्षः । कंसवधः । पित्रोर्मोचनं तत्पादाभिवन्दनं च ।
४३. कृष्णेन स्ववाचा पित्रोर्मोहनम् । उग्रसेनाभिषेकः । विदेशादाकार्य यदूनां मथुरायां निवेशः । नन्दं सान्त्वय्य व्रजं प्रति प्रेषणम् । रामकृष्णयोरुपनयनं सान्दीपनौ वासो गुरुदक्षिणादानं च ।
४४. कृष्णेनोद्धवं सन्दिश्य व्रजं प्रति प्रेषणम् । तस्य नन्दगृहप्रवेशः । कृष्णं संस्मृत्य नन्दस्याश्रुमोचनम् । उद्धवेन तस्य सान्त्वनं च ।
४५. रहस्युद्धवेन गोपीनां संवादः । भ्रमरगीतम् । उद्धवेन गोपीनां संस्तवः कृष्णसन्देशहरणं च । कृष्णं तद्विहारं च संस्मृत्य गोपीनां कृष्णकुशलप्रश्नः ।
४६. उद्धवस्य तत्र कतिपयमासान् समुष्य मनसा गोपीः संस्तुत्य प्रतिनिवर्तनम् ।
४७. कृष्णस्य त्रिवक्रागृहप्रवेशस्तदनुग्रहश्च । पश्चादक्रूरगृहं गत्वा पाण्डवक्षेमविज्ञानार्थं हास्तिनपुरं प्रति तस्य प्रेषणम् ।
४८. अक्रूरस्य हास्तिनपुरप्राप्तिः । धृतराष्ट्रवैषम्यं ज्ञात्वा तस्य हितोपदेशः । मधुरामागत्य कृष्णस्य निवेदनं च ।

## दशमस्कन्ध उत्तरार्धः ४३५-५३५

४९. अस्तिप्राप्तिभ्यां जरासन्धस्य कंसवधकथनम् । जरासन्धस्य मधुराया रोधः । कृष्णरामयोः प्रतिविधिः । जरासन्धपराजयः प्रतिनिवर्तनं च । कृष्णस्य मधुराप्रवेशः ।

५०. मासत्रये पुनर्जरासन्धोद्यमः । रात्रौ यमुनातीरे सेनानिवेशः । कृष्णेन स्वसेनां त्रिधा विभज्यारुणोदयकाल एवाक्रम्य शत्रुसेनायाः शातनम् ।

५१. जरासन्धेन शोणितपुरं गत्वा बाणसाहाय्ययाचना । बाणसेनामन्त्रिद्वयसहितस्य जरासन्धस्य युद्धोद्यमः । रामजरासन्धयोर्युद्धम् । बाणमन्त्रिणोः प्रतिनिवृत्तिश्च ।

५२. अवशिष्टसेनाया अनुत्साहः । जरासन्धं जिघांसतो रामस्याशरीरवाण्याः प्रतिनिवृत्तिः । जरासन्धे निवृत्ते रामकृष्णयोर्मधुराप्रवेशः । दुर्गार्थं गोमन्तमुद्दिश्य प्रचलनम् । मार्गे भार्गवदर्शनम् । तदनुज्ञया करवीरपुरं गत्वा सृगालवासुदेवं हत्वा गोमन्तप्राप्तिः ।

५३. रामकृष्णयोर्गोमन्ते प्रस्रवणे वासः । बलेर्भगवत्किरीटापहारः । गरुडेन तं विजित्य तदानीय कृष्णे समर्पणम् । मासचतुष्टानन्तरं रामकृष्णयोः प्रतिनिवृत्तिः । जरासन्धस्याष्टादशसङ्ग्रामात् पूर्वं यवनेन मधुराया रोधः । द्वारकानिर्माणं सर्वेषां तत्र निवेशश्च ।

५४. बहिरागत्य कृष्णस्य धावनम् । यवनानुधावनम् । मुचुकुन्दगुहाप्रवेशः । यवननाशः । मुचुकुन्दवृत्तान्तः । तत्स्तोत्रं कृष्णस्यानुग्रहश्च ।

५५. मुचुकुन्दस्य बदरिकागमनम् । यवनसेनाधने द्वारकायां नीयमाने मार्गे जरासन्धरोधः । धनं विहाय कृष्णरामाभ्यां पलाय्य गोमन्तगमनम् । गोमन्ते दीपिते तत उत्प्लुत्यालक्षितं द्वारकागमनं च ।

५६. द्रुपदं पाण्डवैर्बद्धं श्रुत्वा कृतवर्मणो हस्तिनापुरीप्रेषणम् । कृतवर्मणा तत्र गत्वा सर्वं विज्ञायागत्य कृष्णाय निवेदनं च ।

५७. रेवतीबलरामयोर्विवाहकथनम् । रुग्मिणीविवाहोद्योगः । रुग्मिण्याः कृष्णस्य ब्राह्मणद्वारा पत्रप्रेषणं च ।

५८. कृष्णेन कुण्डिनं गत्वा यात्राच्छलेन बहिरागताया रुग्मिण्या हरणम् । बलरामेण सेनया सह कुण्डिनं प्रत्यनुगमनम् ।

५९. शिशुपालपक्षीयाणां रामेण सह युद्धम् । पराजितानां जरासुतादीनां प्रतिनिवृत्तिः । अन्यैः शिशुपालसान्त्वनम् । रुग्मिणः प्रतिश्रवः । युद्धे कृष्णेन तस्य विरूपकरणम् । बलरामस्य तन्मोचनम् । रुग्मिणो भोजकटे वासः । रुग्मिणीकृष्णयोर्द्वारका-गमनं च ।

६०. सत्राजितः स्यमन्तकप्राप्तिः । वने सिंहेन प्रसेनस्य जाम्बवता च सिंहस्य वधः । कृष्णस्यान्वेषणं गुहाप्रवेशो जाम्बवतः युद्धं मणिना सह जाम्बवतीमादाय राज्ञे मणिसमर्पणम् । पश्चात्तस्मै सत्राजिता कृष्णाय सत्यभामाया दानं च ।

६१. पाण्डवान् दग्धान् श्रुत्वा कृष्णस्य हस्तिनापुरगमनम् । तदन्तरे शतधन्वना मण्यर्थे सत्राजितो वधः । अक्रूरे मणिं न्यस्य तस्य पलायनम् । कृष्णेनानुगत्य तद्वधः । विमनसो बलरामस्य मिथिलागमनम् । कृष्णेन वाराणसीतोऽक्रूरमानाय्य तत्स्थं मणिं प्रदर्श्य पुनस्तस्यैव दत्त्वा स्वापवादस्य मार्जनं च ।

६२. कृष्णस्य शक्रप्रस्थे कतिचिन्मासवासः । अर्जुनेन सह मृगयां गतस्य कालिन्दीदर्शनम् । तामानीय द्वारकायां तद्विवाहः । एवं मित्रविन्दायास्ततो नाग्नजितेर्नीलायाश्च विवाहः ।

६३. कदाचिद् द्वारकामागत्य शक्रेण नरकासुरोपद्रवस्य कथनम् । इन्द्राश्वासनम् । कृष्णस्य प्राग्ज्योतिपगमनम् । मुरेण युद्ध्वा तस्य तत्सुतानां च वधः । ततो नरकस्य निष्क्रमणम् ।

६४. कृष्णनरकयोर्युद्धम् । चक्रेण नरकशिरोपहारः । स्वर्गसम्पदः स्वर्गप्रेषणम् । धरायाः कृष्णस्तवनम् । भगदत्तराज्याभिषेकः । नरकोपरुद्धषोडसहस्रकन्यानां च द्वारकां प्रति प्रेषणम् ।

६५. प्राग्ज्योतिपाद् द्वारकां गच्छतः कृष्णस्यादित्यै कुण्डले दातुं स्वर्गगमनम् । शक्रसभायां देवैः सत्यभामाकृष्णयोः पूजा । अदितेराशिषः । ततः प्रस्थानसमये सत्यभामायाः पारिजातहरणनिर्बन्धः । वृक्ष उत्पाटिते देवैः सह युद्धम् ।

६६. दिक्पालानां कृष्णेन युद्धम् । तेषां पराजयः पलायनं च ।

६७. तत इन्द्रागमनम् । शक्रस्य ज्ञानोदयः क्षमायाचना सर्वस्वनिवेदनं च । ततः षोडशसहस्रकन्याभिः कृष्णस्य द्वारकागमनम् ।

६८. शङ्करमाराध्य कृष्णस्य पुत्रलाभः । अनिर्दशस्य शिशोः शम्बरेण हरणम् । समुद्रे प्राप्तस्य शिशोः शम्बरगृहप्राप्तिः । मायावत्या तस्य वर्धनं विद्यादानं च । युद्धे शम्बरं हत्वा रत्या सह प्रद्युम्नस्य द्वारकागमनम् ।

६९. पौण्ड्रकस्य द्वारकरोधः । कृष्णेन तस्य वधः । तस्य सुतेन सुदर्शनेन कृष्णदहनाय कृत्याया निर्माणम् । कृष्णेन चक्रेण तस्या वाराणस्याश्च दाहनम् ।

७०. सूर्योपरागः । सर्वेषां कुरुक्षेत्रे समन्तपञ्चकगमनम् । कुन्तीवसुदेवसंवादः । सर्वैः कृष्णसौभगस्य द्वारकौकसां पुण्यस्य च प्रशंसा । एकान्ते कृष्णस्य गोपीभिः समागमस्तासां सान्त्वनं च ।

७१. कृष्णयुधिष्ठिरयोः कुशलप्रश्नः । द्रौपद्यष्टमहिष्यादिसंवादश्च ।

७२. तत्र द्वैपायनादिमुनीनामागमनम् । कृष्णरामयोस्तत्सत्कारः प्रशंसा च । तैः कृता कृष्णस्य स्तुतिः । वसुदेवस्य तान् प्रति कर्मनिर्हारप्रश्नस्तेषामुत्तरं च ।

७३. वसुदेवस्य ऋत्विग्वरणम् । तैरुत्तमकल्पेन मखानुष्ठापनम् । नन्दवसुदेवसंवादः । पारिबर्हं स्वीकृत्य सर्वेषां गमनम् । कृष्णस्य वृष्णिभिः सह द्वारकागमनं च ।

७४. मुनिभिर्ज्ञातकृष्णमाहात्म्यस्य वसुदेवस्य तत्स्तुतिः । मृतसुतानयने देवकीप्रार्थना । सुतलं गत्वा बलेः पूजां स्वीकृत्य कृष्णस्य तदानयनं मात्रे समर्पणं च ।

७५. रुक्मिण्या साकं कृष्णस्य प्रेमकलहोद्योगः । रुक्मिण्याः कृष्णवचसां व्याख्यानम् । कृष्णेन तस्याः परिसान्त्वनं च ।

७६. सर्वासु भार्यासु कृष्णस्यापत्यानि । तेषु प्रधानानां नामानि । अनिरुद्धेन रोचनाया परिणयः । तत्र द्यूतप्रसङ्गे बलरामेण रुक्मिणो वधः ।

७७. बाणासुरकथा चित्रलेखया अनिरुद्धापहरणम्

७८. बाणासुरभुजकृन्तनम्, उषानिरुद्धयोर्विवाहः

७९. कृष्णमहिमानं द्रष्टुमागतस्य नारदस्य विविधहर्म्येषु तस्य बहुविधव्यापारदर्शनम् ।

८०. कृष्णस्य नित्यविधिः । ब्राह्मे मुहूर्ते उत्थानं ध्यानादि सभाप्रवेशो मन्त्रणं रथेन बहिर्यानमित्यादि । जरासन्धावरुद्धनृपाणां स्वमोक्षाय दूतप्रेषणम् । नादरागमनं धर्मराजस्य राजसूयसङ्कल्पोक्तिश्च ।

८१. उद्धववचनेन राजदूतं समाश्वास्य प्रेषणम् । प्रयाणसन्नाहः । इन्द्रप्रस्थगमनं युधिष्ठिरादिपूजास्वीकारश्च ।

८२. सभामध्ये युधिष्ठिरस्य क्रतुराजचिकीर्षोक्तिः । कृष्णस्य तदनुमोदनम् । भीमार्जुनाभ्यां सह गत्वा जरासन्धघातनम् । भ्रातॄणां निध्यानयनं च ।

८३. कृष्णेन जरासन्धावरुद्धानां नृपाणां मोचनं सत्कृत्य स्वस्वस्थानप्रेषणं च ।

८४. राजसूयवर्णनम् । अग्र्यपूजावसरे शिशुपालवधश्च ।

८५. राजसूयावभृथसम्भ्रमः । ततः सभायामुपविष्टानां पाण्डवानां वैभववर्णनम् ।

८६. सभायां दुर्योधनप्रवेशः तस्य विभ्रमः । द्रौपद्यादीनां हासः । धर्मराजसान्त्वनमविगणय्य दुर्योधनस्य निर्गमनम् । तत्र नारदस्य साल्वोद्योगोक्तिः ।

८७. कृष्णस्यानुपस्थितौ साल्वेन द्वारकाया रोधनम् । यादवानां विशेषतः प्रद्युम्नस्य च प्रतिक्रिया । साल्वमन्त्रिप्रहारमूर्च्छितस्य प्रद्युम्नस्य सूतेनापवहनम् ।

८८. प्रत्यावृत्य प्रद्युम्नेन द्युमतो वधः । पीडितस्य साल्वस्य ततोऽपयानम् । ततः कृष्णस्य द्वारकागमनम् । कृतवर्ममुखेन सर्वं ज्ञात्वा साल्वमनुद्रुत्य युद्धे तद्वधश्च ।

८९. कृष्णस्य द्यूते पाण्डवपराजयस्य वनगमनस्य च वार्ताप्राप्तिः । वने पाण्डवानां दर्शनं सान्त्वनं च । कृकलासप्रसङ्गः । स्ववृत्तान्तं कथयित्वा नृगस्य स्वर्गगमनं च ।

९०. बलरामस्य नन्दगोकुलयात्रा । गोपीभिः क्रिडा यमुनायाः कर्षणं च ।

९१. बलरामेण सर्वानपकुर्वतो विविदस्य वधः ।

९२. साम्बेन स्वयंवरस्थाया लक्षणाया हरणम् । कुरूणां तन्निग्रहः । बलरामस्य हितोक्तिः । कौरवाणां दुर्वचनम् । कोपेन बलेन हस्तिनपुरस्य विकर्षणम् । कौरवशरणागतिः । सपुत्रस्नुपस्य बलरामस्य द्वारकागमनं च ।

९३. कृष्णेन मिथिलां गत्वा श्रुतदेवबहुलाश्वयोरनुग्रहः । ततः प्रतिनिवृत्तिश्च ।

९४. शिवस्य क्षिप्रप्रसादविषये वृकासुरकथा । भगवता शिवस्य सङ्कटान्मोचनं च ।

९५. सरस्वतीतटे सत्रमासीनैर्मुनिभिर्भृगुं प्रेष्य हरेः सर्वोत्तमत्वस्य व्यवस्थापनम् ।

९६. श्रुतिगीता ।

९७. पाण्डवान् समाप्तवनवासन् श्रुत्वा कृष्णस्य शक्रप्रस्थगमनम् । ततो दौत्यकरणम् । दुर्योधनस्य दुर्बुद्धिः । भारतयुद्धं दुर्योधनविनाशश्च ।

९८. बलरामस्य तीर्थयात्रा । नैमिशारण्ये तेन रोमहर्षणस्य वधः । प्रायश्चित्ततया बल्वलवधो वत्सरपर्यन्तं तीर्थयात्रा च ।

९९. ततः पर्वणि बल्वल (वल्कल)वधः । पुनस्तीर्थयात्राप्रकारः । भीमदुर्योधनयोर्गदायुद्धसमये । कुरुक्षेत्रप्राप्तिः । अनादृतहितवचनस्य तस्य द्वारकागमनं च ।

१००. पाण्डवान् राज्ये संस्थाप्य कृष्णस्य द्वारकागमनम् । कुचेलोपाख्यानम् । तत्र कुचेलस्य द्वारकागमनं कृष्णस्य तत्सत्कारः पूर्ववृत्तस्मरणं च ।

१०१. कृष्णस्य पृथुकादानम् । कुचेलस्य प्रतिनिवृत्तिः । तद्गृहवैभवं च ।

१०२. कृष्णस्याश्वमेधयागानुष्ठानं मध्ये मृतविप्रपुत्रानयनं च ।

१०३. यमुनायामवभृथस्नानं सपरिवारं द्वारकागमनं च । मध्ये दन्तवक्त्रोधो दन्तवक्त्रविदूरथयोर्वधश्च ।

१०४. द्वारावत्यां पत्नीभिः सहर्षं जलक्रीडादिभिः कृष्णस्य कालयापनम् ।

१०५. सर्वत आगत्य मुनीनां द्वारकावासः । क्षत्रियादीनां च तत्रागमनम् । यदुवंशस्य विस्तृतेः श्रेष्ठ्यस्य च वर्णनम् । भगवत्स्तुतिपूर्वकं शुकस्य स्कन्धसमापनं च ।

## एकादशस्कन्धः ५३६-५९०

१. कृष्णस्य यदुकुलसञ्जिहीर्षा । पिण्डारकक्षेत्रे यदुकुमारैः साम्बद्वारा ऋषीणां हेळनम् । ऋषीणां शापः । उग्रसेनस्य मुसलसमर्पणं तेन तस्य विनियोगश्च ।

२. द्वारकायां वसुदेवनारदसमागमः । वसुदेवस्य भागवतधर्मप्रश्नः । तदुत्तरतया नारदस्य जायन्तेयोपाख्यानप्रक्रमः । विदेहस्य भागवतधर्मविषयः प्रश्नः कवेरुत्तरं च । विदेहस्य भागवतोत्तमलक्षणप्रश्नो हरेरुत्तरं च ।

३. ततो हरिसामर्थ्यविषयः प्रश्नः । अन्तरिक्षस्योत्तरम् । ततो मायातरणोपायप्रश्नः । प्रबुद्धस्य वैराग्यपूर्वकश्रवणादिसर्वसमर्पणान्त-साधननिरूपणम् । नारायणस्य स्वरूपस्थितिविषये प्रश्न आविर्होत्रस्योत्तरं च ।

४. भगवदवतारलीलाप्रश्नः । द्रुमिळस्योत्तरम् । विशेषत ऋषिमूर्तिधरस्य नारायणस्य महिमा ।

५. हराबभक्तानां निष्ठाविषये प्रश्नः । चमसस्योत्तरम् । युगभेदेन भगवन्मूर्तिविशेषाणां पूजादिप्रकारप्रश्नः । करभाजनस्योत्तरम् । कलियुगमहिमा । जायन्तेयोपाख्यानसमाप्तिः ।

६. ब्रह्मादिभिर्द्वारकामागत्य स्वधाम गन्तुं कृष्णस्य प्रार्थना । कृष्णस्य सम्मतिः । यादवानां प्रभासप्रेणं द्विजाराधनादेशश्च । उद्धवस्य कृष्णोपसत्तिः स्वनयनप्रार्थना च ।

७. कृष्णेनोद्धवस्य समाश्वासनम् । उद्धवस्य तत्वोपदेशप्रार्थना । तदुत्तरतया कृष्णस्यावधूतयदुसंवादकथनारम्भः । पिङ्गळादिचेष्टितम् ।

मैत्रेय उवाच –
निशम्य वैकुण्ठनियोज्यमुख्ययो-
र्मधुच्युतं वाचमुरुक्रमप्रियः ।
कृताभिषेकः कृतनित्यमङ्गलो
मुनीन् प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥

परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च ।
इयेष तदधिष्ठातुं बिभ्रद् रूपं हिरण्मयम् ॥ २९ ॥

तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः ।
गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३० ॥

स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः ।
अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम् ॥ ३१ ॥

इति व्यवसितं तस्य व्यवसीय सुरोत्तमौ ।
दर्शयामासतुर्देवीं देवयानेन चाग्रगाम् ॥ ३२ ॥

तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः ।
अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३३ ॥

त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि ।
परस्ताद् यद् ध्रुवगतिं विष्णोः पदमथाभ्यगात् ॥ ३४ ॥

यद् भ्राजमानं स्वरुचैव सर्वतो
लोकास्त्रयो ह्यनुविभ्राजन्त एते ।
न ते खला जन्तुषु ये त्वनुग्रहाद्
व्रजन्ति भद्राणि चरन्ति येऽनिशम् ॥ ३५ ॥

शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः ।
यान्त्यञ्जसाऽच्युतपदमच्युतप्रियबान्धवाः ॥ ३६ ॥

इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः ।
अभूत् त्रयाणां लोकानां चूडामणिरिवामलः ॥ ३७ ॥

गम्भीरवेगानिमिषं ज्योतिषां चक्रमर्पितम् ।
यस्मिन् भ्रमति कौरव्य मेढ्यामिव गवां गणः ॥ ३८ ॥

महिमानं विलोक्यास्य नारदो भगवान् ऋषिः ।
आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत् प्रचेतसाम् ॥ ३९ ॥

नारद उवाच–
नूनं सुनीतेः पतिदेवताया-
स्तपः प्रभावस्य सुतस्य तां गतिम् ।
दृष्ट्वाऽभ्युपायानपि वेदवादिनो
नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥ ४० ॥

यः पञ्चवर्षो गुरुदारवाक्शरै-
र्भिन्नेन यातो हृदयेन दूयता ।
वनं मदादेशकरोऽजितं प्रभुं
जिगाय तद्भक्तगुणैः पराजितम् ॥ ४१ ॥

यः क्षत्रबन्धुर्भुवि तस्याधिरूढ-
मन्वारुरुक्षेदपि वर्षपूगैः ।
यः पञ्चवर्षो यदहोभिरल्पैः
प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४२ ॥

मैत्रेय उवाच –
एतत् तेऽभिहितं सर्वं यत् पृष्टोऽहमिह त्वया ।
ध्रुवस्योद्दामयशसश्चरितं संमतं सताम् ॥ ४३ ॥

धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् ।
स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४४ ॥

श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितम् ।
भवेद् भक्तिर्भगवति यया स्यात् क्लेशसंक्षयः ॥ ४५ ॥

महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः ।
यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४६ ॥

प्रयतः कीर्तयेत् प्रातः समवाये द्विजन्मनाम् ।
सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४७ ॥

पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथ वा ।
दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा ॥ ४८ ॥

श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ।
नेच्छंस्तत्राऽऽत्मनाऽऽत्मानं संतुष्ट इति सिध्यति ॥ ४९ ॥

ज्ञानमज्ञाततत्त्वाय यो दद्यात् सत्पथामृतम् ।
कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५० ॥

इदं मया तेऽभिहितं कुरूद्वह
ध्रुवस्य विख्यातविशुद्धकर्मणः ।
हित्वार्भकः क्रीडनकानि मातु-
र्गृहं च विष्णुं शरणं यो जगाम ॥ ५१ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः

श्रीशुक उवाच–
निशम्य कौषारविणोपवर्णितं
ध्रुवस्य वैकुण्ठपदाधिरोहणम् ।
प्ररूढभावो भगवत्यधोक्षजे
प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥

विदुर उवाच–
के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत ।
कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासत ॥ २ ॥

मन्ये महाभागवतं नारदं देवदर्शनम् ।
येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥

स्वधर्मशीलैः पुरुषैर्भगवान् पुरुषोत्तमः ।
इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥

यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः ।
मह्यं शुश्रूषवे ब्रह्मन् कार्त्स्न्येनाचष्टुमर्हसि ॥ ५ ॥

मैत्रेय उवाच–
ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ।
सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥

स जन्मनोपशान्तात्मा निःसङ्गः समदर्शनः ।
ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥

आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् ।
अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥ ८ ॥

अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ।
स्वरूपमवरुन्धानो नान्यदस्मात् तदैक्षत ॥ ९ ॥

जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः ।
लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ १० ॥

मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः ।
वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥

स्वर्वीथिर्वत्सरस्येष्टा भार्याऽसूत षडात्मजान् ।
पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥

पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः ।
प्रातर्मध्यन्दिनं सायमिति ह्यासन् प्रभासुताः ॥ १३ ॥

प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः ।
व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥

स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह ।
मनोरसूत महिषी वैराजा नड्वला सुतान् ॥ १५ ॥

पुरुकुत्सं त्रितं द्युम्नं सत्यव्रतमृतव्रतम् ।
अग्निष्टोममतीरात्रं सुद्युम्नं शिबिमुल्मुकम् ॥ १६ ॥

उल्मुकोऽजनयत् पुत्रान् पुष्करिण्यां षडुत्तमान् ।
अङ्गं सुनासमाख्यातिं क्रतुमाङ्गिरसं गयम् ॥ १७ ॥

सुनीथाऽङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् ।
यद्दौःशील्यात् स राजर्षिर्निर्विण्णो निरगात् पुरात् ॥ १८ ॥

यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल ।
गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥

अराजके तदा लोके दस्युभिः पीडिताः प्रजाः ।
जातो नारायणांशेन पृथुः पृथुपराक्रमः ॥ २० ॥

विदुर उवाच–
तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः ।
राज्ञः कथमभूद् दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥

किं वांहो वेनमुद्दिश्य ब्रह्मदण्डमयूयुजन् ।
दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥

नावध्येयः प्रजापालः प्रजाभिरघवानपि ।
यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥

एतदाख्याहि मे ब्रह्मन् सुनीथात्मजचेष्टितम् ।
श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥

मैत्रेय उवाच–
अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम् ।
नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥

तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः ।
हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥

राजन् हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि ते ।
छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥

न विदामेह देवानां हेलनं वयमण्वपि ।
यन्न गृह्णन्ति भागान् स्वान् ये देवाः कर्मसाक्षिणः ॥ २८ ॥

मैत्रेय उवाच–
अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ।
तत् प्रष्टुं व्यसृजद् वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥
नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह ।
सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥

सदस्या ऊचुः –
नरदेवेह भवतो नाघं हि मनाक् स्थितम् ।
अस्त्येकं प्राक्तनमघं यदि हेदृक् त्वमप्रजः ॥ ३१ ॥
तथा साधय भद्रं ते आत्मानं सुप्रजं नृप ।
इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥
यथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ।
यद् यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥
तांस्तान् कामान् हरिर्दद्याद् यान् यान् कामयते जनः ।
आराधितो यथैवैष तथा पुंसां फलोदयः ॥ ३४ ॥
इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये ।
पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥
तस्मात् पुरुष उत्तस्थौ हेममाल्यमलाम्बरः ।
हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥
स विप्रानुमतो राजा गृहीत्वाञ्जलिनौदनम् ।
अवघ्राय मुदा युक्तः प्रादात् पत्न्या उदारधीः ॥ ३७ ॥
सा तत् पुंसवनं राज्ञी प्राश्य वै पत्युराद‍धे ।
ततः काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥
स बाल एव पुरुषो मातामहमनुव्रतः ।
अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥
स शरासनमुद्यम्य मृगयुर्वनगोचरः ।
हन्त्यसाधुर्मृगान् दीनान् वेनोऽसावित्यरौज्जनः ॥ ४० ॥
आक्रीडे क्रीडतो बालान् वयस्यानतिदारुणः ।
प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥
तं विलक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः ।
यदा न शासितुं कल्पो भृशमासीत् सुदुर्मनाः ॥ ४२ ॥
प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः ।
कदपत्यभृतं दुःखं ये न विन्दन्ति दुर्भरम् ॥ ४३ ॥
यतः पापीयसी कीर्तिरधर्मश्च महान् नृणाम् ।
यतो विरोधः सर्वेषां यत आधिरनन्तकः ॥ ४४ ॥
कस्तं प्रजापदेशं वै मोहं बन्धनमात्मनः ।
पण्डितो बहुमन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥
कदपत्यं वरं मन्ये सदपत्याच्छुचास्पदात् ।
निर्विद्येत गृहान्मर्त्यो यत् क्लेशनिवहा गृहाः ॥ ४६ ॥
एवं स निर्विण्णमना नृपो गृहा-
न्निशीथ उत्थाय महोदयोदयात् ।
अलब्धनिद्रोऽनुपलक्षितो नृभि-
र्हित्वा गतो वेनसुवं प्रसुप्ताम् ॥ ४७ ॥
विज्ञाय निर्विद्य गतं पतिं प्रजाः
पुरोहितामात्यसुहृद्गणादयः ।
विचिक्युरुर्व्यामतिशोककातरा
यथा निगूढं पुरुषं कुयोगिनः ॥ ४८ ॥
अलक्षयन्तः पदवीं प्रजापते-
र्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ।
ऋषीन् समेतानभिवन्द्य साश्रवो
न्यवेदयन् पौरव भर्तृविप्लवम् ॥ ४९ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥

# अथ चतुर्दशोऽध्यायः

मैत्रेय उवाच–
भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः ।
गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम् ॥ १ ॥

वीर मातरमाहूय सुनीथां ब्रह्मवादिनः ।
प्रकृत्यसंमतं वेनमभ्यषिञ्चन् पतिं भुवः ॥ २ ॥

श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम् ।
निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः ॥ ३ ॥

स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः ।
अवमेने महाभागान् स्तब्धः सम्भावितः शठः ॥ ४ ॥

एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः ।
पर्यटन् रथमास्थाय कम्पयन्निव रोदसी ॥ ५ ॥

न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ।
एवं न्यवारयद् धर्मं भेरीघोषेण सर्वतः ॥ ६ ॥

वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम् ।
विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥

अहो उभयतः प्राप्तं लोकस्य व्यसनं महत् ।
दारुण्युभयतो दीप्त इव तस्करपालयोः ॥ ८ ॥

अराजकभयादेष कृतो राजाऽतदर्हणः ।
ततोऽप्यासीद् भयं त्वद्य कथं स्यात् स्वस्ति देहिनाम्॥ ९ ॥

अहेरिव पयः पोषः पोषकस्याप्यनर्थकृत् ॥ १० ॥

वेनः प्रकृत्यैव खलः सुनीथागर्भसम्भवः ।
निरूपितः प्रजापालः स जिघांसति वै प्रजाः ॥ ११ ॥

तथाऽपि सान्त्वयामोऽमुं माऽस्मांस्तत्पातकं स्पृशेत् ।
तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ॥ १२ ॥

सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् ।
लोकधिक्कारसन्दग्धं दहिष्यामः स्वतेजसा ॥ १३ ॥

एवमध्यवसायैनं मुनयो गूढमन्यवः ।
उपव्रज्याब्रुवन् वेनं सान्त्वयित्वाऽथ सामभिः ॥ १४ ॥

नृपवर्य निबोधैतद् यत् ते विज्ञापयाम भोः ।
आयुः श्रीबलकीर्तीनां तव तात विवर्धनम् ॥ १५ ॥

धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः ।
लोकान् विशोकान् वितरत्यथानन्त्यमसङ्गिनाम् ॥ १६ ॥

स ते मा विनशेद् वीर प्रजानां क्षेमलक्षणः ।
यस्मिन् विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १७ ॥

राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः ।
रक्षन् यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १८ ॥

यस्य राष्ट्रे पुरे चैव भगवान् यज्ञपूरुषः ।
इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमात्मकैः ॥ १९ ॥

तस्य राज्ञो महाराज भगवान् भूतभावनः ।
परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ २० ॥

तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे ।
लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः ॥ २१ ॥

तं सर्वलोकामरयज्ञसङ्ग्रहं
त्रयीमयं द्रव्यमयं तपोमयम् ।
यज्ञैर्विचित्रैर्यजतो भवाय ते
राजन् स्वदेशाननुरोद्धुमर्हसि ॥ २२ ॥

यज्ञेन युष्मद्विषये द्विजातिभि-
र्वितायमानेन सुराः कला हरेः ।
स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं
तद्धेलनं नार्हसि वीर चेष्टितुम् ॥ २३ ॥

वेन उवाच–
बालिशा बत यूयं वै अधर्मे धर्ममानिनः ।
ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २४ ॥

अवजानन्ति ये मूढा नृपरूपिणमीश्वरम् ।
नानुविन्दन्ति ते भद्रमिह लोके परत्र च ॥ २५ ॥

को यज्ञ पुरुषो नाम यत्र वो भक्तिरीदृशी ।
भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २६ ॥

विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः ।
पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ २७ ॥

एते चान्ये च विबुधाः प्रभवो वरशापयोः ।
देहे तिष्ठन्ति नृपतेः सर्वदेवमयो नृपः ॥ २८ ॥

तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ।
बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥ २९ ॥

मैत्रेय उवाच–
इत्थं विपर्ययमतिः पापीयानुत्पथं गतः ।
अनुनीयमानस्तद्याच्ञां न चक्रे भ्रष्टमङ्गलः ॥ ३० ॥

इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना ।
भग्नायां हव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ॥ ३१ ॥

हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ।
जीवन् जगदसावाशु कुरुते भस्मसाद् ध्रुवम् ॥ ३२ ॥

नायमर्हत्यसद्वृत्तो नरदेववरासनम् ।
यो वै यज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३३ ॥

को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् ।
प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनम् ॥ ३४ ॥

इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ।
निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया ॥ ३५ ॥

ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ।
सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३६ ॥

एकदा मुनयस्ते तु सरयूसलिलाप्लुताः ।
हुत्वाऽग्निं सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३७ ॥

वीक्ष्योत्थितान् महोत्पातानाहुर्लोकभयंकरान् ।
अप्यभद्रमनाथाया दस्युभ्यो न भवेद् भुवः ॥ ३८ ॥

एवं ब्रुवत्सु ऋषिषु धावतां सर्वतो दिशम् ।
पांसुः समुत्थितो भूमेश्चोराणां वसु लुम्पताम् ॥ ३९ ॥

तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम् ।
भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ४० ॥

चोरप्रायं जनपदं हीनसत्त्वमराजकम् ।
लोका नावारयञ्छक्ता अपि तद्दोषदर्शिनः ॥ ४१ ॥

ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ।
स्रवते ब्रह्म तस्यापि भिन्नभाण्डात् पयो यथा ॥ ४२ ॥

नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति ।
अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४३ ॥

विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ।
ममन्थुरूरुं तरसा तत्रासीद् बाहुको नरः ॥ ४४ ॥

काककृष्णोऽतिह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः ।
ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४५ ॥

तं तु तेऽवनतं दृष्ट्वा किं करोमीति वादिनम् ।
निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४६ ॥

तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ।
योऽपाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४७ ॥

मैत्रेय उवाच–
अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ।
बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ ४८ ॥

तद् दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ।
ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् ॥ ४९ ॥

ऋषय ऊचुः –
एष विष्णोर्भगवतः कला भुवनपालिनी ।
इयं च लक्ष्म्याः सम्भूतिः पुरुषस्यानपायिनी ॥ ५० ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्दशोऽध्यायः ॥

## अथ पञ्चदशोऽध्यायः

विप्रा ऊचुः–
अत्र तु प्रथमो राज्ञां पुमान् प्रथयिता यशः ।
पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ १ ॥

इयं च देवी सुदती गुणभूषणभूषणा ।
अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ २ ॥

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ३ ॥

मैत्रेय उवाच–
प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रमुखा जगुः ।
मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति तत्स्त्रियः ॥ ४ ॥

शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि ।
तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः ॥ ५ ॥

ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः ।
वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ६ ॥

पादयोररविन्दं च तं वै मेने हरेः कलाम् ।
यस्याप्रतिहतं चक्रमंशस्य परमेष्ठिनः ॥ ७ ॥

तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ।
आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः ॥ ८ ॥

सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ।
द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ ९ ॥

सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः ।
पत्न्याऽर्चिषाऽलङ्कृतया विरेजेऽग्निरिवापरः ॥ १० ॥

तस्मै जहार धनदो हैमं वीर वरासनम् ।
वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ ११ ॥

वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ।
इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १२ ॥

ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् ।
हरिस्सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १३ ॥

दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाऽम्बिका ।
सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १४ ॥

अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् ।
भूः पादुके योगमये द्यौः पुष्पबलिमन्वहम् ॥ १५ ॥

नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः ।
ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम् ॥ १६ ॥

सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः ।
सूतोऽथ मागधो वन्दी संस्तोतुमुपतस्थिरे ॥ १७ ॥

स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ।
मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ १८ ॥

पृथुरुवाच–
हे सूत हे मागध सौम्य वन्दिन्
लोकेऽधुनाऽस्पष्टगुणस्य मे स्यात् ।
किमाश्रयो मे स्तव एष योज्यतां
मा मय्यभूवन् वितथा गिरो वः ॥ १९ ॥

तस्मात् परोक्षेऽस्मदुपाश्रितान्यलं
करिष्यथ स्तोत्रमपीच्यवाचः ।
सत्युत्तमश्लोकगुणानुवादे
जुगुप्सितं न स्तवयन्ति सभ्याः ॥ २० ॥

महद्गुणानात्मनि कर्तुमिच्छन्
कः स्तावकैः स्तावयते सतोऽपि ।
स वै भविष्यन्निति विप्रलब्धो
जनापहासं कुमतिर्न वेद ॥ २१ ॥

प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ।
ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम् ॥ २२ ॥

वयं त्वविदिता लोके सूताद्यापि वरीमभिः ।
कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥ २३ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चदशोऽध्यायः ॥

## अथ षोडशोऽध्यायः

मैत्रेय उवाच–
इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ।
तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥

सूत उवाच–
नालं वयं ते महिमानुवर्णने
यो देववर्योऽवततार मायया ।
वेनाङ्गजातस्य च पौरुषाणि ते
वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥

अथाप्युदारश्रवसः पृथोर्हरेः
कलावतारस्य कथामृतादृताः ।
यथोपदेशं मुनिभिः प्रचोदिताः
श्लाघ्यानि कर्माणि वयं वितन्महे ॥ ३ ॥

एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ।
गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥

एते चान्ये च विबुधाः प्रभवो वरशापयोः ।
देहे तिष्ठन्ति नृपतेः सर्वदेवमयो नृपः ॥ २८ ॥

तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ।
बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥ २९ ॥

मैत्रेय उवाच–
इत्थं विपर्ययमतिः पापीयानुत्पथं गतः ।
अनुनीयमानस्तद्याञ्चां न चक्रे भ्रष्टमङ्गलः ॥ ३० ॥

इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना ।
भग्नायां हव्ययाञ्चायां तस्मै विदुर चुक्रुधुः ॥ ३१ ॥

हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ।
जीवन् जगदसावाशु कुरुते भस्मसाद् ध्रुवम् ॥ ३२ ॥

नायमर्हत्यसद्वृत्तो नरदेववरासनम् ।
यो वै यज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३३ ॥

को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् ।
प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनम् ॥ ३४ ॥

इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ।
निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया ॥ ३५ ॥

ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ।
सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३६ ॥

एकदा मुनयस्ते तु सरयूसलिलाप्लुताः ।
हुत्वाऽग्नीन् सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३७ ॥

वीक्ष्योत्थितान् महोत्पातानाहुर्लोकभयंकरान् ।
अप्यभद्रमनाथाया दस्युभ्यो न भवेद् भुवः ॥ ३८ ॥

एवं ब्रुवत्सु ऋषिषु धावतां सर्वतो दिशम् ।
पांसुः समुत्थितो भूमेश्चोराणां वसु लुम्पताम् ॥ ३९ ॥

तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम् ।
भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ४० ॥

चोरप्रायं जनपदं हीनसत्त्वमराजकम् ।
लोका नावारयञ्छक्ता अपि तद्दोषदर्शिनः ॥ ४१ ॥

ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ।
स्रवते ब्रह्म तस्यापि भिन्नभाण्डात् पयो यथा ॥ ४२ ॥

नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति ।
अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४३ ॥

विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ।
ममन्थुरूरुं तरसा तत्रासीद् बाहुको नरः ॥ ४४ ॥

काककृष्णोऽतिह्रस्वांगो ह्रस्वबाहुर्महाहनुः ।
ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४५ ॥

तं तु तेऽवनतं दृष्ट्वा किं करोमीति वादिनम् ।
निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४६ ॥

तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ।
योऽपाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४७ ॥

मैत्रेय उवाच–
अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ।
बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ ४८ ॥

तद् दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ।
ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् ॥ ४९ ॥

ऋषय ऊचुः –
एष विष्णोर्भगवतः कला भुवनपावनी ।
इयं च लक्ष्मीः सम्भूतिः पुरुषस्यानपायिनी ॥ ५० ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्दे चतुर्थशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

विप्रा ऊचुः–
अत्र तु प्रथमो राज्ञां पुमान् प्रथयिता यशः ।
पृथुर्नाम महाराजा भविष्यति पृथुश्रवाः ॥ १ ॥

इयं च देवी सुदती गुणभूषणभूषणा ।
अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ २ ॥

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ३ ॥

मैत्रेय उवाच–
प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रमुखा जगुः ।
मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति तत्स्त्रियः ॥ ४ ॥

शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि ।
तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः ॥ ५ ॥

ब्रह्मा जगद्गुरुर्देवः सहागत्य सुरेश्वरैः ।
वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ६ ॥

पादयोररविन्दं च तं वै मेने हरेः कलाम् ।
यस्याप्रतिहतं चक्रमंशस्य परमेष्ठिनः ॥ ७ ॥

तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ।
आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः ॥ ८ ॥

सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ।
द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ ९ ॥

सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः ।
पत्न्याऽर्चिषाऽलङ्कृतया विरेजेऽग्निरिवापरः ॥ १० ॥

तस्मै जहार धनदो हैमं वीर वरासनम् ।
वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ ११ ॥

वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ।
इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १२ ॥

ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् ।
हरिस्सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १३ ॥

दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाऽम्बिका ।
सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १४ ॥

अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् ।
भूः पादुके योगमये द्यौः पुष्पवलिमन्वहम् ॥ १५ ॥

नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः ।
ऋषयश्चाशिषः सत्यां समुद्रः शङ्खमात्मजम् ॥ १६ ॥

सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः ।
सूतोऽथ मागधो बन्दी संस्तोतुमुपतस्थिरे ॥ १७ ॥

स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ।
मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ १८ ॥

पृथुरुवाच–
हे सूत हे मागध सौम्य वन्दिन्
लोकेऽधुनाऽस्पष्टगुणस्य मे स्यात् ।
किमाश्रयो मे स्तव एष योज्यतां
मा मय्यभूवन् वितथा गिरो वः ॥ १९ ॥

तस्मात् परोक्षेऽस्मदुपाश्रितान्यलं
करिष्यथ स्तोत्रमपीड्यवाचः ।
सत्युत्तमश्लोकगुणानुवादे
जुगुप्सितं न स्तवयन्ति सभ्याः ॥ २० ॥

महद्गुणानात्मनि कर्तुमिच्छन्
कः स्तावकैः स्तावयते सतोऽपि ।
स वै भविष्यन्निति विप्रलब्धो
जनापहासं कुमतिर्न वेद ॥ २१ ॥

प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ।
ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम् ॥ २२ ॥

वयं त्वविदिता लोके सूताद्या अपि वरीमभिः ।
कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥ २३ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चदशोऽध्यायः ॥

## अथ षोडशोऽध्यायः

मैत्रेय उवाच–
इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ।
तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥

सूत उवाच–
नालं वयं ते महिमानुवर्णने
यो देववरोऽवततार मायया ।
वेनाङ्गजातस्य च पौरुषाणि ते
वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥

अथाप्युदारश्रवसः पृथोर्हरेः
कलावतारस्य कथामृतादृताः ।
यथोपदेशं मुनिभिः प्रचोदिताः
श्लाघ्यानि कर्माणि वयं वितन्महे ॥ ३ ॥

एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ।
गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥

एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ।
काले काले यथाभागं लोकयोरुभयोर्हितम् ॥ ५ ॥

वसु काल उपादत्ते काले चायं विमुञ्चति ।
समः सर्वेषु भूतेषु प्रतपन् सूर्यवद् विभुः ॥ ६ ॥

तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ।
भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥ ७ ॥

देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ।
कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥ ८ ॥

आप्याययत्यसौ लोकं वदनामृतमूर्तिना ।
सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥

अव्यक्तवर्त्मैष निगूढकार्यो
गम्भीरचेता उपगुप्तवित्तः ।
अनन्तमाहात्म्यगुणैकधामा
पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥

दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् ।
नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥

अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः ।
उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥

नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि ।
दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥

अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ।
वर्तते भगवानर्को यावत् तपति गोगणैः ॥ १४ ॥

रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ।
अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥

दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः ।
शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥

मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः ।
प्रजासु पितृवत् स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥ १७ ॥

देहिनामात्मवत् प्रेष्ठः सुहृदानन्दवर्धनः ।
मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥ १८ ॥

एष दोग्धा महीं वीरो गां सतीमोजसौषधीः ।
समां करिष्यते चेमां धनुःकोट्या समन्ततः ॥ १९ ॥

अयं तु साक्षाद्भगवांस्त्र्यधीशः
कूटस्थ आत्मा कलयावतीर्णः ।
यस्मिन्नविद्यारचितं निरर्थकं
पश्यन्ति नानात्वमिव प्रतीतम् ॥ २० ॥

अयं भुवो मण्डलमोदयाद्रे-
र्गोप्तैकवीरो नरदेवनाथः ।
आस्थाय जैत्रं रथमात्तचापः
पर्यस्यते दक्षिणतो यथार्कः ॥ २१ ॥

तस्मै नृपालाः किल तत्र तत्र
बलिं हरिष्यन्ति सलोकपालाः ।
मंस्यन्ति एषां स्त्रिय आदिराजं
चक्रायुधं तद्यश उद्धरन्त्यः ॥ २२ ॥

अयं महीं गां दुदुहेऽधिराजः
प्रजापतिर्वृत्तिकरः प्रजानाम् ।
यो लीलयाद्रीन् स्वशरासकोट्या
भिन्दन् समां गामकरोद् यथेन्द्रः ॥ २३ ॥

विस्फूर्जयन्नाजगवं धनुः स्वं
यदाचरत् क्ष्मामविषह्य आजौ ।
तदा निलिल्युर्दिशि दिश्यसन्तो
लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २४ ॥

एषोऽश्वमेधाञ्छतमाजहार
सरस्वती प्रादुरभूद्धि यत्र ।
अहार्षीद् यस्य हयं पुरन्दरः
शतक्रतुश्चरमे वर्तमाने ॥ २५ ॥

एष स्वसद्मोपवने समेत्य
सनत्कुमारं भगवन्तमेकम् ।
आराध्य भक्त्यालभतामलं तत्
ज्ञानं यतो ब्रह्म परं वदन्ति ॥ २६ ॥

तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः ।
श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २७ ॥

दिशो विजित्याप्रतिरुद्धचक्रः
स्वतेजसोत्पाटितलोकशल्यः ।
एवं सुरेन्द्रैरनुगीयमानो
महानुभावो भविता पतिर्भुवः ॥ २८ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे षोडशोऽध्यायः ॥

# अथ सप्तदशोऽध्यायः

मैत्रेय उवाच–
एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः ।
छन्दयामास तान् कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥

ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः ।
पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥

विदुर उवाच–
कस्माद् दधार गोरूपं धरित्री बहुरूपिणी ।
यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥

प्रकृत्या विषमा देवी कृता तेन समा कथम् ।
तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥

सनत्कुमाराद् भगवतो ब्रह्मन् ब्रह्मविदुत्तमात् ।
लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥

यच्चान्यदपि कृष्णस्य ब्रह्मन् भगवतः प्रभोः ।
श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥

भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च ।
वक्तुमर्हसि योऽदुह्यद् वैन्यरूपेण गामिमाम् ॥ ७॥

श्रीशुक उवाच–
चोदितो विदुरेणैवं वासुदेवकथां प्रति ।
प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥

मैत्रेय उवाच–
यदाऽभिषिक्तः पृथुरङ्ग विप्रै-
रामन्त्रितो जनतायाश्च पालः ।
प्रजा निरन्ने क्षितिपृष्ठ एत्य
क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥

प्रजा ऊचुः –
वयं राजन् जाठरेणाभितप्ता
यथाऽग्निना कोटरस्थेन वृक्षाः ।
त्वामद्य याताः शरणं शरण्यं
यः शाधि नो वृत्तिकरः पतिर्नः ॥ १० ॥

तन्नो भवानर्हति रातवेऽन्नं
क्षुधाऽर्दितानां नरदेवदेव ।
यावन्न नङ्क्ष्यामह उज्झितान्ना
वार्तापतिस्त्वं किल लोकपालः ॥ ११ ॥

मैत्रेय उवाच–
पृथुः प्रजानां करुणं निशम्य परिदेवितम् ।
दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥ १२ ॥

पृथिव्यौषधिबीजानि निगीर्णान्यसति शास्तरि ।
तदहं देहिनां वृत्तिमात्मयोगेन साधये ॥ १३ ॥[1]

इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः ।
संदधे विशिखं भूमौ क्रुद्धस्त्रिपुरहा यथा ॥ १४ ॥

प्रवेपमाना धरणी निशाम्योदायुधं च तम् ।
गौः सत्यपाद्रवद् भीता मृगीव मृगयोर्द्रुतम् ॥ १५ ॥

तामेवान्वव्रजद् वैन्यः कुपितोऽत्यरुणेक्षणः ।
शरं धनुषि संधाय यत्र यत्र पलायति ॥ १६ ॥

सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ।
धावती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १७ ॥

लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः ।
त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १८ ॥

अवोचाय महाभागं धर्मज्ञाऽपन्नवत्सल ।
त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १९ ॥

स त्वं जिघांससे कस्माद् दीनामकृतकिल्बिषाम् ।
अहनिष्यत् कथं योषां धर्मज्ञ इति यो मतः ॥ २० ॥

प्रहरन्ति न वै स्त्रीषु कृतागःस्वपि जन्तवः ।
किमुत त्वद्विधा राजन् करुणा दीनवत्सलाः ॥ २१ ॥

मां निहत्याजरां नावं यत्र विश्वं प्रतिष्ठितम् ।
आत्मानं च प्रजाश्चेमाः कथमम्भसि धास्यसि ॥ २२ ॥

पृथुरुवाच –
वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम् ।
भागं बर्हिषि या वृङ्क्ते न तनोषि च नो वसु ॥ २३ ॥

---

१. (अयं श्लोकः पूर्णप्रज्ञसंशोधनमन्दिरेण मुद्रापिते भागवते नास्ति । एतदभावे उत्तरश्लोकोऽनन्वित इव भाति ।)

यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः ।
तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते ॥ २४ ॥

त्वं खल्वौषधिवीजानि प्राक् सृष्टानि स्वयम्भुवा ।
न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २५ ॥

अमीषां क्षुत्परीतानामार्तानां परिदेवितम् ।
शमयिष्यामि तद्बाणैर्भिन्नायास्तव मेदसा ॥ २६ ॥

पुमान् योषिदुत क्लीब आत्मसंभावनोऽधमः ।
भूतेषु निरनुक्रोशो नृपाणां तद्वधो वरः ॥ २७ ॥

त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः ।
आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २८ ॥

एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम् ।
प्रणता प्राञ्जलिः प्राह मही संजातवेपथुः ॥ २९ ॥

धरण्युवाच –
नमः परस्मै पुरुषाय मायया
विन्यस्तनानातनवे गुणात्मने ।
नमः स्वरूपानुभवेन निर्धुत-
द्रव्यक्रियाकारकविभ्रमोर्मये ॥ ३० ॥

येनाहमात्मीयतनुर्विनिर्मिता
धात्रा यतोऽयं गुणसर्गसंग्रहः ।
स एव मां हन्तुमुदायुधः स्वरा-
डुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३१ ॥

य एतदादावसृजच्चराचरं
स्वमाययाऽऽत्माश्रययाऽवितर्क्यया ।
तयैव सोऽयं किल गोप्तुमुद्यतः
कथं नु मां धर्मपरो जिघांसति ॥ ३२ ॥

नूनं बतेशस्य समीहितं जनैः
स्वमायया दुर्जययाऽकृतात्मभिः ।
न लक्ष्यते यस्त्वकरोदकारयद्
योऽनेक एकः परतः स ईश्वरः ॥ ३३ ॥

सर्गादि योऽस्यानुरुणद्धि शक्तिभि-
र्द्रव्यक्रियाकारकचेतनात्मभिः ।
तस्मै समुन्नद्धविरुद्धशक्तये नमः
परस्मै पुरुषाय वेधसे ॥ ३४ ॥

स वै भवानात्मविनिर्मितं जगद्
भूतेन्द्रियान्तःकरणात्मकं विभो ।
संस्थापयिष्यन्नज मां रसातला-
दभ्युज्जहाराम्भस आदिसूकरः ॥ ३५ ॥

अपामुपस्थे मयि नाव्यवस्थिताः
प्रजा भवानद्य रिरक्षिषुः किल ।
स वीरमूर्तिः समभूद् धराधरो
यो मां पयस्युग्रशरो जिघांसति ॥ ३६ ॥

नूनं जनैरीहितमीश्वराणा-
मस्मद्विधैस्तद्गुणसर्गमायया ।
न ज्ञायते मोहितचित्तवृत्तिभि-
स्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३७ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तदशोऽध्यायः ॥

## अथाष्टादशोऽध्यायः

मैत्रेय उवाच–
इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् ।
पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥

सन्नियच्छ विभो मन्युं निबोध श्रावितं च मे ।
सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥

अस्मिँल्लोकेऽथवाऽमुष्मिन् मुनिभिस्तत्त्वदर्शिभिः ।
दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥ ३ ॥

तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान् ।
अवरः श्रद्धयोपेत उपायान् विन्दतेऽञ्जसा ॥ ४ ॥

ताननादृत्य योऽविद्वानर्थानारभते स्वयम् ।
तस्य व्यभिचरन्त्यर्थाः प्रारब्धाश्च पुनः पुनः ॥ ५ ॥

पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशां पते ।
भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥

अपालिता नादृतास्ता भवद्भिर्लोकपालकैः ।
चौरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमौषधीः ॥ ७ ॥

नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा ।
तत्र दृष्टेन योगेन भवानादातुमर्हति ॥ ८ ॥

वत्सं कल्पय मे वीर येनाहं वत्सला तव ।
धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम् ॥ ९ ॥

दोग्धारं च महाबाहो भूतानां भूतभावन ।
अन्नमीप्सितमूर्जस्वद् भगवान् वाञ्छते यदि ॥ १० ॥

समां च कुरु मां राजन् देववृष्टं यथा पयः ।
अपर्तावपि भद्रं ते उपावर्तेत मां विभो ॥ ११ ॥

इति प्रियहितं वाक्यं भुव आदाय भूपतिः ।
तथा चकार सर्वत्र सारमाददते बुधाः ॥ १२ ॥

वत्सं कृत्वा मनुं पाणावदुहत् सकलौषधीः ।
ततोऽपरे यथाकामं दुदुहुः पृथुभाविताम् ॥ १३ ॥

ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तमाः ।
वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥

कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।
हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥

दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ।
विधाय दुदुहुः क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥

गन्धर्वाप्सरसोऽधुक्षन् पात्रे पद्ममये पयः ।
वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम् ॥ १७ ॥

वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत ।
आमपात्रे महाभाग श्रद्धया श्राद्धदेवताः ॥ १८ ॥

प्रकल्प्य वत्सं कपिलं सिद्धाः संकल्पनामयीम् ।
सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥

अन्ये च मायिनो मायामन्तर्धानगतात्मना ।
मयं प्रकल्प्य वत्सत्वे दुदुहुर्धारणामयीम् ॥ २० ॥

यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः ।
भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥

तथाऽहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् ।
वत्सं विधाय दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥

पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् ।
अरण्यपात्रे चाधुक्षन् मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥

क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वकलेवरे ।
सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥

वटवत्सा वनस्पतयः पृथग्रसमयं पयः ।
गिरयो हिमवद्वत्सा नानाधातून् स्वसानुषु ॥ २५ ॥

सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रं पृथक् पृथक् ।
सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥

एवं पृथ्वादयः पृथ्वीमदुहन् स्वन्नमात्मनः ।
दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ॥ २७ ॥

ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः ।
दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥

चूर्णयन् स्वधनुःकोट्या गिरिकूटानि राजराट् ।
भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥

अथास्मिन् भगवान् वैन्यः प्रजानां वृत्तिदः पिता ।
निवासान् कल्पयाञ्चक्रे तत्र तत्र यथार्हतः ॥ ३० ॥

ग्रामान् पुरः पत्तनानि दुर्गाणि विविधानि च ।
घोषान् व्रजांश्च शिबिरान् नगरान् खेटखर्वटान् ॥ ३१ ॥

प्राक् पृथोरिह नैवैषा पुरग्रामादिकल्पना ।
यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः ॥ ३२ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे अष्टादशोऽध्यायः ॥

# अथ एकोनविंशोऽध्यायः

मैत्रेय उवाच–
अथादीक्षत राजर्षिर्हयमेधशतेन सः ।
ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥

तदभिप्रेत्य भगवान् कर्मातिशयमात्मनः ।
शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥

यत्र यज्ञपतिः साक्षाद् भगवान् हरिरीश्वरः ।
अन्वाहूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ॥ ३ ॥

अन्वितौ ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः ।
उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥

सिद्धा विद्याधरा दैत्या दानवा गुह्यकादयः ।
सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः ॥ ५ ॥

कपिलो नारदो दत्तो योगेशाः सनकादयः ।
तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥ ६ ॥

यत्र धर्मदुघा भूमिः सर्वकामदुघा मही ।
दोग्धि स्माभीप्सितानर्थान् यजमानस्य भारत ॥ ७ ॥

ऊहुः सर्वरसान् नद्यः क्षीरदध्यन्नगोरसान् ।
तरवो भूरिवर्ष्माणः प्रासूयन्त मधुच्युतः ॥ ८ ॥

सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम् ।
उपायनान्युपाजह्रुः सर्वे लोकाः सपालकाः ॥ ९ ॥

इति चाधोक्षजेशस्य पृथोर्यज्ञमहोदयम् ।
असूयन् भगवानिन्द्रः प्रतिघातमचीकरत् ॥ १० ॥

चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ।
वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥

तमत्रिर्भगवानैक्षत् त्वरमाणं विहायसा ।
आमुक्तमिव पाषण्डं योऽधर्मे धर्मविभ्रमः ॥ १२ ॥

अत्रिणा चोदितो हन्तुं पृथुपुत्रो महारथः ।
अन्वधावत संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १३ ॥

तं तादृशाकृतिं वीक्ष्य मेनेऽधर्मशरीरिणम् ।
जटिलं भस्मना छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥

पापान्निवृत्तं वै भूयो हन्तवेऽत्रिरचोदयत् ।
जहि यज्ञहनं तात महेन्द्रं विबुधाधिपम् ॥ १५ ॥

एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ।
अन्वधावदतिक्रुद्धो रावणं गृध्रराडिव ॥ १६ ॥

सोऽश्वं रूपं च तद्धित्वा तस्मा अन्तर्हितः स्वराट् ।
धीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥

तत् तस्य चाद्भुतं कर्म विलक्ष्य परमर्षयः ।
नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥

उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः ।
चषालयूपतश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥

अत्रिः संदर्शयामास त्वरमाणं विहायसा ।
कपालखट्वाङ्गधरं वीरो नैनमबाधत ॥ २० ॥

अत्रिणा चोदितस्तस्मै सन्दधे विशिखं रुषा ।
सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ॥ २१ ॥

वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् ।
तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥

यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया ।
तानि पापस्य षण्डानि लिङ्गं षण्डमिहोच्यते ॥ २३ ॥

एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया ।
तद्गृहीतविसृष्टेषु पाषण्डेषु मतिर्नृणाम् ॥ २४ ॥

धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु ।
प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥

तदभिज्ञाय भगवान् पृथुः पृथुपराक्रमः ।
इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥

तमृत्विजः शक्रवधाभिसन्धितं
विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसा ।
निवारयामासुरहो महामते
न युज्यतेऽत्रान्यवधोऽप्रचोदितात् ॥ २७ ॥

वयं मरुत्वन्तमिहार्थनाशनं
ह्वयामहे त्वच्छ्रवसा हतत्विषम् ।

अयातयामोपहवैस्तमग्रये
प्रसह्य राजन् जुहवाम तेऽहितम् ॥ २८ ॥

इत्यामन्त्र्य क्रतुपतिं विदुरस्यर्त्विजो रुषा ।
स्रुग्घस्तान् जुह्वतोऽभ्येत्य स्वयंभूः प्रत्यषेधत ॥ २९ ॥

न वध्यो भवतामिन्द्रो यद् यज्ञो भगवत्तनुः ।
तं जिघांसत यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥

तदिदं पश्यत महद् धर्मव्यतिकरं द्विजाः ।
इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्धि जिघांसया ॥ ३१ ॥

पृथुकीर्तिः पृथो भूयास्त्वं ह्येकोनशतक्रतुः ।
अलं ते क्रतुभिः स्विष्टैर्यद् भवान् मोक्षधर्मवित् ॥ ३२ ॥

नैवात्मने महेन्द्राय रोषमाहर्तुमर्हसि ।
उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ ॥ ३३ ॥

मास्मिन् महाराज कृथाः स्म चिन्तां
निशामयास्मद्वच आदृतात्मा ।
यद् ध्यायतो दैवहतं नु कर्तुं
मनोऽतिरुष्टं विशते तमोऽन्धम् ॥ ३४ ॥

क्रतुर्विरमतामेष देवेषु दुरवग्रहः ।
धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः ॥ ३५ ॥

एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम् ।
ह्रियमाणं विचक्ष्वैतद् यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥

भवान् परित्रातुमिहावतीर्णो
धर्मं च नानासमयानुरूपम् ।
वेनापचारादवलुप्तमद्य
तद्देहतो विष्णुकलाऽसि वैन्य ॥ ३७ ॥

स त्वं विमृश्याभिभवं प्रजापते
सङ्कल्पितं विश्वसृजोऽतिपीपृहि ।
ऐन्द्रीं च मायामुपधर्ममातरं
प्रचण्डपाखण्डपथं प्रभो जहि ॥ ३८ ॥

मैत्रेय उवाच–
इत्थं स लोकगुरूणा समादिष्टो विशांपतिः ।
तथा च कृतवान् सख्यं मघोनाऽपि च सन्दधे ॥ ३९ ॥

कृतावभृथस्नानाय पृथवे भूरिकर्मणे ।
वरान् ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥

विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः ।
आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥

# अथ विंशोऽध्यायः

मैत्रेय उवाच –
भगवांश्चापि वैकुण्ठः साकं मघवता विभुः ।
यज्ञैर्यज्ञपतिः स्तुष्टो यज्ञभुक् तमभाषत ॥ १ ॥

श्रीभगवानुवाच –
एष ते ह्यकार्षीद् भङ्गं हयमेधशतस्य ह ।
क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि ॥ २ ॥

सुधियः साधवो लोके नरदेव नरोत्तम ।
नाभिद्रुह्यन्ति भूतेभ्यो यर्हनात्मा कलेवरम् ॥ ३ ॥

पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया ।
श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥

अत एव इमं विद्वानविद्याकामकर्मभिः ।
आरब्धमिति नैवास्मिन् प्रतिबुद्धो न सज्जते ॥ ५ ॥

असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे ।
अपत्ये द्रविणे दारे कः कुर्यान्ममतां बुधः ॥ ६ ॥

एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ।
सर्वगोऽनावृतः साक्षी निरात्माऽऽत्मात्मनः परः ॥ ७ ॥

देहापायार्थस्तद्धर्मा न स्युस्तद्द्रष्टुरात्मनः ।
कैवल्यं तस्य वै धर्मः सुषुप्तं तन्निदर्शनम् ॥ ८ ॥

य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः ।
नाज्यते प्रकृतिस्थोऽपि तद्गुणैः समवस्थितः ॥ ९ ॥

यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयाऽन्वितः ।
भजते शनकैस्तस्य मनो राजन् प्रसीदति ॥ १० ॥

परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः ।
शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ ११ ॥

उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ।
कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ १२ ॥

भिन्नस्य लिङ्गस्य गुणप्रवाहं
द्रव्यक्रियाकारकचेतनात्मनः ।
दृष्ट्वा सुसंपत्सु विपत्सु सूरयो न
विक्रियन्ते मयि बद्धसौहृदाः ॥ १३ ॥

समः समानोत्तममध्यमाधमः
सुखे च दुःखे च जितेन्द्रियाशयः ।
मयोपक्लृप्ताखिलसत्त्वसंयुतो
विधत्स्व धीराखिललोकरक्षणम् ॥ १४ ॥

श्रेयः प्रजापालनमेव राज्ञो
यत् सांपराये सुकृतं षष्ठमंशम् ।
अतोऽन्यथा हृतपुण्यः प्रजा-
नामरक्षिता करहारोऽघमत्ति ॥ १५ ॥

एवं द्विजाग्र्यानुमतानुवृत्त-
धर्मप्रधानान्यतमोऽविताऽस्याः ।
ह्रस्वेन कालेन गृहोपयातान्
द्रष्टासि सिद्धाननुरक्तलोकः ॥ १६ ॥

वरं च मत् कंचन मानवेन्द्र
वृणीष्व तेऽहं गुणशीलयन्त्रितः ।
नाहं मखैर्वै सुलभस्तपोभि-
र्योगेन वा यः समचित्तवर्ती ॥ १७ ॥

मैत्रेय उवाच–
स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित् ।
अनुशासित आदेशं शिरसा जगृहे हरेः ॥ १८ ॥

स्पृशन्तं पादयोः शीर्ष्णा व्रीडन्तं स्वेन कर्मणा ।
शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १९ ॥

भगवानपि विश्वात्मा पृथुनोपहृतार्हणः ।
समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥ २० ॥

प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः ।
पश्यन् पद्मपलाशाक्षो न प्रतस्थे सुहृत् सताम् ॥ २१ ॥

स आदिराजो रचिताञ्जलिर्हरिं
विलोकितुं नाशकदश्रुलोचनः ।
न किंचनोवाच स बाष्पविक्लवो
हृदोपगुह्यामुमथ व्यवस्थितः ॥ २२ ॥

अथावमृज्याश्रुकणान् विलोक-
यन्नतृप्तदृग्गोचरमाह पूरुषम् ।
पदा स्पृशन्तं क्षितिमंस उन्नते
विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २३ ॥

पृथुरुवाच –
वरान् विभो त्वद् वरदेश्वराद् बुधः
कथं वृणीते गुणविक्रियात्मनाम् ।
ये नारकाणामपि सन्ति चैहिकाः
तानीश कैवल्यपतेर्वृणीत कः ॥ २४ ॥

न कामये नाथ तदप्यहं कचि-
न्न यत्र युष्मच्चरणाम्बुजासवम् ।
महत्तमान्तर्हृदयान्मुखच्युतं
विधत्स्व कर्णायुतमेष मे वरः ॥ २५ ॥

स उत्तमश्लोकमहन्मुखच्युतो
भवत्पदाम्भोजसुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां
कुयोगिनां नो वितरत्यलं वरैः ॥ २६ ॥

यशः शिवं सुश्रव आर्यसङ्गमे
यदृच्छया चोपशृणोति ते सकृत् ।
कथं गुणज्ञो विरमेद् विना पशुं
श्रीर्यत् प्रवव्रे गुणसंग्रहेच्छया ॥ २७ ॥

अथाभजं त्वाऽखिलपूरुषोत्तमं
गुणालयं पद्मकरेव लालसः ।
अप्यावयोरेकपतिस्पृधोः कलि-
र्न स्यात् कृतस्त्वच्चरणैकतानयोः ॥ २८ ॥

जन्तोर्जगत्यां जगदीश वैशसं
स्यादेव यत् कर्मणि नः समीहितम् ।
करोषि फल्ग्वप्युरु दीनवत्सल
स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २९ ॥

भजन्त्यथ त्वामत एव साधवो
व्युदस्तमायागुणविभ्रमोदयम् ।
भवत्पदानुस्मरणादृते सतां
निमित्तमन्यद् भगवन् न विद्महे ॥ ३० ॥

मन्ये गिरं ते जगतां विमोहिनीं
वरं वृणीष्वेति भजन्तमात्थ यत् ।
वाचा नु तन्त्या यदि ते जनोऽसितः
कथं पुनः कर्म करोति मोहितः ॥ ३१ ॥

त्वन्मायया ऽद्धा जगदीश खण्डितो
यदन्यदाशास्त ऋतात्मनोऽबुधः ।
यथा चरेद् बालहितं पिता स्वयं
तथा त्वमेवार्हसि नः समीहितम् ॥ ३२ ॥

श्रीभगवानुवाच –
साधु तेऽव्रसितं राजन्नाशास्ते न यदाशिषः ।
स्वर्गापवर्गनरकान् समं पश्यति मत्परः ॥ ३३ ॥

प्रीतोऽहं ते महाराज रोषं दुस्त्यजमत्यजः ।
श्रद्धधानो मदादेशं तन्मह्यं परमार्हणम् ॥ ३४ ॥

मैत्रेय उवाच–
इति वैन्यस्य राजर्षेः प्रतिनन्द्यार्थवद् वचः ।
पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥ ३५ ॥

देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः ।
किन्नराप्सरसोऽमर्त्याः खगा भूतान्यनेकशः ॥ ३६ ॥

यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः ।
सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३७ ॥

भगवानपि राजर्षेः सोपाध्यायस्य पश्यतः ।
हरन्निव मनोऽमुष्य स्वधाम प्रत्यगात् प्रभुः ॥ ३८ ॥

अदृष्टाय नमस्कृत्य स्वस्य संदर्शितात्मने ।
वासुदेवाय देवानां देवाय स्वपुरं ययौ ॥ ३९ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे विंशोऽध्यायः ॥

## अथैकविंशोऽध्यायः

मैत्रेय उवाच–
मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः ।
महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥

चन्दनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ।
पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितम् ॥ २ ॥

संवृतैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम् ।
तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥ ३ ॥

प्रजास्तं दीपबलिभिः संभृताशेषमङ्गलैः ।
अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः ॥ ४ ॥

शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ।
विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥

पूजितः पूजयामास तत्र तत्र महायशाः ।
पौरान् जानपदांस्तांस्तान् प्रीतः प्रियवरप्रदः ॥ ६ ॥

स एवमादीन्यनवद्यचेष्टितः
कर्माणि भूयांसि महन्महत्तमः ।
कुर्वन् शशासावनिमण्डलं यशः
स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥

सूत उवाच–
श्रुत्वा ऽऽदिराजस्य यशो विजृम्भितं
गुणैरशेषैर्गुणवत्सभाजितम् ।
क्षत्ता महाभागवतः सदस्पते
कौशारविं प्राह गुरुं समर्चयन् ॥ ८ ॥

विदुर उवाच–
सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः ।
बिभ्रत् स वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥

को न्वस्य कीर्तिं न शृणोत्यभिज्ञो
यद्विक्रमोच्छिष्टमशेषभूपाः ।
लोकाः सपाला उपजीवन्ति काम-
मद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥

मैत्रेय उवाच–
गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन् ।
आरब्धानेव बुभुजे भोगान् पुण्यजिहासया ॥ ११ ॥

सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक् ।
अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥

एकदाऽऽसीन्महासत्रदीक्षा तत्र दिवौकसाम् ।
समाजो ब्रह्मर्षीणां च देवर्षीणां च सत्तम ॥ १३ ॥

तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः ।
उत्थितः स सदोमध्ये ताराणामुडुराडिव ॥ १४ ॥

प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः ।
सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥

व्यूढवक्षा बृहच्छ्रोणिर्वलीवल्गुतरोदरः ।
आवर्तनाभिरोजस्वी काञ्चनोरुरुदग्रपात् ॥ १६ ॥

सूक्ष्मवक्रासितस्निग्धमूर्धजः कम्बुकन्धरः ।
महाधने दुकूलाग्र्ये परिधायोपधाय च ॥ १७ ॥

व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः ।
कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः ॥ १८ ॥

शिशिरस्निग्धताराक्षः तानैक्षत समन्ततः ।
ऊचिवानिदमुर्वीशः सदस्यान् हर्षयन्निव
चारु चित्रपदं श्लक्ष्णं मृष्टं गूढमविक्लवम् ॥ १९ ॥

पृथुरुवाच –
सभ्याः शृणुत भद्रं वः साधवो य इहागताः ।
सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २० ॥

अहं दण्डधरो धात्रा प्रजानामिह योजितः ।
रक्षिता वृत्तिदस्स्वेषु सेतुषु स्थापिता पृथक् ॥ २१ ॥

तस्य मे तदनुष्ठानाद् यदाहुर्ब्रह्मवादिनः ।
लोकाः स्युः कामसंदोहा यस्य तुष्यति दिष्टदृक् ॥ २२ ॥

य उद्धरेत् करं राजा प्रजा धर्मेष्वशिक्षयन् ।
प्रजानां शमलं भुङ्क्ते भागं च स्वं जहाति सः ॥ २३ ॥

तत् प्रजा भर्तृपिण्डार्थं स्वार्थमेवानसूयवः ।
कुरुताधोक्षजधियं तर्हि मेऽनुग्रहः कृतः ॥ २४ ॥

यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः ।
कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत् प्रेत्य तत् फलम् ॥ २५ ॥

अस्ति यज्ञपतिर्नाम केषांचिदिह सत्तमाः ।
इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद् भुवः ॥ २६ ॥

मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः ।
प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः ॥ २७ ॥

ईदृशानामथान्येषामजस्य च भवस्य च ।
प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता ॥ २८ ॥

राज्यस्वर्गापवर्गाणां प्रायेणैकात्महेतुना ।
दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् ॥ २९ ॥

यत्पादसेवाभिरुचिस्तपस्विना-
मशेषजन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती
यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ ३० ॥

विनिर्धुताशेषमनोमलः पुमा-
नसङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुन-
र्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३१ ॥

तमेव यूयं भजतात्मवृत्तिभि-
र्मनोवचः कायगुणैः स्वकर्मभिः ।
अमायिनः कामदुघाङ्घ्रिपङ्कजं
यथाधिकारावसितार्थसिद्धये ॥ ३२ ॥

असाविहानेकगुणोऽध्वरैः सता
पृथग्विधैर्द्रव्यगुणक्रियोक्तिभिः ।
सम्पद्यतेऽर्थाशयलिङ्गनामभि-
र्विशुद्धविज्ञानघनस्वरूपतः ॥ ३३ ॥

प्रधानकालाशयकर्मसङ्ग्रहः
शरीरशेषं प्रतिपद्य चेतनः ।
क्रियाफलत्वेन विभुर्विभाव्यते
यथाऽनलो दारुषु तद्गुणात्मकः ॥ ३४ ॥

अहो वतामी वितरन्त्यनुग्रहं
हरिं गुरुं यज्ञभुजामधीश्वरम् ।
स्वधर्मयोगेन यजन्ति मामका
निरन्तरं क्षोणितले धृतव्रताः ॥ ३५ ॥

मा जातु तेजः प्रभवेन्महर्द्धिभि-
स्तितिक्षया तपसा विद्यया च ।

देदीप्यमानेऽजितदेवतानां
कुले स्वयं राजकुले द्विजानाम् ॥ ३६ ॥

ब्रह्मण्यदेवः पुरुषः पुरातनो
नित्यं हरिर्यच्चरणाभिवन्दनात् ।
अवाप लक्ष्मीमनपायिनीं यशो
जगत्पवित्रं च महत्तमाग्रणीः ॥ ३७ ॥

यत्सेवयाऽशेषगुणाश्रयः स्वराट्
विप्रप्रियस्तुष्यति काममीश्वरः ।
तदेव तद्धर्मपरैर्विनीतैः
सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥ ३८ ॥

पुमाल्लभेताप्यतिवेलमात्मनः
प्रसादतोऽत्यन्तशमं स्वतः स्वयम् ।
यन्नित्यसम्बन्धनिषेवया ततः परं
किमत्रास्ति सुखं हविर्भुजाम् ॥ ३९ ॥

अश्नात्यनन्तः खलु तत्त्वकोविदैः
श्रद्धाहुतं यन्मुख इज्यनामभिः ।
न वै तथा चेतनया बहिष्कृते
हुताशने पारमहंस्यवर्यगुः ॥ ४० ॥

यद् ब्रह्म नित्यं विरजं सनातनं
श्रद्धातपोमङ्गलमौनसंयमैः ।
समाधिना बिभ्रदिहार्थसिद्धये
यत्रेदमादर्श इवावभासते ॥ ४१ ॥

तेषामहं पादसरोजरेणु-
मार्या वहेयाधिकिरीट आयुः ।
यं नित्यदा बिभ्रत आशुपापं
नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४२ ॥

गुणालयं शीलधनं कृतज्ञं
वृद्धाश्रयं संवृणते नु संपदः ।
प्रसीदतां ब्रह्मकुलं गवां च
जनार्दनः सानुचरश्च मह्यम् ॥ ४३ ॥

मैत्रेय उवाच–
इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः ।
तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ॥ ४४ ॥

पुत्रेण जयते लोक इति सत्यवती श्रुतिः ।
ब्रह्मदण्डहतः पापो यद् वेनोऽत्यतरत् तमः ॥ ४५ ॥

हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।
विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः ॥ ४६ ॥

वीरवर्य पितः पृथ्व्याः समाः संजीव शाश्वतीः ।
यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥ ४७ ॥

अहो वयं ह्यद्य पवित्रकीर्ते
त्वयैव नाथेन मुकुन्दनाथाः ।
यदुत्तमश्लोकतमस्य विष्णो-
र्ब्रह्मण्यदेवस्य कथां व्यनक्ति ॥ ४८ ॥

नात्यन्तिकमिदं नाथ तव जीव्यानुशासनम् ।
प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ४९ ॥

अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो ।
भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ॥ ५० ॥

नमो विवृद्धसत्त्वाय पुरुषाय महीयसे ।
यो ब्रह्मक्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५१ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकविंशोऽध्यायः ॥

# अथ द्वाविंशोऽध्यायः

मैत्रेय उवाच–
जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् ।
तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥

तांस्तु सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा ।
लोकानपापान् कुर्वन्त्या सानुगोऽचष्ट लक्षितान् ॥ २ ॥

तद्दर्शनोद्गतप्राणान् प्रत्यादित्सुरिवोत्थितः ।
ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥

गौरवाद्यन्त्रितः सभ्यः प्रश्रयानतकन्धरः ।
विधिवत् पूजयाञ्चक्रे गृहीताध्यर्हणासनान् ॥ ४ ॥

तत्पादशौचसलिलैर्मार्जितालकबन्धनः ।
तत्र शीलवतां वृत्तिमाचरन् मानयन्निव ॥ ५ ॥

हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् ।
श्रद्धासंयमसम्पन्नः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥

पृथुरुवाच –
अहो आचरितं कृष्णे मङ्गलं मङ्गलायनाः ।
यस्य वो दर्शनं ह्यासीद् दुर्दर्शानां कुयोगिनः ॥ ७ ॥

किं तस्य दुर्लभतरमिहलोके परत्र च
यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः ॥ ८ ॥

नैव लक्ष्यते लोको लोकान् पर्यटतोऽपि यान्
यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ॥ ९ ॥

अधना अपि ते धन्याः साधवो गृहमेधिनः ।
यद्गृहा अर्हवर्याम्बुतृणभूमिसुवाग्धराः ॥ १० ॥

व्यालालयद्रुमा ह्येते संसिद्धाखिलसंपदः ।
यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥

स्वागतं वो द्विजश्रेष्ठा यद् व्रतानि मुमुक्षवः ।
चरन्ति श्रद्धया धीरा बाला एव बृहन्ति वै ॥ १२ ॥

कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम् ।
व्यसनावाप एतस्मिन् पतितानां स्वकर्मभिः ॥ १३ ॥

भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते ।
कुशलाकुशला यत्र न सन्ति मतिवृत्तयः ॥ १४ ॥

तदहं कृतविश्रम्भः सुहृदोऽत्र तपस्विनाम् ।
संपृच्छे भव एतस्मिन् क्षेमः केनाञ्जसा भवेत् ॥ १५ ॥

व्यक्तं ह्यात्मवतामात्मा भगवानात्मभावनः ।
स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥

मैत्रेय उवाच –
पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ।
स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥

सनत्कुमार उवाच–
साधु पृष्टं महाराज सर्वभूतहितात्मना ।
भवता विदुषा चापि साधूनां गतिरीदृशी ॥ १८ ॥

संगमः खलु साधूनामुभयेषां सुसंमतः ।
सत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥

अस्त्येव राजन् भवतो मधुद्विषः
पादारविन्देऽस्य गुणानुवादने ।
रतिः सदा या विधुनोति नैष्ठिकी
कामं कषायं मलमन्तरात्मनः ॥ २० ॥

शास्त्रेष्वियानेव सुनिश्चितो नृणां
क्षेमस्य सम्यग्विमृशेषु हेतुः ।
असङ्ग आत्मव्यतिरिक्तवस्तुनि
दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥

तच्छ्रद्धया भगवद्धर्मचर्यया
जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं
पुण्यश्रवःकथया पुण्यया च ॥ २२ ॥

अर्थेन्द्रियारामगुणेष्वतृष्णया
तत्सम्मतानामपरिग्रहेण च ।
विविक्तरुच्या परितोष आत्मन्
विना हरेर्गुणपीयूषपानात् ॥ २३ ॥

अहिंसया पारमहंस्यचर्यया
स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ।
यमैरकामैर्नियमैरभिध्यया
निरीहया द्वन्द्वतितिक्षया च ॥ २४ ॥

हरेर्मुहुस्तत्परकर्णपूरया
गुणाभिधानेन विजृम्भमाणया ।
भक्त्या ह्यसङ्गः सदसत्परात्मनि
स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥

यदा रतिर्ब्रह्मणि नैष्ठिकी पुमा-
नाचार्यवान् ज्ञानविरागरंहसा ।
दहत्यवीजं हृदयं जीवकोशं
पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥

दग्धाशयो मुक्तसमस्ततद्गुणो
नैवात्मनो बहिरन्तर्विचष्टे ।
परात्मनोर्यद् व्यवधानं पुरस्तात्
स्वप्ने यथाऽपुरुषस्तद्विनाशे ॥ २७ ॥

आत्मानमिन्द्रियार्थं च परं यदुभयोरपि ।
सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ॥ २८ ॥

निमित्ते सति सर्वत्र जलादावपि पूरुषः ।
आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥ २९ ॥

इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतो मनः ।
चेतनां हरते बुद्धेः स्तुम्बस्तोयमिव ह्रदात् ॥ ३० ॥

भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ।
तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥

नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः ।
यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥ ३२ ॥

अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ।
भ्रंशितो ज्ञानविज्ञानाद् येनाविशति मुख्यताम् ॥ ३३ ॥

न कुर्यात् कर्हिचित् सङ्गं तमस्तीव्रं तितीर्षुणा ।
धमार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥ ३४ ॥

तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते ।
त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥ ३५ ॥

परावरे च ये भावा गुणव्यतिकरादनु ।
न तेषां विद्यते क्षेमं ईशविध्वंसिताशिषाम् ॥ ३६ ॥

मनोमात्रमिदं विश्वं यथा स्वप्ने मनः क्रिया ।
क्रिया च वासनामात्रं साऽनीहायां प्रलीयते ॥ ३७ ॥

आत्मा त्वनीहया साक्षात् स्वयंज्योतिः प्रसिद्ध्यति
एवं व्युदस्यात्ममायां भिदामुपरमेन्मुनिः ॥ ३८ ॥

न यत्र निद्रा मूर्च्छा वा नार्थदृक् च मनोरथः ।
नानुवृत्तिर्न प्रलयस्तद् ब्रह्म विजितात्मनः ॥ ३९ ॥

तत्त्वं नरेन्द्र जगतामथ तस्थुषां च
देहेन्द्रियासुधिषणात्मभिरावृतानाम् ।
यः क्षेत्रवित् त्वमनयोर्हृदि विष्वगाधिः
प्रत्यक् चकास्ति भगवांस्तमवैहि सोऽस्ति ॥ ४० ॥

यस्मिन्निदं सदसदात्मतया विभाति
मायाविवेकविधुतिः स्रजिवाहिबुद्धिः ।
तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं
प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ४१ ॥

यत्पादपङ्कजपरागविलासभक्त्या
कर्माशयग्रथितमुद्ग्रथयन्ति सन्तः ।
तत्त्वं न तद् द्विमतयोऽपि विरुद्धमार्ग-
स्रोतोगुणास्तमरणं भज वासुदेवम् ॥ ४२ ॥

कृच्छ्रो महानिह भवार्णवमप्लवेशां
षड्वर्गनक्रमसुखेन तितीर्षयन्ति ।
तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रिं
कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४३ ॥

मैत्रेय उवाच–
स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा ।
दर्शितात्मगतिः सम्यक् प्रशस्योवाच तं नृपः ॥ ४४ ॥

पृथुरुवाच –
कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्तानुकम्पिना ।
तमापादयितुं ब्रह्मन् भगवन् यूयमागतः ॥ ४५ ॥

निष्पादितं च कात्स्न्र्येन भगवद्भिर्घृणालुभिः ।
साधूदत्तं हि सर्वं मे आत्मना सह किं ददे ॥ ४६ ॥

प्राणा दाराः सुता ब्रह्मन् गृहाश्च सपरिग्रहाः ।
रायो मही बलं कोश इति सर्वं निवेदितम् ॥ ४७ ॥

सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४८ ॥

स्वंय(स्व)मेव ब्राह्मणो भुंक्ते स्वं वस्ते स्वं ददाति च ।
तस्यैवानुग्रहेणान्नं भुंजते क्षत्रियादयः ॥ ४९ ॥

यैरीदृशी भगवतो गतिरात्मवाद
एकान्ततो निगमिभिः प्रतिपादिता नः ।
तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्य
को नाम तत् प्रतिकरोति विनोदपात्रम् ॥ ५० ॥

मैत्रेय उवाच –
त आत्मयोगपतय आदिराजेन पूजिताः ।
शीलं तदीयं शंसन्तः खेऽभूवन् मिषतां नृणाम् ॥ ५१ ॥

वैन्यस्तु धुर्यो महतां संस्थित्याऽध्यात्मशिक्षया ।
आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ५२ ॥

कर्माणि च यथाकालं यथादेशं यथाबलम् ।
यथोचितं यथावित्तमकरोद् ब्रह्मसात्कृतम् ॥ ५३ ॥

फलं ब्रह्मणि विन्यस्य निर्विषङ्गः समाहितः ।
कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५४ ॥

गृहेषु वर्तमानोऽपि स साम्राज्यश्रियाऽन्वितः ।
नासज्जतेन्द्रियार्थेषु निरहंमतिरर्कवत् ॥ ५५ ॥

एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् ।
पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मतान् ॥ ५६ ॥

विजिताश्वं धूमकेशं हर्यक्षं द्रविणं वृकम् ।
सर्वेषां लोकपालानां दधारैकः पृथग् गुणान् ॥ ५७ ॥

गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ।
मनोवाङ्मूर्तिभिः सौम्यैर्गुणैः संरञ्जयन् प्रजाः ॥ ५८ ॥

राजेत्यधान्नामधेयं सोमराज इवापरः ।
सूर्यवद् विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ॥ ५९ ॥

दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः ।
तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥ ६० ॥

वर्षति स्म यथाकामं पर्जन्य इव तर्पयन् ।
समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव ॥ ६१ ॥

धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ।
कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ६२ ॥

मातरिश्वेव सर्वात्मा बलेन महसौजसा ।
अविषह्यतया देवो भगवान् भूतराडिव ॥ ६३ ॥

कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव ।
वात्सल्ये मनुवन्नॄणां प्रभुत्वे भगवानजः ॥ ६४ ॥

बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः ।
भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ६५ ॥

ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यपरोद्यमैः ।
कीर्त्योर्ध्वगीतया पुंभिस्त्रैलोक्ये तत्र तत्र ह ॥ ६६ ॥

प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥ ६७ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे द्वाविंशोऽध्यायः ॥

## अथ त्रयोविंशोऽध्यायः

मैत्रेय उवाच–
दृष्ट्वाऽऽत्मानं प्रवयसमेकदा वैन्य आत्मवान् ।
आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥

जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत् सताम् ।
निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥

आत्मजेष्वात्मजां न्यस्य विरहाद् रुदतीमिव ।
प्रजासु विमनास्वेकः सदारोऽगात् तपोवनम् ॥ ३ ॥

तत्राप्यदाभ्यनियमो वैखानससुसम्मते ।
आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥ ४ ॥

कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित् ।
अब्भक्षः कतिचित्पक्षान् वायुभक्षस्ततः परम् ॥ ५ ॥

ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः ।
आकण्ठमग्नः शिशिरे उदके स्थण्डिलेशयः ॥ ६ ॥

तितिक्षुर्यतवाग् दान्त ऊर्ध्वरेता जितानिलः ।
आरिराधयिषुः कृष्णमाचरत् तप उत्तमम् ॥ ७ ॥

तेन क्रमानुसिद्धेन ध्वस्तकर्ममलाशयः ।
प्राणायामैः सन्निरुद्धषड्वर्गश्छिन्नबन्धनः ॥ ८ ॥

सनत्कुमारो भगवान् यदाहाध्यात्मिकं परम् ।
योगं तेनैव पुरुषमभजत् पुरुषर्षभः ॥ ९ ॥

भगवद्धर्मिणः साधो श्रद्धया यततः सदा ।
भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् ॥ १० ॥

तस्यानया भगवतः परिशुद्धकर्म-
सत्त्वात्मनस्तदनु संस्मरणानुपूर्व्या ।
ज्ञानं विरक्तिमदभून्निशितेन येन
चिच्छेद संशयपदं निजजीवकोशम् ॥ ११ ॥

छिन्नान्यधीरधिगतात्मगतिर्निरीह-
स्तत् तत्यजेऽच्छिनदिदं वयुनेन येन ।
तावन्न योगगतिभिर्यतिरप्रमत्तो
यावद् गदाग्रजकथासु रतिं न कुर्यात् ॥ १२ ॥

एवं स वीरप्रवरः संयोज्यात्मानमात्मनि ।
ब्रह्मभूतो दृढं काले तत्याज स्वकलेवरम् ॥ १३ ॥

सम्पीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयञ्छनैः ।
नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि ॥ १४ ॥

उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निस्पृहः ।
वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥ १५ ॥

खान्याकाशे द्रवं तोये यथास्थानं विभागशः ।
क्षितिमम्भसि तत् तेजस्यदो वायौ नभस्यमुम् ॥ १६ ॥

इन्द्रियाणि समस्तानि तन्मात्राणि यथोद्भवम् ।
भूतादिस्तान् समुत्क्षिप्य महत्यात्मनि सन्दधे ॥ १७ ॥

तं सर्वगुणविन्यासं जीवे मायामये न्यधात् ।
तं चानुशयमात्मस्थमसावनुशयी पुमान् ।
ज्ञानवैराग्यवीर्येण स्वरूपस्थो व्यधात् प्रभुः ॥ १८ ॥

अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् ।
सुकुमार्यतदर्हा च यत् पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥

अतीव भर्तुर्व्रतधर्मनिष्ठया
शुश्रूषया चार्षदेहयात्रया ।
नाविन्दतार्ति व्रतकर्शिताऽपि सा
प्रेयस्करस्पर्शनमाननिर्वृता ॥ २० ॥

देहं विपन्नाखिलचेतनादिकं
पत्युः पृथिव्या दयितस्य चात्मनः ।
आलक्ष्य किञ्चिच विलप्य सा सती
चितामथारोपयदद्रिसानुनि ॥ २१ ॥

विधाय कृत्यं ह्रदिनीजलाप्लुता
दत्वोदकं भर्तुरुदारकर्मणः ।
नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य
विवेश वह्निं ध्यायती भर्तृपादम् ॥ २२ ॥

विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ।
तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥

कुर्वन्त्यः कुसुमासारं तस्मिन् मन्दरसानुनि ।
नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥ २४ ॥

देव्य ऊचुः–
अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ।
सर्वात्मना पतिं भेजे यज्ञेशं श्रीवधूरिव ॥ २५ ॥

सैषा नूनं व्रजत्यूर्ध्वमनु वैन्यं पतिं सती ।
पश्यतोऽस्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥

तेषां दुरापं किन्त्वन्यन्मर्त्यानां भगवत्पदम् ।
विचुल्लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥

स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि ।
लब्ध्वाऽऽपवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥

मैत्रेय उवाच–
स्तुवन्तीष्वमरस्त्रीषु पतिलोकं गता वधूः ।
यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताश्रयः ॥ २९ ॥

इत्थंभूतानुभावोऽसौ पृथुः स भगवत्तमः ।
कीर्तितं तस्य चरितमुद्दामचरितस्य वै ॥ ३० ॥

य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत् ।
श्रावयेत् शृणुयाद् वाऽपि स पृथोः पदवीमियात् ॥ ३१ ॥

ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ।
वैश्यः पठन् विश्पतिः स्याच्छूद्र उत्तमतामियात् ॥ ३२ ॥

त्रिःकृत्व इदमाकर्ण्य नरो नार्यथवाऽऽदृतः ।
अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥

इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ॥ ३४ ॥

धर्मार्थकाममोक्षाणां सम्यक् सिद्धिमभीप्सुभिः ।
श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ ३५ ॥

सङ्ग्रामाभिमुखो राजा श्रुत्वैतदनुयाति यान् ।
बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥

मुक्तान्यसङ्गो भगवत्यचलां भक्तिमुद्वहन् ।
वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत् पठेत् ॥ ३७ ॥

वैचित्र्यवीर्याभिहितं महन्माहात्म्यसूचकम्
अस्मिन् कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥ ३८ ॥

अनुदिनमिदमादरेण शृण्वन्
पृथुचरितं प्रथयन् विमुक्तसङ्गः ।
भगवति भवसिन्धुपारभूते
स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥

## अथ चतुर्विंशोऽध्यायः

मैत्रेय उवाच–
विजिताश्वोऽथ राजाऽऽसीत् पृथुपुत्रः पृथुश्रवाः ।
यवीयेभ्योऽददत् काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥

हर्यक्षायादिशत् प्राचीं धूम्रकेशाय दक्षिणाम् ।
प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥ २ ॥

अन्तर्धानगतिं शक्राल्लब्ध्वाऽन्तर्धानसंज्ञितः ।
अपत्यत्रयमाधत्त शिखण्डिन्यां सुसंमतम् ॥ ३ ॥

पावकः पवमानश्च शुचिरित्यग्नयः पुरा ।
वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥ ४ ॥

अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ।
य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान् ॥ ५ ॥

राज्ञां वृत्तिकरादानं दण्डशुल्कादि दारुणम् ।
मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥

तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् ।
यजंस्तल्लोकतामाप परमेण समाधिना ॥ ७ ॥

हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् ।
बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥

बर्हिषत् तु महाभागो हाविर्धानिः प्रजापतिः ।
क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥

यस्येदं देवयजनमनुयज्ञं वितन्वतः ।
प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥ १० ॥

सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ।
यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलंकृताम् ॥ ११ ॥

परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ।
विबुधासुरगन्धर्वमुनिसिद्धमहोरगाः ।
विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ॥ १२ ॥

प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन् ।
तुल्यनामव्रताः सर्वे वेदस्नाताः प्रचेतसः ॥ १३ ॥

पित्राऽऽदिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् ।
दशवर्षसहस्राणि तपसार्चंस्तपस्पतिम् ॥ १४ ॥

यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता ।
तद् ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥

विदुर उवाच–
प्रचेतसां गिरित्रेण यथाऽऽसीत् पथि सङ्गमः ।
यद्वाऽप्याह हरः प्रीतस्तन्नो ब्रह्मन् वदार्थवत् ॥ १६ ॥

सङ्गमः खलु विप्रर्षे शिवेन हि शरीरिणाम् ।
दुर्लभो मुनयो दध्युरसङ्गाः यमभीप्सितम् ॥ १७ ॥

आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे ।
शक्त्या युक्तो विचरति घोरया भगवान् भवः ॥ १८ ॥

मैत्रेय उवाच–
प्रचेतसः पितुर्वाक्यं शिरसाऽऽधाय साधवः ।
दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः ॥ १९ ॥

समुद्रमुप विस्तीर्णमपश्यन् सुमहत् सरः ।
महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥

नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् ।
हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥

मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् ।
पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥

तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् ।
विसिस्मिरे राजपुत्रा मृदङ्गपणवाद्यवत् ॥ २३ ॥

तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् ।
उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥

तप्तहेमनिकषाभं शितिकण्ठं त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥

स तान् प्रपन्नार्तिहरो भगवान् धर्मवत्सलः ।
धर्मज्ञान् शीलसम्पन्नान् प्रीतान् प्रीत उवाच ह ॥ २६ ॥

रुद्र उवाच –
यूयं वर्हिषदः पुत्रा विदितं वश्चिकीर्षितम् ।
अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥

यः परस्तमसः साक्षात् त्रिगुणाज्जीवसंज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥

स्वधर्मनिष्ठः शतजन्मभिः पुमान्
विरिञ्चितामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं पदं
यथाऽहं विबुधैः कलात्यये ॥ २९ ॥

अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥

इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ।
निःश्रेयसकरं चापि श्रूयतां यद् वदामि वः ॥ ३१ ॥

मैत्रेय उवाच –
इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ।
बद्धाञ्जलीन् राजपुत्रान् नारायणपरो वचः ॥ ३२ ॥

रुद्र उवाच –
जितं त आत्मविद्धुर्यः स्वस्तये स्वस्तिरस्तु वः ।
भवता राधसे राध्यं सर्वस्मा आत्मने नमः ॥ ३३ ॥

नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने ।
वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥

संकर्षणाय सूक्ष्माय दुरन्तायान्तकाय च ।
नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ३५ ॥

नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने ।
नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ३६ ॥

स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः ।
नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७ ॥

नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे ।
तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥

सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे ।
नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥

अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने ।
नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥

प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे ।
नमो धर्मविपाकाय मृत्यवे दुःखदाय च ॥ ४१ ॥

नमस्त आशिषामीश मनवे कारणात्मने ।
नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ॥ ४२ ॥

पुरुषाय पुराणाय सांख्ययोगेश्वराय च ।
शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ॥ ४३ ॥

चेतआकूतिरूपाय नमो वाचोविभूतये ।
दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ॥ ४४ ॥

रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम् ।
स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् ॥ ४५ ॥

चार्वायतचतुर्बाहु सुजातरुचिराननम् ।
पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् ॥ ४६ ॥

सुद्विजं सुकपोलास्यं समकर्णविभूषितम् ।
प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् ॥ ४७ ॥

लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ।
स्फुरत्किरीटवलयहारनूपुरमेखलम् ॥ ४८ ॥

शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ।
सिंहस्कन्धत्विषो बिभ्रत् सौभगग्रीवकौस्तुभम् ॥ ४९ ॥

श्रियाऽनपायिन्याऽऽक्षिप्तं निकषाश्मोरसोल्लसत् ।
पूररेचकसंविग्नवलिवल्गुदलोदरम् ॥ ५० ॥

प्रतिसंक्रामयद् विश्वं नाभ्याऽऽवर्तगभीरया ।
श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ।
समचार्वङ्घ्रिजङ्घोरुनिम्नजानुसुदर्शनम् ॥ ५१ ॥

पदा शरत्पद्मपलाशरोचिषा
नखद्युभिर्नोऽन्तरघं विधुन्वता ।

प्रदर्शय स्वीयमपास्तसाध्वसं
पदं पुरोमार्गगुरुस्तमोजुषाम् ॥ ५२ ॥

एतद् रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ।
यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥

भवान् भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम् ।
स्वाराज्यस्याप्यभिमता एकान्तेनात्मविद्गतिः ॥ ५४ ॥

त्वां दुराराध्यमाराध्य सतामपि दुरापया ।
एकान्तभक्त्या को वाञ्छेत् पादमूलं विना बहिः ॥ ५५ ॥

यत्र निर्विष्टमरणं कृतान्तो नावमन्यते ।
विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥

क्षणार्धेनाऽपि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥

अथानघाङ्घ्रेस्तव कीर्तितीर्थयो-
रन्तर्बहिः स्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्त्वशीलिनां
स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥ ५८ ॥

न यस्य चित्तं बहिरर्थविभ्रमं
मनोगुहायां च निविष्टमाविशेत् ।
यद्भक्तियोगानुगृहीतमञ्जसा
मुनिर्विचष्टे ननु तत्र ते पदम् ॥ ५९ ॥

यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ।
न त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥

यो माययेदं पुरुरूपयाऽसृजद्
बिभर्ति भूयः क्षपयत्यविक्रियः ।
यद्भेदबुद्धिः सदिवाऽऽत्मसंस्थया
तमात्मतन्त्रं भगवन् प्रतीमहि ॥ ६१ ॥

क्रियाकलापैरिदमेव योगिनः
श्रद्धान्विताः साधु यजन्ति सिद्धये ।
भूतेन्द्रियान्तःकरणोपलक्षणं
वेदे च तन्त्रे च त एव कोविदाः ॥ ६२ ॥

त्वमेक आद्यः पुरुषः सुप्तशक्ति-
स्तया रजःसत्त्वतमो विभिद्यते ।
महानहं खं मरुदग्निवार्धराः
सुरर्षयो भूतगणा इदं यतः ॥ ६३ ॥

सृष्टं स्वशक्त्येदमनुप्रविश्य
चतुर्विधं पुरमात्मांशकेन
अथो विदुस्त्वां पुरुषं सन्तमत्र
भुङ्क्ते हृषीकैर्मधु सारघं यतः ॥ ६४ ॥

स एष लोकानतिचण्डवेगो
विकर्षसि त्वं खलु कालयानः ।
भूतानि भूतैरनुमेयतत्त्वो
घनावलीर्वायुरिवाविषह्यः ॥ ६५ ॥

प्रमत्तमुच्चैरितिकृत्यचिन्तया
प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ६६ ॥

कस्त्वत्पदाब्जं विजहाति पण्डितो
यत् ते पुमानप्ययमब्जकेतनः ।
विशङ्कयाऽस्मद्गुरुरर्चति स्म यद्
विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥

यत्स्पृष्टोऽहरहर्मुकुन्दक्लेशः शेतेऽमृताम्बुधौ ।
तावद् वेदाथ तत् तेऽङ्घ्रिं जनो नु स्मरते च तत् ॥ ६८ ॥

अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम् ।
विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६९ ॥

इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः ।
स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ७० ॥

तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ।
पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७१ ॥

योगादेशमुपासाद्य धारयन्तो मुनिव्रताः ।
समाहितधियः सर्वे एतदभ्यसनाहताः ॥ ७२ ॥

इदमाह पुराऽस्माकं भगवान् विश्वसृक्पतिः ।
भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७३ ॥

ते वयं चोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ।
अनेन ध्वस्ततमसः सिसृक्ष्म विविधाः प्रजाः ॥ ७४ ॥

अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् ।
अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७५ ॥

श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं स्मृतम् ।
सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७६ ॥

य इदं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ।
अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७७ ॥

विन्दते पुरुषोऽमुष्माद् यद् यदिच्छति सत्वरम् ।
मद्गीतगीतात् सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७८ ॥

य इदं कल्य उत्थाय प्राञ्जलिः श्रद्धयाऽन्वितः ।
शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ७९ ॥

गीतं मयेदं नरदेवनन्दनाः
परस्य पुंसः परमात्मनः स्तवम् ।
जपन्त एकाग्रधियस्तपो मह-
चरध्वमन्ते तत आप्स्यथेप्सितम् ॥ ८० ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ॥

## अथ पञ्चविंशोऽध्यायः

मैत्रेय उवाच –
इति संदिश्य भगवान् बार्हिषदैरभिपूजितः ।
पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥

रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ।
जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥

प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् ।
नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत् ॥ ३ ॥

नारद उवाच –
श्रेयस्त्वं कतमद् राजन् कर्मणाऽऽत्मन ईहसे ।
दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेहचेष्यते ॥ ४ ॥

प्राचीनबर्हिरुवाच–
न जानामि महाभाग परं कर्मापविद्धधीः ।
ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥

नारद उवाच –
गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः ।
न परं विन्दते मूढो भ्राम्यन् संसारवर्त्मसु ॥ ६ ॥

भो भो प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे ।
संज्ञापितान् जीवसङ्घान् निर्घृणेन सहस्रशः ॥ ७ ॥

एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव ।
सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ ८ ॥

अत्र ते कथयिष्येऽहमितिहासं पुरातनम् ।
पुरञ्जनस्य चरितं निबोध गदतो मम ॥ ९ ॥

आसीत् पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः ।
तस्याविज्ञातनामाऽऽसीत् सखाऽविज्ञातचेष्टितः ॥ १० ॥

सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः ।
नानुरूपं यदाऽविन्ददभूत् स विमना इव ॥ ११ ॥

न साधु मेने ताः सर्वा भूतले यावतीः पुरः ।
कामान् कामयमानोऽसौ तस्य तस्याभिपत्तये ॥ १२ ॥

स एकदा हिमवतो दक्षिणेष्वथ सानुषु ।
ददर्श नवभिर्द्वारैः पुरीं लक्षितलक्षणाम् ॥ १३ ॥

प्राकारोपवनाट्टालपरिखैरक्षतोरणैः ।
स्वर्णरौप्यायसैः शृङ्गैः संकुला सर्वतो गृहैः ॥ १४ ॥

नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ।
क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥ १५ ॥

सभाचत्वररथ्याभिराक्रीडायतनापणैः ।
चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥ १६ ॥

पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ।
नदद्विहङ्गालिकुलकोलाहलजलाशये ॥ १७ ॥

हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ।
चलत्प्रवालविटपनलिनीतटसंपदि ॥ १८ ॥

नानाऽरण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।
आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥

यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् ।
भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥

तेषां परिवृढो राजन् सर्वेषां बलिमुद्वहन् ।
सखीकाणां सखा तस्या बहुरूपोऽग्रणीः स्त्रियः ॥ २१ ॥

पञ्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः ।
अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २२ ॥

सुनासां सुदतीं बालां सुकपोलां वराननाम् ।
समविन्यस्तकर्णाभ्यां बिभ्रतीं कुण्डलश्रियम् ॥ २३ ॥

पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम् ।
पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥ २४ ॥

स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ ।
वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम् ॥ २५ ॥

तामाह ललितां वीरः सव्रीडस्मितशोभिनीम् ।
स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमभ्रमद्भ्रुवा ॥ २६ ॥

का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति ।
इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे ॥ २७ ॥

क एतेऽनुपथा एत एकादशमहाभटाः ।
एता वा ललना सुभ्रु कोऽयं तेऽहिः पुरस्सरः ॥ २८ ॥

त्वं ह्रीर्भवान्यस्यथ वाग् रमा पतिं
विचिन्वती किं मुनिवद् रहो वने ।
त्वदङ्घ्रिकामाप्तसमस्तकामः
क पद्मकोशः पतितः कराग्रात् ॥ २९ ॥

नासां वरोर्वन्यतमा भुविस्पृक्
पुरीमिमां वीरवरेण साकम् ।
अर्हस्यलङ्कर्तुमदभ्रकर्मणा
लोकं परं श्रीरिव यज्ञपुंसा ॥ ३० ॥

यदेष माऽपाङ्गविखण्डितेन्द्रियं
सव्रीडहासेक्षणविभ्रमद्भ्रुवः ।
तवोपसृष्टो भगवान् मनोभवः
प्रबाधतेऽथानुगृहाण शोभने ॥ ३१ ॥

त्वदाननं सुभ्रु सुतारलोचनं
व्यालम्बिनीलालकवृन्दसंवृतम् ।
उन्नीय मे दर्शय वल्गुवाचकं
यद् व्रीडया नाभिमुखं शुचिस्मिते ॥ ३२ ॥

इत्थं पुरञ्जनं नारी याचमानमधीरवत् ।
अभ्यभाषत तं वीरं हसन्ती वीरमोहिनी ॥ ३३ ॥

न विदाम वयं सम्यक् कर्तारं पुरुषर्षभ ।
आत्मनश्च परस्यापि गोत्रं नाम च यत् कृतम् ॥ ३४ ॥

इहाद्य सन्तमात्मानं विदाम न ततः परम् ।
येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥ ३५ ॥

एते सखायः सख्यो मे नरा नार्यश्च मानद ।
सुप्तायां मयि जागर्ति नागोऽयं पालयन् पुरीम् ॥ ३६ ॥

दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान् भोगानभीप्ससे ।
उद्वहिष्यामि त्वां स्नेहं स्वबन्धुभिररिन्दम ॥ ३७ ॥

इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो ।
मयोपनीतान् गृह्णानः कामभोगाञ्छतं समाः ॥ ३८ ॥

का नु त्वदन्यं रमयेदरतिज्ञमकोविदम् ।
असांपरायाभिमुखमश्वस्तनविदं पशुम् ॥ ३९ ॥

धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः ।
लोका विशोका विरजा यान् न केवलिनो विदुः ॥ ४० ॥

पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह ।
क्षेम्यं वदन्ति शरणं भवेऽस्मिन् यद् गृहाश्रमम् ॥ ४१ ॥

का नाम वीर विख्यात वदान्यं प्रियदर्शनम् ।
न वृणीत पतिं प्राप्तं मादृशी त्वादृशं स्वयम् ॥ ४२ ॥

कस्या मनस्ते भुजगेन्द्रभोगयोः
स्त्रियो न सज्जेद् भुजयोर्महाभुज ।
योऽनाथवर्गाधिमलं घृणोद्धत-
स्मितावलोकेन चरस्यपोहितुम् ॥ ४३ ॥

नारद उवाच–
इति तौ दम्पती तत्र समुद्य समयं मिथः ।
तां प्रविश्य पुरीं राजन् मुमुदाते शतं समाः ॥ ४४ ॥

उपगीयमानो ललितं तत्र तत्र च गायकैः ।
क्रीडन् परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४५ ॥

सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः ।
पृथग् विषयगत्यर्थं तस्यां यः कश्चनेश्वरः ॥ ४६ ॥

पञ्चद्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा ।
पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ॥ ४७ ॥

खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते ।
विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥ ४८ ॥

नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते ।
अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४९ ॥

मुख्या नामपुरस्ताद् द्वास्तयाऽऽपणबहूदनौ ।
विषयौ याति पुरराट् रसज्ञविपणान्वितः ॥ ५० ॥

पितृभूर्नृप पुर्या द्वा दक्षिणेन पुरञ्जनः ।
राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥

देवभूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः ।
राष्ट्रमुत्तरपाञ्चालं याति श्रुतधरान्वितः ॥ ५२ ॥

आसुरी नाम पश्चाद् द्वास्तया याति पुरञ्जनः ।
ग्राम्यकं नाम विषयं दुर्मदेन समन्वितः ॥ ५३ ॥

निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरञ्जनः ।
वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५४ ॥

अन्धावमीषां पौराणां निर्वाक्पेशस्करावुभौ ।
अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५५ ॥

स यत्यन्तःपुरगतो विषूचिना समन्वितः ।
मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५६ ॥

एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः ।
महिषी यद् यदीहेत तत् तदेवान्ववर्तत ॥ ५७ ॥

क्वचित् पिबन्त्यां पिबति मदिरां मदविह्वलः ।
अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षति ॥ ५८ ॥

क्वचिद् गायति गायन्त्यां रुदत्यां रुदति क्वचित् ।
क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ॥ ५९ ॥

क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति ।
अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ६० ॥

क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनुपश्यति ।
क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित् ॥ ६१ ॥

क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ।
अनुहृष्यति हृष्यन्त्यां मुदितामनुमोदते ॥ ६२ ॥

विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः ।
नेच्छन्ननुकरोत्यज्ञः क्लैब्यात् क्रीडामृगो यथा ॥ ६३ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे पञ्चविंशोऽध्यायः ॥

## अथ षड्विंशोऽध्यायः

नारद उवाच –
स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम् ।
द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥ १ ॥

एकरश्म्येकदमनमेकनीडं द्विकूबरम् ।
पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥

हेमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः ।
एकादशचमूनाथः पञ्चप्रस्थमगाद् वनम् ॥ ३ ॥

चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः ।
विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥

आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ।
न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥

तीर्थेषु श्रुतिदृष्टेषु राजा मेध्यपशून्वने ।
यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥

य एवं कर्म नियतं विद्वान् कुर्वीत वा न वा ।
कर्मणा तेन राजेन्द्र ज्ञानेन स न लिप्यते ॥ ७ ॥

अन्यथा कर्म कुर्वाणः कामरूढो निबद्ध्यते ।
गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥

तत्र निर्भिण्णगात्राणां चित्रवाजैः शिलीमुखैः ।
विप्लवोऽभूद् दुःखितानां दुस्सहः करुणात्मनाम् ॥ ९ ॥

शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् ।
मेध्यानन्यांश्च विविधान् विनिघ्नन् श्रममध्यगात् ॥ १० ॥

ततः क्षुत्तृट्परिश्रान्तो निवृत्तो गृहमेयिवान् ।
कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥

आत्मानमर्हयाञ्चक्रे धूपलेपस्रगादिभिः ।
साध्वलंकृतसर्वाङ्गो महिष्यामादधे मनः ॥ १२ ॥

तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः ।
न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥

अन्तःपुरस्त्रियोऽपृच्छद् विमना इव वेदिषन् ।
अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥ १४ ॥

न तथैतर्हि रोचन्ते गृहेषु गृहसम्पदः ।
यदि न स्याद् गृहे माता पत्नी वा पतिदेवता ॥ १५ ॥

व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत् ।
क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे ।
या मामुद्धरति प्रज्ञां दीपयन्ती पदे पदे ॥ १६ ॥

रामा ऊचुः –
नरनाथ न जानीमस्त्वत्प्रिया यद् व्यवस्यति ।
भूतले निरवस्तारे शयानां पश्य शत्रुहन् ॥ १७ ॥

नारद उवाच–
पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि ।
तत्सङ्गोन्मथितज्ञानो वैक्लव्यं परमं ययौ ॥ १८ ॥

सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता ।
प्रेयस्याः प्रेमसंरम्भलिङ्गमात्मनि नाध्यगात् ॥ १९ ॥

अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ।
पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥ २० ॥

नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे ।
कृतागःस्वात्मसात् कृत्वा शिक्षादण्डं न युञ्जते ॥ २१ ॥

परमानुग्रहो दण्डो भृत्येषु प्रभुणार्पितः ।
बालो न वेद तत् तन्वि बन्धुकृत्यममर्षणः ॥ २२ ॥

सा त्वं मुखं सुदति सुभ्र्वनुरागभार-
व्रीडा विलम्बविलसद्धसितावलोकम् ।
नीलालकालिभिरुपस्कृतमुन्नसं नः
स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥ २३ ॥

तस्मिन् दधे दममहं तव वीरपत्नि
योऽन्यत्र भूसुरकुलात् कृतकिल्बिषस्तम् ।
पश्ये न वीतभयमुन्मुदितं त्रिलोक्या-
मन्यत्र वै मुररिपोरितरत्र दासात् ॥ २४ ॥

वक्त्रं न ते वितिलकं मलिनं विहर्षं
संरम्भभीममविमृष्टमपेतरागम् ।
पश्ये स्तनावपि शुचोपहतौ सुजातौ
बिम्बाधरं विगतकुङ्कुमपङ्करागम् ॥ २५ ॥

तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य
स्वैरं गतस्य मृगयां व्यसनातुरस्य ।
का देवरं वशगतं कुसुमास्त्रवेग-
विस्रस्तपौंस्यमुशती न भजेत कृत्ये ॥ २६ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे षड्विंशोऽध्यायः ॥

# अथ सप्तविंशोऽध्यायः

नारद उवाच–
इत्थं पुरञ्जनं सध्र्यग् वशमानीय विभ्रमैः ।
पुरञ्जनी महाराज रेमे रमयती पतिम् ॥ १ ॥

स राजा महिषीं राजन् सुस्नातां रुचिराननाम् ।
कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥

तयोपगूढः परिरब्धकन्धरो
रहोऽनुमन्त्रैरपकृष्टचेतनः ।
न कालरंहो बुबुधे दुरत्ययं
दिवा निशेति प्रमदापरिग्रहः ॥ ३ ॥

शयानमुन्नद्धमदो महामना
महार्हतल्पे महिषीभुजोपधे ।
तामेव वीरोऽमनुत व्यवायत-
स्तमोऽभिभूतो न निजं परं हि तत् ॥ ४ ॥

तस्यैवं रममाणस्य कामकश्मलचेतसः ।
क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ॥ ५ ॥

तस्यामजनयत् पुत्रान् पुरञ्जन्यां पुरञ्जनः ।
शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥ ६ ॥

दुहितॄर्दशोत्तरशतं पितृभ्रातृयशस्करीः ।
शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते ॥ ७ ॥

स पाञ्चालपतिः पुत्रान् पितृवंशविवर्धनान् ।
दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥

पुत्राणां चाभवन् पुत्रा एकैकस्य शतं शतम् ।
यैर्वै पौरञ्जनो वंशः पाञ्चालेषु समेधितः ॥ ९ ॥

तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु ।
निरूढेन ममत्वेन विषयेष्वन्वबध्यत ॥ १० ॥

ईजे च क्रतुभिर्विविधैर्दीक्षितः पशुमारकैः ।
देवान् पितॄन् भूतपतीन् नानाकामो यथा भवान् ॥ ११ ॥

युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः ।
आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥

चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप ।
गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥

गन्धर्व्यस्तावतीरस्य मैथुन्यश्च सितासिताः ।
परिवृत्त्या विलुम्पन्ति सर्वकामान् विनिर्मितान् ॥ १४ ॥

ते चण्डवेगानुचराः पुरञ्जनपुरीं यदा ।
हर्तुमारेभिरे तत्र प्रत्यषेधत् प्रजागरः ॥ १५ ॥

स सप्तभिः शतैरेको विंशकेन शतं समाः ।
पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥

क्षीयमाणे स्वसामर्थ्ये एकस्य बहुभिर्युधि ।
चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥ १७ ॥

स एव पुर्यां मधुभुक् पाञ्चालेषु स्वपार्षदैः ।
उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद् भयम् ॥ १८ ॥

कालस्य दुहिता काचित् त्रिलोकीं वरमिच्छती ।
पर्यटन्ती न बर्हिष्मन् प्रत्यनन्दत कश्चन ॥ १९ ॥

दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा ।
यां तुष्टो राजऋषये पिताऽदात् पूरवे वरम् ॥ २० ॥

कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम् ।
वव्रे बृहद्व्रतं मां तु जानन्ती काममोहिता ॥ २१ ॥

मयि संरभ्य विपुलमदाच्छापं सुदुःसहम् ।
स्थातुमर्हसि नैकत्र मद्याच्ञाविमुखो मुने ॥ २२ ॥

ततो विहतसङ्कल्पा कन्यका यवनेश्वरम् ।
मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥

ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् ।
सङ्कल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥

द्वाविमावनुशोचन्ति बालावसदवग्रहौ ।
यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥

अथो भजस्व मां भद्र भजन्तीं मे दयां कुरु ।
एतावान् पौरुषो धर्मो यदार्ताननुकम्पते ॥ २६ ॥

कालकन्योदितां वाचं निशम्य यवनेश्वरः ।
चिकीर्षुर्देवगुह्यं स सस्मितं तामभाषत ॥ २७ ॥

मया निरूपितस्तुभ्यं पतिरात्मसमाधिना ।
नाभिनन्दति लोकोऽयं त्वामभद्रामसम्मताम् ॥ २८ ॥

त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम् ।
याहि मे पृतनायुक्ता प्रजानाशं प्रणेष्यसि ॥ २९ ॥

प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव ।
चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ॥ ३० ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे सप्तविंशोऽध्यायः ॥

# अथ अष्टाविंशोऽध्यायः

नारद उवाच–
सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः ।
प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥

त एकदा तु रभसा पुरञ्जनपुरीं नृप ।
रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥

कालकन्याऽपि बुभुजे पुरञ्जनपुरीं बलात् ।
ययाऽभिभूतः पुरुषः सद्यो निस्सारतामियात् ॥ ३ ॥

तयोपभुज्यमानां वै यवनाः सर्वतो दिशम् ।
द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ॥ ४ ॥

तस्यां प्रपीड्यमानायामभिमानी पुरञ्जनः ।
अवापोरुविधांस्तापान् कुटुम्बी ममताकुलः ॥ ९ ॥

कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः ।
नष्टप्रज्ञो हतैश्वर्यो गन्धर्वयवनैर्बलात् ॥ ६ ॥

विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् ।
पुत्रपौत्रानुगामात्यान् जायां च गतसौहृदाम् ॥ ७ ॥

आत्मानं कन्यया ग्रस्तं पाञ्चालानरिदूषितान् ।
दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥

कामानभिलषन् दीनो यातयामांश्च कन्यया ।
मतात्मसंविनिस्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥

गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् ।
हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ॥ १० ॥

भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ।
ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥ ११ ॥

तस्यां संदह्यमानायां सपौरः सपरिच्छदः ।
कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥ १२ ॥

यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ।
पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥

न शेके सेवितुं तत्र पुरुकृच्छ्रोरुवेपथुः ।
गन्तुमैच्छत् ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥

शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः ।
यवनैररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥

दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ।
स्मृत्वाऽवशिष्टं यत्किञ्चिद् गृहकोशपरिच्छदम् ॥ १६ ॥

अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही ।
दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥

लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी ।
वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥ १८ ॥

न मय्यनशिते भुङ्क्ते नास्नाते स्नाति मत्परा ।
मयि तुष्टे सुसंत्रुष्टा भर्त्सिते यतवाग् भयात् ॥ १९ ॥

प्रबोधयति माऽविज्ञं व्युषिते शोककर्षिता ।
वर्त्मैतद् गृहमेधीयं वीरसूरपि नेष्यति ॥ २० ॥

कथं नु दारिका दीना दारका मत्परायणाः ।
वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥

एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् ।
ग्रहीतुं कृतधीरेनं भयनामाऽभ्यपद्यत ॥ २२ ॥

पशुवद् यवनैरेष नीयमानः स्वकं क्षयम् ।
अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥

पुरीं विहायोपगत उपरुद्धो विहङ्गमः ।
तदा तमेवानुपुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥

विकृष्यमाणः प्रसभं यवनेन बलीयसा ।
नाविन्दत् तमसाऽऽविष्टः सखायं सुहृदं परम् ॥ २५ ॥

तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ।
कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तो वैशसं तु तत् ॥ २६ ॥

अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः ।
शाश्वतीरनुभूयार्तिः प्रमदासङ्गदूषितः ॥ २७ ॥

तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा ।
अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥

उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः ।
युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ २९ ॥

तस्यां सञ्जनयांचक्रे आत्मजामसितेक्षणाम् ।
यवीयसः सप्तसुतान् सप्तद्रविडभूभृतः ॥ ३० ॥

एकैकस्याभवत् तेषां राजन्नर्बुदमर्बुदम् ।
भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम् ॥ ३१ ॥

अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम् ।
यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥ ३२ ॥

विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः ।
आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥ ३३ ॥

हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरेक्षणा ।
अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥

तत्र चन्द्रवटा नाम ताम्रपर्णी परोदका ।
तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् ॥ ३५ ॥

कन्दादिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः ।
वर्तमानः शनैर्गात्रकर्षणं तप आस्थितः ॥ ३६ ॥

शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये ।
सुखदुःखे इति द्वन्द्वान्यजयत् समदर्शनः ॥ ३७ ॥

तपसा विद्यया पक्वकषायो नियमैर्यमैः ।
युयुजे ब्रह्मणाऽऽत्मानं विजिताक्षानिलाशयः ॥ ३८ ॥

आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थितः ।
वासुदेवे भगवति नान्यद् वेदोद्वहन् रतिम् ॥ ३९ ॥

स व्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽऽत्मनि ।
विद्वान् स्वप्न इवामृश्य साक्षिणं विरराम ह ॥ ४० ॥

साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृपः ।
विशुद्धज्ञानदीपेन स्फुरता विश्वतो मुखम् ॥ ४१ ॥

परे ब्रह्मणि चात्मानं परं ब्रह्म तथाऽऽत्मनि ।
वीक्षमाणो विहायेक्षामस्मादुपरराम ह ॥ ४२ ॥

पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् ।
प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ॥ ४३ ॥

चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ।
बभावुपपतिं शान्ता शिखाशान्तमिवानलम् ॥ ४४ ॥

अजानती प्रियतमं यदोपरतमङ्गना ।
सुस्थिरासनमासाद्य यथा पूर्वमुपाचरत् ॥ ४५ ॥

यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्चती ।
आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥

आत्मानं शोचती दीनमबन्धुर्विक्लवाश्रुभिः ।
स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥ ४७ ॥

उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम् ।
दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥

एवं विलपती बाला विपिनेऽनुगता पतिम् ।
पतिता पादयोर्भर्तु रुदत्यश्रूण्यवर्तयत् ॥ ४९ ॥

चितिं दारुमयीं कृत्वा तस्यां पत्युः कलेवरम् ।
आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥

तत्र पूर्वतरः कश्चित् सखा ब्राह्मण आत्मवान् ।
सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो ॥ ५१ ॥

का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि ।
जानासि किं सखायं मां येनाग्रे विचचर्थ ह ॥ ५२ ॥

अपि स्मरसि चात्मानमविज्ञातसखं सखे ।
हित्वा मां पदमन्विच्छन् भौमभोगरतो गतः ॥ ५३ ॥

हंसावहं च त्वं चार्य सखायौ मानसायनौ ।
अभूतामन्तरा वौकः सहस्रपरिवत्सरान् ॥ ५४ ॥

स त्वं विहाय मां बन्धो गतो ग्राम्यमतिर्महीम् ।
विचरन् पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥

पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ।
षट्कुलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम् ॥ ५६ ॥

पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो ।
तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः ॥ ५७ ॥

विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया ।
शक्त्यधीशः पुमानत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥

तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः ।
तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं विभो ॥ ५९ ॥

न त्वं विदर्भदुहिता नायं वीर सुहृत् तव ।
न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥

माया ह्येषा मया सृष्टा यत् पुमांसं स्त्रियं पतिम् ।
मन्यसे नोभयं यद् वै हंसौ पश्यावयोर्गतिम् ॥ ६१ ॥

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः ।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥

यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ।
द्विधाभूतमवेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥

एवं स मानसो हंसो हंसेन प्रतिबोधितः ।
स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥

बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ।
यत् परोक्षप्रियो देवो भगवान् विश्वभावनः ॥ ६५ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे अष्टाविंशोऽध्यायः ॥

# अथ एकोनत्रिंशोऽध्यायः

प्राचीनबर्हिरुवाच –
भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते ।
कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥

नारद उवाच–
पुरुषं पुरञ्जनं विद्याद् यद् व्यनक्त्यात्मनः पुरम् ।
एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥
योऽविज्ञाताह्वयस्तस्य पुरुषस्य सखेश्वरः ।
यन्न विज्ञायते रूपैर्नामभिर्वा क्रियागुणैः ॥ ३ ॥
यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् ।
नवद्वारं द्विहस्ताङ्घ्रि पुरं मनुत साध्विति ॥ ४ ॥
बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् ।
यामधिष्ठाय देहेऽस्मिन् पुमान् भुङ्क्तेऽक्षिभिर्गुणान् ॥ ५ ॥
सखाय इन्द्रियगणो ज्ञानं कर्म च यत्कृतम् ।
सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः ॥ ६ ॥
बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् ।
पञ्चालाः पञ्चविषयाः यन्मध्ये नवखं पुरम् ॥ ७ ॥
अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ।
द्वे द्वे द्वारौ बहिर्याति तत्तदिन्द्रियसंयुतः ॥ ८ ॥
अक्षिणी नासिके आस्यमिति पञ्च पुरस्कृताः ।
दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥ ९ ॥
पश्चिमे इत्यधोद्वारौ गुदशिश्नाविहोदिते ।
खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते ॥ १० ॥
रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ।
नलिनी नालिनी नासे गन्धः सौरभ उच्यते ॥ ११ ॥
घ्राणोऽवधूतो मुख्याऽऽस्यं विपणो रसविद् रसः ।
आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ॥ १२ ॥
पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ।
प्रवृत्तं च निवृत्तं च शास्त्रं पाञ्चालसंज्ञितम् ॥ १३ ॥
पितृयानं देवयानं श्रोत्रात् श्रुतधरो व्रजेत् ।
आसुरी मेढ्रमर्वाग् द्वार्व्यवायो ग्रामिणां रतिः ॥ १४ ॥
उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ।
वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु ॥ १५ ॥
हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ।
अन्तःपुरं च हृदयं विषूचिर्मन उच्यते ॥ १६ ॥
तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ।
यथा यथा विक्रियते गुणाक्तो विकरोति वा ॥ १७ ॥
तथा तथोपद्रष्टाऽऽत्मा तद्वृत्तिरिति कीर्त्यते ।
देहो रथस्त्विन्द्रियाश्वः संवत्सरवयोगतिः ॥ १८ ॥
द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चासुबन्धुरः ।
मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ॥ १९ ॥
पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ।
आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ॥ २० ॥
एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ।
संवत्सरश्चण्डवेगः कालो येनोपलक्षितः ॥ २१ ॥
तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः ।
हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम् ॥ २२ ॥
कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति ।
स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २३ ॥
आधयो व्याधयस्तस्य सैनिकाः यवनाः खलाः ।
भूतोपसर्गा अरयः प्रज्वारो द्विविधो ज्वरः ॥ २४ ॥
एवं बहुविधैःखैर्दैवभूतात्मसम्भवैः ।
क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २५ ॥
प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः ।
शेते कामलवं ध्यायन् ममाहमिति कर्मकृत् ॥ २६ ॥
यदाऽऽत्मानमविज्ञाय भगवन्तं परं गुरुम् ।
पुरुषस्तु विषज्जेत गुणेषु प्राकृतेष्वदृक् ॥ २७ ॥
गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः ।
शुक्लं कृष्णं लोहितं वा यथाकर्माभिजायते ॥ २८ ॥

शुक्लान् प्रकाशभूयिष्ठान् लोकानाप्नोति कर्हिचित् ।
दुःखोदर्कान् क्रियायासान् तमश्शोकोत्कटान् कचित् ॥ २९ ॥

कचित् पुमान् कचिच्च स्त्री कचिन्नोभयमन्धधीः ।
देवो मनुष्यस्तिर्यग् वा यथाकर्मगुणं भवः ॥ ३० ॥

क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ।
चरन् विन्दति यद् दिष्टं दण्डमोदनमेव वा ॥ ३१ ॥

तथा कामाशयो जीव उच्चावचपथा भ्रमन् ।
उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३२ ॥

दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ।
जीवस्य न व्यवच्छेदः स्याच्चेत् तत्तत्प्रतिक्रिया ॥ ३३ ॥

यथा हि पुरुषा भारं शिरसा गुरुमुद्वहन् ।
तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३४ ॥

नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् ।
द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३५ ॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ॥ ३६ ॥

अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा ।
संसृतिस्तद्व्यवच्छेदो भक्त्या परमया हरौ ॥ ३७ ॥

वासुदेवे भगवति भक्तियोगः समाहितः ।
सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३८ ॥

सोऽचिरादिव राजर्षे स्यादच्युतकथाश्रयः ।
शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३९ ॥

यत्र भागवता राजन् साधवो विशदाशयाः ।
भगवद्गुणानुकथनश्रवणाव्यग्रचेतसः ॥ ४० ॥

तस्मिन् महन्मुखरिता मधुभिच्चरित्र-
पीयूषतोयसरितः परितः स्रवन्ति ।
ता ये पिबन्त्यनुसवं नृप गाढकर्णैः
तान् न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥ ४१ ॥

एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ।
न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४२ ॥

प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः ।
दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४३ ॥

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥ ४४ ॥

अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः ।
पश्यन्तोऽपि न पश्यन्ति तद् विष्णोः परमं पदम् ॥ ४५ ॥

शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ।
मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४६ ॥

सर्वेषामपि जन्तूनां सततं देहपोषणे ।
अस्ति प्रज्ञा समायत्ता को विशेषस्तदा नृणाम् ॥ ४७ ॥

लब्ध्वेहान्ते मनुष्यत्वं हित्वा देहाद्यसद्ग्रहम् ।
आत्मसृत्या विहायेदं जीवात्मा स विशिष्यते ॥ ४८ ॥

यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ४९ ॥

तस्मात् कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ।
माऽर्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ५० ॥

स्वलोकं न विदुस्ते वै यत्र देवो जनार्दनः ।
आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ५१ ॥

आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम् ।
ततो बृहद्वधान्मानी कर्म नावैषि यत् परम् ॥ ५२ ॥

तत् कर्म हरितोषं यत् सा विद्या तन्मतिर्यया ।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ ५३ ॥

तत्पादमूलं शरणं यतः क्षेमो नृणामिह ।
सवै प्रियतमो ह्यस्य यतो न भयमण्वपि ।
इति वेद स वै विद्वान् यो विद्वान् स गुरुर्हरिः ॥ ५४ ॥

नारद उवाच–
प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ ।
अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५५ ॥

क्षुद्रश्चरं सुमनसां शरणे मथित्वा
रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम् ।
अग्रे वृकानसुतृपोऽविगणय्य यान्तं
पृष्ठे मृगं मृगयुलुब्धकबाणभिन्नम् ॥ ५६ ॥

(अस्यार्थः)

सुमनः समधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्वयौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रान्तान् काललवविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमिममात्मानमहो राजन् भिन्नहृदयं द्रष्टुमर्हसीति ॥

स त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्त-
श्चित्तं नियच्छ हृदि कर्णधुनीं च चित्तिम् ।
जह्यङ्गनाश्रममसत्तमयूथगाथं
प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५७ ॥

राजोवाच–
श्रुतमन्वीक्षितं ब्रह्मन् भगवान् यदभाषत ।
नैतज्जानन्त्युपाध्यायाः किन्न ब्रूयुर्विदुर्यदि ॥ ५८ ॥

संशयोऽत्र न मे विप्र संच्छिन्नस्तत्कृतो महान् ।
ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥ ५९ ॥

कर्माण्यारभते येन पुमानिह विहाय तम् ।
अमुत्रान्येन देहेन जुष्टान्यसकृदश्नुते ॥ ६० ॥

इति वेदविदां वाचः श्रूयन्ते तत्र तत्र ह ।
कर्म च क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ६१ ॥

नारद उवाच–
येनैवारभते कर्म तेनैवामुत्र तत् पुमान् ।
भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वकम् ॥ ६२ ॥

शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा ।
कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६३ ॥

ममेति मनसा यद् यदसावहमिति ब्रुवन् ।
गृह्णीयात् तत् पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६४ ॥

यथाऽनुमीयते चित्तमुभयैरिन्द्रियेहितैः ।
एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६५ ॥

नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम् ।
कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥ ६६ ॥

तेनास्य तादृशो राजन् लिङ्गिनो देहसम्भवः ।
श्रद्धत्स्वाननुभूतार्थं न मनः स्प्रष्टुमर्हति ॥ ६७ ॥

मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ ६८ ॥

अदृष्टमश्रुतं चेह कश्चिन्मनसि दृश्यते ।
यथा तथाऽनुमन्तव्यं देशकालक्रियाश्रयम् ॥ ६९ ॥

सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः ।
आयान्ति वर्गशो यान्ति सर्वे समनसो जनाः ॥ ७० ॥

सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि ।
तमश्चन्द्रमसीवेदमुपरज्यावभासते ॥ ७१ ॥

नाहंममेति भावोऽयं पुरुषे व्यवधीयते ।
तावद् बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान् ॥ ७२ ॥

सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः ।
नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥ ७३ ॥

गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा ।
लिङ्गं न दृश्यतेऽयूनः कुह्वां चन्द्रमसो यथा ॥ ७४ ॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ७५ ॥

एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम् ।
एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ७६ ॥

अनेन पुरुषो देहानुपादत्ते विमुञ्चति ।
हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥ ७७ ॥

यथा तृणजलूका च नोपयात्यपयाति च ।
न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥ ७८ ॥

यावदन्यं न विन्देत व्यवधानेन कर्मणाम् ।
मन एव मनुष्येन्द्र भूतानां भवभावनम् ॥ ७९ ॥

यदक्षैश्चरितं ध्यायन् कर्माण्याचिनुतेऽसकृत् ।
सति कर्मण्यविद्यायां बन्धः कर्मण्य आत्मनः ॥ ८० ॥

अतस्तदपबाधार्थं भज सर्वात्मना हरिम् ।
पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ८१ ॥

भक्तिः कृष्णे दया जीवेष्वकुण्ठज्ञानमात्मनि ।
यदि स्यादात्मनो भूयादपवर्गस्तु संसृतेः ॥ ८२ ॥

अदृष्टं दृष्टवन्नङ्क्ष्येद्भूतं स्वप्नवदन्यथा ।
भूतं भवद् भविष्यच्च सुप्तं सर्वरहोरहः ॥ ८३ ॥

मैत्रेय उवाच–
भागवतमुख्यो भगवान् नारदो हंसयोर्गतिम् ।
प्रदर्श्य ह्यमुमामन्त्र्य सिद्धलोकं ततोऽगमत् ॥ ८४ ॥

प्राचीनबर्ही राजर्षिः प्रजासर्गाभिरक्षणे ।
आदिश्य पुत्रानगमत् तपसे कपिलाश्रमम् ॥ ८५ ॥

तत्रैकाग्रमना वीरो गोविन्दचरणाम्बुजम् ।
विमुक्तसङ्गोऽनुभजन् भक्त्या तत्साम्यतामगात् ॥ ८६ ॥

एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ ।
यः श्रावयेद् यः शृणुयात् स लिङ्गेन विमुच्यते ॥ ८७ ॥

एतन्मुकुन्दयशसा भुवनं पुनानं
देवर्षिवर्यमुखनिःसृतमात्मशौचम् ।
यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं
नास्मिन् भवे भ्रमति मुक्तसमस्तबन्धः ॥ ८८ ॥

अध्यात्मपारोक्ष्यमिदं मयाऽधिगतमद्भुतम् ।
एवं स्त्रयाश्रयः पुंसश्छिन्नोऽमुत्र च संशयः ॥ ८९ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकोनत्रिंशोऽध्यायः ॥

# अथ त्रिंशोऽध्यायः

विदुर उवाच–
ये त्वयाऽभिहिता ब्रह्मन् सुताः प्राचीनबर्हिषः ।
ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥

किं चेह नार्हन्त्यपरत्र वा सुखं
कैवल्यनाथप्रियपार्श्ववर्तिनः ।
आसाद्य देवं गिरिशं यदृच्छया
प्रापुः परं नूनमथ प्रचेतसः ॥ २ ॥

मैत्रेय उवाच–
प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः ।
जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥

दिव्यवर्षसहस्रान्ते पुरुषस्तु सनातनः ।
तेषामाविरभूत् कृच्छ्रं शान्तेन शमयन् रुचा ॥ ४ ॥

सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः ।
पीतवासा मणिग्रीवः कुर्वन् वितिमिरा दिशः ॥ ५ ॥

काशिष्णुना कनककर्णविभूषणेन
भ्राजत्कपोलवदनो विलसत्किरीटः ।
अष्टायुधैः करवं मुनिभिः सुरेन्द्रैः
आसेवितो गरुडकिन्नरगीतकीर्तिः ॥ ६ ॥

पीनायताष्टभुजमण्डलमध्यलक्ष्म्या
स्पर्धच्छ्रिया परिवृतो वनमालया यः ।

बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान्
पर्जन्यनादरुतया सघृणावलोकः ॥ ७ ॥

श्रीभगवानुवाच –
वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः ।
सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ॥ ८ ॥

योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नरः ।
तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम् ॥ ९ ॥

ये तु मां रुद्रगीतेन सायंप्रातः समाहिताः ।
स्तुवन्त्यहं कामवरान् दास्ये प्रज्ञां च शोभनाम् ॥ १० ॥

यद् यूयं पितुरादेशमग्रहीष्ट मुदाऽन्विताः ।
अतो व उशती कीर्तिर्लोकाननुभविष्यति ॥ ११ ॥

भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः ।
य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥

कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना ।
तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ॥ १३ ॥

क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् ।
देशिन्नीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥

प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता ।
तत्र कन्यां वरारोहां तामुद्वहत माचिरम् ॥ १५ ॥

अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा ।
अपृथग्धर्मशीलेयं भूयात् प्रत्यर्पिता मया ॥ १६ ॥

दिव्यवर्षसहस्राणां सहस्रमहतौजसः ।
भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥

अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः ।
उपयास्यथ मद्धाम निर्विद्य निरयादतः ॥ १८ ॥

गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ।
मद्वार्तायातयामानां न बन्धाय गृहा मताः ॥ १९ ॥

न व्यवहियते यज्ञो ब्रह्मैतद् ब्रह्मवादिभिः ।
न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥

मैत्रेय उवाच–
एवं ब्रुवाणं पुरुषार्थभाजनं
जनार्दनं प्राञ्जलयः प्रचेतसः ।
तद्दर्शनध्वस्ततमोरजोमला
गिराऽगृणन् गद्गदया सुहृत्तमम् ॥ २१ ॥

प्रचेतस ऊचुः–
नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय ।
मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः ॥ २२ ॥

शुद्धाय शान्ताय नमः स्वनिष्ठमनस्यपार्थं विलसद्द्वयाय ।
नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥ २३ ॥

नमो विशुद्धसत्त्वाय हरये हरिमेधसे ।
वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥ २४ ॥

नमः कमलनाभाय नमः कमलमालिने ।
नमः कमलपादाय नमस्ते कमलेक्षण ॥ २५ ॥

नमः कमलकिञ्जल्कपिशङ्गामलवाससे ।
सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे ॥ २६ ॥

रूपं भगवता त्वेतदशेषक्लेशसंक्षयम् ।
आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पया ॥ २७ ॥

एतावत्त्वं हि विभुभिर्भाव्यं दीनेषु वत्सलैः ।
यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन ॥ २८ ॥

येनोपशान्तिर्भूतानां क्षुल्लकानामपीहितम् ।
अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥ २९ ॥

असावेव वरोऽस्माकमीप्सितो जगतां पते ।
प्रसन्नो भगवानेषामपवर्गगुरुर्गतिः ॥ ३० ॥

वरं वृणीमहेऽथापि नाथ त्वत् परतः परात् ।
नह्यन्तस्त्वद्विभूतीनां योऽनन्त इति गीयते ॥ ३१ ॥

पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते ।
त्वदङ्घ्रिमूलमासाद्य साक्षात् किं किं वृणीमहे ॥ ३२ ॥

यावत् ते मायया स्पृष्टा भ्रमाम इह कर्मभिः ।
तावद् भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे ॥ ३३ ॥

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥

यत्रेड्यन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः ।
निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥

यत्र नारायणः साक्षाद् भगवान् न्यासिनां गतिः ।
प्रस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥ ३६ ॥

तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ।
भीतस्य किं न रोचेत तावकानां समागमः ॥ ३७ ॥

वयं तु साक्षाद्भगवन्भवस्य
प्रियस्य सख्युः क्षणसङ्गमेन ।
सुदुश्चिकित्स्यस्य भवस्य मृत्यो-
र्भिषक्तमं त्वाऽद्य गतिं गताः स्मः ॥ ३८ ॥

यन्नः स्वधीतं गुरवः प्रसादिता
विप्राश्च वृद्धाश्च सदानुवृत्त्या ।
आर्या ह्यनाथाः सुहृदो भ्रातरश्च
सर्वाणि भूतान्यनसूययैव ॥ ३९ ॥

यन्नः सुतप्तं तप एतदीश
निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत् पुरुषस्य भूम्नो
वृणीमहे ते परितोषणाय ॥ ४० ॥

मनुः स्वयंभूर्भगवान् भवश्च
येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ।
अदृष्टपारा अपि यन्महिम्नः
स्तुवन्त्यथो त्वाऽऽत्मसमं गृणीमः ॥ ४१ ॥

नमः समाय शुद्धाय पुरुषाय पराय च ।
वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः ॥ ४२ ॥

मैत्रेय उवाच–
इति प्रचेतोभिरभिष्टुतो हरिः
प्रीतस्तथेत्याह शरण्यवत्सलः ।
अनिच्छतां यानमतृप्तचक्षुषां
ययौ स्वधामानपवर्गविक्रमः ॥ ४३ ॥

अथ निर्याय सलिलात् प्रचेतस उदन्वतः ।
वीक्ष्याकुप्यन् द्रुमैश्छन्नां गामारोद्धुमिवोत्थितैः ॥ ४४ ॥

ततोऽग्निमारुतौ राजन्नमुञ्चन् मुखतो रुषा ।
महीं निर्वीरुधं कर्तुं संवर्तक इवात्यये ॥ ४५ ॥

भस्मसात् क्रियमाणांस्तान् द्रुमान् वीक्ष्य पितामहः ।
आगतः शमयामास पुत्रान् बर्हिष्मतो नयैः ॥ ४६ ॥

तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा ।
आजहुस्ते प्रचेतोभ्य उपदिष्टाः स्वयंभुवा ॥ ४७ ॥

ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे ।
यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥

चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते ।
यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥ ४९ ॥

यो त्यक्चकार सर्वेषां तेजस्तेजस्विनां रुचा ।
स्वयोग्योपात्तदाक्ष्याच कर्मणा दक्षमब्रुवन् ॥ ५० ॥

तं प्रजासर्गरक्षायामनादिरभिषिच्य च ।
युयोज युयुजुस्तं वै सर्वेऽन्ये च प्रजेश्वराः ॥ ५१ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे त्रिंशोऽध्यायः ॥

## अथ एकत्रिंशोऽध्यायः

मैत्रेय उवाच–
तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् ।
स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥

दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ।
प्रतीच्यां दिशि वेलायां सिद्धोऽभूद् यत्र जाजलिः ॥ २ ॥

तान् निर्जितप्राणमनोवचोदृशो
जितासनाञ्छान्तसमानविग्रहान् ।
परेऽमले ब्रह्मणि योजितात्मनः
सुरासुरेड्यो ददृशे स्म नारदः ॥ ३ ॥

तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च ।
पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥

स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः ।
तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥

यदादिष्टं भगवता शिवेनाधोक्षजेन च ।
तद् गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो ॥ ६ ॥

तन्नः प्रद्योतयाध्यात्मज्ञानं तत्त्वार्थदर्शनम् ।
येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥

मैत्रेय उवाच–
इति प्रचेतसा पृष्टो भगवान् नारदो मुनिः ।
भगवत्युत्तमश्लोक आविष्टात्माऽब्रवीन्नृपान् ॥ ८ ॥

नारद उवाच–
तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।
नृणां येन हि विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥

किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः ।
कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषः ॥ १० ॥

श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः ।
बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥

किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि ।
किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥ १२ ॥

श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थतः ।
सर्वेषामपि भूतानां हरिरात्माऽऽत्मदः प्रियः ॥ १३ ॥

यथा तरोर्मूलनिषेचनेन
तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां
तथैव सर्वार्हणमच्युतेज्या ॥ १४ ॥

यथैव सूर्यात् प्रभवन्ति गावः
पुनश्च तस्मिन् प्रविशन्ति काले ।
भूतानि भूमौ स्थिरजङ्गमानि
तथा हरावेव गुणप्रवाहः ॥ १५ ॥

एतत् परं तज्जगदात्मनः पदं
सकृद् विभातं सवितुर्यथा प्रभा ।
यदाऽसवो जाग्रति सुप्तवृत्तयो
द्रव्यक्रियाकारकविभ्रमात्ययः ॥ १६ ॥

यथा नभस्यभ्रतमःप्रकाशा
भवन्ति भूयो न भवन्त्यनुक्रमात् ।
एवं परे ब्रह्मणि शक्तयस्त्वमू-
रजस्तमस्सत्वमिति प्रवाहः ॥ १७ ॥

तेनैकमात्मानमशेषदेहिनां
कालं प्रधानं पुरुषं परेशम् ।
स्वतेजसा ध्वस्तगुणप्रवाह-
मात्मैकभावेन भजध्वमद्धा ॥ १८ ॥

निरस्तसङ्कल्पविकल्पमद्वयं
द्वयापवादोपरमोपलम्भनम् ।
अनादिमध्यान्तमजस्रनिर्वृतिं
संज्ञप्तिमात्रं भजतामुया दशा ॥ १९ ॥

दयया सर्वभूतेषु संतुष्ट्या येन केन वा ।
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ २० ॥

अपगतसकलेषणामलात्मन्य-
विरतमेधितभावनोपहूतः ।
निजजनवशगत्वमात्मवान् यो
न सरति छिद्रवदक्षरः सतां हि ॥ २१ ॥

न भजति कुमनीषिणां स इज्यां
हरिरधनात्मधनप्रियो रसज्ञः ।
श्रुतधनकुलकर्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥ २२ ॥

श्रियमनुचरतीं तदर्थिनश्च
द्विपदपतीन् विबुधांश्च यः स्वपूर्णः ।
न भजति निजभृत्यवर्गतन्त्रः
कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥ २३ ॥

भवतां वंशधुर्योऽभूद् ध्रुवश्चित्ररथः स्वराट् ।
गुरुदारवचोबाणैर्निर्भिन्नहृदयोऽर्भकः ॥ २४ ॥

त्यक्त्वा स्त्रैणं च तं गच्छन् दृष्टो मे पथ्युदारधीः ।
पञ्चवर्षो मदादेशैः संराध्य पुरुषेश्वरम् ॥ २५ ॥

तत् परं सर्वधिष्ण्येभ्यो मायाधिष्ठितमारुहत् ।
मुनयोऽप्यधुदीक्षन्ते परं नापुरवाङ् नृपाः ॥ २६ ॥

तं यूयं सर्वभूतानामन्तर्यामिणमीश्वरम् ।
रुद्रादिष्टोपदेशेन भजध्वं भवनुत्तये ॥ २७ ॥

मैत्रेय उवाच–
इति प्रचेतसो राजन्नन्यांश्च भगवत्कथाः ।
श्रावयित्वा ब्रह्मलोकं ययौ स्वायम्भुवो मुनिः ॥ २८ ॥

तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम् ।
हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥ २९ ॥

एतत् तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान् ।
प्रचेतसां नारदस्य संवादे हरिकीर्तनम् ॥ ३० ॥

य एष उत्तानपदो मानवस्यानुवर्णितः ।
वंशं प्रियव्रतस्यापि निबोध नृपसत्तम ॥ ३१ ॥

यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ।
भुक्तवा विभज्य पुत्रेभ्य ऐश्वरं समगात् पदम् ॥ ३२ ॥

इत्थं तु कौषारविणोपवर्णितां
क्षत्ता निशम्याजितपादसत्कथाम् ।
प्रवृद्धभावाश्रुकलाकुलो मुनेः
दधार मूर्ध्ना चरणं हृदा हरेः ॥ ३३ ॥

विदुर उवाच–
सोऽयं तेन महायोगिन् भवता करुणात्मना ।
दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः ॥ ३४ ॥

श्रीशुक उवाच–
इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् ।
स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः ॥ ३५ ॥

एतद् यः शृणुयाद् राजन् राज्ञां हर्यर्पितात्मनाम् ।
आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥ ३६ ॥

॥ इति श्रीमद्भागवते चतुर्थस्कन्धे एकत्रिंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां चतुर्थस्कन्धः ॥

# पञ्चमस्कन्धः

## अथ प्रथमोऽध्यायः

राजोवाच—

प्रियव्रतो भागवत आत्मारामः कथं मुने ।
गृहेऽरमत यन्मूलः कर्मबन्धः पराभवः ॥ १ ॥

न नूनं मुक्तसङ्गानां तादृशानां महामुने ।
गृहेष्वभिनिवेशोऽयं पुंसां भवितुमर्हति ॥ २ ॥

महतां खलु विप्रर्षे उत्तमश्लोकपादयोः ।
छायानिर्वृतचित्तानां न कुटुम्बे स्पृहा मतिः ॥ ३ ॥

संशयोऽयं महान् ब्रह्मन् दारागारसुतादिषु ।
सक्तस्य यत्सिद्धिरभूत्कृष्णे च मतिरच्युता ॥ ४ ॥

श्रीशुक उवाच—

बाढमुक्तं भगवत उत्तमश्लोकस्य श्रीमच्चरणारविन्दमकरन्दरस
आदित आवेशितचेतसो भागवतपारमहंस्यदयितः कथञ्चि-
दन्तरायविहतां स्वां शिवतमां पदवीं न प्रायेण हि हिन्वन् आस्ते
॥ ५ ॥

यर्हि वाव स राजपुत्रः प्रियव्रतः परमभागवतो नारदस्य चरणोप-
सेवयाञ्जसाऽवगतपरमार्थसतत्त्वो ब्रह्मसत्रेण दीक्षिष्यमाणोऽ-
वनितलपरिपालनायाम्नातप्रवरगुणगणैकान्तभाजनतया स्वपित्रोपा
मन्त्रितो भगवति वासुदेव एवाव्यवधानसमाधियोगेन समावेशित
सकलकारकक्रियाकलापो नैवाभ्यनन्दत् ॥ यदपि तदप्रत्याम्ना-
तव्यं तदधिकरण आत्मनोऽन्यस्मादसतो यदा पराभवमन्वीक्ष-
माणः ॥ ६ ॥

अथ ह भगवानादिदेव एतस्य गुणविसर्गस्य परिबृंहणानुध्यानेन
व्यवसितसकलजगदभिप्राय आत्मयोनिरखिलनिगमनिजजन-
परिवेष्टितः स्वभवनादवततार ॥ ७ ॥

तत्र तत्र गगनतल उडुपतिरिव विमानावलिभिरनुपथममर-
परिवृढैरभिपूज्यमानः पथि पथि च वरूथशः सिद्धगन्धर्व-
साध्यचारणमुनिगणैरुपगीयमानो गन्धमादनद्रोणीमव-
भासयन्नुपससर्प ॥ ८ ॥

तत्र ह वा एनं देवर्षिः हंसयानेन पितरं भगवन्तं हिरण्यगर्भ-
मुपलभ्यमानः ॥ सहसैव सह पितापुत्राभ्यां अवहिताञ्जलि-
रुपतस्थे ॥ ९ ॥

भगवानपि भारत तदुपनीतार्हणः सूक्तवाकेनातितरामुदितगुण-
गणावतारसुविजयः प्रियव्रतमादिपुरुषस्तं सदयहासावलोक इति
होवाच ॥ १० ॥

ब्रह्मोवाच—

निबोध तातेदमृतं ब्रवीमि
माऽसूयितुं देवमर्हस्यमेयम् ।
अहं भवस्ते तत एष महर्षि-
र्वहाम सर्वे विवशा यस्य दिष्टम् ॥ ११ ॥

न तस्य कश्चित्तपसा विद्यया वा
न योगवीर्येण मनीषया वा ।
नैवार्थधर्मैः परतः स्वतो वा
कृतं विहन्तुं तनुभृद्विभूयात् ॥ १२ ॥

भवाय नाशाय च कर्म कर्तुं
शोकाय मोहाय सदाभयाय ।
सुखाय दुःखाय च देहयोग-
मव्यक्तदिष्टं जनताऽङ्ग धत्ते ॥ १३ ॥

यद्वाचि तन्त्यां गुणकर्मनामभिः
स्वदामभिर्वत्स वयं सुयोजिताः ।
सर्वे वहामो बलिमीश्वराय
प्रोता नसीव द्विपदे चतुष्पदः ॥ १४ ॥

ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग
दुःखं सुखं वा गुणकर्मसङ्गात् ।
आस्थाय यत्तद्यदुक्तनाथ
चक्षुष्मताऽन्धा इव नीयमानाः ॥ १५ ॥

मुक्तोऽपि तावद्बिभृयात्स्वदेह-
मारब्धमश्नन्नभिमानशून्यः ।
यथोपयातं प्रतियातनिद्रः
किन्त्वन्यदेहाय गुणान्न वृङ्क्ते ॥ १६ ॥

भयं प्रमत्तस्य वनेष्वपि स्या-
द्यतो वसन्ते सह षट्सपत्नाः ।

जितेन्द्रियस्यात्मरतेर्बुधस्य
गृहाश्रमः किंनु करोत्यवद्यम् ॥ १७ ॥

यः षट्सपत्नान्विजिगीषमाणो
गृहेषु निर्विश्य यतेत पूर्वम् ।
अत्येति दुर्गाश्रित ऊर्जितारीन्
क्षीणेषु कामं विचरेद्विपश्चित् ॥ १८ ॥

त्वं त्वब्जनाभाङ्घ्रिसरोजकोश-
दुर्गाश्रितो निर्जितषट्सपत्नः ।
भुङ्क्ष्वेह भोगान् पुरुषातिसृष्टान्
विमुक्तसङ्गः प्रकृतिं भजस्व ॥ १९ ॥

श्रीशुक उवाच–
इति समभिहितो महाभागवतो भगवतस्त्रिभुवनगुरोरनुशासन-
मात्मनो लघुतयावनतशिरोधरो बाढमिति सबहुमानमुवाह ॥

भगवानपि मनुना यथावदुपकल्पितापचितिः प्रियव्रतनारदयोर-
निमिषमभिसमीक्षमाणयोरात्मसमवस्थानं वाङ्मनसोः क्षय-
मव्यवहितमगमत् ॥ २१ ॥

मनुरपि परेणैवेत्थं समभिसन्धितमनोरथः सुरर्षिवरानुमते-
नात्मजमखिलधरामण्डलस्थितिगुप्तय आस्थायातिविषयविषम-
विषजलाशयादुपरराम ॥ २२ ॥

इति ह वाव स जगतीपतिरीश्वरेच्छयाधिनिवेशितकर्माधि-
कारोऽखिलजगद्बन्धध्वंसनपरानुभावस्य भगवतः आदिपुरुष-
स्याङ्घ्रियुगलानवरतध्यानानुभावेन परिरन्धितकषायाशया-
वदातोऽपि मानवर्धनो महतां महीतलमनुशशास ॥ २३ ॥

अथ च दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मतीं नाम ।
तस्यामु ह वा आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान्
दश भावयाम्बभूव । कन्यां यवीयसीमूर्जस्वतीं नाम ॥२४॥

आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथि-
वीतिहोत्रकवय इति सर्व एवाग्निनामानः ॥ २५ ॥

एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसः । त
आत्मविद्यायामर्भकभावादारभ्य कृतपरिचयाः पारमहंस्य-
मेवाश्रममभजन् ॥ २६ ॥

तस्मिन्नु ह वा उपशमशीलाः परमर्षयः सकलजीवनिकाया-
वासस्य भगवतो वासुदेवस्य संसारभीतानां शरणभूतस्य
श्रीमच्चरणारविन्दाविरतस्मृतिविगलितपरमभक्तियोगानुभावेन
परिभावितान्तर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते
प्रत्यगात्मन्येव तादात्म्यमविशेषेण समीयुः ॥ २७ ॥

अन्यस्यामपि भार्यायां त्रयः पुत्रा आसन् । उत्तमस्तामसो रैवत
इति मन्वन्तराधिपतयः ॥ २८ ॥

एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादश
परिवत्सराणामव्याहताखिलपुरुषकारसारसम्भृतदोर्दण्डयुगला-
पीडितकोदण्डमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षो बर्हिष्मत्याश्
चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचि-
रक्ष्वेल्यादिभिः पराभूयमानविवेकोऽनवबुध्यमान इव महामना
बुभुजे ॥ २९ ॥

यावदवभासयति सुरगिरिमनुपरिक्रामन् भगवानादित्यो
वसुधातलमर्धेनैव प्रतपति अर्धेनैवाच्छादयति तदा हि भगव-
दुपासनोपचितातिपुरुषप्रभावस्तदनभिनन्दन्समजवेन रथेन
ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्तकृत्वस्तरणि-
मनुपर्यक्रामत् द्वितीय इव पतङ्गः ॥ ३० ॥

ये वा उ ह तद्रथचरणनेमिकृतपरिखातास्ते सप्त सिन्धव आसन्
यत एव कृताः सप्त भुवो द्वीपाः ॥ ३१ ॥

जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञास्तेषां परिमाणं
पूर्वस्मात् पूर्वस्मादुत्तरोत्तरो यथासङ्ख्यं द्विगुणमानेन बहिः समन्तत
उपक्लृप्ताः ॥ ३२ ॥

लवणोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमण्डोदशुद्धोदाः सप्त
जलधयः सप्तद्वीपपरिखा इवाभ्यन्तरद्वीपसमाना एकैकश्येन
यथानुपूर्वं सप्तस्वपि बहिर्द्वीपेषु पृथक् पृथक् परित उपकल्पितास्
तेषु जम्ब्वादिषु बर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्म-
जिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान्
यथासङ्ख्येनैकैकस्मिन्नेकमेवाधिपतिं विदधे ॥ ३३ ॥

दुहितरं चोर्जस्वतीं नामोशनसे प्रायच्छद्यस्यामासीद्देवयानी
नाम काव्यसुता ॥ ३४ ॥

नैवंविधः पुरुषकार उरुक्रमस्य
पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम् ।
चित्रं विदूरविगतः सकृदाददीत
यन्नामधेयमधुना स जहाति बन्धम् ॥ ३५ ॥

स एवमपरिमितबलपराक्रम एकदा तु देवर्षिचरणानुसेवयानुपतितगुणविसर्गसंसर्गेणानिर्वृत्तमिवात्मानं मन्यमानः आत्तनिर्वेद इदमाह ॥ ३६ ॥

अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिन्द्रियैरविद्या-विरचित-विषमविषयान्धकूपे तदलमलं मनुष्यवनिताविनोदमृगं मां धिग्धिगिति गर्हयाश्चकार ॥ ३७ ॥

परदेवताप्रसादाधिगतात्मप्रत्यवमर्शनपरिनिर्वृतः स्वपुत्रेभ्य इमां गां यथादायं विभज्य भुक्तभोगां च महिषीं मृतकमिव सहमहाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि गृहीतरुचिरहरिविहारानुभावो भगवतो नारदस्य पदवीमनुससार ॥ ३८ ॥

तस्य ह वा एते श्लोकाः ।
प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम् ।
यो नेमिनिम्नैरकरोच्छायां घ्नन्सप्तवारिधीन् ॥ ३९ ॥

भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः ।
सीमा च भूतनिर्वृत्यै द्वीपे द्वीपे विभागशः ॥ ४० ॥

भौमं दिव्यं मानुषं च महित्वं योगकर्मजम् ।
यश्चक्रे निरयौपम्यं पौरुषं तु जनप्रियम् ॥ ४१ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

श्रीशुक उवाच–
एवं पितरि सन्निवृत्ते तदनुशासने वर्तमान आग्नीध्रो जम्बुद्वीपौकसः प्रजा औरसवद्धर्मावेक्षमाणः पर्यगोपायत् ॥ १

स तु कदाचित्पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यां भगवन्तं विश्वसृजां पतिमाहृतपरिचर्योपकरण आत्मैकाग्र्येण तपसाऽऽराधयाम्बभूव ॥ २ ॥

एतदुपलभ्य भगवानादिपुरुषः सदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास ॥ ३ ॥

सा च तदाश्रमोपवनमतिरमणीयविविधनिबिडविटपिविटपनिकरपुटलताकुटिलरूढस्थलविहङ्गमिथुनैः श्राव्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारण्डवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ॥ ४ ॥

तस्याः सुललितपदविन्यासगतिविलासेनानुपदं खणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनामीलितनयननलिनमुकुलयुगलमीषद्विकास्याचष्ट ॥ ५ ॥

तामेवाविदूरे विलोक्य मधुकरीमिव सुमनस उपजिघ्रन्तीं दिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारविनयविलोकनसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं विवरम् ॥ ६ ॥

निजमुखविगलितमदासवामोदमदान्धमधुकरनिकरोपरोधेन द्रुतपदविन्यासवल्गुस्पन्दनस्तनकलशकबरहाररशनां देवीं तदवलोकनेन विवृतावसरस्य भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच ॥ ७ ॥

का त्वं चिकीर्षसि च किं मुनिवर्य शैले
मायासि किं भगवतः परदेवतायाः ।
विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे
किं वा मृगान्मृगयसे विपिने प्रमत्तान् ॥ ८ ॥

बाणाविमौ भगवतः शतपत्रपत्रौ
शान्तावपुङ्खरुचिरावतितिग्मदन्तौ ।
कस्मै प्रयुङ्क्षसि वने विचरन्न विद्मः
क्षेमाय नो जडधियां तव विक्रमोऽस्तु ॥ ९ ॥

शिष्या इमे भगवतः परितः पठन्ति
गायन्ति साम सरहस्यमजस्रमीश ।
युष्मच्छिखाविलुलिताः सुमनोऽभिवृष्टीः
सर्वे भजन्त्यृषिगणा इव वेदशाखाः ॥ १० ॥

वाचं परं चरणपञ्जरतित्तिरीणां
ब्रह्मन्नरूपमुखरीं शृणुमोऽद्य तुभ्यम् ।
लब्धा कदम्बरुचिरङ्कविटङ्कबिम्बे
यस्यामलातपरिधिः क्व च वल्कलं ते ॥ ११ ॥

किं सम्भृतं रुचिरयोर्द्विज शृङ्गयोस्ते
मध्ये कृशो वहसि यत्र दृशिः श्रिता मे ।
पङ्कोऽरुणः सुरभिरात्मविषाण ईदृग्येनाश्रमं सुभग मे सुरभीकरोषि ॥ १२ ॥

लोकं प्रदर्शय सुहृत्तम तावकं मे
यत्रत्य इत्थमुरसावयवावपूर्वौ ।
अस्मद्विधस्य मन उन्नयनौ बिभर्ति
बह्वद्भुतं सरसहाससुधां च वक्त्रे ॥ १३ ॥

का वात्मवृत्तिरदनाद्धविरङ्ग भाति
विष्णोः कलास्यनिमिषन्मकरौ च कर्णौ ।
उद्विग्नमीनयुगलं द्विजपङ्क्तिशोचि
रासन्नभृङ्गनिकरं सर उन्मुखं ते ॥ १४ ॥

योऽसौ त्वया करसरोजहतः पतङ्गो
दिक्षु भ्रमन् भ्रमत एजयतेऽक्षिणी ते ।
युक्तं न ते स्म वरवक्रजटावरूथः
कृष्णोऽनिलो हरति लम्पट एष नीवीम् ॥ १५ ॥

रूपं तपोधन तपश्चरतां तपोघ्नं ह्येतत्तु
केन तपसा भवतेह लब्धम् ।
चर्तुं तपोऽर्हसि मया सह मित्र मह्यं
किं वा प्रसीदसि स वै भवभावनो मे ॥ १६ ॥

न त्वां त्यजामि दयितं द्विज देवदत्तं
यस्मिन्मनो दृगपि वा न वियाति लग्नम् ।
मां चारुशृङ्ग्यर्हसि नेतुमनुव्रतं ते
चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः ॥ १७ ॥

श्रीशुक उवाच–
इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूमिति सभाजयामास ॥ १८ ॥

सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येः पराक्षिप्तमनास्तेन सहायुतायुतपरिवत्सरोपलक्षणं कालं जम्बूद्वीपपतिना भोगान् बुभुजे ॥ १९ ॥

तस्यामु ह वा आत्मजान्स राजवर्य आग्नीध्रो नाभिकिम्पुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नव भावयाम्बभूव सा सूत्वा तु पुत्रान्नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे ॥ २० ॥

आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्तात्मतुल्यनामानि यथाभागं जम्बूद्वीपवर्षाणि बुभुजुः ॥

आग्नीध्रो राजपुत्रस्तामप्सरसमेवानुदिनमभिमन्यमानस्तस्याः सलोकतां श्रुतिभिरवरुन्धन् ईजे यत्र पितरो मोदयन्ते ॥२२॥

सम्परेते पितरि नवभ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रामां श्यामां नारीं भद्रां देवीमिति संज्ञा नवोदवहन् ॥२३॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः

श्रीशुक उवाच–
नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत ॥ १ ॥

तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवत्सलतया प्रतीत आत्मानमपराजितं निजजनाभिप्रायार्थविधित्सया गृहीतहृदयो हृदयङ्गमं मनोनयनानन्दनाभिरामावयवमाविश्चकार ॥ २ ॥

अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयाम्बरधरमुरसि विलसच्छ्रीवत्सललामं दरवरवनरुहवनमालाच्छूर्यमृतमणिगणप्रवरादिभिरुपलक्षितम् ॥ ३ ॥

स्फुटकिरणप्रवरमणिमयमुकुटकिरीटकुण्डलकटककटिसूत्रहारकेयूरनूपुराद्यङ्गभूषणविभूषितं ऋत्विक्सदस्यगृहपतयोऽधना इवोत्तमं धनमुपलभ्य सबहुमानमर्हणेनावनतशीर्षाण उपतस्थुः ॥

अर्हसि मुहुरर्हत्तमार्हणमस्माकं अनुपथानां नमो नम इत्येतावदेव सदुपशिक्षितं कोऽर्हति पुमान्प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य प्रकृतिपुरुषयोः परस्यावार्क्तनमतिर्नामरूपाकृतिभिर्निरूपणम् ॥ ५ ॥

सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ॥

परिजनानुरागविरचितस्तव लवसंशब्दसलिलकिसलयतुलसीदूर्वाङ्कुरैरपि सम्भृतया सपर्यया किल परम परितुष्यसि ॥ ७ ॥

अथानयापि भगवत इज्ययोरुसम्भारभरया न समुचितमर्थमिहोपलभामहे ॥ ८ ॥

आत्मत एवानुसवनमञ्जसा व्यतिरेकेणानुबोभूयमानाशेष-पुरुषार्थस्वरूपस्य किन्तु नाथाशिष आशासानामेतदभिसंराधनमात्रं भवितुमर्हति ॥ ९ ॥

तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परमपुरुष-प्रवलतरकरुणया स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन्स्व-यन्नोपचित एवेतरवदिहोपलक्षितः ॥ १० ॥

अथार्हयामः परं ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भगवान् निजपुरुषेक्षणविषय आसीत् ॥ ११ ॥

असङ्गनिशितज्ञानानलविधूताशेषमलानां भगवत्स्वभावानां आत्मारामाणां मुनीनामनवरतपरिगणितगुणगणपरममङ्गलायतन कथनोऽसि ॥ १२ ॥

अथ कथञ्चित्स्खलनक्षुत्पतनजृम्भणदुरवस्थानादिषु विवशानां नः श्रीमचरणारविन्दस्मरणाय ज्वरमरणदशायामपि सकलकश्मल-निरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु ॥

किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासन ईश्वर-माशिषां स्वर्गापवर्गयोरपि भगवन्तमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणं को वा ईहते ॥ १४ ॥

अपराजितापराजितया माययाऽनवसितपदव्यानाव्यापृतमति-र्विषमविषयावृतप्रकृतिरनुपासितमहच्चरणः ॥ १५ ॥

यदु हवाव पुनरदभ्रकर्तरिह समाहूतः तदर्थधियां मन्दानां नस्तद्देव हेलनं देवार्हसि साम्येन सर्वात्मना प्रतिबोढुमविदुषाम् ॥१६॥

इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभि-वन्दित-चरणः सदयमिदमाह ॥ १७ ॥

श्रीभगवानुवाच–

अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्य आत्मजो मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद्द्विजदेवकुलम् ॥ १८ ॥

तत आग्नीध्रीये क्षेत्रेऽहं कलयाऽवतरिष्यामि आत्मतुल्यमनुप-लभयमानः ॥ १९ ॥

इति निशामयन्त्या मेरुदेव्याः पतिं समभिधायान्तर्दधे भगवान् ॥ २० ॥

बर्हिषि तस्मिन् एवं विष्णुरात भगवन्परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधजने मेरुदेव्यां च धर्मान् दर्शयितुकामो वातरशनानां श्रमणानां ऋषीणामूर्ध्वमन्थिनां शुक्लया तन्वाऽव-ततार ॥ २१ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः

श्रीशुक उवाच–

अथ तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशम-वैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणाः प्रकृतयो देवताश्चावनितलसमवनायातितरां जगृधुः ॥ १ ॥

तस्य हवा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन ओजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदृक् नाम चकार ॥ २ ॥

यस्य हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष तदवधार्य भगवान् ऋषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमजनाभं नामाभ्यवर्षीत् ॥ ३ ॥

नाभिस्तु यथाभिलषितं सुप्रजास्त्वमवरुद्ध्य प्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकसमानधर्मं भगवन्तं पुराण-पुरुषं मायाविलसितमतिर्वत्स तातेति सानुरागमुपलालयन्परां निर्वृतिमुपगतो विदितानुरागः पौरप्रकृतिजनपदानां राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन तन्महिमा-नमवाप ॥ ४ ॥

यत्र ह पाण्डवेय श्लोकावुदाहरन्ति ॥
कोऽनु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ।
अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥ ५ ॥

ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मङ्गलपूजिताः ।
यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥ ६ ॥

अथ स भगवान् ऋषभः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवास उपलब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयलक्षणं धर्मं समाम्नायाम्नातमभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास ॥ ७ ॥

येषां खलु स महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति ॥ ८ ॥

तमनु कुशावर्त इलावर्तो ब्रह्मावर्त आर्यावर्तो मलयकेतुर्भद्रसेन इन्द्रस्पृक् विदर्भः कीकट इति नव नवतिप्रधानाः ॥ ९ ॥

कविर्हविरन्तरिक्षः प्रबुद्धः पिप्पलायनः । आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजन इति भागवतधर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं वसुदेवनारदसंवादरूपं उपशमायमानमुपरिष्टाद्वर्णयिष्यामः ॥ १० ॥

यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मश्रद्धाः ब्राह्मणा बभूवुः ॥ ११ ॥

भगवानृषभसंज्ञ आत्मतन्त्रः स्वयं नित्यनिवृत्तानर्थपरम्परः केवलानन्दानुभव ईश्वर एवं विपरीतवत्कर्माण्यारभमाणः कालेनानुगतं धर्ममाचारेणोपशिक्षयन् अतद्विद्वांसमुपशान्तो मैत्रः कारुणिको धर्मार्थयशःप्रजानन्दामृतावरोधेन गृहेषु लोकं नियमयत् ॥ १२ ॥

यच्छीर्षण्याचरितं तदनुवर्तते लोकः ॥ १३ ॥

यदपि स्वविदितं सकलं धर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ॥ १४ ॥

द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्व इयाज ॥ १५ ॥

भगवता ऋषभेण परिरक्ष्यमाण एतस्मिन्वर्षे न कश्चन पुरुषो वाञ्छत्यविद्यमानमिवात्मनोऽन्यस्मात्कथञ्चन किमपि कर्हिचिदवेक्षते भर्तर्यनुसवनविजृम्भितस्नेहातिशयमन्तरेण ॥ १६ ॥

स कदाचिदटमानो भगवानृषभो ब्रह्मावर्त गतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरं सुयन्त्रितानप्युपशिक्षयन्निति होवाच ॥ १७ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः

ऋषभ उवाच–

नायं देहो देहभाजां नृलोके
कष्टान्कामानर्हति विड्भुजां ये ।
तपो दिव्यं पुत्रका येन सत्त्वं
शुध्येद्यस्माद्ब्रह्मसौख्यं त्वनन्तम् ॥ १ ॥

महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥

ये वा मयीशे कृतसौहृदार्था जनेषु देहंभरवार्तिकेषु ।
गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके ॥

नूनं प्रमत्तः कुरुते विकर्म यदिन्द्रियप्रीतय आपृणोति ।
न साधु मन्ये यत आत्मनोऽयमसन्नपि क्लेशद आस देहः ॥

पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
तावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥

एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययात्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥६॥

यदा न पश्यत्ययथा गुणेहां स्वार्थे प्रमत्तः सहसा विपश्चित् ।
गतस्मृतिर्विन्दति तत्र तापानासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥

पुंसः स्त्रिया मिथुनीभावमेतं तयोर्मिथो हृदयग्रन्थिमाहुः ।
अतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहं ममेति ॥ ८ ॥

यदा मनो हृदयग्रन्थिरस्य कर्मानुबद्धो दृढ आश्लथेत ।
तदा जनः सम्परिवर्तमानो मुक्तः परं यात्यतिहाय हेतुम् ॥ ९

हंसे गुरौ मयि भक्त्यानुवृत्त्या वितृष्णया द्वन्द्वतितिक्षया च ।
सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ॥१०॥

मत्कर्मभिर्मत्कथया च नित्यं मद्देवसङ्गाद्गुणकीर्तनान्मे ।
निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः ॥११॥

अध्यात्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सम्यक् ।
सच्छ्रद्धया ब्रह्मचर्येण शश्वदसम्प्रमादेन जयेन वाचाम् ॥१२॥

सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन ।
योगेन धृत्युद्यमसत्वयुक्तो लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम् ॥

कर्माशयं हृदयग्रन्थिबन्धमविद्ययाऽऽसादितमप्रमत्तः ।
अनेन योगेन यथोपदेशं सम्यग्व्यपोह्योपरमेत योगात् ।
पुत्रांश्च शिष्यांश्च पिता गुरुर्वा मल्लोककामो मदनुग्रहार्थः ॥

इत्थं विमन्युरनुशिष्यादतज्ज्ञान्न योजयेत्कर्मसु कर्ममूढान् ।
कं योजयन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते ॥ १५ ॥

लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान्समीहेत निकामकामः ।
अन्योन्यवैरं सुखलेशहेतोरनन्तदुःखं च न वेद मूढः ॥ १६॥

कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामन्तरे वर्तमानम् ।
दृष्ट्वा पुनस्तं स घृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथान्धम् ॥

गुरुर्न सः स्यात्स्वजनो न सः स्या-
त्पिता न सः स्याज्जननी न सा स्यात् ।
दैवं न तत्स्यान्नपतिश्च सः स्या-
न्नमोचयेद्यः समुपेतमृत्युम् ॥ १८ ॥

इदं शरीरं मम दुर्विभाव्यं सत्वं हि मे हृदयं यत्र धर्मः ।
पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः ॥

तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सुनाभम् ।
अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥ २०

भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सुबोधनिष्ठाः ।
ततो मनुष्याः प्रवरास्ततोऽपि गन्धर्वसिद्धा विबुधानुगा ये ॥

देवा सुरेभ्यो मघवान् प्रधानो दक्षादयो ब्रह्मसुताश्च तेषाम् ।
भवः परः सोथ विरिञ्चिवीर्यः स मत्परोहं द्विजदेवदेवः ॥

न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः किमतः परं नु ।
यस्मिन्नृभिः प्रहुतं श्रद्धयाऽहमश्नामि कामं न तथाग्निहोत्रे ॥

धृतास्तनूरुशतीर्मे पुराणीर्येनेह सत्वं परमं पवित्रम् ।
शमो दमः सत्वमनुग्रहश्च तपस्तितिक्षानुभवश्च यत्र ॥ २४ ॥

मत्तोऽप्यनन्तात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किञ्चित् ।
येषां किमु स्यादितरेण तेषामकिञ्चनानां मयि भक्तिभाजाम् ॥

सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ध्रुवाणि ।
सम्भावितव्यानि पदेपदे वो विविक्तदृष्टिस्तदुतार्हणं मे ॥ २६

मनोवचोदृक्करणैर्हितस्य साक्षात्कृतं मे परिबर्हणं हि ।
विना पुमान्येन महाविमोहकृतान्तपाशान्न विमोक्तुमीशः ॥

श्रीशुक उवाच–
स एवमनुशास्यात्मजान्स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयं शतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणीतलपरिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात् प्रवव्राज ॥ २८ ॥

जडान्धमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ॥ २९ ॥

तत्रतत्र पुरग्रामदुर्गाकरखेटखर्पटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपदमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहननिष्ठीवनग्रावशकृद्रजःप्रक्षेपणपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन् देहोपलक्षणेऽसदपदेश अभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमवरोपिताहंममाभिमानत्वादखण्डितः पृथिवीमेकचरः परिबभ्राम ॥ ३० ॥

अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुन्दरः स्वभावहासमुखो नवनलिनदलायमानशिशिरतरचार्वरुणायतनयनसदृशसुभगकपोलकर्णकण्ठनासः विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरमुपदधानः । परागवलम्बमानकुटिलजटिलालककपिलकेशभूरिभारोऽवधूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत ॥ ३१ ॥

यर्हि वाव स भगवान् लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्म बीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हसति स चेष्टमान उच्चरितादिग्धोद्देशास्तस्य ह यः पुरीषसुरभिसौगन्ध्यो वायुस्तं देशं दशयोजनं समन्तात्सुरभीचकार । एवं गोमृगकाकचर्यया

व्रजंस्तिष्ठन्नासीनः शयानः काकमृगगोचरितं पिबति खादत्यवमेहति स्म ॥ ३२ ॥

इति नानायोगचर्याचरणो भगवान्कैवल्यपतिर्ऋषभोऽविरतपरममहानन्दानुभव आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेवे आत्मनोऽव्यवधानानन्तरोदरभावेन सिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयोपगतानि नाञ्जसा नृप हृदयेनाभ्यनन्दत् ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः

राजोवाच–
न नूनं भगवन्नात्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥

शुक उवाच–
सत्यमुक्तं किन्त्विह वा एके मनसो विस्रम्भमनवस्थानस्य शठकिरात इव न सङ्गच्छन्ति ॥ २ ॥

तथा चोक्तम्–
न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते ।
यद्विस्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् ॥ ३ ॥

नित्यं ददाति कामस्य छिद्रं तमनु येऽरयः ।
योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥

कामो मन्युर्मदो लोभः शोकमोहभयादयः ।
कर्मबन्धश्च यन्मूलः स्वीकुर्यात्को नु तद्बुधः ॥ ५ ॥

अथैवमखिललोकपालललामो विलक्षणो जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो योगिनां साम्परायविधिमनुशिक्षयन्स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ ६ ॥

तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावासनो देह इमां जगतीमभिमानाभासेन सङ्क्रममाणः ॥ ७ ॥

एकदा तु कोङ्कवेङ्ककुटकान्दक्षिणकर्णाटकान् देशान् यदृच्छयोपगतः कुटकाचलोपवन आस्यकृताश्मकवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥ ८ ॥

अथ समीरवेगविधूतवेणुविकर्षणजातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह ॥ ९ ॥

यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजार्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाखण्डमसमञ्जसं निजमनीषया मन्दः सम्प्रवर्तयिष्यते ॥ १० ॥

येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ ११ ॥

ते च ह्यर्वाक्तनया निजलोकयात्रयान्धपरम्परयाश्वस्तास्तमस्यन्धे स्वयमेव प्रपतिष्यन्ति ॥ १२ ॥

अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः तस्यानुगुणान् श्लोकान्गायन्ति ॥ १३ ॥

अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।
गायन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवन्ति ॥ १४ ॥

अहो नु वंशो यशसावदातः प्रैयव्रतो यत्र पुमान्पुराणः ।
कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम् ॥ १५ ॥

को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथेनाप्यभवस्य योगी ।
यो योगमायाः स्पृहयत्युदस्ता ह्यसत्तया येन कृतप्रयत्नाः ॥ १६ ॥

इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितमीरितं पुंसां समस्तदुश्चरिताभिहरणं परममहामङ्गलायनमिदमनुश्रद्धयोपचितयानुशृणोत्याश्रावयति वावहितो भगवति तस्मिन्वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्तते ॥ १७ ॥

यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः ॥ १८ ॥

राजन्पतिर्गुरुरलं भवतां यदूनां
देवप्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥

नित्यानुभूतनिजलाभनिवृत्ततृष्णः
श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ।
लोकस्य यः करुणया भयमात्मलोक-
माख्यान्नमो भगवते ऋषभाय तस्मै ॥ २० ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे षष्ठोऽध्यायः ॥

# अथ सप्तमोऽध्यायः

श्रीशुक उवाच–
भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥

तस्यामु ह वा आत्मजान् कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि ॥ २ ॥

सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ॥ ३ ॥

स हि बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्मणि वर्तमानाः प्रजाः पर्यपालयत् ॥ ४ ॥

ईजे च भगवन्तं यज्ञपुरुषं क्रतुभिरुच्चावचैः श्रद्धयाऽऽहिताग्निरग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना ॥ ५ ॥

सम्प्रचरत्सु नानायोगेषु विरचिताङ्गक्रियेषु अपूर्वं यत्तत्क्रियाफलं धर्माख्यं परब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयानः आत्मनैपुण्यमृदितकषायो हविष्ष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान्पुरुषावयवेष्वध्यभावयत् ॥६॥

एवं कर्मविशुद्धिविशुद्धसत्त्वस्यान्तर्हृदय आकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषोपलक्षणे श्रीवत्सकौस्तुभवनमालारिदरगदादिभिरुपलक्षिते निजपुरुष हृदुल्लिखितेनात्मनात्मनि पुरुषरूपेण विरोचमाने उच्चैस्तरां भक्तिरनुदिनमेधमानरयाऽजायत ॥ ७ ॥

एवं वर्षायुतसहस्रपर्यन्तावसानावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात्स्वनिकेतनात्पुलहाश्रमं प्रवव्राज । यत्र ह वाव भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यते इच्छारूपेण ॥ ८ ॥

यत्राश्रमपदान्युभयतो नाभिभिर्दृषच्चक्रैश्चक्रनदीनाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥ ९ ॥

तस्मिन्वाव किल स एकः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपहतोपशमः परां निर्वृतिमवाप ॥ १० ॥

तयैवमविरतपुरुषपरिचर्यया भगवति प्रवर्द्धमानानुरागभारहृतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलकः औत्कण्ठ्यप्रवृत्तप्रणयवाष्पनिरुद्धावलोकनयनोऽभिरेमे । एवं निजरमणारुणचरणारविन्दानुध्यानेनोपचितभक्तियोगपरिप्लुतपरमाह्लादगभीरहृदयावगाढधिषणस्तां विक्रियमाणां भगवत्सपर्यां न सस्मार ॥ ११ ॥

इत्थं धृतभगवद्व्रत ऐणाजिनवाससानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोचमानः सूर्य इव भगवन्तं हिरण्मयं पुरुषं ददर्श सूर्यमण्डलेऽप्युपतिष्ठन्नेतदुहोवाच ॥ १२ ॥

परो रजः सवितर्जातवेदो देवस्य गर्भो मनसेदं जजान ।
स्वरेतसाऽदः पुनराविश्य चष्टे हंसं गृध्राणमृषभं सङ्गृणीमः ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः

श्रीशुक उवाच–
एकदा तु महानद्यां कृताभिषेकनैगमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त उपविवेश । तत्र तदा राजन्हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम । तया पेपीयमाने उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयङ्कर उदपतत् ॥ १ ॥

तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषाऽतिभयात्सहसोच्चक्राम ॥ २ ॥

तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिगतो गर्भः स्रोतसि निपपात । तत्प्रसवणोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्याञ्चिद्दर्यां कृष्णसारसती निपपात चाथ ममार ॥ ३ ॥

तं त्वेणकुणकं कृपणं स्रोतसा चोह्यमानमभिवीक्ष्यापविद्धबन्धुं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमेणमाश्रमपदमानयत् ॥ ४ ॥

तस्य ह वा कुणक उच्चैस्तरां तस्मिन् कृतनिजाभिमानस्याहरहस्तत्पोषणपालनप्रीणनलालनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ५ ॥

अथेदमाह अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातृपितृभ्रातृज्ञातिभ्योऽधिकं गोपायनं मन्यमानो नान्यं कञ्चन वेद मय्येवातिविस्रब्धश्चात एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमप्यनसूयेनानुष्ठेयं शरण्योपेक्षादोषविदुषा ॥ ६ ॥

नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थान् गुरुतरानुपेक्षन्ते ॥ ७ ॥

इति कृतानुषङ्ग आसनस्नानाशनशयनाटनस्थानादिषु सहमृगजहुना स्नेहानुबद्धहृदय आसीत् ॥ ८ ॥

कुसुमकुशसमित्पलाशफलमूलोदकादीन्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशङ्कमानः सह हरिणकुणकेन वनमाविशति ॥ ९ ॥

पथि पथि च मुग्धभावेन तत्र तत्र विषक्तमतिप्रणयभारहृदयः कार्पण्यात् स्कन्धेनोद्वहति एवमुत्सङ्गे उरसि चावधायोपलालयन् परमामवाप मुदम् ॥ १० ॥

क्रियायां निर्वर्त्यमानायामन्तराल उत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्रकृतिस्थेन मनसा तस्मै हाशिष आशास्ते स्वस्ति स्याद्वत्स ते सर्वत इति ॥ ११ ॥

अन्यदा तु भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतिरितर्षेण हरिणकुणकविरहविह्वलहृदयसन्तापस्तमनुशोचन् किल कश्मलं महदभिरम्भित इति होवाच ॥ १२ ॥

अपि बत स वै कृपणेणबालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकितवमतेरकृतसुकृतस्य कृतविस्रम्भ आत्मप्रत्ययेन तदविगणयन् स्वजन इवागमिष्यति ॥ १३ ॥

अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्तं देवगुप्तं द्रक्ष्यामि ॥

अपि न वृकः सालावृकोऽन्यतमो वा नैकचरो जक्षयति ॥

निम्लोचति भगवान्सकलजगत्क्षेमोदयः सूर्यात्माऽद्यापि न मम मृगवधून्यास आगच्छति ॥ १६ ॥

अपिस्विदकृतसुकृतं मामागत्य सुखयिष्यति । हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसन्तोषं स्वानामपनुदन् ॥ १७ ॥

क्ष्वेलिकया मां मुधा समाधिना मीलितदृशं प्रेमसंरम्भेण चकितमागत्य पृषत् अपरुषविषाणाग्रेण लुठति ॥ १८ ॥

आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरभस ऋषि कुमारवदवहितकरणकलाप आस्ते ॥ १९ ॥

किं वा अरे आचरितं तपस्तपस्विन्यानया यदियमवनिः सविनय कृष्णसारतनयतनुतरसुभगशिवतमखरखुरपदपङ्क्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मम द्रविणपदवीं सूचयन्त्यात्मानं सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति ॥

अपिस्विदसौ भगवानुडुप एनं मृगपतिभयान्मृतमातरं मम मृगबालकं स्वाश्रमपरिभ्रष्टमनुकम्पया कृपणजनवत्सलः परिपालयति । एष ते हरिणकुणकोपनिधिर्मया गुप्त इति ॥ २१ ॥

किं वा आत्मज विश्लेषज्वरदावदहनशिखाभिरुपतप्यमानहृदय-
स्थलनलिनं मामुपसृतमृगीतनयः शिशिरशान्तानुरागगुणितनिज-
वदनसलिलामृतमयगभस्तिभिः स्वधयति ॥ २२ ॥

इति चैवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्ध-
कर्मणा योगारम्भणतो विभ्रंशितः स योगतापसो भगवदाराधन-
लक्षणाच्च कथमितरथा जात्यन्तर एणकुणक आसङ्गः साक्षा-
न्निःश्रेयसप्रतिपक्षतया प्राक् परित्यक्तदुस्त्यजहृदयाभिजातस्य
तस्यैवमन्तरायविहतयोगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भक-
पोषणपालनप्रीणनलालनानुषङ्गेणाविगणयत आत्मानमहिरि-
वाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत ॥ २३ ॥

तदानीमपि पार्श्ववर्तिनमात्मजं वन्धुमिवानुशोचन्तमभिवीक्षमाणो
मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कलेवर-
मनुस्मृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप ॥ २४ ॥

तत्रापि ह वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानु-
भावेनानुस्मृत्य भृशमनुतप्यमान आह ॥ २५ ॥

अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसङ्गस्य
विविक्तपुण्यारण्यशरणस्यात्मवतः आत्मनि सर्वेषामात्मनां
भगवति वासुदेवे तदनुश्रवणमननसङ्कीर्तनानुस्मरणाभि-
योगेनाशून्यसकलयामेन कालेन समावेशितं समाहितं कार्त्स्न्येन
मनस्तत्तु पुनर्ममावुधस्य रागान्मृगसुतमनुपरिसुस्राव ॥ २६ ॥

एवं निगूढनिर्वेदो विसृज्य मृगीं मातरं पुनर्भगवत्क्षेत्रमुप-
शमशीलमुनिगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं
कालंजरात्प्रत्याजगाम ॥ २७ ॥

तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः
शुष्कपर्णतृणवीरुधा वर्त्तमानो मृगत्वनिमित्तावसानमेव गणय-
न्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ २८ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे अष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः

श्रीशुक उवाच–
अथ कस्यचिद् द्विजवरस्याङ्गिरसप्रवरस्य शमदमतपः-
स्वाध्यायाध्ययनत्यागसन्तोषतितिक्षाप्रश्रयविद्याऽनसूयात्मज्ञानानन्द-
युक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सौदर्या अङ्गजा
बभूवुः मिथुनं च यवीयस्यां भार्यायाम् ॥ १ ॥

यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं
चरमशरीरेण विप्रत्वं गतमाहुः ॥ २ ॥

तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः कर्मबन्ध-
विध्वंसनश्रवणस्मरणगुणविवरणेन चरणारविन्दयुगलं मनसा
विदधतः आत्मनः प्रतिघातमाशंसमानो भगवदनुग्रहेणानु-
स्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडवधिररूपेण दर्शयामास
लोकस्य ॥ ३ ॥

तस्यापि हवाऽऽत्मजस्य स विप्रः पुत्रस्नेहानुबद्धमना आसमावर्त-
नात्संस्कारान्यथोपदेशं विदधान उपनीतस्य च पुनः शौचा-
चमनादीन् कर्मनियमाननभिप्रेतानपि समशिक्षयत् अनुशिष्टेन हि
भाव्यं पितुः पुत्रेणेत्यसदाग्रहः ॥ ४ ॥

स चापि तदु ह पितृसन्निधावेव सध्रीचीनमिव करोति । छन्दांस्य-
ध्यापयिष्यन्सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवा-
सन्तिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास ॥ ५ ॥

एवं स्वतनुजे आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रत-
नियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणकानि कर्माण्यतदभियुक्तान्यपि
समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य । पिता स्वयं
तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृहे प्रमत्त
उपसंहृतः ॥ ६ ॥

अथ यवीयसी द्विजसती स्वगर्भजातमिथुनं सपत्न्यामुपन्यस्य
स्वयमनुसंस्थया पतिलोकमगात् । पितर्युपरते भ्रातर एनम-
तत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायां
जडमतिरिति भ्रातरमनुशासननिर्बन्धान्न्यवृत्सन्त ॥ ७ ॥

स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा
तदनुरूपाणि प्रभाषते कर्माणि च स कार्यमाणः परेच्छया
करोति । विष्टितो वेतनतो वा याच्ञया यदृच्छया वोपसादित-
मल्पं बहु मृष्टं कदन्नं वाऽभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम् ॥

नित्यनिवृत्तदुःखस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगतः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसम्भावितदेहाभिमानः ॥ ९ ॥

शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिल-संवेशनानुन्मर्दनानुन्मज्जनेन रजसा महामणिरिवानभिव्यक्त-ब्रह्मवर्चाः कर्पटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञयाऽज्ञजनावमतो विचचार ॥ १० ॥

यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदार-कर्मणि निरूपितस्तदपि करोति । किन्तु न समं विषमन्यूनमधिकमिति वेद । कणपिण्याकफलीकरणकुल्माषस्थाली-पुरीषादीन्यप्यमृतवदारोचयति ॥ ११ ॥

अथ कदाचिद् वृषलीपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः ॥ १२ ॥

तस्य ह दैवविमुक्तस्य पशोः पदवीं तदनुचराः परिधावन्तो निशि निशीथसमये तमसाऽऽवृतायामनधिगतपशव आकस्मिकेन विधिना केदारान्वीरासनेन मृगवराहादिभ्यः संरक्ष्यमाण-माङ्गिरसप्रवरसुतमपश्यन् ॥ १३ ॥

अथ त एनमनवद्यलक्षणमवमृश्य तेन भर्तुः कर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिकागृहमुपनिन्युर्मुदा विकसित-वदनाः ॥ १४ ॥

अथ पणयस्तं स्वविधिनाऽभिषिच्याहतेन वाससाऽऽच्छाद्य भूषणानुलेपस्रक्तिलकादिभिरुपस्कृतं भुक्तवन्तं धूपदीपमाल्य-लाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुतिमृदङ्गपणवघोषेण च तं पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः ॥ १५ ॥

अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदाऽभिमन्त्रितमसिमतिकरालं निशितमुपाददे ॥

इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजसोत्सिक्त-मनसां भगवत्कलाङ्गिरसकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद्ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं तदुपलभ्य ब्रह्मतेजसाऽतिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाल सैव देवी भद्रकाली ॥ १७ ॥

भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणा-टोपातिभयानकवदना हन्तुकामेवेदं महाट्टहासमतिसंरम्भेण विमुञ्चती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्ण-शीर्ष्णां गलात्स्रवन्तमसृगासवमत्युष्णं सह गणैर्निपीयातिपान-मदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त विजहार च शिरःकन्दुकलीलया ॥ १८ ॥

एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति ॥

न वा एतद्विष्णुदत्त महदद्भुतं यदसम्भ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रन्थीनां सर्वसत्त्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवताऽनिमिषारिवरायुधेनाप्रमत्तेन तैस्तै-र्भावैः परिरक्ष्यमाणानां तत्पादमूलमकुतोभयमाश्रितानां भागवत-परमहंसानाम् ॥ २० ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे नवमोऽध्यायः ॥

# अथ दशमोऽध्यायः

श्रीशुक उवाच–
अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तदा भगवन्तं कपिलर्षिं द्रष्टुं कस्मिंश्चिदाश्रमे स्थितं तत्कुलपतिना शिबिकावाहकपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्धः एष पीवा युवा संहननाङ्गः खरवत् धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स हि महानुभावः ॥ १ ॥

यदा हि द्विजवरस्य युगमात्रावलोकानुगतेर्न समा पुरुषगतिस्तदा विषमगतायां स्वशिबिकायां रहूगण उपधार्य पुरुषानधिवहत आह । हे वोढारः साध्वतिक्रमत किमिति विषममुह्यते यानमिति ॥

अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्य तुर्याच्छङ्कितमनसस्तं विज्ञापयाम्बभूवुः ॥ ३ ॥

न वयं नरदेवप्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमिह वयं पारयाम इति ॥ ४ ॥

सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां संसर्गिणां भवितुमर्हतीति निशम्य कृपणं वचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसा तमसाऽऽवृतमतिराह ॥ ५ ॥

अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक एव ऊहितवान् सुचिरं नातिपीवा नातिसंहननाङ्गो जरसोपद्रुतो भवान्सखेनो एवापर एते सङ्घट्टिनः ॥ ६ ॥

इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषे अहंममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकामुवाह ॥ ७ ॥

अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमरे त्वं जीवन्मृतोसि मां कदर्थीकृत्य भर्तृशासनमतिचरसि । प्रमत्तस्य ते करोमि चिकित्सां दण्डपाणिरिव जनतायाः यथा प्रकृतिं स्वां भजिष्यसीति ॥ ८ ॥

एवं बह्वबद्धमभिभाषमाणं नरदेवाभिमानिनं रजसा तमसाऽनुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥ ९ ॥

ब्राह्मण उवाच–

त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर भारः ।
गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति चासौ न विदां प्रवादः ॥

स्थौल्यं कार्श्यं व्याधय आधयश्च
क्षुत्तृड्भयं कलिरिच्छा जरा च ।
निद्राऽरतिर्मन्युरहंमदश्च देहेन
जातस्य हि मे न सन्ति ॥ ११ ॥

जीवन्मृतत्वं नियमेन राजन्नाद्यन्तवद्विकृतस्य दृष्टम् ।
स्वस्वामिभावो ध्रुव एष यत्र तर्ह्युच्यतेऽसाविति कृत्ययोगः ॥

विशेषबुद्धेर्विवरं मनाक् च पश्यामि यत्र व्यवहारतोऽन्यत् ।
क ईश्वरस्तत्र किमीशितव्यमथापि राजन्करवाम किं ते ॥ १३

उन्मत्तमत्तजडवत्स्वसंस्थां गतस्य मे वीर चिकित्सितेन ।
अर्थः कियान् भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः ॥

श्रीशुक उवाच–

एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्तमुपभोगेन कर्मारब्धं व्यपनयन् राजयानमपि तथोवाह ॥ १५ ॥

स चापि पाण्डवेय सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक्श्रद्धयाऽधिकृताधिकारः तद्धृदयग्रन्थिविमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थमतं त्वरयाऽवरुह्य शिरसा पादमूलमुपगतः क्षमापयन्विगतनरदेवस्मय उवाच रहूगणः ॥ १६ ॥

कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुत्रत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः ॥

नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात् ।
नाग्न्यर्कसोमानिलवित्तपास्त्राच्छङ्के भृशं ब्रह्मकुलावमानात् ॥

तद्ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः ।
वचांसि योगग्रथितानि साधो न नः क्षमन्ते मनसा विभेत्तुम् ॥

अहं च योगेश्वरमात्मतत्त्वविदां मुनीनां कपिलं गुरुं वै ।
प्रष्टुं प्रवृत्तः किमिहारणं तत्साक्षाद्धरिं ज्ञानकलावतीर्णम् ॥

स वै भवाँल्लोकनिरीक्षणार्थमव्यक्तलिङ्गो विचरत्यपिस्वित् ।
योगेश्वराणां गतिमल्पबुद्धिः कथं विचक्षीत गृहानुबद्धः ॥

दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चाथमन्ये ।
यथा श्रुतोदानयनादिभावाः समूलदृष्टो व्यवहारमार्गः ॥२२॥

स्थाल्यग्नितापात्पयसो हि तापस्तत्तापतस्तण्डुलगर्भरन्धिः ।
देहेन्द्रियास्वाशयसन्निकर्षात्तत्संसृतिः पुरुषस्यानुरोधात् ॥२३॥

शास्ताऽभिगोप्ता नृपतिः प्रजानां
यः किङ्करो वै न पिनष्टि पिष्टम् ।
स्वधर्ममाराधनमच्युतस्य
यदीहमानो विजहात्यघौघम् ॥ २४ ॥

तन्मे भवान्नरदेवाभिमानमदेन तुच्छीकृतसत्तमस्य ।
कृषीष्ट मैत्रीं दृशमार्तबन्धो यया तरेयं सदवध्यानमंहः ॥२५॥

न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि ।
महद्विमानात्स्वकृताद्धि मादृङ्नङ्क्ष्यत्यदूरादपि शूलपाणिः ॥२६॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे दशमोऽध्यायः ॥

## अथ एकादशोऽध्यायः

ब्राह्मण उवाच–
अकोविदः कोविदवादवादान्वदस्यथो नातिविदां वरिष्ठः ।
न सूरयो हि व्यवहारमेनं तत्वावमर्शेन सहामनन्ति ॥ १ ॥

तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृम्भितेषु ।
न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धो नु चकास्ति साधु ॥

न तस्य तत्त्वग्रहणाय साक्षात्
वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधसौख्यं
न यस्य हेयानुमितं स्वयं स्यात् ॥ ३ ॥

यावन्मनो रजसा पूरुषस्य सत्वेन वा तमसा वाऽनुरुद्धम् ।
चेतोभिराकूतिभिरातनोति निरङ्कुशः कुशलं चेतरं वा ॥ ४ ॥

स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा ।
चित्रं पृथङ्नामभी रूपभेदमन्तर्बहिष्ठः स्वपुरैस्तनोति ॥ ५ ॥

दुःखं सुखं व्यतिमिश्रं च तीव्रं कालोपपन्नं फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटम् ॥

तावानयं व्यवहारः सदा वै क्षेत्रज्ञसाक्ष्योर्भवति स्थूलसूक्ष्मः ।
तस्मान्मनोलिङ्गमदो वदन्ति गुणागुणस्यास्य परावरस्य ॥७॥

गुणानुरक्तं व्यसनाय जन्तोः
क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्तिमास्थितो
स्थितिं स धूमां भजति ह्यन्यदा स्वम् ॥ ८ ॥

पदं तथा गुणकर्मानुबद्धं
बहिर्मनः श्रयतेऽन्यत्र तत्वम् ।
एकादशासन्मनसोऽस्य वृत्ती-
राकूतयः पञ्च धियोऽभिमानाः ॥ ९ ॥

मात्राणि कर्माणि पुरं च तासां
वदन्ति हैकादश वीर भूमिम् ॥ १० ॥

गन्धाकृतिस्पर्शरसश्रवांसि
विसर्गगत्यार्त्यभिजल्पशिल्पाः ।
एकादशं स्वीकरणं ममेति
मायामहं द्वादशमेकमाहुः ॥ ११ ॥

द्रव्यस्वभावाशयकर्मकाले-
रेकादशामी मनसो विकाराः ।
सहस्रशः शतशः कोटिशश्च
क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥ १२ ॥

क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्याः ।
आविर्हिताः क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥

क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयं ज्योतिरजः परेशः ।
नारायणो भगवान्वासुदेवः स्वमाययाऽऽत्मन्व्यवधीयमानः ॥

यथानिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईष्टे ।
एवं परो भगवान्वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥ १५ ॥

न यावदेतां तनुभृन्नरेन्द्र विधूय मायां वयुनोदयेन ।
विमुक्तसङ्गो जितषट्सपत्नो वेदार्थतत्त्वं भ्रमतीह तावत् ॥

न यावदेतन्मन आत्मलिङ्गं संसारतापावपनं जनस्य ।
यच्छोकमोहामयसङ्गलोभवैरानुबन्धं ममतां विधत्ते ॥ १७ ॥

भ्रातृव्यमेनं त्वमदभ्रवीर्यमुपेक्षयाऽप्येधितमप्रमत्तः ।
गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यलीकं स्वयमात्ममोहम् ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे एकादशोऽध्यायः ॥

## अथ द्वादशोऽध्यायः

रहूगण उवाच–
नमो नमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय ।
नमोऽवधूतद्विजबन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम् ॥ १ ॥

ज्वरामयार्तस्य यथागदं सन्निदाघदग्धस्य यथा हिमाम्भः ।
कुदेहमानाहिविनष्टदृष्टेर्ब्रह्मन्वचस्तेऽमृतमौषधं मे ॥ २ ॥

तस्माद्भवन्तं मम संशयार्थं पृच्छामि पश्चादधुना सुबोधम् ।
अध्यात्मयोगग्रथितं पुरोक्तमाख्याहि कौतुहलचेतसो मे ॥

यदाह योगेश्वर दृश्यमानं क्रियाफलं सद्व्यवहारमूलम् ।
न ह्यञ्जसा तत्त्वविमर्शनाय भवानमुष्मिन्भ्रमते मनो मे ॥ ४

ब्राह्मण उवाच–
अयं जनो नाम चलन्पृथिव्यां
यः पार्थिवः पार्थिव कस्य हेतोः
तस्यापि चाङ्घ्र्योरधि गुल्फजङ्घा-
जानूरुमध्योरशिरोधरांसाः ॥ ५ ॥

अंसे च दार्वी शिबिका च यस्यां
सौवीरराजेत्यपदेश आस्ते ।
यस्मिन्भवान् रूढनिजाभिमानो
राजाऽस्मि सिन्धुष्विति दुर्मदान्धः ॥ ६ ॥

शोच्यानिमांस्त्वमधिकस्तवाधिं बिभ्रचा निगृह्णन्निरनुग्रहोऽसि ।
जनस्य गोप्तेति विकत्थमानो न शोभसे वृद्धसभासु धृष्टः ॥

यदि क्षितावेव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम् ।
तन्नामतोऽन्यद्व्यवहारमात्रं निरूप्यतां तत्क्रियया‍नुविष्यन् ॥

एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानं परमाणवो ये ।
अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः ॥

एवं कृशं स्थूलमणुर्बृहद्यदसच्च सज्जीवमजीवमन्यत् ।
द्रव्यस्वभावाशयकालकर्मनाम्नाऽजयाऽवैहि कृतं द्वितीयम् ॥

ज्ञानं विशुद्धं परमार्थमेकमनन्तरं न बहिर्ब्रह्म सत्यम् ।
प्रत्यक् प्रशान्तं भगवच्छब्दवाच्यं यद्वासुदेवं कवयो वदन्ति ॥

रहूगणैतत्तपसा न याति न चेज्यया निर्वपनाद्गृहाद्वा ।
न छन्दसा नैवजलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम् ॥१२॥

यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः ।
निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे ॥

अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसङ्गबन्धः ।
आराधनं भगवत ईहमानो मृगोऽभवं मृगसङ्गाद्धतार्थः ॥ १४

सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति ।
अथो अहं जनसङ्गादसङ्गो विशङ्कमानोऽविवृतश्चरामि ॥

तस्मान्नरोऽसङ्गसुसङ्गजातज्ञानासिनेहैव विवृक्णमोहः ।
हरिं तदीहाकथनश्रुतिभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः

ब्राह्मण उवाच–
दुरत्ययेऽध्वन्यजया निवेशितो
रजस्तमः सत्त्वविभक्तकर्मदृक् ।
स एष सार्थोऽर्थपरः परिभ्रमन्
भवाटवीं याति न शर्म विन्दति ॥ १ ॥

यस्यामिमे षण्नरदेव दस्यवः
स्वार्थं विलुंपन्ति कुनायकं बलात् ।
गोमायवो यत्र हरन्ति सार्थकं
प्रमत्तमाविश्य यथोरणं वृकाः ॥ २ ॥

प्रभूतवीरुत्तृणगुल्मगह्वरे
कठोरदंशैर्मशकैरुपद्रुतः ।
क्वचित्तु गन्धर्वपुरं प्रपश्यति
क्वचित्क्वचिच्चाशुरयोल्मुकं ग्रहम् ॥ ३ ॥

निवासतोयद्रविणात्मबुद्धि-
स्ततस्ततो धावति भो अटव्याम् ।
क्वचिच्च वात्योत्थितपांसुधूम्रा
दिशो न जानाति रजस्वलाक्षः ॥ ४ ॥

अदृश्यझिल्लीस्वनकर्णशूलः
उलूकवाग्भिर्व्यथितान्तरात्मा ।
अपुण्यवृक्षान् श्रयते क्षुधार्दितो
मरीचितोयान्यभिधावति क्वचित् ॥ ५ ॥

क्वचिद्वितोयाः सरितोऽभियाति
परस्परं खादयते निरन्नः ।
आसाद्य दावं क्वचिदग्नितप्तो
निर्विद्यते क्व च यक्षैर्हृतासुः ॥ ६ ॥

शूरैर्हृतस्वः क्व च निर्विण्णचेताः
शोचन्विमुह्यन्नुपयाति कश्मलम् ।

कश्चिच्च गन्धर्वपुरं प्रविष्टः
प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥

चलन्कचित्कण्टकशर्करांघ्रि-
र्नगारुरुक्षुर्विमना इवास्ते ।
पदे पदेऽभ्यन्तरवह्निनार्दितः
कौटुम्बिकः क्रुध्यति वै जनाय ॥ ८ ॥

कचिन्निगीर्णोऽजगराहिना जनो
नावैति किञ्चिद्विपिनेऽपविद्धः ।
दष्टः स्म शेते क च दन्दशूकै-
रन्धोऽन्धकूपे पतितस्तमिस्रे ॥ ९ ॥

कर्हिस्मचित्क्षुद्ररसान्विचिन्वं-
स्तन्मक्षिकाभिर्व्यथितो विमानः ।
तत्रापि कृच्छ्रात्प्रतिलब्धमन्ये
बलाद्विलुम्पन्त्यथ तं ततोऽन्ये ॥ १० ॥

कचिच्च शीतातपवातवर्ष-
प्रतिक्रियां कर्तुमनीश आस्ते ।
कचिन्मिथोविपणन्यच्च किञ्चि-
द्विद्वेषमृच्छत्युत वित्तशाठ्यात् ॥ ११ ॥

कचित्कचित्क्षीणधनस्तु तस्मिन्
शय्यासनस्थानविहारहीनः ।
यावत्परादप्रतिलब्धकामः
पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥

प्रसज्जति क्वापि लताभुजाश्रय
स्तदाऽऽश्रयोऽव्यक्तपदं द्विजस्य ह ।
कचित्कदाचिद्धरिचक्रतस्त्रसन्
सख्यं विधत्ते बककंकगृध्रैः ॥ १३ ॥

तैर्वञ्चितो हंसकुलं समाविश-
न्न रोचयंच्छीलमुपैति वानरम् ।
तज्जातिरासेन सुनिर्वृतेन्द्रियः
परस्परान्वीक्षणविस्मृतावधिः ॥ १४ ॥

द्रुमेषु रंस्यन्सुतदारवत्सलो
व्यवायदीनो विवशश्वरन्वने ।

कचित्प्रमादाद्गिरिकन्दरे पतन्
वल्लीं गृहीत्वा गजभीत आस्थितः ॥ १५ ॥

ततः कथञ्चित्प्रतिमुक्त आपदः
पुनश्च सार्थं प्रविशत्यरिन्दम ।
अध्वन्यमुष्मिन्नजया निवेशितो
भ्रमञ्जनोऽद्यापि न वेद कश्चन ॥ १६ ॥

अन्योन्यवित्तव्यतिषङ्गवृद्ध-
वैरानुबन्धोऽधिवहन्मिथश्च ।
अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्त-
बाधोपसर्गैर्विहरन्विपन्नः ॥ १७ ॥

तांस्तान्विपन्नान् स हि तत्र तत्र
विहाय जातं परिगृह्य सार्थः ।
आवर्ततेऽद्यापि न कश्चिदत्र
वीराध्वनः पारमुपैति योगम् ॥

मनस्विनो निर्जितदिग्गजेन्द्रा
ममेति सर्वे भुवि बद्धवैराः ।
मृधे शयीरन्न तु तद्व्रजन्ति
यन्न्यस्तदण्डो गतवैरोऽभियाति ॥ १८ ॥

रहूगण त्वमपि ह्यध्वनोऽस्य
संन्यस्तदण्डः कृतभूतमैत्रः ।
असज्जितात्मा हरिसेवयाऽशित-
ज्ञानासिमादाय तरातिपारम् ॥ १९ ॥

राजोवाच–
अहो नृजन्माखिलजन्मशोभनं
किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।
न यद्धृषीकेशयशः कृतात्मनां
महात्मनां वः प्रचुरः समागमः ॥ २१ ॥

न ह्यद्भुतं त्वचरणाब्जरेणुभि-
र्हतांहसो भक्तिरधोक्षजेऽमला ।
मौहूर्तिकायस्य समागमाच्च मे
दुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥

नमो महद्भ्योऽस्तु नमः शिशुभ्यो
नमो युवभ्यो नम आवटुभ्यः ।
ये ब्राह्मणा गामवधूतलिङ्गा-
श्चरन्ति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥

श्रीशुक उवाच–
इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिन्धुपतेः परमात्मसत्तत्त्व-
मविगणितपरमानुभावः । परमकारुणिकतयोपदिश्य रहूगणेन
सकरुणमभिवन्दितचरणकमलः पूर्णार्णव इव निभृतकरणो-
र्म्याशयो धरणीमिमां विचचार ॥ २४ ॥

सौवीरपतिरपि सुजनसमवगतपरमात्मसत्तत्त्वः आत्मन्यविद्या-
ध्यारोपितां च देहात्ममतिं विससर्ज एवं नृप भगवदाश्रितानु-
भावः । तस्येमान् श्लोकान् गायन्ति ॥ २५ ॥

आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः ।
नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ॥ २६ ॥

यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदि स्पृशम् ।
जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ २७ ॥

यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान्
प्रार्थ्यां श्रियं सुरवरैः सदयावलोकैः ।
नैच्छन्नृपस्तदुचितं महतां मधुद्विट्-
सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ २८ ॥

यज्ञाय धर्मपतये विधिनैपुणाय
योगाय साङ्ख्यशिरसे प्रकृतीश्वराय ।
नारायणाय हरये नम इत्युदारं
गायन्मृगत्वमपि यः समुदाजहार ॥ २९ ॥

इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं
स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यमापवर्ग्यं चानुशृणो-
त्याख्यास्यत्यभिनन्दति च सर्वा ह्येवाशिष आत्मत आशास्ते
न काञ्चन परत इति ॥ ३० ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे त्रयोदशोऽध्यायः ॥

# अथ चतुर्दशोऽध्यायः

राजोवाच–
यो ह वा इह बहुविदा महाभागवत त्वयाऽभिहितः पारोक्ष्येण
वचसा जीवलोकस्य भवाध्वा स ह्यार्यमनीषया कल्पितविषयो
नांजसाऽव्युत्पन्नलोकसमधिगतः अथ तदेव दुरवगमं
समवेतानुकल्पेन निर्दिश्यताम् ॥ १ ॥

सूत उवाच–
स होवाच य एष देहात्ममानिनां सत्वादिगुणविशेष-
विकल्पितकुशलाकुशल समवहारविनिर्मितविविधदेहावलिभि-
र्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण
तस्मिन् दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो
विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्
सार्थोऽर्थपरः स्वदेहनिष्पादितकर्मानुभवन् श्मशानवदशिव-
तमायां संसाराटव्यां गतो नाद्यापि विफलबहुयोगसहस्रहत्तापो-
पशमनीं हरिगुरु चरणारविन्दमधुकरानुपदवीमवरुन्धे ॥ २ ॥

यस्यामु ह वा एते षडिन्द्रियनामानः कर्मणा दस्यव इव तथा
पुरुषस्य धनं किञ्चित्साक्षाद्धर्मौपयिकं बहुकृच्छ्राधिगतं
यत्परमपुरुषाराधनलक्षणं साम्परायिकमुदाहरन्ति ॥ तद्धर्म्यं धनं
दर्शनस्पर्शनश्रवणास्वादनावघ्राणसंकल्पसमवायेन गृहे ग्राम्योप-
भोगेन कुनाथस्याजितात्मनो विलुम्पन्ति ॥ ३ ॥

अथ च यत्र कौटुंबिकस्य दारापत्यादयो नाम्ना कर्मणा वृक-
सृगाला इवानिच्छतोऽपि कदर्यस्य कुटुंबिन उरणकवत्संरक्ष्यमाणं
मिषतोऽपहरन्ति ॥ ४ ॥

यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धवीजक्षेत्रं पुनरावपनकाले
गुल्मतृणवीरुद्भिर्गह्वरमेव भवति । एवमेव गृहाश्रमः कर्मक्षेत्रं
यस्मिन् हि कर्माण्युत्सीदन्ति ॥ ६ ॥

यदपककामकरण्ड एष आवसथस्तत्र रतो दंशमशकसमाप-
सदैर्मनुजैः शलभशकुन्ततस्करमूषकादिभिरुपरुध्यमानवहिः-
प्राणः कचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्त
मनसाऽनुपपन्नार्थं नरलोकं गन्धर्वनगरमुपपन्नमिति मिथ्या-
दृष्टिरनुपश्यति ॥ ७ ॥

कचिच्चातपोदकनिभान् विषयानुपधावति ... 

कचिच्चाशेषदोषनिषदनं पुरुषविशेषमुपेत्य तद्वर्णगुणनिहितमतिः
सुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम् ॥ ८ ॥

अथ कदाचिद्गृहपानीयद्रविणायनेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः परिधावति ॥ ९ ॥

क्वचिच वात्योपमया प्रमदयाऽऽरोहमारोपितस्तत्कालरजसा रजनीभूतं कुजन इव साधुमर्यादां रजस्वलाक्षो दिग्देवतादि-रजस्वलमतिर्न विजानाति ॥ १० ॥

क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षं परोक्षं वा रिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ॥ ११ ॥

स यदा दग्धपूर्वसुकृतस्तदा कारस्करकाकतुण्डाद्यपुण्यद्रुमलता-विषोदपानवदुभयार्थद्रविणशून्यद्रविणान् जीवन्मृतान् स्वयं जीवन्म्रियमाण उपधावति ॥ १२ ॥

क्वचित्सकृदवगतविषयवैतथ्यः स्वयं विषयाभिध्यानेन विभ्रंशित-स्मृतिरत एव मरीचितोयप्रायांस्तानेवाभिधावति ॥

एकदा त्वसत्प्रसंगानिकृतमतिर्व्युदस्रोतःस्खलनवदुभयतोऽपि दुःखदं पाषण्डमभियाति ॥ १४ ॥

यदा तु परबाधयाऽन्धमात्मनो नोपनमति तदा हि पितृपुत्रान् बालान् खलु भक्षयति ॥ १५ ॥

क्वचिदासाद्य गृहं दावबत्प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥ १६ ॥

क्वचित्कालविषमितराजकुलरक्षसापहृतप्रियतमधनासुर्मृतक इव विगतजीवलक्षण आस्ते ॥ १७ ॥

कदाचिन्मनोरथावगतपितृपितामहाद्यसत्सदिति स्वप्ननिर्वृति-मनुभवति ॥ १८ ॥

क्वचिद्गृहाश्रमचोदितकर्मातिभारगिरीनारुरुक्षमाणो लौकिक-व्यसनकर्षितमनाः कण्टकशर्कराक्षेत्रं प्रविशन्निव सीदति ॥

क्वचिद्दुःसहेन कायाभ्यन्तरवह्निना गृहीतसारः स्वकुटुम्बाय क्रुध्यति ॥ २० ॥

स एव पुनर्निद्राजगरगृहीतोऽन्धे तमसि मग्नः शून्यारण्य इव शेते नान्यत्किञ्चन वेद शव इवापविद्धः ॥ कचिद्भग्नमना दष्टो दुर्जनदन्दशूकैरलब्धनिद्राक्षणो व्यथितहृदयेन क्षीयमाण-विज्ञानोऽन्धकूपेऽन्धवत्पतति ॥ २१ ॥

कर्हिस्मचित्कामसुखलवान्विचिन्वन्यदा परदारपरद्रव्याण्यव-रुन्धानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥ २२ ॥

अथ च तस्मादुभयथापि कर्मास्मिन्नात्मनः संसारावपन-मुदाहरन्ति ॥ २३ ॥

यदि च मुक्तस्ततो बधाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः ॥ २४ ॥

क्वचिच शीतातपवातवर्षाद्यनेकाधिदैविकभौतिकात्मीयानां दुःखानां वारणायाकल्पो दुरन्तचिन्तया विषण्ण आस्ते ॥

क्वचिन्मिथोऽभ्येत्य विपणिकः काकणिकामात्रमप्यपहरति अकिञ्चिद्धि विद्वेषमुपयाति वित्तशाठ्येन ॥ २६ ॥

क्वचिच क्षीणधनः शय्यासनाद्युपभोगहीनो यावदप्रतिलब्ध-मनोरथः परस्वादाने व्यवसितमतिस्ततोऽवमानादीनि लभते ॥

एवं वित्तव्यतिषङ्गविवृद्धवैरानुबन्धोऽपि पूर्ववासनया मिथ उद्वहतां स एवोद्वहति ॥ २८ ॥

यत आरब्ध एष नरलोकसार्थस्तमध्वनः पारमुपदिशन्ति ॥

यदिदं योगानुशासनमेतदेव शन्तमं ते उपशमशीला उपरतात्मान उपतिष्ठन्ति ॥ ३० ॥

क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेक-ज्ञानस्तद्विहारगृहारम्भान् कुर्वंस्तदाश्रयोऽसक्तः सुतदुहितृकल-भाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽ-पारेऽन्धतमसि प्राहिणोति ॥ ३१ ॥

कदाचिदीश्वरस्य भगवतो विष्णोश्चक्रात्परमाण्वादिद्विपरार्द्धप-वर्गकालोपलक्षणपरिवर्तनेन वयस्तरसा हरत आब्रह्मस्तम्भादीनां मिषतां वित्रस्तहृदयस्तमेवेश्वरं कालचक्रनिजायुधं साक्षाद्भगवन्तं यज्ञपुरुषमनादृत्य पाषण्डदेवताः कंकगृध्रबकप्राया आर्यहंससमय-परिभूताः सांकेत्येनाभिधत्ते ॥ ३२ ॥

यदा तु ताभिः पाषण्डदेवताभिरात्मवंचकैरुरुवंचितो ब्रह्मकुलं समावशिंस्तेषां शीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन भगवतो यज्ञपुरुषस्याराधनमेव पुनस्तदरोचयंच्छूद्रकुलं भजत्यनिगम-परिशुद्धं यस्य हि मिथुनीभावः कुटुम्बभरणं यथा वानरजाते-स्तत्रापि निरवरोधः स्वैरेण विहरन्नतिकृपणबुद्धिरन्योन्यमुख-निरीक्षणादिग्राम्यकर्मणैव विस्मृतकालावधिः ॥ ३३ ॥

कच्चिद्द्रुमवदैहिकार्थेषु गृहेषु रंस्यन्यथा वानरः सुतदारवत्सलो व्यवायक्षणः ॥ ३४ ॥

एवमध्वन्यवरुंधानो मृत्युगजभयात्तमसि गिरिकन्दरप्राये पतन् कर्मवल्लीमवलंब्य तत आपदः कथश्चिन्नरकाद्विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति ॥ ३५ ॥

एतस्मिन्संराराध्वनि नानाक्लेशोपसर्गवितते बाधित आपन्नास्तत्र तत्र विसृज्य जातं जातमुपादाय शोचन् मुह्यन् खिद्यन् बिभ्यन् हृष्यन् रुदन् गायन् साधुवर्जितोऽसाधुवन् एवावर्ततेऽद्यापि ॥

यत आरब्ध एष नरलोकसार्थः यमध्वनः पारमुपदिशन्ति यदिदं योगानुशासनं नाम शंतमं न वा एतदनुरुन्धे न्यस्तदण्डा शान्तिमन्त उपशमशीला उपरतात्मान उपतिष्ठन्ति यदपि दिग्विजयिनो यज्वानो राजर्षयो नैवैतद्व्रजन्ति किन्तु मृधे शयीरन् यस्यामेव ममैवेयं महीति कृतवैरानुबन्धा यां विसृज्य स्वयमुपसंहृताः । यस्यामिम उपसर्गाः सुखदुःखरागद्वेष-भयाभिमानप्रमादोन्मादशोकमोहमात्सर्येर्षावमानक्षुत्पिपासाधि-व्याधिजराजन्ममरणादयः ॥ ३७ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे चतुर्दशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

श्रीशुक उवाच–
भरतस्यात्मजः सुमतिर्नामाऽभिहितो यमु ह वाव केचित्पाषण्डिनो विलोक्य ऋषभपदवीमनुवर्तमानमनार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयसीं कलौ कल्पयिष्यन्ति ॥ १ ॥

तस्माद्वृध्रसेनायां देवपादिर्नाम पुत्रोऽभवत् ॥ २ ॥

अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चलायां प्रतीह उपजातः य आत्मविद्यायां स्वयमखिलायां संसिद्धो महापुरुषमनुसस्मार ॥ ३ ॥

प्रतीहात्सुबलायां प्रतिहर्त्रादियस्त्रय आसन् इज्याकोविदाः सूनवः प्रतिहर्तुः स्तुत्यां व्योमभूमानावजनिषाताम् ॥ ४ ॥

व्योम्न ऋषिकुल्यायामुद्गीथः ततः प्रस्तोता देवकुल्यायां प्रस्तोतु-र्विरुत्सायां हृदयज आसीद्विभुः विभोरत्यां च पृथुषेणस्तस्मा-न्नक्त आकूत्यां जज्ञे नक्ताद्द्रतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद्भगवतो विष्णोर्जगदभिरक्षया गृहीतसत्वस्य कलात्मवत्ताभिलक्षणेन महापुरुषतां प्राप्तः ॥ ५ ॥

स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासन-लक्षणेनेज्यादिना च भगवति महापुरुषे परब्रह्मणि सर्वात्म-नाऽर्पितपरमार्थलक्षणेन ब्रह्मविचरणानुसेवयाऽऽपादितभगव-द्भक्तियोगेन चाभीक्ष्णशः परिभावितविशुद्धसत्व उपरतानात्म्ये आत्मनि स्वयमुपलभ्यमानब्रह्मानुभावोऽपि निरभिमान एवावनिमजुगुपत् ॥ ६ ॥

तस्येमां गाथां पाण्डवेय पुराविद उपगायन्ति ।

गयं नृपं कः प्रतियाति कर्मभि-
र्यज्वाभिमानी बहुविद्धर्मगोप्ता ।
सदागतश्रीः सदसस्पतिः सतां
सत्सेवकोऽन्यो भगवत्कलामृते ॥ ७ ॥

यमभ्यषिञ्चन्परया मुदा सतीः
सत्याशिषो दक्षकन्याः सरिद्भिः ।
यस्य प्रजानां दुदुहे धराऽऽशिषो
यथेप्सिता वै गुणवत्स्नुतोधाः ॥ ८ ॥

छन्दांस्यकामस्य च यस्य कामान्
दुदूहुराजह्रुरथो बलिं नृपाः ।
प्रत्याहता युधि धर्मे च विप्रा
यस्याशिषः षष्ठमंशं प्रजाश्च ॥ ९ ॥

यस्याध्वरे भगवानध्वरात्मा
मघोनि माद्यत्युरुसोमपीथे ।
श्रद्धा विशुद्धा चलभक्तियोग-
समर्पितेज्या फलमाजहार ॥ १० ॥

यत्प्रीणनाद्बर्हिषि देवतिर्यङ्-
मनुष्यवीरुत्तृणमाविरिञ्चात् ।
प्रीयेत सद्यः स हि विश्व एष
प्रीतः स्वयं प्रीतिमगाद्गयस्य ॥ ११ ॥

गयाज्जयंत्यां चित्ररथः स्वस्तिरवरोधन इति त्रयः पुत्रा बभूवुश्चित्र रथादूर्जायां सम्राडजनिष्ट ॥ १२ ॥

तत उत्कलायां मरीचिर्मरीचेर्बिन्दुमत्यां बिन्दुमानुदपद्यत तस्मात्सुषेणायां मधुर्नामाभवत् । मधोः सुमनस्यां वीरव्रतस्ततो व्रजायां मन्युप्रमन्यू जज्ञाते मन्योः सत्यायां भुवनस्ततो दोषायां त्वष्टा अजनिष्ट त्वष्टुर्विरजोर्विरोचनायां विरजस्य शतजित्प्रवरं पुत्रशतं कन्याश्च विषूच्यां किल जाताः ॥ १३ ॥

तत्रायं श्लोकः–
प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः ।
अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा ॥ १४ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे पञ्चदशोऽध्यायः ॥

# अथ षोडशोऽध्यायः

राजोवाच–
इत्युक्तस्त्वया भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमाः सह दृश्यते ॥ १ ॥

तत्रापि प्रियव्रतरथचरणपरिखातैः सप्तभिः सप्तसिन्धव उपक्लृप्ताः यत एतस्याः सप्तद्वीपविशेषकल्पस्त्वया भगवान् खलु सूचितः एतदेव निखिलमहंमानतो लक्षणतश्च सर्वं जिज्ञास्यामि ॥ २ ॥

भगवतो गुणमये स्थूलरूपे आवेशितं मनो ह्यगुणेऽपि सूक्ष्म आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदु है तत् गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥

ऋषिरुवाच–
न वै महाराज भगवतो मायागुणविभूतेः स्थानविशेषाणां नामरूपतः काष्ठां मनसाऽधिगन्तुमलं विबुधायुषेणापि पुरुषस्तस्मात्प्राधान्येनैव भूगोलविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः ॥ ४ ॥

यो वा अयं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्तुलो यथा पुष्करम् ॥ ५ ॥

यस्मिन्नवबर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति ॥ ६ ॥

येषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सौवर्णः कुलगिरि राजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्द्धनि द्वात्रिंशत्सहस्रयोजनवितती मूले षोडशसहस्रं तावताऽन्तर्भूम्यां प्रविष्टः ॥ ७ ॥

उत्तरोत्तरेणेलावृतान्नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रपृथवः एकैकशः पूर्वस्मादुत्तरोत्तरा-दशांशेन दैर्घ्य एव ह्रसन्ति ॥ ८ ॥

एवं दक्षिणेनेलावृतान्निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः अयुतयोजनोत्सेधाः हरिवर्षकिम्पुरुषभारतानां यथासङ्ख्यम् । मर्यादागिरयः ॥ ९ ॥

तथेलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रवृद्धौ केतुमालभद्राश्वयोः सीमानं विदधाते ॥ १० ॥

मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहाः मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः ॥ ११ ॥

चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इवाधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः ॥ १२ ॥

ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाः यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि स्वाभाविकानि भरतर्षभ धारयन्ति ॥ १३ ॥

देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति ॥ १४ ॥

येष्वमरपरिवृढाः सहामरललनाललामयूथपतयः उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति ॥ १५ ॥

मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि निपतन्ति ॥ १६ ॥

तेषां विशीर्यमाणानामतिमधुरसुरभिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति ॥

यदुपजोषाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति ॥ १८ ॥

एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूनदी मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दयति ॥ १९ ॥

तावदुभयोरपि रोधसोर्या मृत्तिका तत्र फलरसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति ॥ २० ॥

यदु ह वाव विबुधादयः सह युवतिभिः कटकमुकुटकटिसूत्राद्याभरणरूपेण खलु धारयन्ति ॥ २१ ॥

यस्तु महाकदम्बः सुपार्श्वनिरूढस्तस्य कोटरेभ्यो निःसृताः पञ्चव्यामपरिणाहाः पञ्चमधुधाराः सुपार्श्वशिखरात्पतन्त्योऽपरेणात्मानं इलावृतमनुमोदयन्ति ॥ २२ ॥

या ह्युपभुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनुवासयति ॥ २३ ॥

एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कन्धेभ्योऽवाचीनाः पयोदधिघृतमधुगुडान्नाद्यम्बरशय्यासनाभरणादयः सर्वकामदुघा नदाः कुमुदाग्रात्पतन्त उत्तरेणेलावृतमुपभोजयन्ति ॥ २४ ॥

यानुपजुषाणानां न कदाचित्कचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्य जरामयापमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति । यावज्जीवं सुखं निरतिशयमेव ॥ २५ ॥

कुरङ्गकुररकुसुम्भकवैकङ्क चित्रिकूटशिशिरपतङ्गरुचकनिषधशितिवासकपिलशङ्खवैदूर्यजारुधिहंसर्षभनीरनागकालञ्जरनारदादयो गिरयो मेरोः कर्णिकाया इव केसरभूता मूलदेशे परित उपक्लृप्ताः ॥ २६ ॥

जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रौ उदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रगायतौ एवमुत्तरतः शृङ्गमकरौ इत्यष्टभिरेतैः परिस्तृतो अग्निरिव परितो मेरुश्चकास्ति काञ्चनगिरिः ॥ २७ ॥

मेरोर्मूर्धनि भगवत आत्मयोनेरुपक्लृप्तां पुरीं अयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं शतकोटिं वदन्ति ॥ २८ ॥

तामनुपरितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयभागेन पुरोऽष्टावुपक्लृप्ताः ॥ २९ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे सप्तदशोऽध्यायः ॥

# अथ सप्तदशोऽध्यायः

श्रीशुक उवाच–

तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिता खिलजगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिरभिधीयमानातिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः ॥ १ ॥

यत्र ह वाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविन्दोदकमिति यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानान्तर्हृदय औत्कण्ठ्याद्विवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाऽभिव्यज्यमानरोमपुलककुलक अधुनापि परमादरेण शिरसा बिभर्ति ॥ २ ॥

ततः सप्त ऋषयस्तत्प्रभावज्ञा ऋपिलोके यां ननु तपस आत्यन्तिकी सिद्धिरेतावतीति भगवति सर्वात्मनि वासुदेवेऽनवरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षव सबहुमानमेवाद्यापि जटाजूटैरुद्वहन्ति ॥ ३ ॥

ततोऽनेकसहस्रकोटिविमानानीकसङ्कुलदेवयानेनावतरन्तीन्दुमण्डलमावार्य ब्रह्मसदने निपतति ॥ ४ ॥

तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्यन्दन्ती नदीनदपतिमेवाभिनिविशति सीतालकनन्दा चक्षुर्भद्रेति ॥५॥

सीता तु ब्रह्मसदनात्केसराद्रिशिखरेभ्योऽधोऽधः पतन्ती गन्धमादनमूर्ध्नि पतित्वान्तरेण भद्राश्वं वर्षं प्राच्यां दिशि क्षारसमुद्रं प्रविशति ॥ ६ ॥

एवं माल्यवच्छिखरान्निष्पतन्त्यनुपरतवेगा केतुमालमभिचक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥ ७ ॥

भद्राचोत्तरतो मेरुशिरसो निपतन्ती गिरिशिखराद्गिरिशिखरमतिहाय शृङ्गवतः शृङ्गादभिस्यन्दमाना उत्तरांस्तु कुरूनतिक्रम्योदीच्यां दिशि लवणार्णवं प्रविशति ॥ ८ ॥

तथैवालकनन्दा दक्षिणेन तु ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य निषधहेमकूटहिमकूटान्यतिरभसतररंहसा लुठन्ती भारतमेव वर्षं दक्षिणस्यां दिशि जलनिधिं प्रविशति ॥ ९ ॥

अन्ये नदा नद्यश्च वर्षेऽस्मिन्सन्ति बहुशो मेर्वादिगिरिदुहितरः अत्रापि जम्बूद्वीपे भारतमेव वर्षं कर्मक्षेत्रं अथान्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति ॥ १० ॥

येषु पुरुषाणामयुतवर्षायुषां देवकल्पानां नागायुतप्राणानां वज्रसंहननबलवयोमोदप्रमुदितमहासौरतनिरतनरवरावरोधमिथुनव्यवायापवर्गधृतैकगर्भकलत्राणां त्रेतायुगसमः कालो वर्तते ॥ ११ ॥

यत्र ह देवपतयः स्वैः स्वैर्गणनायकैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तबकफलकिसलयश्रिया आनम्यमानविटपलताविटपिभिरुपशोभमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषु तथा चामलजलाशयेषु विकचविविधनवरुहामोदमदमुदितराजहंसजलकुक्कुटकारण्डवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जलक्रीडादिभिर्विविधविनोदैः सुललितसुरसुन्दरीणां कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं किल विहरन्ति ॥ १२ ॥

नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणामनुग्रहायात्मतत्त्वव्यूहेनात्मनाद्यापि सन्निधीयते ॥ १३ ॥

इलावृते तु भगवान् भव एक एव पुमान् न ह्यन्यस्तत्र निविशति भवान्याः शापनिमित्तज्ञः । यत्प्रवेक्ष्य स्त्रीभावस्तत्पश्चाद्वक्ष्यामः ॥
भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ॥
भव उवाच–
ॐ नमो भगवते महापुरुषाय सर्वगुणसङ्ख्यानायानन्तायाव्यक्ताय नम इति ॥ १६ ॥

भजे भजन्यारणपादपङ्कजं
भगस्य कृत्स्नस्य परं परायणम् ।
भक्तेष्वलम्भावितभूतभावनं
भवापहं त्वां भवभावमीश्वरम् ॥ १७ ॥

न यस्य मायागुणचित्तवृत्तिभि-
र्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ।
ईशे यथा नोऽजितमन्युरंहसां
कस्तं न मन्येत जिगीषुरात्मनः ॥ १८ ॥

असद्दृशो यः प्रतिभाति मायया
क्षीबेव मध्वासवताम्रलोचनः ।
न नागवध्वोऽर्हणमीशिरे ह्रिया
यत्पादयोः स्पर्शनधर्षितेन्द्रियाः ॥ १९ ॥

यमाहुरस्य स्थितिजन्मसंयमं
त्रिभिर्विहीनं यमनन्तमीश्वरम् ।
न वेद सिद्धार्थमिव क्वचित्स्थितं
भूमण्डलं मूर्धसहस्रधामसु ॥ २० ॥

यस्याद्य आसीद्गुणविग्रहो महा-
न्विज्ञानधिष्ण्यो भगवानजः किल ।
यत्सम्भवोऽहं त्रिवृता स्वतेजसा
वैकारिकं तामसमैन्द्रियं सृजे ॥ २१ ॥

एते वयं यस्य वशे महात्मनः
स्थिताः शकुन्ता इव सूत्रयन्त्रिताः ।
महानहं वैकृततामसेन्द्रियाः
सृजाम सर्वे यदनुग्रहादिदम् ॥ २२ ॥

यन्निर्मितां कर्ह्यपि कर्मपर्वणीं
मायां जनोऽयं गुणसर्गमोहितः ।
न वेद निस्तारणयोगमञ्जसा
तस्मै नमस्तेविलयोदयात्मने ॥ २३ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे सप्तदशोऽध्यायः ॥

# अथ अष्टादशोऽध्यायः

श्री शुक उवाच–
तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्वे वर्षे साक्षाद्भगवतो वासुदेवस्य प्रियां तनुं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॥ १ ॥

भद्रश्रवस ऊचुः–
ॐ नमो भगवते धर्मायात्मशोधनाय नम इति ॥ २ ॥

अहो विचित्रं भगवद्विचेष्टितं
घ्नन्तं जनोऽयं हि मिषन्न पश्यति ।

ध्यायन्नसद्यर्हि विकर्म सेवते
निर्हृत्य पुत्रः पितरं जिजीविषुः ॥ ३ ॥

वदन्ति विश्वं कवयश्च नश्वरं
पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथाऽपि मुह्यन्ति तवाज मायया
सुविस्मयं कृत्यमिदं नताः स्म तम् ॥ ४ ॥

विश्वोद्भवस्थाननिरोधकर्म ते
ह्यकर्तुरङ्गीकृतमप्यपावृतम् ।
युक्तं न चित्रं त्वयि कार्यकारणे
सर्वात्मनि व्यतिरिक्ते च वस्तुनि ॥ ५ ॥

वेदान्युगान्ते तमसा तिरस्कृता-
न्रसातलाद्यो नृतुरङ्गविग्रहः ।
प्रत्याददे वै कवयेऽभियाचते
तस्मै नमस्तेऽवितथेहिताय ते ॥ ६ ॥

हरिवर्षे च भगवान्नरहरिरूपेणाऽऽस्ते तद्रूपग्रहणनिमित्तमुत्तर-त्राभिधास्यामः तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलचरितः प्रल्हादोऽव्यवधानानन्य-भक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते इदं चोदाहरति ॥ ७ ॥

ॐ नमो नृसिंहाय तेजस्तेजसे आविराविर्भव वज्रनख वज्रदंष्ट्र कर्माशयान् । रन्धय रन्धय तमो ग्रस ग्रस स्वाहा अभयमभयमात्मनि भूयिष्ठाः ॐ क्ष्रौम् ॥ ८ ॥

स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां
ध्यायन्तु भद्राणि शिवं मनो धिया ।
मनश्च भद्रं भजतादधोक्षजे
आविश्यतां नो मतिरप्यहैतुकी ॥ ९ ॥

माऽऽगारदारात्मजवित्तबन्धुषु
सङ्गो यदि स्याद्भगवत्प्रियेषु नः ।
यः प्राणवृत्त्या परितुष्ट आत्मवान्
सिद्ध्यत्यदूरान्न तथेन्द्रियप्रियः ॥ १० ॥

यत्संगलब्धं निजवीर्यवैभवं
तीर्थं मुहुः संस्पृशतां हि मानसम् ।
हरत्यजोऽन्तः श्रुतिभिर्गतोऽङ्गजं
को वै न सेवेत मुकुन्दविक्रमम् ॥ ११ ॥

यस्यास्ति भक्तिर्भगवत्यकिञ्चना
सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतो बहिः ॥ १२ ॥

हरिर्हि साक्षाद्भगवाञ्छरीरिणा-
मात्मा झषाणामिव तोयमीप्सितः ।
हित्वा महांस्तं यदि सज्जते गृहे
तदा महत्त्वं वयसा दंपतीनाम् ॥ १३ ॥

तस्माद्रजोरागविषादमन्यु-
मानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं
नृसिंहपादं भजता कुतोभयमिति ॥ १४ ॥

केतुमाले भगवान्कामदेवस्वरूपेणास्ते लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां च तद्वर्षपतीनां पुरुषायुषाऽहोरात्रपरिसङ्ख्या-नानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते निपतन्ति ॥ १५ ॥

अतीव सुललितगतिविलासविलसितरुचिरहासलेशावलोक-लीलया किञ्चिदुत्तम्भितसुन्दरभ्रूमण्डलसुभगवदनारविन्दश्रिया रमां रमयन्निन्द्रियाणि रमयते ॥ १६ ॥

तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताहस्सु तद्भर्तृभिरुपेतोपास्ते । इदं चोदाहरति ॥ १७ ॥

ॐ ह्रां ह्रीं ह्रूं ॐ नमो भगवते हृषीकेशाय सर्वविशेषवित्-क्षेत्रात्मने आकूतीनां चित्तानां चेतसां विशेषाणां चाधिपतये षोडशकलाय छन्दोमयायान्नमयायामृतमयाय सर्वमयाय महसे ओजसे बलाय कान्ताय कामाय नमस्ते उभयत्र भूयात् ॥ १८ ॥

स्त्रियो व्रतैस्त्वां हृषीकेश्वरं स्वतो-
ह्याराध्य लोके पतिमाशासतेऽन्यम् ।
तासां न ते वै परिपास्यपत्यं
प्रियं धनायूंषि यतोऽस्वतन्त्राः ॥ १९ ॥

अन्ये नदा नद्यश्च वर्षेऽस्मिन्सन्ति बहुशो मेर्वादिगिरिदुहितरः
अत्रापि जम्बूद्वीपे भारतमेव वर्षं कर्मक्षेत्रं अधान्यान्यष्टवर्षाणि
स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदि-
शन्ति ॥ १० ॥

येषु पुरुषाणामयुतवर्षायुषां देवकल्पानां नागायुतप्राणानां वज्र-
संहननबलवयोमोदप्रमुदितमहासौरतनिरतनरवरावरोधमिथुनव्यवायाप-
वर्गधृतैकगर्भकलत्राणां त्रेतायुगसमः कालो वर्तते ॥ ११ ॥

यत्र ह देवपतयः स्वैः स्वैर्गणनायकैर्विहितमहार्हणाः सर्वर्तु-
कुसुमस्तबकफलकिसलयश्रिया आनम्यमानविटपलताविट-
पिभिरुपशोभमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषु तथा
चामलजलाशयेषु विकचविविधनवरुहामोदमदमुदितराजहंस-
जलकुक्कुटकारण्डवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुप-
कूजितेषु जलक्रीडादिभिर्विचित्रविनोदैः सुललितसुरसुन्दरीणां
कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं किल
विहरन्ति ॥ १२ ॥

नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणामनु-
ग्रहायात्मतत्त्वव्यूहेनाद्यापि सन्निधीयते ॥ १३ ॥

इलावृते तु भगवान् भव एक एव पुमान् न ह्यन्यस्तत्र निविशति
भवान्याः शापनिमित्तज्ञः । यत्प्रवेक्ष्य स्त्रीभावस्तत्पश्चाद्वक्ष्यामः ॥
भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्ते-
र्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञा
आत्मसमाधिरूपेण सन्निधाय्यैतदभिगृणन् भव उपधावति ॥

भव उवाच–
ॐ नमो भगवते महापुरुषाय सर्वगुणसङ्ख्यातायानन्ताया-
व्यक्ताय नम इति ॥ १६ ॥

भजे भजन्यारुणपादपङ्कजं
भगस्य कृत्स्नस्य परं परायणम् ।
भक्तेष्वलम्भावितभूतभावनं
भवापहं त्वां भवभावमीश्वरम् ॥ १७ ॥

न यस्य मायागुणचित्तवृत्तिभि-
र्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ।
ईशो यथा नोऽजितमन्युरंहसां
कस्तं न मन्येत जिगीषुरात्मनः ॥ १८ ॥

असद्दृशो यः प्रतिभाति मायया
क्षीबेव मध्वासवताम्रलोचनः ।
न नागवध्वोऽर्हणमीशिरे ह्रिया
यत्पादयोः स्पर्शनधर्षितेन्द्रियाः ॥ १९ ॥

यमाहुरस्य स्थितिजन्मसंयमं
त्रिभिर्विहीनं यमनन्तमीश्वरम् ।
न वेद सिद्धार्थमिव क्वचित्स्थितं
भूमण्डलं मूर्धसहस्रधामसु ॥ २० ॥

यस्याद्य आसीद्गुणविग्रहो महा-
न्विज्ञानधिष्ण्यो भगवानजः किल ।
यत्सम्भवोऽहं त्रिवृता स्वतेजसा
वैकारिकं तामसमैन्द्रियं सृजे ॥ २१ ॥

एते वयं यस्य वशे महात्मनः
स्थिताः शकुन्ता इव सूत्रयन्त्रिताः ।
महानहं वैकृततामसेन्द्रियाः
सृजाम सर्वे यदनुग्रहादिदम् ॥ २२ ॥

यन्निर्मितां कर्ह्यपि कर्मपर्वणीं
मायां जनोऽयं गुणसर्गमोहितः ।
न वेद निस्तारणयोगमञ्जसा
तस्मै नमस्तेविलयोदयात्मने ॥ २३ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे सप्तदशोऽध्यायः ॥

# अथ अष्टादशोऽध्यायः

श्री शुक उवाच–
तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्वे वर्षे
साक्षाद्भगवतो वासुदेवस्य प्रियां तनुं धर्ममयीं हयशीर्षाभिधानां
परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॥ १ ॥

भद्रश्रवस ऊचुः–
ॐ नमो भगवते धर्मायात्मविशोधनाय नम इति ॥ २ ॥

अहो विचित्रं भगवद्विचेष्टितं
घ्नन्तं जनोऽयं हि मिषन्न पश्यति ।

ध्यायन्नसद्यर्हि विकर्म सेवते
निर्हृत्य पुत्रः पितरं जिजीविषुः ॥ ३ ॥

वदन्ति विश्वं कवयश्च नश्वरं
पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथाऽपि मुह्यन्ति तवाज मायया
सुविस्मयं कृत्यमिदं नताः स्म तम् ॥ ४ ॥

विश्वोद्भवस्थाननिरोधकर्म ते
ह्यकर्तुरङ्गीकृतमप्यपावृतम् ।
युक्तं न चित्रं त्वयि कार्यकारणे
सर्वात्मनि व्यतिरिक्ते च वस्तुनि ॥ ५ ॥

वेदान्युगान्ते तमसा तिरस्कृता-
न्रसातलाद्यो नृतुरङ्गविग्रहः ।
प्रत्याददे वै कवयेऽभियाचते
तस्मै नमस्तेऽवितथे हिताय ते ॥ ६ ॥

हरिवर्षे च भगवान्नरहरिरूपेणाऽस्ते तद्रूपग्रहणनिमित्तमुत्तर-त्राभिधास्यामः तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलचरितः प्रह्लादोऽव्यवधानानन्य-भक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते इदं चोदाहरति ॥ ७ ॥

ॐ नमो नृसिंहाय तेजस्तेजसे आविराविर्भव वज्रनख वज्रदंष्ट्र कर्माशयान् । रन्धय रन्धय तमो ग्रस ग्रस स्वाहा अभयमभयमात्मनि भूयिष्ठाः ॥ ८ ॥

स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां
ध्यायन्तु भद्राणि शिवं मनो धिया ।
मनश्च भद्रं भजतादधोक्षजे
आविश्यतां नो मतिरप्यहैतुकी ॥ ९ ॥

माऽऽगारदारात्मजदेहबन्धुषु
सङ्गो यदि स्याद्भगवत्प्रियेषु नः ।
यः प्राणवृत्त्या परितुष्ट आत्मवान्
सिद्ध्यत्यदूरान्न तथेन्द्रियप्रियः ॥ १० ॥

यत्संगलब्धं निजवीर्यवैभवं
तीर्थं मुहुः संस्पृशतां हि मानसम् ।
हरत्यजोऽन्तः श्रुतिभिर्गतोऽन्तः
को वै न सेवेत मुकुन्दविक्रमम् ॥ ११ ॥

यस्यास्ति भक्तिर्भगवत्यकिञ्चना
सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतो बहिः ॥ १२ ॥

हरिर्हि साक्षाद्भगवाञ्छरीरिणा-
मात्मा झषाणामिव तोयमीप्सितः ।
हित्वा महान्तं यदि सज्जते गृहे
तदा महत्त्वं वयसा दंपतीनाम् ॥ १३ ॥

तस्माद्रजोरागविषादमन्यु-
मानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं
नृसिंहपादं भजतां कुतोभयमिति ॥ १४ ॥

केतुमाले भगवान्कामदेवस्वरूपेणास्ते लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां च तद्वर्षपतीनां पुरुषायुषाऽहोरात्रपरिसङ्ख्या-नानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते निपतन्ति ॥ १५ ॥

अतीव सुललितगतिविलासविलसितरुचिरहासलेशावलोक-लीलया किञ्चिदुत्तम्भितसुन्दरभ्रूमण्डलसुभगवदनारविन्दश्रिया रमां रमयन्निन्द्रियाणि रमयते ॥ १६ ॥

तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताहस्सु तद्भर्तृभिरुपेतोपास्ते । इदं चोदाहरति ॥ १७ ॥

ॐ ह्रां ह्रीं ह्रूं ॐ नमो भगवते हृषीकेशाय सर्वविशेषवित्-क्षेत्रात्मने आकूतीनां चित्तानां चेतसां विशेषाणां चाधिपतये षोडशकलाय छन्दोमयायान्नमयायामृतमयाय सर्वमयाय महसे ओजसे बलाय कान्ताय कामाय नमस्ते उभयत्र भूयात् ॥

स्त्रियो व्रतैस्त्वां हृषीकेश्वरं स्वतो-
ह्याराध्य लोके पतिमाशासतेऽन्यम् ।
तासां न ते वै परिपास्यपत्यं
प्रियं धनायूंषि यतोऽस्वतन्त्राः ॥ १९ ॥

स वै पतिः स्यादकुतोभयः स्वयं
समन्ततः पाति भयातुरं जनम् ।
स एक एवेतरथा मिथो भयं (भजन्)
नैवात्मलाभादधि मन्यते परम् ॥ २० ॥

यस्तस्य ते पादसरोरुहार्हणं
निकामयेत्सोऽखिलकामलम्पटः ।
तदेव चाभीप्सितमीप्सितार्चनं
यद्भग्नयाञ्चो भगवन् प्रतप्यते ॥ २१ ॥

मत्प्राप्तये ये ससुरासुरादय-
स्तप्यन्त उग्रं तप ऐन्द्रिये धियः ।
ऋते भवत्पादपरायणं न मां
विन्दन्त्यहं त्वद्हृदया यतोऽजित ॥ २२ ॥

स त्वं ममापि कुरु शीर्षणि स्वकं
कराम्बुजं यत्तदधायि सात्वताम् ।
बिभर्षि मा लक्ष्म वरेण्य मायया
क ईश्वरस्येहितमूहितुं विभुः ॥ इति । ॥ २३ ॥

रम्यके च भगवतः प्रियतमं मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राक् प्रदर्शितं स इदानीमपि महता भक्तियोगेनाराध-यदिदं चोदाहरति ॥ २४ ॥

ॐ नमो भगवते मुख्यतमाय नमः सत्वाय प्राणायौजसे सहसे बलाय महामत्स्याय नम इति ॥ २५ ॥

अन्तर्बहिश्चाखिललोकपालकै-
रदृष्टरूपो विचरस्युरुस्वनः ।
स ईश्वरस्त्वं य इदं वशेऽनय-
न्नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥ २६ ॥

यं लोकपालाः किल मत्सरज्वरा
हित्वा यतन्तोऽपि पृथक्समेत्य च ।
पातुं न शेकुर्द्विपदश्चतुष्पदः
सरीसृपास्थास्नु यदत्र दृश्यते ॥ २७ ॥

भवान्युगान्तार्णव ऊर्मिमालिनि
क्षोणीमिमामोषधिवीरुधां निधिम् ।
मया सहोरुक्रम ऊह ओजसा
तस्मै जगत्प्राणगुणात्मने नमः इति ॥ २८ ॥

हिरण्मये भगवान्निवसति कूर्मतनुं बिभ्राणस्तस्य प्रियतमां तनुमर्यमा सह तद्वर्षपुरुषैः पितृगणाधिपतिरुपधावति मन्त्रमिमं चानुजपति ॥ २९ ॥

ॐ नमो भगवते अकूपाराय सर्वसत्त्वगुणविशेषणाय नोपलक्षित-स्थानाय नमोऽवर्ष्मणे नमो भूम्ने नमो नमोऽवस्थानाय नमस्ते ॥

यद्रूपमेतन्निजमाययार्पित-
मर्थस्वरूपं बहुरूपरूपितम् ।
सङ्ख्या न यस्यास्त्ययथोपलम्भना
तस्मै नमस्तेऽव्यपदेशरूपिणे ॥ ३१ ॥

जरायुजं स्वेदजमण्डजोद्भिजं
चराचरं देवर्षिपितृभूतमैन्द्रियम् ।
द्यौः खं क्षितिः शैलसरित्समुद्र-
द्वीपग्रहर्क्षेत्यभिधेय एकः ॥ ३२ ॥

यस्मिन्नसंख्येयविशेषनाम
रूपाकृतौ कविभिः कल्पितेयम् ।
सङ्ख्या यया तत्त्वदृशा विनीयते
तस्मै नमः साङ्ख्यनिदर्शनाय हि इति ॥ ३३ ॥

उत्तरेषु कुरुषु भगवान्यज्ञपुरुषः कृतवराहरूप आस्ते । तं तु देवी हैषा भूः सहकुरुभिरस्खलितभक्तियोगेनोपधावति । इमां च परमामुपनिषदमावर्तयति ॥ ३४ ॥

ॐ नमो भगवते मन्त्रतत्त्वलिङ्गाय यज्ञक्रतवे महीधराय महापुरुषाय नमः कर्मशुक्लाय त्रियुगाय नमस्ते ॥ ३५ ॥

यस्य स्वरूपं कवयो विपश्चितो
गुणेषु दारुष्विव जातवेदसम् ।
मथ्नन्ति मथ्ना मनसा दिदृक्षवो
गूढं क्रियार्थैर्नम ईरितात्मने ॥ ३६ ॥

द्रव्यक्रियाहेत्वयनेशकर्तृभि-
र्मायागुणैर्वस्तुनिरीक्षितात्मने ।
तथैव तत्रातिशयात्मबुद्धिभि-
र्निरस्तमायाकृतये नमो नमः ॥ ३७ ॥

करोति विश्वस्थितिसंयमोदयं
यस्येप्सितं नेप्सितमीक्षितुर्गुणैः ।

माया यथाऽयो भ्रमते यदाश्रया
ग्राव्णो नमस्ते गुणकर्मसाक्षिणे ॥ ३८ ॥

प्रमथ्य दैत्यं प्रतिवारणं मृधे
यो मां रसाया जगदादिसूकरः ।
कृत्वाऽग्रदंष्ट्रे निरगादुदन्वतः
क्रीडन्निवेभः प्रणताऽस्मि तं विभुम् ॥ ३९ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे अष्टादशोऽध्यायः ॥

## अथ एकोनविंशोऽध्यायः

श्रीशुक उवाच–
किंपुरुषे तु वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनूमान् सह किंपुरुषैर-विरतभक्तिरुपास्ते ॥ १ ॥

आर्ष्टिषेणेन सह गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगव-त्कथां समुपशृणोति स्वयं चेदं गायति ॥ २ ॥

ॐ नमो भगवत उत्तमश्लोकाय नमः आर्यलक्षणशीलव्रताय नम उपाशितात्मने (उपासितलोकाय) नमः साधुवादनिकर्षणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति ॥ ३ ॥

यत्तद्विशुद्धानुभवमात्रमेकं
स्वतेजसा ध्वस्तगुणव्यवस्थम् ।
प्रत्यक्प्रशान्तं सुधियोपलम्भन-
मनामरूपं निरहं प्रपद्ये ॥ ४ ॥

मर्त्यावतारस्त्विह मर्त्यशिक्षणं
रक्षोवधायैव न केवलं विभोः ।
कुतोऽन्यथा स्यू रमतः स्व आत्मन्
सीताकृतानि व्यसनानीश्वरस्य ॥ ५ ॥

न वै स आत्माऽऽत्मवतामधीश्वरो
भुङ्क्ते हि दुःखं भगवान्वासुदेवः ।
न स्त्रीकृतं कश्मलमश्नुवीत
न लक्ष्मणं चापि जहाति कर्हिचित् ॥ ६ ॥

न जन्म नूनं महतो न सौभगं
न वाङ्न बुद्धिर्नाकृतिस्तोषहेतुः ।
तिर्यग्विसृष्टानपि नो वनौकस-
श्चकार सख्ये च सलक्ष्मणाग्रजः ॥ ७ ॥

सुरोऽसुरो वाऽथ नरोऽथ वानरः
सर्वात्मना यः सुकृतज्ञमुत्तमम् ।
भजेत रामं मनुजाकृतिं हरिं
य उत्तराननयत् कोसलान्दिवम् इति ॥ ८ ॥

भारतेऽपि वर्षे भगवान्नरनारायणाख्यः आकल्पान्तमुपचित-धर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनु-कम्पया तपोऽव्यक्तगतिश्चरति ॥ ९ ॥

तं भगवान्नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगव-त्प्रोक्ताभ्यां साङ्ख्ययोगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुप-देक्ष्यमाणः परमभक्तिभावेनोपसरति इदं चोदाहरति ॥ १० ॥

ॐ नमो भगवत उपशमशीलायोपरतानात्म्यायाकिंचनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसाय परमगुरवे आत्मा-रामाधिपतये नमो नम इति ॥ ११ ॥

गायति चेदम्–
कर्ताऽस्य सर्गादिषु यो न बध्यते
न हन्यते देहगतोऽपि दैहिकैः ।
द्रष्टुर्न दृग् यस्य गुणैर्विदूष्यते
तस्मै नमोऽसक्तविविक्तसाक्षिणे ॥ १२ ॥

इदं हि योगेश्वरयोगनैपुणं
हिरण्यगर्भो भगवान् जगाद यत् ।
यदन्तकाले त्वयि निर्गुणे मनो
भक्त्या निधायोज्झति दुष्कलेवरम् ॥ १३ ॥

यथैहिकामुष्मिककामलंपटः
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्यया-
द्यस्तस्य यत्नः श्रम एव केवलम् ॥ १४ ॥

तन्नः प्रभो त्वं कुकलेवरार्पितां
त्वन्माययाऽहं ममतामधोक्षज ।
भिन्द्याम येनाशु वयं सुदुर्भिदां
विधेहि योगं त्वयि नः सुभावितम् इति ॥ १५ ॥

भारतेऽप्यस्मिन्वर्षे सरिच्छैलाः सन्ति बहवो मलयो मन्दरप्रस्थो मैनाकस्त्रिकूट ऋषभः कनकः कोसलः सह्यो वेदगिरिः ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलः कोकामुख इन्द्रकीलको हिमगिरिरिति चान्ये च शतशः सहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसङ्ख्याताः ॥१६॥

एतासामापो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति ॥ १७ ॥

चन्द्रवटा ताम्रपर्णी अवटोदका कृतमाला वैहायसी कावेरी वेणी पयोदा यमुना सरस्वती शर्करावर्ता तुङ्गभद्रा कृष्णा भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी सुरसा नर्मदा चर्मण्वती सिन्धुः अन्धः शोणश्च महानदौ वेदस्मृतिः ऋषिकुल्या त्रिसोमा कौशिकी मन्दाकिनी दृषद्वती गोमती सरयू रोधस्वती सप्तवती घोषणा सुषोमा शतमाला चन्द्रभागा शुतद्रु मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः ॥ १८ ॥

अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते यथावर्णविधानमपवर्गश्चापि भवति ॥ १९ ॥

योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषसङ्गतिः एतदेव हि देवा गायन्ति ॥ २० ॥

अहो बतैषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्मलब्धं नृषु भाराताजिरे
मुकुन्दसेवोपयिकं स्पृहात्मभिः ॥ २१ ॥

किं दुष्करैर्नः क्रतुभिस्तपोव्रतै-
र्दानादिभिर्वा द्युजयेन फल्गुना ।
न यत्र नारायणपादपङ्कज
स्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात् ॥ २२ ॥

कल्पायुषां स्थानजयात्पुनर्भवात्
क्षणायुषां भारतभूजयो वरः ।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः ॥ २३ ॥

न यत्र वैकुण्ठकथासुधाऽपगा
न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः
सुरेशलोकोऽपि न याति सेव्यताम् ॥ २४ ॥

प्राप्ता नृजातिं त्विह ये च जन्तवो
ज्ञानक्रियाद्रव्यकलापसंभृताः ।
न चेयतेरन्न पुनर्भवाय ते
भूयो वनौका इव यान्ति बन्धनम् ॥ २५ ॥

यैः श्रद्धया बर्हिषि भागशो हवि-
र्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ।
एकः पृथङ् नामभिराहुतो मुदा
गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥ २६ ॥

सत्यं दिशत्यर्थितमर्थितो नृणां
नैवार्थितो यत्पुनरर्थिनो मदः ।
स्वयं विधत्ते भजतामनिच्छता-
मिच्छाविधानं निजपादपल्लवम् ॥ २७ ॥

यद्यत्र नः स्वर्गसुखावशेषितं
स्विष्टस्य दत्तस्य कृतस्य शोभनम् ।
तेनाजनाभस्मृतिजन्मनः स्या-
द्वर्षे हरिर्यद्भजतां शं तनोति इति ॥ २८ ॥

श्रीशुक उवाच–

जंबुद्वीपस्य च राजनुपद्वीपानष्टौ हेक उपदिशान्ति सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् ॥२९॥

तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्र आवर्तनो रमणको मन्दोरणः पाञ्चजन्यः सिंहलो लङ्केति ॥ ३० ॥

एवं तव भारतोत्तमजम्बुद्वीपवर्षविभागो यथोपदेशमुपवर्णितः ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे एकोनविंशोऽध्यायः ॥

# अथ विंशोऽध्यायः

श्री शुक उवाच–
अतः परं प्लक्षादिद्वीपानां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते ॥ १ ॥

जम्बुद्वीपोऽयं यावान् प्रमाणविस्तारतस्तावता क्षारोदधिना परिवेष्टितो यथा मेरुर्जम्ब्वाख्येन लवणोदधिरपि ततो द्विगुण-विशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखा बाह्योपवनेन प्लक्षो जंबूप्रमाणो द्वीपाख्यातिकरो हिरण्मयः उत्थितो यत्राग्निरुपास्ते सप्तजिह्वः तस्याधिपतिः प्रियव्रतात्मज इध्मजिह्वः स्वं द्वीपं सप्त वर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम ॥ २ ॥

शिवं यवस्यं सुभद्रं शान्तं क्षेमममृतमभयमिति वर्षाणि तेषु गिरयो नद्यश्च सप्त सप्तैवासन्नभिज्ञाताः ॥ ३ ॥

मणिकूटो, वज्रकूट, इन्द्रसेनो, ज्योतिष्मान्, धूम्रवर्णो, हिरण्यग्रीवो, मेघमाल इति सेतुशैलाः, अरुणा, अनुगुणा, आङ्गिरसी, सावित्री, सुप्रभाता, ऋतंभरा, सत्यंभरेति महानद्यः यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतंगगोर्ध्वायनसत्याग संज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यात्मानं यजन्ते ॥

प्रत्नस्य विष्णो रूपं यत्सत्यर्तस्य ब्रह्मणः ।
अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहि ॥ इति ॥ ५ ॥

प्लक्षादिषु पञ्चसु पुरुषाणामायुरिन्द्रियमोजः सहोबलं बुद्धिर्विक्रम इति च सर्वेषामौत्पत्तिकीसिद्धिरविशेषेण वर्तते ॥ ६ ॥

प्लक्षस्तु स्वसमानेनेक्षुरसोदेनावृतो यथा द्वीपोऽपि शाल्मलो द्विगुणविशालः समानेन सुरोदेनावृतः परिवृत्तेन ॥ ७ ॥

यत्र ह वै शाल्मली प्लक्षायामा यस्यां वा व किल निलयमाहु-र्भगवतच्छन्दःस्तुतः पतत्रिराजस्य साध्यर्थां जम्बूत उपलक्ष्यते ॥

तद्द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञबाहुः स्वसुतेभ्यस्तन्नामानि सप्त वर्षाणि व्यभजत् सुरोचनं सौमनस्यं रमणकं देववर्हं पारिभद्रमाप्यायनमभिजातमिति ॥ ९ ॥

तेष्वद्रयो नद्यश्च सप्तैवाभिज्ञाताः सुरसः शतशृङ्गो वामदेवः कुन्दो मुकुन्दः पुष्पवर्षः सहस्रुतिरिति अनुमतिः सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति ॥ १० ॥

तद्वर्षपुरुषाः श्रुतधरवीर्यधरवसुन्धरोध्र्वधरसंज्ञा भगवन्तं वेदमयं सोममात्मानं वेदेन यजन्ते ॥ ११ ॥

स्वगोभिः पितृदेवेभ्यो विभजन् शुक्लकृष्णयोः ।
अन्धः प्रजानां सर्वासां राजा नः सोमस्त्विति ॥ १२ ॥

एवं सुरोदाद्वहिस्तद्द्विगुणः स्वसमानेनावृतो घृतोदेन यथापूर्वं कुशद्वीपो यस्मिन् कुशस्तवो देवकृतस्तद्द्वीपाख्यापनो ज्वलन इवापरः शश्वत्स्वशष्परोचिषा दिशो विराजयति ॥ १३ ॥

तद्द्वीपपतिः प्रैय्यव्रतो राजा हिरण्यरेता नाम स्वद्वीपं सप्तभ्यः पुत्रेभ्यो यथाभागं विभज्य स्वयं तु तप आतिष्ठत् । वसुदानदृढ-रुचिनाभिगुप्तसत्यव्रतविप्रवामदेवनामभ्यः ॥ १४ ॥

तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्तसप्तैव तु बभूवुः चक्रः शृङ्गः कपिलश्चित्रकूटो देवानीक ऊर्ध्वरोमा द्रविण इति ॥

रसकुल्या, मधुकुल्या, श्रुतविन्दा, मित्रविंदा, देवगर्भा, घृत-च्युता, मन्त्रमालेति नद्यः यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुशलकसंज्ञा भगवन्तं जातवेद स्वरूपिणं कर्मकौशलेन यजन्ते ॥ १६ ॥

परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट् ।
देवानां पुरुषाङ्गानां यज्ञेन पुरुषं यज इति ॥ १७ ॥

तथा वहिः क्रौञ्चद्वीपो कुशद्वीपात् समानेन क्षीरोदेन परित उपक्लृप्तो वृतो यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौञ्चो नाम पर्वतराजो द्वीपनामनिवर्तक आस्ते ॥ १८ ॥

योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनासिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव ॥ १९ ॥

तस्मिन् प्रैय्यव्रतो घृतपृष्ठो नामाधिपतिः स तु तद्द्वीपवर्षाणि सप्तधा विभज्य तेषु पुत्रनामसु सप्तारिक्थादान्वर्षपान्निवेश्य स्वयं भगवतः परमकल्याणस्यात्मभूतस्य हरेश्चरणारविन्दमुपजगाम ॥

आमो मधुमेहो मेघपृष्ठः सुधामा ऋषिज्योतिर्लोहितार्णो वनस्पतिरिति घृतपृष्ठसुतास्तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभि-ख्याताः शुक्लो वर्धमान उपवर्हण उपभोजनो नन्दो नन्दनः सर्वतोभद्र इति ॥ २१ ॥

अभयाऽमृतौघा आर्यका तीर्थवती रूपवती पवित्रा शुक्लेति यासामंभः पवित्रममलमुपयुंजाना गुरुऋषभद्रविणदेवकसंज्ञा वर्षपुरुषा अम्मयं देवमपां पूर्णेनांजलिना यजन्ते ॥ २२ ॥

आपः पुरुषवीर्याश्च पुनन्तीर्भूर्भुवः सुवः ।
ता नः पुनीयुरघ्नीः संस्पृशेतात्मनाऽभवे इति ॥ २३ ॥

एवं परस्तात्क्षीरोदात्परित उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन च दधिमण्डोदेन परित उपक्लृप्तः यस्मिन् हि शाको नाम महीरुहः स्वक्षेत्रव्यपदेशको यस्य हि महान्सुरभिगन्धस्तद्वर्षमनुवासयति ॥ २४ ॥

तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्त वर्षाणि पुत्रनामानि तेषु स्वात्मजान्पुरोजवमनोजववेपमानधूम्रानीकचित्ररेफबहुरूपविश्वाधारसंज्ञान्निधायाधिपतीन् स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं प्रविवेश ॥ २५ ॥

तेषु वर्षमर्यादागिरयो नद्यश्च सप्त सप्त एव ईशान उरुशृङ्गो बलभद्रः शतकेसरः सहस्रस्रोतो देवपालो महानस इति ॥

अनघा आयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्रश्रुतिर्निजधृतिरिति ॥ २७ ॥

तद्वर्षेषु पुरुषा धृतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते ॥

अन्तःप्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः ।
अन्तर्यामीश्वरः साक्षात्पातु नो यद्वशे इदम् इति ॥ २९ ॥

एवमेव दधिमण्डोदात्परतः पुष्करद्वीपस्ततो द्विगुणायामः समन्तत उपकल्पितः समानेन स्वादूदकसमुद्रेण बहिरावृतो यस्मिन्बृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतं भगवतः कमलासनस्याध्यासनं परिकल्पितं तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनयोर्वर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनां यदुपरिष्टात्सूर्यरथस्य मेरुं परिक्रमतः संवत्सरात्मकमहोरात्राभ्यां चक्रं परिभ्रमति ॥ ३० ॥

तद्द्वीपस्याधिपतिः प्रैयव्रतो वीतिहोत्रो नामा स्वस्यात्मजौ रमणकधातुकनामानौ वर्षपती नियुज्य स्वयं पूर्वजवद्भगवत्कर्मशील एवास्ते ॥ ३१ ॥

तद्वर्षपुरुषा भगवन्तं ब्रह्मरूपिणमकर्मकेण कर्मणा चाराधयन्तीदं चोदाहरन्ति ॥ ३२ ॥

यत्तं कर्ममयं लिङ्गं ब्रह्मलिङ्गं जनोऽर्चति ।
भेदेनैकान्तमद्वैतं तस्मै भगवते नम इति ॥ ३३ ॥

ततः परस्ताल्लोकालोकनामाचलः लोकालोकयोरन्तराले परित उपक्षिप्तः ॥ ३४ ॥

यावन्मानसोत्तरमेर्वोरन्तरं तावती भूमिः काञ्चन्यादर्शतलोपमा यस्यां प्रहितः पदार्थो न कथञ्चित्पुनः प्रत्युपलक्ष्यते तस्मात्सर्वसत्वपरिहताऽऽसीत् ॥ ३५ ॥

लोकालोक इति समाख्या यदनेनाचलेन लोकालोकावन्तर्वर्तिना स्थाप्येत इति ॥ ३६ ॥

स लोकत्रयान्ते परित ईश्वरेण विहितः यस्मात्सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनांस्त्रिलोकान्वितन्वाना न कदाचित्पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः ॥ ३७ ॥

एतावाँल्लोकविन्यासो मानलक्षणसंस्थाभिर्विचिन्तितः कविभिः स तु पञ्चाशत्कोटिगुणितस्य भूगोलकस्य तुरीयभागो यावाँल्लोकालोकाचलः ॥ ३८ ॥

तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाऽखिलजगद्गुरुणाऽभिनिवेशिता ये द्विरदपतयः ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः ॥ ३९ ॥

तेषां स्वविभूतीनां महेन्द्रादीनां लोकपालानां विविधवीर्योपबृंहणाय भगवान्परममहापुरुषो महाविभूतिपतिरन्तर्याम्यात्मविशुद्धसत्वधर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासिद्ध्युपलक्षणो विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवारितो निजवरायुधोपशोभितै र्भुजदण्डैः सन्धार्यमाणस्तस्मिन् गिरिवरे समन्तात्सकललोकस्वस्तय आस्ते ॥ ४० ॥

आकल्पमेष भगवानात्मयोगमायया विरचितविविधलोकयात्रागोपीथायाथ योऽन्तविस्तार एतेन ह्यलोकपरिमाणं व्याख्यातम् ॥

यद्बहिर्लोकालोकाचलात्ततः परस्तायोगेश्वरगतिं विशुद्धामुदाहरन्ति ॥ ४२ ॥

अण्डमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम् ।
सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः ॥ ४३ ॥

मृतेऽण्ड एव एतस्मिन्यदभूत्ततो मार्ताण्ड इति व्यपदेशः ।
हिरण्यगर्भ इति यद्धिरण्याण्डसमुद्भवः ॥ ४४ ॥
सूर्येण हि विभज्यन्ते दिशः खं द्यौर्मही तथा ।
स्वर्गापवर्गनरकरसौकांसि च सर्वशः ॥ ४५ ॥
देवतिर्यङ्मनुष्याणां सरीसृपसवीरुधाम् ।
सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः ॥ ४६ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे विंशोऽध्यायः ॥

# अथ एकविंशोऽध्यायः

श्री शुक उवाच–

एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतश्च व्याख्यात एतेनैव हि दिवो मण्डलमानं तद्विद उपदिशन्ति ॥ १ ॥

यथा द्विदलनिष्पावादीनां तदन्तरेणान्तरिक्षमुपसन्धितम् ॥ २ ॥

यन्मध्यगो भगवांस्तपतां पतिस्तपन आतपेन त्रिलोकान् प्रतपत्यवभासयत्यात्मभासा एष उदगयनदक्षिणायनवैषुवसंज्ञाभिरारोहणवरोहणादिभिर्दीर्घह्रस्वसमानाभिर्गतिभिरारोहणावरोहणसमस्थानेषु यथासवनमभिपद्यमानो मकरादिराशिष्वहोरात्राणि दीर्घ-ह्रस्वसमानानि विधत्ते ॥ ३ ॥

यदा मेषतुलयोर्वर्तते तदाऽहोरात्राणि समानानि भवन्ति ॥४॥

यदा वृषभादिषु पञ्चसु राशिषु चरति तदाहान्येव वर्धन्ते ह्रसन्ति च रात्रयः मासि मास्येकैका घटिका तुल्यं दिवसं वर्धमानान्यहानि तावतीरनुसङ्क्षीयमाणा रात्रयः समुद्धृत्य समान्यहोरात्राणि त्रिंशन्मुहूर्तान्येव भवन्ति यदा वृश्चिकादिषु पञ्चसु वर्तते तदाऽहोरात्राणि विपरीतानि भवन्ति ॥ ५ ॥

यावद्दक्षिणायनमहानि वर्धन्ते ह्रसन्ति च रात्रयः यावदुदगयनमहानि ह्रसन्ति रात्रयो वर्धन्ते ॥ ६ ॥

एवं नवकोट्य एकपञ्चाशल्लक्षाणि च योजनानां मानसोत्तरगिरिपरिवर्तमानस्योपदिशन्ति तस्मिन्नैन्द्री पुरी मेरोः पूर्वस्माद्देवधानी नाम दक्षिणतो याम्या संयमिनी नाम पश्चाद्वारुणी निम्लोचनी नामोत्तरतः सौम्या विभावरी नाम तासूदयमध्याह्नास्तमयनिशीथानीति भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम् ॥ ७ ॥

तत्रत्यानां दिवसमध्यगत एव सदाऽऽदित्यस्तपति सव्येनाचलं दक्षिणेन करोति ॥ ८ ॥

यत्रोदेति तत्समानसूत्रनिपाते निम्लोचति यत्र क्व च न स्यन्दते तत्र हैष समानसूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यन्ति ये तमनुपश्येरन् ॥ ९ ॥

यदा चैन्द्र्याः पुर्याः प्रतिचलति पञ्चदशभिर्घटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्धद्वादशलक्षाणि साधिकानि चोपयाति ॥ १० ॥

एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनः पुनस्तथाऽन्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्चक्रेण समभ्युद्यन्ति सह चाभिनिम्लोचन्ति ॥ ११ ॥

एवं मुहूर्ते चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु ॥ १२ ॥

यस्यैकं चक्रं द्वादशारं षण्नेमि त्रिनाभि स्वयं संवत्सरात्मकं समामनन्ति तस्याक्षो मेरोर्मूर्धनि कृतो मानसोत्तरे कृतैकभागो यत्र प्रोतं रविरथचक्रं तैलयन्त्रचक्रवन्मानसोत्तरे गिरौ परिभ्रमति ॥
तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुरीयमानेन संमितः ॥ १४ ॥

तैलयन्त्राक्षवद्ध्रुवे कृतोपरिभागो रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावान् रविरथयुगो यत्र हयाश्छन्दोनामानः सप्तारुणयोजिता वहन्ति देवमादित्यम् ॥१५॥
पुरस्तात्सवितुररुणः पश्चान्नियुक्तः सौत्ये कर्मणि किलास्ते ॥

तथा वालिखिल्या ऋषयोऽङ्गुष्ठपर्वमात्राः षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः संस्तुवन्ति ॥ १७ ॥

तथाऽन्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चैकैकशो रथस्था मासि मासि भगवन्तं सूर्यमात्मानं नानानामानं पृथङ्नामानः पृथक्कर्मभिर्द्वादश उपासते ॥ १८ ॥

लक्षोत्तरसार्धनवकोटियोजनपरिमण्डलभूवलयस्य क्षणेन गव्यूत्युत्तरद्विसहस्रयोजनानि स भुङ्क्ते ॥ १९ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे एकविंशोऽध्यायः ॥

# अथ द्वाविंशोऽध्यायः

राजोवाच–
यदेतस्य भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रमतो राशीनामभिमुखं च प्रचलनं भगवतोपवर्णितं अमुष्य वयं कथमनुमीमहीति ॥ १ ॥

स होवाच शुकः यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरेष्वप्युपलभ्यमानत्वात् । एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं प्रदक्षिणतः परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात् ॥ २ ॥

स एष भगवानादिपुरुषः साक्षान्नारायणो लोकानां स्वस्तय आत्मानं त्रयीमयं कर्मविशुद्धिनिमित्तं कविभिरपि वेदेन विज्ञास्यमानो द्वादशधा विभज्य षट्सु वसन्तादिषु ऋतुषु यथोपजोषमृतुगुणान् विदधाति ॥ ३ ॥

तमेतमिह पुरुषास्त्रय्यां विद्यायां वर्णाश्रमाचारानुपथा उच्चावचैः कर्मभिराम्नातैर्योगवितानैश्च श्रद्धया यजन्तोऽञ्जसा श्रेयः समधिगच्छन्ति ॥ ४ ॥

अथ स एष आत्मा लोकानां द्यावापृथिव्योरन्तरेण नभोवलयस्य कालचक्रगतो द्वादशमासान् भुङ्क्ते तानेव राशिसञ्ज्ञान् संवत्सरावयवान् मासान् पक्षद्वयं सपादर्क्षद्वयमुपदिशन्ति यावता षष्ठमंशं भुंजीत स वै ऋतुरित्युपदिश्यते संवत्सरावयवः ॥ ५ ॥

अथ च यावताऽर्धेन नभोवीथ्यां प्रचरति तं कालमयनमाचक्षते ॥

अथ च यन्नभोमण्डलं सह द्यावापृथिव्योर्मण्डलाभ्यां कार्त्स्न्येन भुञ्जीत तं कालं संवत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरमिति भानोर्मान्द्यशैघ्र्यसमानगतिभिः समामनन्ति ॥ ७ ॥

एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं पक्षाभ्यां मासभुक्तिं सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो भुङ्क्ते नक्षत्राणामग्रणीत्वं च ॥ ८ ॥

अथ चापूर्यमाणाभिरुपक्षीयमाणाभिश्च कलाभिः पितृणामहोरात्राणि पूर्वपक्षापरपक्षाभ्यां वितन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशन्मुहूर्तैर्भुङ्क्ते ॥ ९ ॥

य एष षोडशकलः पुरुषो भगवान्मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात्सर्वमय इति वर्णयन्ति ॥ १० ॥

तत उपरिष्टाल्लक्षयोजनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायन ईश्वरयोजितानि सहाभिजिताऽष्टाविंशतिः ॥ ११ ॥

तत उपरिष्टादुशना द्विलक्षयोजनत उपलभ्यते पुरतः पश्चात्सहैव चार्कस्य शैघ्र्यमांद्य साम्याभिर्गतिभिरर्कवच्चरति लोकानां नित्यदाऽनुकूल एव प्रायेण वर्षं यत्स्थितद्वारेणानुमीयते स वृष्टिविष्टंभग्रहोपशमनः उशनसा बुधोऽपि व्याख्यातः ॥१२॥

तत उपरिष्टाद् द्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः प्रायेण शुभकृद्यदाऽर्कमतिरिच्येत तदाऽतिवाताभ्रप्रायाऽनावृष्ट्या भयमाशंसते ॥ १३ ॥

तत ऊर्ध्वमङ्गारकोऽपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन् द्वादशानुभुङ्क्ते यदि न वक्रेणाभिवर्तते प्रायेणाशुभग्रहोऽघशंसः ॥ १४ ॥

तत उपरिष्टाद्द्विलक्षयोजनान्तरगतो भगवान् बृहस्पतिरेकैकस्मिन् राशौ परिवत्सरं परिवत्सरं प्रचरति यदि न वक्रः स्यात् प्रायशोऽनुकूलो ब्राह्मणकुलस्य ॥ १५ ॥

तत उपरिष्टाद्योजनलक्षद्वयात्प्रतीयमानः शनैश्चर एकैकस्मिन्राशौ त्रिंशन्मासान् विलम्बमानः सर्वानेवानुपर्येति तावद्भिरनुवत्सरैः प्रायेण हि सर्वेषामशान्तिकरः ॥ १६ ॥

तत उत्तरस्मादृषय एकादशलक्षयोजनान्तर उपलक्ष्यन्ते य एव लोकानां शमनुभावयन्तो भगवतो विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रमन्ति ॥ १७ ॥

अथ तस्मात्परतस्त्रयोदशलक्षयोजनान्तरतो यत्तद्विष्णोः परमं पदमभिवदन्ति यत्र महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीवानामाजीव्य उपास्ते तस्येहानुभाव उपवर्णितः ॥ १८ ॥

स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टंभ

ईश्वरेण विहितः शश्वदवभासते यथा मेढीस्तम्भ आक्रमणपशवः संयोजितास्त्रिभिः सवनैर्यथास्थानं मण्डलानि चरन्ति ॥१९॥

एवं भगणा ग्रहादय एतस्मिन्नन्तर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणा आकल्पान्तं परितः क्रमन्ति ॥

नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः परिवर्तन्ते ॥ २१ ॥

एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीतकर्मनिर्मितगतयो भुवि न पतन्ति ॥ २२ ॥

केचनैतज्ज्योतिरनीकं प्रसिद्धशिंशुमारसंस्थानस्य भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति ॥ २३ ॥

यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितस्तस्य लांगूले प्रजापतिरग्निरिन्द्रो धर्म इति ॥ २४ ॥

पुच्छमूले धाता विधाता च कट्यां सप्तर्षयस्तस्य दक्षिणावर्तकुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे तु नक्षत्राण्युपकल्पयन्ति ॥ २५ ॥

दक्षिणायनानि तु सव्ये यथा शिंशुमारस्य कुण्डलीभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसङ्ख्या भवन्ति ॥२६॥

पृष्ठे त्वजवीथी आकाशगङ्गा चोत्तरतः पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राऽऽश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे च दक्षिणवामयोर्नासिकयोर्यथासङ्ख्यं च श्रवणपूर्वाषाढे च दक्षिणवामयोर्लोचनयोर्धनिष्ठामूलं च दक्षिण-वामयोः कर्णयोर्मघादीन्यष्ट नक्षत्राणि दक्षिणायनानि वामपार्श्वपङ्क्तिषु युञ्जीत ॥ २७ ॥

तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्वेषु प्रातिलोम्येन प्रतियुञ्जीत ॥ २८ ॥

शतभिषज्ज्येष्ठे द्वे स्कन्धयोर्दक्षिणवामयोर्न्यसेत् ॥ २९ ॥

उत्तरहनावगत्स्यः अधरहनौ यमो मुखे चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशनास्तनयोरश्विनौ बुधः प्राणापानयोराहुर्गले केतवः सर्वाङ्गेषु रोमसु सर्वे तारागणाः ॥ ३० ॥

एतदुहैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्ष्यमाण उपतिष्ठेत नमोनमो ज्योतिर्लोकाय कालायनायानिमिषांपतये महापुरुषाय धीमहीति ॥ ३१ ॥

ग्रहर्क्षतारामयमाधिदैविकं रूपं हरेर्मंत्रकृतस्त्रिकालम् ॥
नमस्यतः स्तुवतो नश्यते वै स्वयं त्रिकालं कृतमाशु पापम् ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे द्वाविंशोऽध्यायः ॥

## अथ त्रयोविंशोऽध्यायः

श्रीशुक उवाच–
अधस्तात्सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके योऽसावमरत्वं ग्रहत्वं वाऽऽलभत भगवदनुकंपया स्वयमसुरापसदः सैंहिकेयो ह्यतदर्हस्तस्य तात जन्मकर्मणी चोपरिष्टाद्वक्ष्यामः ॥

यददस्तरणेर्मण्डलं प्रतपति तद्विस्तारतो योजनायुतमाचक्षते द्वादशसहस्रं सोमस्य त्रयोदशसहस्रं राहोर्यः पर्वणि तद्व्यवधानकृद्वैरानुबन्धात्सूर्याचन्द्रमसावभिधावति ॥ २ ॥

तन्निशाम्योभयत्रापि भगवताऽभिरक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतं चक्रं दुर्विषहं परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विजमानश्चकितहृदय आरादेव निवर्तते तदुपराग इति वदन्ति लोकाः ॥ ३ ॥

ततोऽधस्तात्सिद्धचारणविद्याधराणां सदनानि तावन्मात्र एव ॥

ततोऽधस्ताद्यक्षरक्षःपिशाचभूतप्रेतगणानां विहाराजिरमन्तरिक्षं यावद्वायुर्वाति यावन्मेघा उपलभ्यन्ते ॥ ५ ॥

ततोऽधस्ताच्छतयोजनान्तरे चेयं पृथिवी यावद्धंससारसश्येन सुपर्णादयः पतत्रिप्रवरा उत्पतन्तीत्युपवर्णितं भूमेर्यथा संनिवेशमवस्थानम् ॥ ६ ॥

अवनेरप्यधस्तात्सप्त भूविवरा एकैकशो योजनायुतायामविस्तारास्तारतम्येनोपक्लृप्ताः अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति ॥ ७ ॥

एतेषु हि बिलस्वर्गेषु स्वर्गादप्यधिकाः सकलसम्पत्समृद्धयः कामभोगैश्वर्यानन्दविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडाविहारेषु

दैत्यदानवकाद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रतिहतकामविनोदा निवसन्ति ॥८॥

येषु महाराज मयेन मायया निर्मिताः पुरो नानामणिप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागास्वनमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैः समलङ्कृताश्चकासन्ति ॥ ९ ॥

उद्यानानि चातितरां मनइन्द्रियानन्दिभिः कुसुमफलस्तवककिसलयावनतरुचिरविटपैर्विटपिनां कनकलतालिङ्गितानां श्रीभिः समिथुनविहंगकुलकोलाहलजलाशयानाममृतजलपूर्णानां झषकुलोल्लङ्घनक्षुभितनीरनीरजकुमुदकुवलयकह्लारनीलोत्पलशतपत्रादिवनेषु कृतनिकेतानामेकविहाराकुलमधुकराणां मधुकरविविधस्वनादिभिरिन्द्रियोत्सवैरमरलोकश्रियमतिशयितानि ॥

यत्र ह वा न भयमहोरात्रिभिः कालविभागैरुपलक्ष्यते ॥११॥

यत्र हि महाहिप्रवरशिरोमणयः शार्वरं तमः प्रबाधन्ते ॥१२॥

न वा एतेषु वसतां दिव्यौषधरसरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गन्ध्यस्वेदक्लमग्लानिरिति वयोवस्थाश्च भवन्ति ॥ १३ ॥

न हि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजसश्चक्रापदेशात् ॥ १४ ॥

यस्मिन्प्रविष्टेऽसुरवधूनां प्रायः पुंसवनानि भयादास्रवन्ति पतन्ति च ॥ १५ ॥

अथातले मयपुत्रोऽसुरो बलो निवसति येन ह वा इह सृष्टाः षण्णवतिमायाः काश्चनाद्यापि मायाविनो धारयन्ति यस्य च विजृंभमाणस्य मुखतस्त्रयः स्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्यः ॥ १६ ॥

या वै विलायनप्रविष्टं पुरुषं रसेन हाटकाख्येन पाययित्वा स्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिः स्वैरं किल रमयन्ति ॥ १७ ॥

यस्मिन्नुपभुक्ते पुरुष ईश्वरोऽहं सिद्धोऽहमित्ययुतमहागजबलमात्मानं मन्यमानः कत्थते मदान्ध इव ॥ १८ ॥

ततोऽधस्तात् वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूयाऽऽस्ते यत्र प्रवृत्ता सरित्प्रवरा हाटकी नाम भवयोर्वीर्येण यत्तचित्रभानुर्मातरिश्वनेध्यमान ओजसा पिबति तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति ॥ १९ ॥

ततोऽधस्तात्सुतले उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा वटुवामनरूपेण पराक्षिप्तलोकत्रयो भगवदनुकंपयैव पुनःप्रवेशित इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवन्तमपगतसाध्वस आस्तेऽधुनापि ॥

नो एवैतत्साक्षात्कारो भूमिदानस्य यत्तद्भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे पात्र उपपन्ने परया श्रद्धया परमादरसमाहितमनसा संप्रतिपादितस्य साक्षादपवर्गद्वारस्य यद्बिलनिलयैश्वर्यं यस्य ह वा क्षुत्पतनप्रस्खलनादिषु विवशः सकृन्नामाभिगृणन्पुरुषः कर्मबन्धमञ्जसा विधुनोति ॥

यस्य ह वै प्रतिबोधनं तु मुमुक्षवोऽन्यथैवोपलभन्ते यत्तद्भगवन्नाम सर्वेषामात्मनामात्मदमेव ॥ २२ ॥

न वै भगवान्नूनं मनुष्याननुजग्राह यदुत पुनरात्मानुस्मृतिमोक्षणं मायामयं भोगैश्वर्यमेवाऽऽतनुते ॥ २३ ॥

यत्तद्भगवताऽनधिगतान्योपायेन च याञ्चाछलेनापहृतस्वशरीरावशेषितलोकत्रयो यो वरुणपाशैश्च बद्धो गिरिदर्यां चापविद्ध इति होवाच ॥ २४ ॥

नूनं बतायं भगवानर्थेषु निष्णातोऽसाविन्द्रस्य सचिवो मन्त्राय धृत एकान्ततो बृहस्पतिस्तमतिहाय यदा स्वयमुपेन्द्रेणात्मानमयाचत पदान्यात्मन आशिषो नो एव न दास्यामि गम्भीररयस्य कालस्य मन्वन्तरपरिमितं कियल्लोकत्रयमिदम् ॥

यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वपित्र्यं राज्यं यदकुतोभयं पदं दीयमानं भगवता विरमिते स्वपितरि तस्य महानुभावस्यानुपथमनुवर्तितुमलममृदितकषायः को वाऽस्मद्विधः परिहीनभगवदनुग्रह इति ॥ २६ ॥

तस्यानुचरितमुत्तरस्माद्विस्तरिष्यते यस्य भगवान्स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयो येन पदांगुष्ठेन दशकन्धरो योजनायुतं दिग्विजय उच्चाटितः ॥ २७ ॥

ततोऽधस्तात्तलातले मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता मुरारिणा त्रिलोक्याः शंचिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादालब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते ॥ २८ ॥

ततोऽधस्तान्महातले काद्रवेयाणां नैकशिरसां क्रोधवशो नाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवन्तः पतत्रिराजाधिपतेः पुरुषोत्तमवाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुंबसङ्गेन क्वचित्प्रमत्ता विचरन्ति ॥ २९ ॥

ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालकेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकमहानुभावस्य हरेरेव तेजसा प्रतिहतावलेपा बिलेशया एव निवसन्ति ये वै सरमयेन्द्रदूत्या वाग्भिर्मन्त्रवर्णाभिरिन्द्राद्बिभ्यति ॥ ३० ॥

ततोऽधस्तात्पाताले नागपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनंजयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति येषामुह वै पञ्चसप्तदशशतसहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पातालविवरतिमिरनिकरं स्वरोचिषा विधमन्ति ॥ ३१ ॥

तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तरे आस्ते या वै कला भगवतस्तामसी समाख्याताऽनन्त इति सात्वता यद्द्रष्टृ दृश्ययोः सन्निकर्षणमहमित्यभिमानलक्षणं सङ्कर्षणमित्याचक्षते ॥३२॥

तस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते ॥ ३३ ॥

यस्य ह वा इदं कालेनोपसंजिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरन्तरेण संकर्षणो नाम रुद्र एकादशव्यूहस्त्र्यक्षस्त्रिशिखं शूलमुत्तंभयन्नुदतिष्ठत् ॥ ३४ ॥

यस्यांघ्रिकमलयुगलारुणविशदनखमणिमण्डलेष्वहिपतयः सह सात्वतर्षभैरेकान्तभक्तियोगेनावनमन्तः स्ववदनानि परिस्फुरत्कुण्डलप्रभामण्डितगण्डस्थलान्यतिमनोहराणि प्रमुदितमनसः किल विलोकयन्ति ॥ ३५ ॥

यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वंगदवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्तम्भेष्वगुरुचन्दनकुङ्कुमपङ्कानुलेपेनावलिंपमानास्तदभिमर्शोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमदमुदितमदविघूर्णितारुणावलोकनयनवदनारविन्दं सव्रीडं किल विलोकयन्ति ॥

स एष भगवाननन्तोऽनन्तगुणार्णव आदिदेव उपसंहतामर्षरोषवेगो लोकानां स्वस्तय आस्ते ॥ ३७ ॥

ध्यायमानः सुरासुरोरगसिद्धगन्धर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृतिविह्वललोचनः सुललितमुखरितामृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयन्तीं स्वां वनमालां नीलवासा एककुण्डलो हलककुदिकृतसुभगसुन्दरभुजो भगवान् माहेन्द्रो वारणेन्द्र इव काञ्चनीं कक्ष्यामुदारलीलो बिभर्ति ॥ ३८ ॥

य एष एवमनुश्रुतोऽभिध्यायमानो मुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयं हृदयग्रन्थिं सत्वरजस्तमोमयमन्तर्हृदयं गत आशु निर्भिनत्ति ॥ ३९ ॥

तस्यानुभावमिमं भगवान्स्वायंभुवो नारदः सह तुंबुरुणा सभायां ब्रह्मणः संश्लोकयामास ॥ ४० ॥

उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः
सत्वाद्याः प्रकृतिगुणा यदीक्षयाऽसन् ।
यद्रूपं ध्रुवमकृतं यदेकमात्मन्
नानाऽधात्कथमुह वेद तस्य वर्त्म ॥ ४१ ॥

मूर्तिं यः पुरुकृपया बभार सत्वं
संशुद्धं सदसदिदं विभाति यत्र ।
यल्लीलां मृगपतिराददेऽनवद्या-
मादातुं स्वजनमनांस्युदारवीर्यः ॥ ४२ ॥

यन्नामश्रुतमनुकीर्तयेदकस्मा-
दार्तो वा यदि पतितः प्रलोभनाद्वा ।
हन्त्यंहः सपदि नृणामशेषमन्यं
कं शेषाद्भगवत आश्रयेन्मुमुक्षुः ॥ ४३ ॥

मूर्द्धन्यर्पितमणुवत्सहस्रमूर्ध्नो
भूगोलं सगिरिसरित्समुद्रसत्वम् ।
आनन्त्यादविदित विक्रमस्य भूम्नः
को वीर्याण्यपि गणयेत्सहस्रजिह्वः ॥ ४४ ॥

एवं प्रभावो भगवाननन्तो
दुरन्तवीर्यस्वगुणानुभावः ।
मूले रसायाः स्थित आत्मतन्त्रो
यो लीलया क्ष्मां स्थितये बिभर्ति ॥ ४५ ॥

एता ह्येवेह नृभिरुपगन्तव्या गतयो
यथाकर्मविनिर्मिता यथोपदेशमनुवर्णिताः ॥ ४६ ॥

कामान्कामयमानस्यैतावत्यो हि राजन् पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशा यथाप्रश्नं व्याख्याताः किमन्यत्कथयाम इति ॥ ४७ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे त्रयोविंशोऽध्यायः ॥

# अथ चतुर्विंशोऽध्यायः

राजोवाच–
महर्षे एतद्वैचित्र्यं लोकस्य कथमिति ॥ १ ॥

श्रीशुक उवाच–
त्रिगुणत्वात्कर्तुः श्रद्धायाः कर्मगतयः पृथग्विधाः सर्वा एव सर्वस्य तारतम्येन भवन्ति ॥ २ ॥

अथेदानीं प्रतिषिद्धलक्षणस्याधर्मस्य तथैव कर्तुः श्रद्धाया वैसादृश्यात्कर्मफलं विसदृशं भवति ॥ ३ ॥

या ह्यनाद्यविद्यया कृतकामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्तास्तासां प्राचुर्येणानुवर्णयिष्यामः ॥ ४ ॥

राजोवाच–
नरका नाम भगवन् किं देशविशेषा अथवा बहिस्त्रिलोक्या आहोस्विदन्तराल इति ॥ ५ ॥

ऋषिरुवाच–
अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च जलाद्यस्यामग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसन्ति ॥ ६ ॥

यत्र हवाव भगवान् पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु सम्परेतेषु यथाकर्मावद्यमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति ॥ ७ ॥

तत्र हैके नरकानेकविंशतिं गणयन्ति अथ तांस्ते राजन्नामरूपलक्षणतोऽनुक्रमिष्यामः तामिस्रोऽन्धतामिस्रो रौरवो महारौरवः कुम्भीपाकः कालसूत्रमसिपत्रवनं सूकरमुखमन्धकूपः कृमिभोजनः सन्दंशस्तप्तसूर्मिर्वज्रकण्टकशाल्मली वैतरणी पूयोदः प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपानमिति ॥ ८ ॥

किञ्चान्येऽपि क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दन्दशूकः पटनिरोधः पर्यावर्तनं सूचीमुखमित्यष्टाविंशतिनरका विविधयातनाभूमयः ॥ ९ ॥

तत्र हि यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते । अनशनानिपानदण्डताडनसन्तर्जनादिभिः पात्यमानो जन्तुर्यत्र कश्मलमासादित एकदैव मूर्छामुपयाति तामिस्रप्राये ॥ १० ॥

एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं धनदारादीनुपभुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति । यथा हि वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं तमुपदिशन्ति ॥ ११ ॥

यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं कुटुम्बमेवानुदिनं पुष्णाति । स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति ॥ १२ ॥

ये त्विह यथैवामुना विहिंसिता जन्तवः परत्र यमयातना उपगतं त एव रुरवो भूत्वा तथा तमेव विहिंसन्ति तस्माद्रौरवमित्याहुः । रुरुरिति सर्पादतिक्रूरसत्त्वस्यापदेशः ॥ १३ ॥

एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति यः केवलं देहम्भरः ॥ १४ ॥

यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणिन उपरन्धयति तमकरुणं पुरुषादैरपि विगर्हितममुत्र यमानुचराः कुम्भीपाके तप्ततैल उपरन्धयन्ति ॥ १५ ॥

यस्त्विह पितृविप्रब्रह्मध्रुक् स कालसूत्रसंज्ञके नरकेऽयुतयोजनपरिमण्डले ताम्रमये तप्तखले उपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्य-

मानान्तर्बहिः शरीर आस्ते शेते तिष्ठति परिधावति याचति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि कालसूत्रसंज्ञके नरके निवसति ॥ १६ ॥

यस्त्विह वै निजवेदपथादनापद्यगतः पाषण्डं चोपगतस्तमसि पत्रवनं प्रवेश्य कशया प्रहरन्ति । तत्र हासादित इतस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदे पदे निपतति । स्वधर्महा पापण्डानुगतः फलं भुङ्क्ते ॥ १७ ॥

यस्त्विह राजा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स पापीयान्नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्निष्पिडयमानावयवो यथैवेक्षुदण्ड आर्तस्वरेण स्वनयन् क्वचिन्मूर्च्छितः कश्मलमुपगतो यथैवेह दृष्टदोष उपरुद्धः ॥१८॥

यस्त्विह वै भूतानामीश्वरकल्पितवृत्तीनामविदितपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विदितपरव्यथो व्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति तत्र हासौ तैर्जन्तुभिः पशुमृगपक्षिसरीसृपैर्मशकयूकमत्कुणमक्षिकादिभिर्ये केचनेहाभिद्रोग्धारस्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः ॥ १९ ॥

यस्त्विह वाऽसंविभज्याश्नाति यत्किञ्चनोपनतमनिर्वर्तिततयज्ञोपायमसंस्कृतं स परत्र कृमिभोजने नरकाधमे निपतति तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावदप्रदत्ताकृतनिर्वेशस्तावदात्मानं पातयति ॥ २० ॥

यस्त्विह वै स्तेयेन वलाद्वा हिरण्यरत्नादीनि ब्राह्मणस्य चापहरत्यन्यस्य वाऽनापदि पुरुषं तममुत्र राजन् यमपुरुषा अयस्मयैरग्निवर्णैः सन्दंशैस्त्वचि निष्कालयन्ति ॥ २१ ॥

यस्त्विह वाऽगम्यां स्त्रियं पुरुषं वा योषिदपि गच्छति तावमुत्र कशया ताडयन्तस्तर्जयन्तस्तप्तया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या ॥ २२ ॥

यस्त्विह वै सर्वाभिगमस्तममुत्र निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निकर्षयन्ति ॥ २३ ॥

ये त्विह वा राजन्यो राजपुरुषा वा पाषण्डा धर्मसेतून् भिन्दन्ति ते सम्परेत्य वैतरण्यां निपतन्ति भिन्नमर्यादाः तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानास्ते स्वासुभिरुह्यमानाश्चौघेन कर्मपाकमनुस्मरन्तो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवाहिन्यामुपतप्यन्ते ॥

ये त्विह वै वृषलीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरन्ति ते चापि प्रेत्य पूयविण्मूत्रश्लेष्मलालापूर्णार्णवे निपतन्ति तदेवातिबीभत्सितमश्नन्ति ॥ २५ ॥

ये त्विह वै श्वगर्दभपतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान्निघ्नन्ति तानपि सम्परेताँल्लक्ष्यभूतान्यमपुरुषा इषुभिर्विध्यन्ति ॥ २६ ॥

येत्विह वै दाम्भिका दम्भयज्ञेषु पशून्विशसन्ति तानमुष्मिंल्लोके वैशसने नरके पतितान्निरयपतयः यातयित्वा विशसन्ति ॥

यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति काममोहितस्तं पापकृतममुत्र रेतःकुल्यायां पातयित्वा रेतः पाययन्ति ॥२८॥

ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजा राजभटा वा तांश्चापि हि परेत्यान्यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च तैः सरभसं खादयन्ति ॥ २९ ॥

यस्त्विह वाऽऽनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथञ्चित्स वै प्रेत्य नरके अवीचिमत्यधःशिरा निरवकाशे योजनशतोच्छ्रायाद्गिरिमूर्ध्नः सम्पात्यते । यत्तज्जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिमिति तिलशो विशीर्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति ॥ ३० ॥

यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुरां व्रतस्थितो वा पिबति तेषां निरयनीतानामुरसि पदाऽऽक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति ॥ ३१ ॥

अथ यस्त्विह वा आत्मसम्भावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहुमन्येत स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरनिपातितो दुरन्तायातना ह्यश्नुते ॥ ३२ ॥

ये त्विह वै पुरुषाः पुरुषमेधेन यजेरन्नशास्त्रीयान् वा पशून् खादन्ति याश्च स्त्रियोऽथ पशूंश्च खादन्ति तांश्च ताश्च वै पशव इह निहतास्ते यमसादने यातयन्तो रक्षोगणाः सौनिका इव

स्वधितिना विदार्यासृक्पिबन्ति नृत्यन्ति गायन्ति हसन्ति च हृष्यमाणा यथेह पुरुषादाः ॥ ३३ ॥

ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैस्रम्भकैरुपविस्रम्भय्य जिजीविषून् शूलसूत्रादिषूपप्रोतान् क्रीडनकतया पातयन्ति तेऽपि च प्रेत्य यमयातनानुशूलसूत्रादिषु प्रोतात्मानः क्षुत्तृड्भ्यां चोपहताः कङ्कवलाकादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना आत्मशमलं स्मरन्ति ॥ ३४ ॥

ये त्विह वै भूतानुद्वेजयन्ति नरा अत्युल्वणस्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके दन्दशूकाख्ये निपतन्ति यत्र नृप दन्दशूकाः पञ्चमुखाः सप्तमुखा उपसृप्य ग्रसन्ति यथा बिलेशयाः ॥ ३५ ॥

ये त्विह वा अवटकुसूलगृहादिषु भूतानि रुन्धन्ति तथाऽमुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुन्धन्ति ॥ ३६ ॥

यस्त्विह वाऽऽतिथीनभ्यागतान्वा गृहपतिरसकृदुपगतमन्यु-र्दिधक्षुरिवापचक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्रकङ्ककाकवलाकादयः प्रसह्योरुबलादुत्पाटयन्ति ॥

यस्त्विह वाऽर्थाभिमतिरहङ्कृतिस्तिर्यक्प्रेक्षणः सर्वतः शङ्की व्ययविनाशचिन्तया परिशुष्यमाणहृदयवदनो निर्वृतिमनुपगतो ग्रह इवार्थमभिरक्षति । स चापि प्रेत्य तत्सम्पादनोत्कर्षण-संरक्षणशमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पाप-पुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति ॥

एवंविधा नरका यमलोके सन्ति शतशः सहस्रशस्तेषु सर्वेषु सर्व एवाधर्मवर्तिनो ये केचिदिहोदिता अनुदिताश्चावनिपते पर्यायेण विशन्ति ॥ ३९ ॥

तथैव धर्मानुवर्तिन उत्तरत्र इह तु पुनर्भवे उभयशेषाभ्यां निविशन्ति ॥ ४० ॥

निवृत्तिलक्षणमार्ग आदावेव व्याख्यातः एतावानेवाण्डकोशो यश्चतुर्दशधा पुराणेषूपकल्पितः ॥ ४१ ॥

यस्त्वद्भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठं रूपमात्म-मायया गुणमयमनुवर्णितमादृतः पठति शृणोति श्रावयति स एवायं भगवतः परमात्मनो ह्यणिष्ठमपि श्रद्धधानो भक्तिविशुद्ध-बुद्धिर्वेद ॥ ४२ ॥

श्रुत्वा स्थूलं तथा सूक्ष्मं रूपं भगवतो यतिः ।
स्थूले निर्जितमात्मानं शनैः सूक्ष्मधिया नयेत् इति ॥ ४३ ॥

भूद्वीपवर्षसरिदद्रिनभःसमुद्र
पातालदिङ्नरकभागणलोकसंस्थम् ।
गीतं मया तव नृपाद्भुतमीश्वरस्य
स्थूलं वपुः सकलजीवनिकायधाम्नः ॥ ४४ ॥

॥ इति श्रीमद्भागवते पञ्चमस्कन्धे चतुर्विंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां पञ्चमस्कन्धः ॥

## अथ प्रथमोऽध्यायः

राजोवाच–
निवृत्तिमार्गः कथित आदौ भगवता यथा ।
क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः ॥ १ ॥

प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने ।
योऽसावलीनप्रकृतेर्गुणसर्गः पुनः पुनः ॥ २ ॥

अधर्मलक्षणा नाना नरकाश्चोपवर्णिताः ।
मन्वन्तरश्च व्याख्यात आद्यः स्वायम्भुवो यतः ॥ ३ ॥

प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च ।
द्वीपवर्षसमुद्राद्रिनदीनदवनानि च ॥ ४ ॥

धरामण्डलसंस्थानं भागलक्षणमानतः ।
ज्योतिषां विवराणां च यथेदमसृजद् विभुः ॥ ५ ॥

अधुनेह महाभाग यथैव नरकान् नरः ।
नानोग्रयातनान् नेयात् तन्मे व्याख्यातुमर्हसि ॥ ६ ॥

श्रीशुक उवाच–
न चेदिहैवापचितिं यथांऽहसः
कृतस्य कुर्यान्मनउक्तिपाणिभिः ।
ध्रुवं स वै प्रेत्य नरकानुपैति
ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ ७ ॥

तस्मात्पुरैवाश्विह पापनिष्कृतौ
यतेत मृत्योरविपद्यदा(ऽऽ)त्मनः ।
दोषस्य दृष्ट्वा गुरुलाघवं यथा
भिषक् चिकित्सेत रुजां निदानवित् ॥ ८ ॥

राजोवाच–
दृष्टश्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितम् ।
करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥ ९ ॥

क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः ।
प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत् ॥ १० ॥

श्रीशुक उवाच–
कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् ॥ ११ ॥

नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि ।
एवं नियमकृद्राजञ्छनैः क्षेमाय कल्पते ॥ १२ ॥

तपसा ब्रह्मचर्येण शमेन च दमेन च ।
त्यागेन सत्यशौचाभ्यां नियमेन यमेन च ॥ १३ ॥

देहवाग्बुद्धिजं धीरा धर्मज्ञा श्रद्धयाऽन्विताः ।
क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ १४ ॥

केचित्केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १५ ॥

न तथा ह्यघवान् राजन् पूयेत तपआदिभिः ।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥

सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १७ ॥

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखैः ।
न वै पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः ॥ १८ ॥

सकृन्मनः कृष्णपदारविन्दयो-
र्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ १९ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
दूतानां विष्णुयमयोः संवादं तं निबोध मे ॥ २० ॥

कान्यकुब्जे द्विजः कश्चिद् दासीपतिरजामिलः ।
नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥

बन्द्यक्षैः कैतवैश्चौर्यैर्गर्हितां वृत्तिमाश्रितः ।
बिभ्रत् कुटुम्बमशुचिर्यातयामास देहिनम् ॥ २२ ॥

एवं निवसतस्तस्य लालयानस्य तत्सुतान् ।
कालोऽत्यगान्महान् राजन्नष्टाशीत्याऽऽयुषः समाः ॥ २३ ॥

तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः ।
बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥

स वद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ।
निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥ २५ ॥

भुञ्जानः प्रपिबन्खादन्बालकस्नेहयन्त्रितः ।
भोजयन्पाययन्मूढो न वेदागतमन्तकम् ॥ २६ ॥

स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते ।
मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥

स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् ।
वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ २८ ॥

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ।
प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २९ ॥

निशम्य म्रियमाणस्य मुखतो हरिकीर्तनम् ।
भर्तुर्नाम महाराज पार्षदाः सहसाऽपतन् ॥ ३० ॥

विकर्षतोऽन्तर्हृदयाद्दासीपतिमजामिलम् ।
यमप्रेष्यान् विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥

ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरःसराः ।
के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥

कस्य वा कुत आयाताः कस्मादस्य निषेधथ ।
किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ॥ ३३ ॥

सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः ।
किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः ॥ ३४ ॥

सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ।
धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः ॥ ३५ ॥

दिशो वितिमिरालोकाः कुर्वन्तः स्वेन रोचिषा ।
किमर्थं धर्मपालस्य किङ्करान् नो निषेधथ ॥ ३६ ॥

श्रीशुक उवाच–
इत्युक्ते यमदूतैस्ते वासुदेवोक्तकारिणः ।
तान् प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा ॥ ३७ ॥

विष्णुदूता ऊचुः–
यूयं वै धर्मराजस्य यदि निर्देशकारिणः ।
ब्रूत धर्मस्य नस्तत्त्वं यच्चाधर्मस्य लक्षणम् ॥ ३८ ॥

कथंस्विद् ध्रियते दण्डः किं वाऽस्य स्थानमीप्सितम् ।
दण्ड्याः किं कारिणः सर्वे आहोस्वित्कतिचिन्नृणाम् ॥३९॥

यमदूता ऊचुः–
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ॥ ४० ॥

येन स्वधाम्न्यमी भावा रजस्सत्त्वतमोमयाः ।
गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥ ४१ ॥

सूर्योऽग्निः खं मरुद्गावः सोमः सन्ध्याहनी दिशः ।
कालः स्वयं धर्म इति ह्येते धर्मस्य साक्षिणः ॥ ४२ ॥

एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते ।
सर्वे कर्मानुरोधेन दण्डमर्हन्ति कारिणः ॥ ४३ ॥

संभवन्ति ह्यभद्राणि विपरीतानि चानघाः ।
कारणं गुणसङ्गोऽस्ति देहवान्न ह्यकर्मकृत् ॥ ४४ ॥

येन यावान्यथा धर्मो ह्यधर्मो वा समीहितः ।
स एव तत्फलं भुंक्ते यथा तावदमुत्र वै ॥ ४५ ॥

यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते ।
भूतेषु गुणवैचित्र्यात्तथाऽन्यत्रानुमीयते ॥ ४६ ॥

वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ।
एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनम् ॥ ४७ ॥

मनसैव पुरे देवः पूर्वरूपं विपश्यति ।
अनुमीमांसतेऽपूर्वं मनसा भगवानजः ॥ ४८ ॥

यथाऽज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि ।
न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥

पञ्चभिः कुरुते स्वार्थान् पञ्च वेदाऽथ पञ्चभिः ।
एकस्तु षोडशेन त्रीन् स्वयं सप्तदशोऽश्नुते ॥ ५० ॥

तदेतच्छोडशकलं लिङ्गं शक्तित्रयं महत् ।
धत्तेऽनु संसृतिं पुंसि हर्षशोकभयार्तिदम् ॥ ५१ ॥

देह्यज्ञोऽजितषड्वर्गोऽनिच्छन् कर्माणि कार्यते ।
कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥ ५२ ॥

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५३ ॥

लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ।
यथा योनि यथा बीजं स्वभावेन बलीयसा ॥ ५४ ॥

एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः ।
आसीत्स एव न चिरादीशसङ्गाद्विलीयते ॥ ५५ ॥

अयं च श्रुतसम्पन्नः शीलवृत्तगुणालयः ।
धृतव्रतो मृदुर्दान्तः सत्यवान्मन्त्रविच्छुचिः ॥ ५६ ॥

गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहंकृतिः
सर्वभूतसुहृत्साधुर्मितवागनसूयकः ॥ ५७ ॥

एकदाऽसौ वनं यातः पितृसन्देशकृद्द्विजः ।
आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ ५८ ॥

ददर्श कामिनं कञ्चिच्छूद्रं सह भुजिष्यया ।
पीत्वा तु मधु मैरेयं मदाघूर्णितनेत्रया ॥ ५९ ॥

मत्तया विश्लथन्नीव्या ह्युपेतं निरपत्रपम् ।
क्रीडन्तमनुगायन्तं हसन्तमनयाऽन्तिके ॥ ६० ॥

दृष्ट्वा तां कामलिप्तेन बाहुना परिरम्भिताम् ।
जगाम हृच्छयवशं सहसैव विमोहितः ॥ ६१ ॥

स्तम्भयन्नात्मनाऽऽत्मानं यावत्सत्त्वं यथाश्रुतम् ।
न शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥

तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः ।
तामेव मनसा ध्यायन् स्वधर्माद्विरराम ह ॥ ६३ ॥

तामेव तोषयामास पित्र्येणार्थेन यावता ।
ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ॥ ६४ ॥

विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम् ।
विससर्जाचिरात्पापः स्वैरिण्यापाङ्गविद्धधीः ॥ ६५ ॥

इतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम् ।
बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम् ॥ ६६ ॥

यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यविगर्हितः ।
आवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥

तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम् ।
नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुध्यति ॥ ६८ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

# अथ द्वितीयोऽध्यायः

बादरायणिरुवाच–
एतत्ते भगवद्दूता यमदूताभिभाषितम् ।
उपधार्याथ तान्राजन् प्रत्याहुर्नयकोविदाः ॥ १ ॥

विष्णुदूता ऊचुः–
अहो कष्टं धर्मदृशामधर्मः स्पृशते सताम् (सभाम्) ।
यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ २ ॥

प्रजानां पितरो ये च शास्तारः साधवः समाः ।
यदि स्यात्तेषु वैषम्यं कं यान्ति शरणं प्रजाः ॥ ३ ॥

यद्यदाचरति श्रेयानितरस्तत्तदीहते ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ४ ॥

यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ।
स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥ ५ ॥

स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम् ।
विस्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥

एतेनैव ह्यघो नोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायण इति जगाद चतुरक्षरम् ॥ ८ ॥

स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ ९ ॥

सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥

न निष्कृतैरुदितैर्ब्रह्मवादिभि
स्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै
स्तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥

नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ।
तत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥

अथैनं माऽपनयत कृताशेषाघनिष्कृतम् ।
यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १३ ॥

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥

पतितस्खलितो भग्नः सन्दष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥ १५ ॥

गुरूणां च लघूनां च गुरूणि च लघूनि च ।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥ १६ ॥

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १७ ॥

धर्मो योऽयमुपन्यस्तः परमस्तु सनातनः ।
क्रियतेऽहरहः शुद्धिरात्मनो वासतो यथा ॥ १८ ॥

नैकान्तशुद्धिः स्यात् कर्तुः क्रियया कर्तृता यतः ।
अकर्तुरात्मनस्तस्माद्भजेतानीहया हरिम् ॥ १९ ॥

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्तितमघं पुंसो दहत्येधो यथाऽनलः ॥ २० ॥

यथाऽगदं वीर्यतमुपयुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः ॥ २१ ॥

पतिं वः पृच्छत भटा धर्मेऽस्मिन् यदि संशयः ।
स वेद परमं गुह्यं धर्मस्य भगवान् यमः ॥ २२ ॥

श्रीशुक उवाच–
एवं ते सुविनिर्णीय धर्मं भागवतं नृप ।
तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥ २३ ॥

इति प्रत्युदिता याम्या दूता यातायमान्तिकम् ।
यमराज्ञे यथा सर्वमाचचख्युररिन्दम ॥ २४ ॥

द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गतः ।
ववन्दे शिरसा विष्णोः किङ्करान्दर्शनोत्सवः ॥

तं विवक्षुमभिप्रेत्य महापुरुषकिङ्कराः ।
सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ ॥ २६ ॥

अथाजामिल आकर्ण्य दूतानां यमकृष्णयोः ।
धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम् ॥ २७ ॥

भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः ।
अनुतापो महानासीत् स्मरतोऽशुभमात्मनः ॥ २८ ॥

अहो मे परमं कष्टमभूदविजितात्मनः ।
येन विप्लावितं ब्रह्म वृषल्यां जायताऽऽत्मना ॥ २९ ॥

धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ।
हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥ ३० ॥

वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ ।
अहो मयाऽधुना त्यक्तावकृतज्ञेन नीचवत् ॥ ३१ ॥

सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ।
धर्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः ॥ ३२ ॥

किमिदं स्वप्नमाहोस्वित्साक्षाद् दृष्टमिहाद्भुतम् ।
क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥ ३३ ॥

अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ।
व्यमोचयन् नीयमानं बद्ध्वा पाशैरधोभुवः ॥ ३४ ॥

अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ।
भवितव्यं मङ्गलेन येनाऽऽत्मा मे प्रसीदति ॥ ३५ ॥

अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनाम ग्रहणं जिह्वा वक्तुमिहार्हति ॥ ३६ ॥

क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥ ३७ ॥

सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः ।
यथा न भूय आत्मानमन्धे तमसि मज्जये ॥ ३८ ॥

विमुच्य तमिमं बन्धमविद्याकामकर्मजम् ।
सर्वभूतसुहृच्छान्तो मैत्रः करुण आत्मवान् ॥ ३९ ॥

मोचये ग्रस्तमात्मानं योषिन्मय्याऽऽत्ममायया ।
विक्रीडितो यथैवाहं क्रीडामृग इवाधमः ॥ ४० ॥

ममाहमिति देहादौ हित्वा मिथ्यार्थधीर्मतिम् ।
धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ॥ ४१ ॥

इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु ।
गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ॥ ४२ ॥

स तस्मिन् देवसदनं आसीनो योगमास्थितः ।
प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ ४३ ॥

ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना ।
युयुजे भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि ॥ ४४ ॥

यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत् पुरुषान् पुरः ।
उपलभ्योपलब्धान् प्राग् ववन्दे शिरसा द्विजः ॥ ४५ ॥

हित्वा कलेवरं तीर्थे गङ्गायां दर्शनादनु ।
सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ॥ ४६ ॥

साकं विहायसा विप्रो महापुरुषकिङ्करैः ।
हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ ४७ ॥

एवं स विप्लावितसर्वधर्मो
दास्याः पतिः पतितो गर्ह्यकर्मा ।
निपात्यमानो निरये हतव्रतः
सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ४८ ॥

नातः परं कर्मनिबन्धकृन्तनं
मुमुक्षुतां तीर्थपदानुकीर्तनात् ।
न यत् पुनः कर्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं न चान्यथा ॥ ४९ ॥

य एवं परमं गुह्यमितिहासमघापहम् ।
शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्याऽनुकीर्तयेत् ॥ ५० ॥

न वै स नरकं गच्छेन्नेक्षितो यमकिङ्करैः ।
यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते ॥ ५१ ॥

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् ।
अजामिलोऽप्यगान्मुक्तिं किमुत श्रद्धया गृणन् ॥ ५२ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

राजोवाच–
निशम्य देवः स्वभटोपवर्णितं
प्रत्याह किं तानपि धर्मराजः ।
एवं हताज्ञो विहितान् मुरारे
र्नैदेशिकैर्यस्य वशे जनोऽयम् ॥ १ ॥

यमस्य देवस्य न दण्डभङ्गः
कुतश्चनर्षे श्रुतपूर्व आसीत् ।
एवं मुने वृश्चति लोकसंशयं
न हि त्वदन्य इति मे विनिश्चितम् ॥ २ ॥

बादरायणिरुवाच–
भगवत्पुरुषै राजन् याम्याः प्रतिहतोद्यमाः ।
पतिं विज्ञापयामासुः यमं संयमनीपतिम् ॥ ३ ॥

यमदूता ऊचुः–
कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो ।
त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥ ४ ॥

यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः ।
कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव च ॥ ५ ॥

किन्तु शास्तृबहुत्वे स्याद् बहूनामिह कर्मणाम् ।
शास्तृत्वमुपचारो हि यथा मण्डलवर्तिनाम् ॥ ६ ॥

अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः ।
शास्ता दण्डधरो नृणां शुभाशुभविवेचनः ॥ ७ ॥

तस्य ते विहतो दण्डो नृलोके वर्ततेऽधुना ।
चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता ॥ ८ ॥

नीयमानं तवादेशादस्माभिर्यातनागृहम् ।
व्यामोचयन् पातकिनं छित्वा पाशान् प्रसह्य ते ॥ ९ ॥

तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम् ।
नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम् ॥ १० ॥

श्रीशुक उवाच–
इति देवः स आपृष्टः प्रजासंयमनो यमः ।
प्रीतः स्वदूतान् प्रत्याह स्मरन् पादाम्बुजं हरेः ॥ ११ ॥

यम उवाच–
परो मदन्यो जगतस्तस्थुषश्च
ओतं प्रोतं पटवद् यत्र विश्वम् ।
यदंशतोऽस्य स्थितिजन्मनाशा
नस्योतवद् यस्य वशे च लोकः ॥ १२ ॥

यो नामभिर्वाचि जनं निजायां
बध्नाति तन्त्यामिव दामभिर्गाः ।
यस्मै बलिं त इमे नामकर्मभि-
र्निबन्धबद्धाश्चकिता वहन्ति ॥ १३ ॥

अहं महेन्द्रो निर्ऋतिः प्रचेताः
सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ।
आदित्यविश्वेवसवोऽथ साध्या
मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥

अन्ये च ये विश्वसृजोऽमरेश
भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः
सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥

यं वै न गोभिर्मनसाऽसुभिर्वा
हृदा गिरा वाऽसुभृतो विचक्षते ।
आत्मानमन्तर्हृदि सन्तमात्मनां
चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥

तस्यात्मतन्त्रस्य हरेरधीशितुः
परस्य मायाधिपतेर्महात्मनः ।
प्रायेण दूता इह वै मनोहरा-
श्चरन्ति तद्रूपगुणस्वभावाः ॥ १६ ॥

भूतानि विष्णोः सुरपूजितानि
दुर्दर्शलिङ्गानि महाद्भुतानि ।
रक्षन्ति तद्भक्तिमतः परेभ्यो
मत्तश्च मर्त्यानथ सर्वतश्च ॥ १८ ॥

धर्मं तु साक्षाद् भगवत्प्रणीतं
न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः
कुतो नु विद्याधरचारणादयः ॥ १९ ॥

स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥

द्वादशैते विजानीमो धर्मं भागवतं भटाः ।
गुह्यं विशुद्धं दुर्बोधं यज्ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥

एतावताऽलमघनिर्हरणाय पुंसां
सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्बत माययाऽलम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥

एवं विमृश्य सुधियो भगवत्यनन्ते
सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां
स्यात् पातकं तदपि हन्त्युरुगायवादः ॥ २६ ॥

ते देवसिद्धपरिगीतपवित्रगाथा
ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान् नोपसीदत हरेर्गदयाऽभिगुप्तान्
नैषां भयं न च वयं प्रभवाम दण्डे ॥ २७ ॥

तानानयध्वमसतो विमुखान् मुकुन्द-
पादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलैः रसज्ञैः
जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ २८ ॥

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदाऽपि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥

कृष्णाङ्घ्रिपद्ममधुलिट् न पुनर्विसृष्ट-
मायागुणेषु रमते वृजिनावहेषु ।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टु-
मीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३० ॥

तत् क्षम्यतां स भगवान् पुरुषः पुराणो
नारायणः स्वपुरुषैर्यदसत्कृतं नः ।

स्वानामहो न विदुषां रचिताञ्जलीनां
क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने ॥ ३१ ॥

श्रीशुक उवाच–
इत्थं स्वभर्तृगदितं भगवन्महित्वं
संस्मृत्य विस्मितधियो यमकिङ्करास्ते ।
तेनाच्युताश्रयजनं प्रतिशङ्कमाना
द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ॥ ३२ ॥

तस्मात् सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ।
महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतम् ॥ ३३ ॥

शृण्वतो गृणतो वीर्याण्युद्दामानि हरेर्मुहुः ।
यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः ॥ ३४ ॥

इतिहासमिमं गुह्यं भगवान् कुम्भसम्भवः ।
कथयामास मलय आसीनो हरिमर्चयन् ॥ ३५ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

राजोवाच–
देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ।
सामासिकस्त्वया प्रोक्तो यस्तु स्वायम्भुवेऽन्तरे ॥ १ ॥

तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन् यथा ।
अनुसर्गं यथा शक्त्या ससर्ज भगवान् परः ॥ २ ॥

सूत उवाच–
इति सम्प्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ।
प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः ॥ ३ ॥

ऋषिरुवाच–
यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ।
अन्तस्समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥

द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ।
मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥

ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ।
राजोवाच महान् सोमो मन्युं प्रशमयन्निव ॥ ६ ॥

मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ।
विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥

आदौ प्रजापतिपतिर्भगवान् हरिरव्ययः ।
वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥

अन्नं चराणामचरा ह्यपादः पादचारिणाम् ।
अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥

यूयं च पित्राऽन्वादिष्टा देवदेवेन चानघाः ।
प्रजासर्गाय हि कथं वृक्षान् निर्दग्धुमर्हथ ॥ १० ॥

आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ।
पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥

तोकानां पितरौ बन्धू दृशः पक्ष्म स्त्रियः पतिः ।
नृपः प्रजानां भिक्षूणां गृहज्ञानां बुधः सुहृत् ॥ १२ ॥

अन्तर्देहेषु भूतानामात्माऽऽस्ते हरिरीश्वरः ।
सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥

यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ।
आत्मजिज्ञासया यच्छेत् सगुणानतिवर्तते ॥ १४ ॥

अलं दग्धैर्द्रुमैर्दीनैः शेषाणां शिवमस्तु वः ।
वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥

इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ।
सोमो राजा ययौ दत्वा ते धर्मेणोपयेमिरे ॥ १६ ॥

तेभ्यस्तस्यामभूद् राजन् दक्षः प्राचेतसः किल ।
यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥

यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ।
रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥

मनसैवासृजत् पूर्वं प्रजापतिरिमाः प्रजाः ।
देवासुरमनुष्यादीन् नभःस्थलजलौकसः ॥ १९ ॥

तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ।
विन्ध्यपादानुपव्रज्य सोऽचरद् दुश्चरं तपः ॥ २० ॥

तत्राघमर्षणं नाम तीर्थं पापहरं परम् ।
उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥

यो नामभिर्वाचि जनं निजायां
बध्नाति तन्त्यामिव दामभिर्गाः ।
यस्मै बलिं त इमे नामकर्मभि-
र्निबन्धबद्धाश्चकिता वहन्ति ॥ १३ ॥

अहं महेन्द्रो निर्ऋतिः प्रचेताः
सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ।
आदित्यविश्वेवसवोऽथ साध्या
मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥

अन्ये च ये विश्वसृजोऽमरेश
भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः
सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥

यं वै न गोभिर्मनसासुभिर्वा
हृदा गिरा वाऽसुभृतो विचक्षते ।
आत्मानमन्तर्हृदि सन्तमात्मनां
चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥

तस्यात्मतन्त्रस्य हरेरधीशितुः
परस्य मायाधिपतेर्महात्मनः ।
प्रायेण दूता इह वै मनोहरा-
श्चरन्ति तद्रूपगुणस्वभावाः ॥ १६ ॥

भूतानि विष्णोः सुरपूजितानि
दुर्दर्शलिङ्गानि महाद्भुतानि ।
रक्षन्ति तद्भक्तिमतः परेभ्यो
मत्तश्च मर्त्यानथ सर्वतश्च ॥ १८ ॥

धर्मं तु साक्षाद् भगवत्प्रणीतं
न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः
कुतो नु विद्याधरचारणादयः ॥ १९ ॥

स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥

द्वादशैते विजानीमो धर्मं भागवतं भटाः ।
गुह्यं विशुद्धं दुर्बोधं यज्ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥

एतावताऽलमघनिर्हरणाय पुंसां
सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्बत माययाऽलम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥

एवं विमृश्य सुधियो भगवत्यनन्ते
सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां
स्यात् पातकं तदपि हन्त्युरुगायवादः ॥ २६ ॥

ते देवसिद्धपरिगीतपवित्रगाथा
ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान् नोपसीदत हरेर्गदयाऽभिगुप्तान्
नैषां भयं न च वयं प्रभवाम दण्डे ॥ २७ ॥

तानानयध्वमसतो विमुखान् मुकुन्द-
पादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलैः रसज्ञैः
जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ २८ ॥

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदाऽपि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥

कृष्णाङ्घ्रिपद्ममधुलिट् न पुनर्विसृष्ट-
मायागुणेषु रमते वृजिनावहेषु ।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टु-
मीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३० ॥

तत् क्षम्यतां स भगवान् पुरुषः पुराणो
नारायणः स्वपुरुषैर्यदसत्कृतं नः ।

स्वानामहो न विदुषां रचिताञ्जलीनां
क्षान्तिर्वरीयसि नमः पुरुषाय भूम्ने ॥ ३१ ॥

श्रीशुक उवाच–
इत्थं स्वभर्तृगदितं भगवन्महित्वं
संस्मृत्य विस्मितधियो यमकिङ्करास्ते ।
तेनाच्युताश्रयजनं प्रतिशङ्कमाना
द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ॥ ३२ ॥

तस्मात् सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ।
महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतम् ॥ ३३ ॥

शृण्वतो गृणतो वीर्याण्युद्दामानि हरेर्मुहुः ।
यथा सुजातया भक्त्या शुध्येन्नात्मा व्रतादिभिः ॥ ३४ ॥

इतिहासमिमं गुह्यं भगवान् कुम्भसम्भवः ।
कथयामास मलय आसीनो हरिमर्चयन् ॥ ३५ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

राजोवाच–
देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ।
सामासिकस्त्वया प्रोक्तो यस्तु स्वायम्भुवेऽन्तरे ॥ १ ॥

तस्यैव व्यासमिच्छामि श्रोतुं ते भगवन् यथा ।
अनुसर्गं यथा शक्त्या ससर्ज भगवान् परः ॥ २ ॥

सूत उवाच–
इति सम्प्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ।
प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः ॥ ३ ॥

ऋषिरुवाच–
यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ।
अन्तस्समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥

द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ।
मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥

ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ।
राजोवाच महान् सोमो मन्युं प्रशमयन्निव ॥ ६ ॥

मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ।
विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥

आदौ प्रजापतिपतिर्भगवान् हरिरव्ययः ।
वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥

अन्नं चराणामचरा ह्यपदः पादचारिणाम् ।
अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥

यूयं च पित्राऽन्वादिष्टा देवदेवेन चानघाः ।
प्रजासर्गाय हि कथं वृक्षान् निर्दग्धुमर्हथ ॥ १० ॥

आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ।
पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥

तोकानां पितरौ बन्धू दृशः पक्ष्म स्त्रियः पतिः ।
नृपः प्रजानां भिक्षूणां गृह्यज्ञानां बुधः सुहृत् ॥ १२ ॥

अन्तर्देहेषु भूतानामात्माऽऽस्ते हरिरीश्वरः ।
सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥

यः समुत्पतितं देह आकाशान्मन्युमुल्वणम् ।
आत्मजिज्ञासया यच्छेत् सगुणानतिवर्तते ॥ १४ ॥

अलं दग्धैर्द्रुमैर्दीनैः शेषाणां शिवमस्तु वः ।
वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥

इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ।
सोमो राजा ययौ दत्वा ते धर्मेणोपयेमिरे ॥ १६ ॥

तेभ्यस्तस्यामभूद् राजन् दक्षः प्राचेतसः किल ।
यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥

यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ।
रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥

मनसैवासृजत् पूर्वं प्रजापतिरिमाः प्रजाः ।
देवासुरमनुष्यादीन् नभःस्थलजलौकसः ॥ १९ ॥

तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ।
विन्ध्यपादानुपव्रज्य सोऽचरद् दुश्चरं तपः ॥ २० ॥

तत्राघमर्षणं नाम तीर्थं पापहरं परम् ।
उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥

अस्तौषीद् हंसगुह्येन भगवन्तमधोक्षजम् ।
तुभ्यं तदभिधास्यामि कस्यातुष्यद्यतो हरिः ॥ २२ ॥

प्रजापतिरुवाच–
नमः परायावितथानुभूतये
गुणत्रयाभासनिमित्तबन्धवे ।
अदृष्टधाम्ने गुणतत्त्वबुद्धिभि-
र्निवृत्तमानावधये स्वयम्भुवे ॥ २३ ॥

न यस्य सख्यं पुरुषो वेत्ति सख्युः
सखा वसन् संवसतः पुरेऽस्मिन् ।
गुणो यथा गुणिनोऽव्यक्तदृष्टे-
स्तस्मै महेशाय नमस्करोमि ॥ २४ ॥

देहोऽसवोऽक्षा मन(सो)वो भूतमात्रा
नात्मानमन्यं च विदुः परं यत् ।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो
न वेद सर्वज्ञमनन्तमीडे ॥ २५ ॥

यदोपरामो मनसो नामरूप-
रूपस्य दृष्टिस्मृतिसंप्रमोषात् ।
य ईयते केवलया स्वसंस्थया
हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥

मनीषिणोऽन्तर्हृदि सन्निवेशितं
स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ।
वह्निं यथा दारुणि पाञ्चदश्यं
मनीषया निष्कृषन्तीह गूढम् ॥ २७ ॥

स वै ममाशेषविशेषमाया
निषेधनिर्वाणसुखानुभूतिः ।
स सर्वनामा स च विश्वरूपः
प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥

यद्यन्निरुक्तं वचसा निरूपितं
धियाऽक्षिभिर्वा मनसा वोत यस्य ।
मा भूत् स्वरूपं गुणरूपंहितं
स वै गुणापायनिसर्गलक्षणः ॥ २९ ॥

यस्मिन् यतो येन च यस्य यस्मै
यं यो यथा कुरुते कार्यते वा ।
परावरेषां परमं प्राक् स्वसिद्धं
तद् ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥

यच्छक्तयो वदतां वादिनां वै
विवादसंवादभुवो भवन्ति ।
कुर्वन्ति तेषां मुहुरात्ममोहं
तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ३१ ॥

अस्तीति नास्तीति च वस्तुनिष्ठयो-
रेकस्थयोर्भिन्नविरुद्धधर्मयोः ।
अपेक्षितं किञ्चन सांख्ययोगयोः
समं परं ह्यनुकूलं बृहत् तत् ॥ ३२ ॥

योऽनुग्रहार्थं भजतां पादमूल-
मनामरूपो भगवाननन्तः ।
नामानि रूपाणि च जन्मकर्मभि-
र्भेजे स मह्यं परमः प्रसीदताम् ॥ ३३ ॥

यः प्राकृतैर्ज्ञानपथैर्जनानां
यथाशयं देहगतो विभाति ।
यथाऽनिलः पार्थिवमाश्रितो गुणं
स ईश्वरो मे कुरुतान्मनोरथम् ॥ ३४ ॥

श्रीशुक उवाच–
इति स्तवैः संस्तुवतः स तस्मिन्नघमर्षणे ।
प्रादुरासीत् कुरुश्रेष्ठ भगवान् भक्तवत्सलः ॥ ३५ ॥

कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः ।
शङ्खचक्रासिचर्मेषुधनुःपाशगदाधरः ॥ ३६ ॥

पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ।
वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥

महाकिरीटकटकस्फुरन्मकरकुण्डलः ।
काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥ ३८ ॥

त्रैलोक्यमोहनं रूपं बिभ्रत् त्रिभुवनेश्वरः ।
वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ॥ ३९ ॥

स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः ।
रूपं तन्महदाश्चर्यं विलक्ष्यागतसाध्वसः ।
ननाम दण्डवद् भूमौ प्रहृष्टात्मा प्रजापतिः ॥ ४० ॥

न किञ्चनोदीरयितुमशकत् तीव्रया मुदा ।
आपूरितमनोद्वारो ह्रदिन्य इव निर्झरैः ॥ ४१ ॥

तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् ।
चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥

श्रीभगवानुवाच–
प्राचेतस महाभाग संसिद्धस्तपसा भवान् ।
यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥ ४३ ॥

प्रीतोऽहं ते प्रजानाथ यत्ते स्याद्बृंहणं तपः ।
ममैष कामो भूतानां यद् भूयासुर्विभूतयः ॥ ४४ ॥

ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ।
विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥ ४५ ॥

तपो मे हृदयं ब्रह्म तनुर्विद्या क्रियाऽऽकृतिः ।
अङ्गानि क्रतवो जाता धर्म आत्माऽसवः सुराः ॥ ४६ ॥

अहमेवेदमासाग्रे नान्यत् किञ्चान्तरं बहिः ।
संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥ ४७ ॥

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
यदासीत् तत एवाद्यः स्वयम्भूः समभूदजः ॥ ४८ ॥

स वै यदा महादेवो मम वीर्योपबृंहितः ।
मेनेऽकल्पमिवात्मानमुद्यतः सर्गकर्मणि ॥ ४९ ॥

अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् ।
नव विश्वसृजो युष्मान् येनादावसृजद् विभुः ॥ ५० ॥

एषा पञ्चजनस्याङ्ग दुहिता वै प्रजापतेः ।
असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥

मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः ।
मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥

त्वत्तोऽधस्तात् प्रजाः सर्वा मिथुनीभूय मायया ।
मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ ५३ ॥

इत्युक्त्वा मिषतस्तस्य भगवान् विश्वभावनः ।
स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥ ५४ ॥

॥ इति श्रीमद्भागवते पञ्चस्कन्धे चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः

बादरायणिरुवाच–
तस्यां स पाञ्चजन्यां वै विष्णुमायोपबृंहितः ।
हर्यश्वसंज्ञानयुतं पुत्रानजनयद् विभुः ॥ १ ॥

अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप ।
पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥

तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः ।
सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥ ३ ॥

तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ।
धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥ ४ ॥

तेपुस्ते तप एवोग्रं पित्रादेशेन यन्त्रिताः ।
प्रजाविवृद्धये यत्तान् देवर्षिस्तान् ददर्श ह ॥ ५ ॥

उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः ।
अदृष्ट्वाऽन्तं भुवो यूयं बालिशा बत पालकाः ॥ ६ ॥

तथैकपुरुषं राज्यं बिलं चादृष्टनिर्गमम् ।
बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ७ ॥

नदीमुभयतोवाहां पञ्चपञ्चाद्भुतं गृहम् ।
क्वचिद्धंसं चित्रकथं क्षुरान्तं च स्वयं भ्रमिम् ॥ ८ ॥

कथं स्वपितुरादेशमविद्वांसो विपश्चितः ।
अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ९ ॥

श्रीशुक उवाच–
तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया ।
वाचः कूटं च देवर्षेः स्वयं विममृशुर्धिया ॥ १० ॥

भूः क्षेत्रं जीवसंज्ञं यदनादिनिबन्धनम् ।
अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ११ ॥

एक एवेश्वरस्तुर्यो भगवान् स्वाश्रयः परः ।
तमदृष्ट्वाभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥

पुमान् नापैति यद् गत्वा बिलं स्वर्गगतो यथा ।
प्रत्यगात्माऽविद इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥

नानारूपाऽऽत्मनो बुद्धिः स्वैरिणीव गुणान्विता ।
तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥

तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् ।
तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १५ ॥

सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिनीं(ता)म् ।
मत्तस्य तदविज्ञानात् किमसत्कर्मभिर्भवेत् ॥ १६ ॥

पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्शनः ।
अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥

ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् ।
विविक्तपदमज्ञात्वा किमसत्कर्मभिर्भवेत् ॥ १८ ॥

कालचक्रं भ्रमि तीक्ष्णं सर्वं निष्कर्षयेज्जगत् ।
स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥

शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ।
कथं तदनुरूपाय गुणविश्रम्भ्युपक्रमेत् ॥ २० ॥

इति व्यवसिता राजन् हर्यश्वा एकमेधसः ।
प्रययुस्तं परिक्रम्य पन्थानमनिवर्तकम् ॥ २१ ॥

स्वरब्रह्मणि निर्भाते हृषीकेशपदाम्बुजे ।
अखण्डं चित्तमावेश्य लोकाननुचरन्मुहुः ॥ २२ ॥

नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ।
अन्वतप्यत कः शोचन् सुप्रजास्त्वं शुचां पदम् ॥ २३ ॥

स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः ।
पुत्रानजनयद् दक्षः शबलाश्वान् सहस्रिणः ॥ २४ ॥

तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ।
नारायणसरो जग्मुर्यत्र सिद्धास्तु पूर्वजाः ॥ २५ ॥

तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ।
जपन्तो ब्रह्म परमं तेपुस्तत्र महत् तपः ॥ २६ ॥

अब्भक्षाः कतिचिन्मासान् कतिचिद् वायुभोजनाः ।
आराधयन् मन्त्रमिममभ्यसन्त इडस्पतिम् ॥ २७ ॥

ओं नमो नारायणाय पुरुषाय महात्मने ।
विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥

इति तानपि राजेन्द्र प्रजासर्गधियो मुनिः ।
उपेत्य नारदः प्राह वचःकूटानि पूर्ववत् ॥ २९ ॥

दाक्षायणाः संश्रृणुत गदतो निगमं मम ।
अन्विच्छतानुपदवीं भ्रातृणां भ्रातृवत्सलाः ॥ ३० ॥

भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ।
स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥

एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ।
तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष ॥ ३२ ॥

सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ।
नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ ३३ ॥

एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः ।
पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥

चुक्रोध नारदायासौ पुत्रशोकविमूर्छितः ।
देवर्षिमुपलभ्याह रुषा प्रस्फुरिताधरः ॥ ३५ ॥

दक्ष उवाच–

अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया ।
असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥

ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ।
विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥

एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ।
पार्षदमध्ये चरसि यशोहानिरपत्रपः ॥ ३८ ॥

ननु भागवता नित्यं भूतानुग्रहकातराः ।
ऋते त्वां सौहृदघ्नं वै वैरकारमवैरिणाम् ॥ ३९ ॥

नेत्थं पुंसो विरागः स्यात् त्वया केवलिना विना ।
मन्यसे यद्युपशमं स्नेहपाशनिवर्तनम् ॥ ४० ॥

नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् ।
निर्विद्यते स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥

यन्नस्त्वं कर्मबद्धानां साधूनां गृहमेधिनाम् ।
कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥ ४२ ॥

तन्तुकृन्तनयानां त्वमभद्रमचरः पुनः ।
तस्माल्लोकेषु ते मूढ न भवेद् भ्रमतः पदम् ॥ ४३ ॥

श्रीशुक उवाच–

प्रतिजग्राह तद् बाढं नारदः साधुसम्मतः ।
एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः

श्रीशुक उवाच–
ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा ।
षष्टिं सञ्जनयामास दुहितॄः पितृवत्सलाः ॥ १ ॥

ददौ स दश धर्माय कश्यपाय त्रयोदश ।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ।
भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्यस्य चापराः ॥ २ ॥

नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ।
यासां प्रसूतिप्रभवैर्लोका आपूरितास्त्रयः ॥ ३ ॥

भानुर्लम्बा ककुब् जामिर्विश्वा साध्या मरुत्वती ।
वसुर्मुहूर्ता सङ्कल्पा धर्मपत्न्यः सुताञ्छृणु ॥ ४ ॥

भानोस्तु वेदऋषभ इन्द्रसेनस्ततो नृप ।
विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥ ५ ॥

ककुभः सङ्कटश्चासीत् कीकटस्तनयो यतः ।
भुवो दुर्गाणि जामेयाः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥

विश्वेदेवास्तु विश्वायामप्रजास्तान् प्रचक्षते ।
साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥

मरुत्वांश्च जयन्तश्च मरुत्वत्यां बभूवतुः ।
जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥ ८ ॥

मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ।
ये वै फलं प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥ ९ ॥

सङ्कल्पायाश्च सङ्कल्पः कामः सङ्कल्पजः स्मृतः ।
वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥ १० ॥

द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुर्विभावसुः ।
द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥ ११ ॥

प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ।
ध्रुवस्य भार्या धरणी त्वसूत विविधाः पुरः ॥ १२ ॥

अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ।
अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥

स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ।
दोषस्य शर्वरी पुत्रः शिंशुमारो हरेः कला ॥ १४ ॥

वस्तोराङ्गिरसी पुत्रो विश्वकर्मा कृतीपतिः ।
ततो मनुश्चाक्षुषोऽभूद् विश्वेसाध्या मनोः सुताः ॥ १५ ॥

विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ।
पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥

भूतस्य भार्या भूता या रुद्रा एकादश स्मृताः ।
सुरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ १७ ॥

रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ।
रुद्रांश्च पार्षदांश्चान्यान् घोरान् प्रेतविनायकान् ॥ १८ ॥

प्रजापतेराङ्गिरसः स्वधा पत्नी पितॄनथ ।
अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती ॥ १९ ॥

कृशाश्वोऽर्चिषि भार्यायां धूमकेतुमजीजनत् ।
धिषणायां वेदशिरा देवलं च सुतं मनुम् ॥ २० ॥

तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनी इति ।
पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥

विनताऽसूत गरुडं साक्षाद् यज्ञेशवाहनम् ।
सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥

कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत ।
दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ।
पुनः प्रसाद्य तं सोमः कला लेभे क्षयेऽर्दिताः ॥ २३ ॥

शृणु नामानि लोकानां मातॄणां शङ्कराणि च ।
अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ॥ २४ ॥

अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ।
मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ॥ २५ ॥

तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः ।
सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ।
ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥ २६ ॥

दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः ।
इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ २७ ॥

अरिष्टायाश्च गन्धर्वाः काष्ठाया द्विशफेतराः ।
सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु ॥ २८ ॥

द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः ।
अयोमुखः शंकुशिराः स्वर्भानुः कपिलोऽरुणः ॥ २९ ॥

पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ।
धूम्रकेशो विरूपाक्षो विप्रचित्तिस्तु दुर्जयः ॥ ३० ॥

स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ।
वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ॥ ३१ ॥

वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः ।
उपदानवी हयशिरा पुलोमा कालिका तथा ॥ ३२ ॥

उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ।
पुलोमां कालिकां च द्वे वैश्वानरसुते नृप ॥ ३३ ॥

उपयेमे च भगवान् कश्यपो ब्रह्मचोदितः ।
पौलोमाः कालिकेयाश्च दानवा युद्धशालिनः ॥ ३४ ॥

तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ।
जघान स्वर्गतो राजन् एक इन्द्रप्रियङ्करः ॥ ३५ ॥

विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ।
राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागतः ॥ ३६ ॥

अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ।
यत्र नारायणो देवः स्वांशेनावतरद् विभुः ॥ ३७ ॥

विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ।
धाता विधाता वरुणो मित्रश्शक्र उरुक्रमः ॥ ३८ ॥

विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम् ।
मिथुनं च महाभाग यमं देवं यमीं तथा ॥ ३९ ॥

सैव भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि ।
छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः ।
कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ४० ॥

अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ।
यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४१ ॥

पूषाऽनपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा ।
योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४२ ॥

त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ।
सन्निवेशस्तयो(स्तया)र्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४३ ॥

तं वव्रिरे सुरगणा स्वस्रीयं द्विषतामपि ।
विमतेन परित्यक्ता गुरुणाऽऽङ्गिरसेन यत् ॥ ४४ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः

राजोवाच–
यस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ।
एतदाचक्ष्व भगवन् शिष्याणामक्रमं गुरौ ॥ १ ॥

श्रीशुक उवाच–
इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः ।
मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २ ॥

विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ।
सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥

विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ।
निषेव्यमाणो भगवान् स्तूयमानश्च भारत ॥ ४ ॥

उपगीयमानो ललितमास्थानाध्यासनाश्रितः ।
पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा ॥ ५ ॥

युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ।
विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥

स यदा परमाचार्यं देवानामात्मनश्च ह ।
नाभ्यनन्दत सम्प्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥

वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ।
नोचचालासनादिन्द्रः पश्यन्नपि समागतम् ॥ ८ ॥

ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः ।
आययौ स्वगृहं तूर्णीं विद्वाञ्छ्रीमदविक्रियाम् ॥ ९ ॥

तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः ।
गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥

अहो वत मयाऽसाधु कृतं वै दभ्रबुद्धिना ।
यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥

को गृध्येत् पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि ।
यथाऽऽसुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥

ये पारमेष्ठ्यधिषणमधितिष्ठन् न कञ्चन ।
प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥

तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ।
ये श्रद्धध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥ १४ ॥

अथाहममराचार्यमगाधधिषणं द्विजम् ।
प्रसादयिष्येऽपिशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥

एवं चिन्तयतस्तस्य मघोनो भगवान् गृहात् ।
बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥

गुरोर्नाधिगतः संज्ञां परीक्षन् भगवान् स्वराट् ।
ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥ १७ ॥

तत् श्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम् ।
देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥ १८ ॥

तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नाङ्गोरुबाहवः ।
ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः ॥ १९ ॥

तांस्तथाऽभ्यर्दितान् वीक्ष्य भगवानात्मभूरजः ।
कृपया परया देव उवाच परिसान्त्वयन् ॥ २० ॥

ब्रह्मोवाच–
अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् ।
ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत ॥ २१ ॥

तस्यायमनयस्यासीत् परेभ्यो वः पराभवः ।
प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत् सुराः ॥ २२ ॥

मघवन् द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात् ।
सम्प्रत्युपचितान् भूयः काव्यमाराध्य भक्तितः ॥
आददीरन् निलयनं ममापि भृगुदेवताः ॥ २३ ॥

त्रिविष्टपं किं गणयन्त्यभेद्यमन्त्रा भृगूणामनुशिक्षितार्थाः ।
न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम् ॥

तद् विश्वरूपं भजताशु विप्रं
तपस्विनं त्वाष्ट्रमथात्मवन्तम् ।
सभाजितार्थान् स विधास्यते वो
यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥

श्रीशुक उवाच–
त एवमुदिता राजन् ब्रह्मणा विगतज्वराः ।
ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥

देवा ऊचुः–
वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ।
कामः सम्पाद्यतां तात पितॄणां समयोचितः ॥ २७ ॥

पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ।
अपि पुत्रवतां ब्रह्मन् किमुत ब्रह्मचारिणाम् ॥ २८ ॥

आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ।
भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः ॥ २९ ॥

दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ।
अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥

तस्मात् पितॄणामार्तानामार्तिं परपराभवम् ।
तपसाऽपनयन् तात सन्देशं कर्तुमर्हसि ॥ ३१ ॥

वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ।
यथाऽञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥

नो(न) गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ।
छन्दोभ्योऽन्यत्र न ब्रह्मन् वयो ज्यैष्ठ्यस्य कारणम् ॥ ३३ ॥

ऋषिरुवाच–
अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ।
स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३४ ॥

विश्वरूप उवाच–
विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ।
कथं नु मद्विधो नाथा लोकेशैरभियाचितः ॥
प्रत्याख्यास्यति यः शिष्यः स एव स्वार्थ उच्यते ॥ ३५ ॥

अकिञ्चनानां हि धनं शिलोञ्छनं
स तेन निर्वर्तितसाधुसत्क्रियः ।
कथं विगर्ह्यं नु करोम्यधीश्वराः
पौरोधसं हृष्यति येन दुर्मतिः ॥ ३६ ॥

तथाऽपि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ।
भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥

श्रीशुक उवाच–
तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ।
पौरोहित्यं ततश्चक्रे परमेण समाधिना ॥ ३८ ॥

सुरद्विषां श्रियं गुप्तामौशनस्याऽपि विद्यया ।
आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥

यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ।
तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥ ४० ॥

यां प्रविश्यासुराञ्छश्वत् कक्ष्यां नारायणात्मिकाम् ।
अजैषीद् वृषभस्तात सिंहः क्षुद्रमृगानिव ॥ ४१ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे सप्तमोऽध्यायः ॥

# अथाष्टमोऽध्यायः

राजोवाच–
यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रैलोक्यां बुभुजे श्रियम् ॥ १ ॥

भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ।
यथाऽऽततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥

श्रीशुक उवाच–
वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥

विश्वरूप उवाच–
धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥

नारायणमयं वर्म सन्नह्येद् भय आगते ।
दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ॥ ५ ॥

पादयोर्जानुनोरूर्वोरुदरे हृदयथोरसि ।
मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ६ ॥

ओं नमो नारायणायेति विपर्ययमथापि वा ।
करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ॥ ७ ॥

प्रणवादियकारान्तमङ्गुल्यंगुष्ठपर्वसु ।
न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि ॥ ८ ॥

षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ।
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ९ ॥

मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः ।
सविसर्गं फडन्तं तु सर्वदिक्षु विनिर्दिशेत् ॥ १० ॥

'ओं विष्णवे नमः'
इत्यात्मानं परं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिरिमं मन्त्रमुदाहरेत् ॥ ११ ॥

ओं ॥ हरिर्विदध्यान्मम सर्वरक्षां
न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचाप-
पाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥

जलेषु मां रक्षतु मत्स्यमूर्ति-
र्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थले च मायावटुवामनोऽव्यात्
त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥

दुर्गेष्वटव्याजिमुखादिषु प्रभुः
पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं
दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १३ ॥

रक्षत्वसौ माऽध्वनि यज्ञकल्पः
स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे
सलक्ष्मणोऽव्याद् भरताग्रजो माम् ॥ १५ ॥

मामुग्रधन्वा अखिलप्रमादा-
न्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः
पायाद् गुणेशः कपिलः कर्मबन्धात् ॥ १६ ॥

सनत्कुमारोऽवतु कामदेवाद्धय-
शीर्षो मां पथि देवहेलनात् ।

कृमिविड्भस्मसंज्ञाऽन्ते यस्येशाभिहितस्य वा ।
भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ २५ ॥

आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ।
मदशोषणमिन्द्रस्य भूयाद् येन सुतो हि मे ॥ २६ ॥

इति भावेन सा भर्तुराचचारासकृत् प्रियम् ।
शुश्रूषयाऽनुरागेण प्रश्रयेण दमेन च ॥ २७ ॥

भक्त्या परमया राजन् मनोज्ञैर्वल्गुभाषितैः ।
मनो जग्राह भावज्ञा सुस्मितापाङ्गवीक्षणैः ॥ २८ ॥

एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ।
बाढमित्याह विवशो नैतच्चित्रं हि योषिति ॥ २९ ॥

विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः ।
स्त्रियं चक्रे स्वदेहार्धं यया पुंसां गतिर्हृता ॥ ३० ॥

एवं शुश्रूषितस्तात भगवान् कश्यपः स्त्रिया ।
प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥ ३१ ॥

कश्यप उवाच–
वरं वरय वामोरु प्रीतस्तेऽहमनिन्दिते ।
स्त्रीणां भर्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥

पतिरेव हि नारीणां दैवतं परमं स्मृतम् ।
मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ ३३ ॥

स एव देवतालिङ्गैर्नामरूपविकल्पितैः ।
इज्यते भगवान् पुंभिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥

तस्मात् पतिव्रता नार्यः श्रेयःकामाः सुमध्यमाः ।
यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥ ३५ ॥

सोऽहं त्वयाऽर्चितो भद्रे ईदृग्भावेन भक्तितः ।
किं ते सम्पादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥

दितिरुवाच–
वरदोऽसि यदि ब्रह्मन् पुत्रमिन्द्रहणं वृणे ।
अमृत्युं मृतपुत्राऽहं येन मे घातितौ सुतौ ॥ ३७ ॥

निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत ।
अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥ ३८ ॥

अहो अर्थेन्द्रियारामो योषिन्मय्येशमायया ।
गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥

कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः ।
धिङ् मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः ॥ ४० ॥

शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ।
हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥

न हि कश्चित् प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति हि ॥ ४२ ॥

प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ।
वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पये ॥ ४३ ॥

इति संचिन्त्य भगवान् मारीचः कुरुनन्दन ।
उवाच किञ्चित् कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥

कश्यप उवाच–
पुत्रस्ते भविता भद्रे इन्द्रहा देवबान्धवः ।
संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥ ४५ ॥

दितिरुवाच–
धारयिष्ये व्रतं ब्रह्मन् ब्रूहि कार्याणि यानि मे ।
यानि चेह निषिद्धानि न व्रतं घ्नन्ति यान्युत ॥ ४६ ॥

कश्यप उवाच–
न हिंस्यात् सर्वभूतानि न शपेन्नानृतं वदेत् ।
न छिन्द्यान्नखरोमाणि न स्पृशेद् यदमङ्गलम् ॥ ४७ ॥

नाप्सु स्नायान्न कुप्येत न सम्भाषेत दुर्जनैः ।
न वसीताधौतवासः स्रजं वा विधृतां क्वचित् ॥ ४८ ॥

नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम् ।
भुञ्जीतोदक्यया दृष्टं पिबेन्नाञ्जलिना त्वपः ॥ ४९ ॥

नोच्छिष्टाऽस्पृष्टसलिला सन्ध्ययामुक्तमूर्धजा ।
अनर्चिताऽसंयतवाक् नासंवीता बहिश्चरेत् ॥ ५० ॥

नाधौतपादाऽप्रयता नार्द्रपान्नाप्युदक्शिराः ।
शयीत नापराङ् नान्यैर्न नग्ना न च सन्ध्ययोः ॥ ५१ ॥

धौतवासा शुचिर्नित्यं सर्वमङ्गलसंयुता ।
पूजयेत् प्रातराशात् प्राग् गोविप्रान् श्रियमच्युतम् ॥ ५२ ॥

स्त्रियो वरवतीश्चार्चेत् स्रग्गन्धबलिमण्डनैः ।
पतिं चार्च्योपतिष्ठेत ध्यायेत् कोष्ठगतं च तम् ॥ ५३ ॥

संवत्सरं पुंसवनं व्रतमेतदविच्युतम् ।
धारयिष्यसि चेत् तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥

श्रीशुक उवाच–
बाढमित्यभ्युपेत्याथ दिती राजन् महामनाः ।
कश्यपात् गर्भमाधत्त व्रतं चाञ्जो दधार सा ॥ ५५ ॥

मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ।
शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत् कविः ॥ ५६ ॥

नित्यं बनात् सुमनसः फलमूलसमित्कुशान् ।
पत्राङ्कुरमृदापश्च काले काल उपाहरत् ॥ ५७ ॥

एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ।
प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥

नाध्यगच्छद् व्रतच्छिद्रं तत्परोऽथ महीपते ।
चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥ ५९॥

एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता ।
अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥

लब्ध्वा तदन्तरं शक्रो निद्रापहृतचेतसः ।
दितेः प्रविष्ट उदरं योगेशो योगमायया ॥ ६१ ॥

चकर्त्त सप्तधा गर्भं वज्रेण कनकप्रभम् ।
रुदन्तं सप्तधैकैकं मा रोदीरिति तान् पुनः ॥ ६२ ॥

ते तमूचुः पीड्यमानाः सर्वे प्राञ्जलयो नृप ।
नो जिघांससि किं त्विन्द्र भ्रातरो मरुतस्तव ॥ ६३ ॥

मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः ।
अनन्यभावान् पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥

न ममार दितेर्गर्भः श्रीनिवासानुकम्पया ।
बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥

सकृदिष्ट्वाऽऽदिपुरुषं पुरुषो याति सात्मताम् ।
संवत्सरं किञ्चिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥

सजूरिन्द्रेण पञ्चाशद् देवास्ते मरुतोऽभवन् ।
व्यपोह्य मातृदोषं ते हरिणा सोमपा कृताः ॥ ६७ ॥

दितिरुत्थाय ददृशे कुमाराननलप्रभान् ।
इन्द्रेण सहितान् देवी पर्यतुष्यदनिन्दिता ॥ ६८ ॥

अथेन्द्रमाह ताताहमादित्यानां भयावहम् ।
अपत्यमिच्छन्त्यचरं व्रतमेतत् सुदुष्करम् ॥ ६९ ॥

एकः संकल्पितः पुत्रः सप्तसप्ताभवन् कथम् ।
यदि ते विदितं पुत्र सत्यं कथय मा मृषा ॥ ७० ॥

इन्द्र उवाच–
अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् ।
लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥ ७१ ॥

कृतो मे सप्तधा गर्भ आसन् सप्त कुमारकाः ।
तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥ ७२ ॥

ततस्तत् परमाश्चर्यं वीक्ष्याध्यवसितं मया ।
महापुरुषपूजायाः सिद्धिः काप्यानुषङ्गिणी ॥ ७३ ॥

आराधनं भगवत ईहमाना निराशिषः ।
ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥

आराध्यात्मप्रदं देवमात्मानं जगदीश्वरम् ।
को वृणीत गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥

तदिदं मम दौर्जन्यं बालिशस्य महीयसि ।
क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥ ७६ ॥

श्रीशुक उवाच–
इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ।
मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥

एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
मङ्गलं मरुतां जन्म किं भूयः श्रोतुमिच्छसि ॥ ७८ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे अष्टादशोऽध्यायः ॥

# अथ एकोनविंशोऽध्यायः

राजोवाच–
व्रतं पुंसवनं ब्रह्मन् भवता यदुदीरितम् ।
तस्य वेदितुमिच्छामो येन विष्णुः प्रसीदति ॥ १ ॥

श्रीशुक उवाच–
शुक्ले मार्गशिरे पक्षे योषिद् भर्तुरनुज्ञया ।
आरभेत व्रतमिदं सार्वकामिकमादितः ॥ २ ॥

निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ।
स्नात्वा शुक्लदती शुक्ले वसीतालङ्कृताम्बरे ॥ ३ ॥

पूजयेत् प्रातराशात् प्राक् भगवन्तं श्रिया सह ।
नमस्ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ।
महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥

यतस्त्वं कृपया भूत्या तेजसा महतौजसा ।
तुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान् विभुः ॥ ५ ॥

विष्णुपत्नि महामाये महापुरुषलक्षणे ।
प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥

ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिः बलिमुपहरामीति । अनेनाहरहर्मन्त्रेण विष्णोरासनार्ध्यपाद्योपस्पर्शनस्नानवासउपवीतभूषणगन्धपुष्पधूपोपहाराद्युपचारांश्च समाहित उपाहरेत् ॥ ७ ॥

हविश्शेषं तु जुहुयादनले द्वादशाहुतीः ।
ओं नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ।
श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ।
भक्त्या सम्पूजयेन्नित्यं यदीच्छेत् सर्वसम्पदः ॥ ८ ॥

प्रणमेद् दण्डवद् भूमौ भक्तिप्रह्वेण चेतसा ।
दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥ ९ ॥

युवां तु विश्वस्य विभू जगतः कारणं परम् ।
इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया ॥ १० ॥

तस्या अधीश्वरः साक्षात् त्वमेकः पुरुषः परः ।
त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग् भवान् ॥ ११ ॥

गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग् भवान् ।
त्वं हि सर्वशरीरात्मा श्रीः शरीरेन्द्रियाशया ॥ १२ ॥

नामरूपे भगवती प्रत्ययस्त्वम(मु)पाश्रयः ।
यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ।
तथेमा उत्तमश्लोक सन्तु सत्या महाशिषः ॥ १३ ॥

इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ।
तन्निस्सार्योपहरणं दत्वाऽऽचमनमर्चयेत् ॥ १४ ॥

ततः स्तुवाना स्तोत्रेण भक्तिप्रह्वेण चेतसा ।
यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १५ ॥

पतिं च परया भक्त्या महापुरुषचेतसा ।
प्रियैस्तैस्तैरुपनमेत् प्रेमशीलः स्वयं पतिः ॥ १६ ॥

बिभृयात् सर्वकर्माणि पत्न्या उच्चावचानि च ।
कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥ १७ ॥

पत्न्यां कुर्यादनर्हायां पतिरेव समाहितः ।
विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात् कथञ्चन ॥ १८ ॥

विप्रान् स्त्रियो वरवतीः स्रग्गन्धबलिमण्डनैः ।
अर्चेदहरहर्भक्त्या देवं नियममास्थिता ॥ १९ ॥

उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ।
अद्यादात्मविशुध्द्यर्थं सर्वकामाप्तये तथा ॥ २० ॥

एतेन पूजाविधिना मासान् द्वादश हायनम् ।
नीत्वा चोपरमेत् साध्वी कार्तिके चरमेऽहनि ॥ २१ ॥

श्वो भूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ।
पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ।
पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २२ ॥

ब्राह्मणान् भोजयेद् भक्त्या त्वन्नाद्यैर्द्वादशात्मवित् ।
तेभ्यो दद्यात्तिलान् राजन् सोदपात्रान्गुडा(निला)न्वितान् ॥

आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ।
प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥ २४ ॥

आचार्यमग्रतः कृत्वा वाग्यतः सुसमाहितः ।
दद्यात् पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम् ॥ २५ ॥

एतच्चरित्वा विधिवद् व्रतं विभो-
रभीप्सितार्थं लभते पुमानिह ।
स्त्रीर्वा तदास्थाय लभेत सौभगं
श्रियं प्रजां जीवपतिं यशो गृहम् ॥ २६ ॥

कन्याऽपि विन्देत समग्रलक्षणं
पतिं त्ववीरा हतकिल्बिषा गतिम् ।
मृतप्रजा जीवसुतान् धनेश्वरी
सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २७ ॥

विन्देद् विरूपा विरुजो विमुच्यते
य आमयावीन्द्रियदेहकल्पः ।
एतत् पठन्नभ्युदये च कर्मण्य-
नन्ततृप्तिं पितृदेवतानाम् ॥ २८ ॥

तुष्टाः प्रयच्छन्ति समस्तकामान्
होमावसाने हुतभुक् श्रीहरिश्च ।
राजन् महन्मरुतां जन्म पुण्यं
दितेर्व्रतं चाभिहितं महत् ते ॥ २९ ॥

॥ इति श्रीमद्भागवते षष्ठस्कन्धे एकोनविंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्त्र्यां
पारमहंस्यां संहितायां षष्ठः स्कन्धः ॥

# सप्तमस्कन्धः

## अथ प्रथमोऽध्यायः

राजोवाच–
समः प्रियः सुहृद् ब्रह्मन् भूतानां भगवान् स्वयम् ।
इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥

न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ।
नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥

इति नः सुमहाभाग नारायणगुणान् प्रति ।
संशयः सुमहान् जातस्तद्भवान् छेत्तुमर्हति ॥ ३ ॥

श्रीशुक उवाच–
साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ।
यद् भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥

गीयते परमं पुण्यं ऋषिभिर्नारदादिभिः ।
नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥

निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ।
स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥

सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
न तेषां युगपद् राजन् ह्रास उल्लाह एव च ॥ ७ ॥

जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् ।
तमसो यक्षरक्षांसि तत्कालानुगुणो भजन् ॥ ८ ॥

ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते ।
विन्दन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥

यदा सिसृक्षुः पुर आत्मनः परो
रजः सृजत्येष पृथक् स्वमायया ।
सत्त्वं विचित्रासु रिरंसुरीश्वरः
शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥

कालं चरन्तं सृजतीश आश्रयः
प्रधानपुंभ्यां नरदेव सत्यकृत् ।
स तत्र तत्रोभयसिद्धिमाप्नुयात्
लिङ्गात्मनो लिङ्गगुणाश्च सन्ति ॥ ११ ॥

य एष राजन्नपि काल ईशिता
सत्त्वं सुरानीकमिवैधयत्यजः ।
तत्प्रत्यनीकानसुरान् सुरप्रियो
रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥ १२ ॥

स वा पुनः स्वसृष्टस्य स्थितिरक्षानुवृत्तये ।
सत्त्वं सुरगणान् विष्णुरुपबृंहयते मुहुः ॥ १३ ॥

अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ।
प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥ १४ ॥

दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ।
वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १५ ॥

तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ ।
पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १६ ॥

युधिष्ठिर उवाच–
अहो ह्यत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि ।
वासुदेवे परे तत्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १७ ॥

एतद् वेदितुमिच्छामः सर्व एव वयं मुने ।
भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १८ ॥

दमघोषसुतः पाप आरभ्य कलभाषणात् ।
सम्प्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिः ॥ १९ ॥

शपतोरसकृद् विष्णुं यद् ब्रह्म परमव्ययम् ।
श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ॥ २० ॥

कथं तस्मिन् भगवति दुरवग्राह्यधामनि ।
पश्यतां सर्वलोकानां लयमीयतुरञ्जसा ॥ २१ ॥

एतद् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ।
ब्रूह्येतदद्भुततमं भगवन्नत्र कारणम् ॥ २२ ॥

श्रीशुक उवाच–
राज्ञस्तद्वच आकर्ण्य नारदो भगवान् ऋषिः ।
तुष्टः प्राह तमाभाष्य शृण्वन्त्याः सदसः कथाः ॥ २३ ॥

नारद उवाच–
निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ।
प्रधानपरयो राजन् अविवेकेन कल्पितम् ॥ २४ ॥
हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा ।
वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ २५ ॥
यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ।
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २६ ॥
तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा ।
स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ॥ २७ ॥
यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २८ ॥
कीटः पेशस्कृता रुद्धः कुड्ये यान्तमनुस्मरन् ।
संरम्भभययोगेन विन्दते तत्सरूपताम् ॥ २९ ॥
एवं कृष्णे भगवति मायामनुज ईश्वरे ।
वैरेण धूतपाप्मानः तमापुरनुचिन्तया ॥ ३० ॥
कामात् स्नेहाद् भयाद् द्वेषाद् यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ ३१ ॥
गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥ ३२ ॥
कतमोऽपि न वेनस्य पञ्चानां पुरुषं प्रति ।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३३ ॥
मातृष्वस्रेयो वश्चैद्यो दन्तवक्त्रश्च पार्थिव ।
पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ ॥ ३४ ॥
युधिष्ठिर उवाच–
कीदृशः कस्य वा शापो हरिदासाभिमर्शनः ।
अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३५ ॥
देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ।
देहसंबन्धसंबन्ध्मेतदाख्यातुमर्हसि ॥ ३६ ॥

नारद उवाच–
एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ।
सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥ ३७ ॥
पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ।
दिग्वाससः शिशून् मत्वा द्वाःस्थौ तान् प्रत्यषेधताम् ॥ ३८ ॥
अशपन् कुपिता एवं युवां वासं न चार्हथः ।
रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ॥ ३९ ॥
पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ।
एवं शप्तौ स्वभवनात् पतन्तौ तैः कृपालुभिः ॥ ४० ॥
प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ।
जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ४१ ॥
हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ।
हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४२ ॥
हिरण्यकशिपुः पुत्रं प्रह्लादं भगवत्प्रियम् ।
जिघांसुरकरोन्नाना यातना मृत्युहेतवे ॥ ४३ ॥
तं सर्वभूतात्मभूतं प्रशान्तं समदर्शनम् ।
भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ॥ ४४ ॥
ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ ।
रावणः कुम्भकर्णश्च सर्वलोकप्रतापिनौ ॥ ४५ ॥
तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ।
रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो ॥ ४६ ॥
तावत्र क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ।
अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४७ ॥
वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्म्यताम् ।
नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४८ ॥
युधिष्ठिर उवाच–
विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ।
ब्रूहि मे भगवन् येन प्रह्लादेऽप्यच्युतात्मनि ॥ ४९ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

नारद उवाच–
भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ।
हिरण्यकशिपू राजन् पर्यतप्यद् रुषा शुचा ॥ १ ॥
आह चेदं रुषा पूर्णः सन्दष्टदशनच्छदः ।
कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम् ॥ २ ॥
करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ।
शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥
हिरण्यकशिपुरुवाच–
भो भो दानव दैतेय द्विमूर्धंस्त्र्यक्ष शम्बर ।
शतबाहो हयग्रीव नमुचे पाक इल्वल ॥ ४ ॥
विप्रचित्ते मम वचः पुलोमन् शकुनादयः ।
शृणुताऽनन्तरं सर्वे क्रियतामाशु मा चिरम् ॥ ५ ॥
सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितस्सुहृत् ।
पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥
तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ।
भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥
मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ।
युद्धप्रियं तर्पयिष्ये भ्रातरं मे हतव्यथः ॥ ८ ॥
तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ ।
विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥
तावद् यात भुवं यूयं ब्रह्मक्षत्रसमेधिताम् ।
सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानकान् ॥ १० ॥
विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ।
देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥ ११ ॥
यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ।
तं तं जनपदं यात सन्दीपयत वृश्चत ॥ १२ ॥
इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः ।
तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥ १३ ॥
पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ।
खेटखर्वटघोषांश्च ददहुः पत्तनानि च ॥ १४ ॥
केचित् खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ।
आजीव्यांश्चिच्छिदुर्वृक्षान् केचित् परशुपाणयः ।
प्रादहञ्छरणान्यन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥
एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः ।
दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥ १६ ॥
हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः ।
कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ १७ ॥
शकुनिं शम्बरं धृष्टं भूतसन्तापनं वृकम् ।
कालनेमिं महानाभं हरिश्मश्रुमथोत्कलम् ॥ १८ ॥
तन्मातरं रुशाद्भानुं दितिं च जननीं गिरा ।
श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वर ॥ १९ ॥
हिरण्यकशिपुरुवाच–
अम्बाम्ब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् ।
रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥
भूतानामिह संवासः प्रपायामिव सुव्रते ।
दैवेनैकत्र नीतानामुन्नीतानां तथाऽध्रुवः ॥ २१ ॥
नित्य आत्माऽव्ययः शुद्धः सर्ववित् सर्वगः परः ।
धत्तेऽसावात्मनो लिङ्गं मायया विसृजन् गुणान् ॥ २२ ॥
यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ २३ ॥
एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ।
याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥
एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना ।
एवं प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः ॥ २५ ॥
संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ।
अविवेकश्च चिन्ता च विवेकस्मृतिरेव च ॥ २६ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यमस्य प्रेतबन्धूनां संवादं तं निबोधत ॥ २७ ॥
उशीनरेष्वभूद् राजा सुयज्ञ इति विश्रुतः ।
सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥ २८ ॥

विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ।
शरनिर्भिन्नहृदयं शयानमसृगाविलम् ॥ २९ ॥

विकीर्णकेशं स्तब्धाक्षं संरम्भाद् दष्टदच्छदम् ।
रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे ॥ ३० ॥

उशीनरेन्द्रं विधिना तथाकृतं
पतिं महिष्यः प्रसमीक्ष्य दुःखिताः ।
हताः स्म नाथेति करैरुरो भृशं
घ्नन्त्यो मुहुस्तत्पदयोरुपापतन् ॥ ३१ ॥

रुदन्त्य उच्चैर्दयिताङ्घ्रिपङ्कजं
सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः ।
विस्रस्तकेशाभरणाः शुचं नृणां
सृजन्त्य आक्रन्दनया विलेपिरे ॥ ३२ ॥

अहो विधात्राऽकरुणेन नः प्रभो
भवान् प्रणीतो दृगगोचरं दशाम् ।
उशीनराणामपि वृत्तिदः पुरा
कृतोऽधुना येन शुचां विवर्धनः ॥ ३३ ॥

त्वया कृतज्ञेन वयं महीपते
कथं विना स्याम सुहृत्तमेन ।
तत्रानुयानं तव वीर पादयोः
शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥

एवं विलपतीनां वै परिगृह्य मृतं पतिम् ।
अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत ॥ ३५ ॥

तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवनम् ।
आह तान् बालको भूत्वा यमः स्वयमुपागतः ॥ ३६ ॥

यम उवाच–
अहो अमीषां वयसाऽधिकानां
विपश्यतां लोकविधिं विमोहः ।
यत्रोद्भवस्तत्र गतं मनुष्यं
स्वयं सधर्मा अनुशोचन्त्यपार्थम् ॥ ३६ ॥

अहो वयं धन्यतमा यदत्र
त्यक्ताः पितृभ्यां न विचिन्तयामः ।
अभक्ष्यमाणा अबला वृकादिभिः
स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥

य इच्छयेशः सृजतीदमव्ययो
य एव रक्षत्यवलुम्पते च यः ।
तस्याबलाः क्रीडनमाहुरीशितु-
श्चराचरं निग्रहसङ्ग्रहे प्रभोः ॥ ३९ ॥

पथि च्युतं तिष्ठति दिष्टरक्षितं
गृहे स्थितं तद्विहतं विनश्यति ।
जीवत्यनाथोऽपि तदीक्षितो वने
गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥

भूतानि तैस्तैर्निजयोनिकर्मभि-
र्भवन्ति काले न भवन्ति सर्वशः ।
न तत्र हात्मा प्रकृतावपि स्थित
स्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥

इदं शरीरं पुरुषस्य मोहजं
यथा पृथग् भौतिकमीयते गृहम् ।
तथोदकैः पार्थिवतैजसैर्जनः
कालेन जातो विकृतो विनश्यति ॥ ४२ ॥

यथाऽनलो दारुषु भिन्न ईयते
यथाऽनिलो देहगतः पृथक् स्थितः ।
यथा नभः सर्वगतं न सज्जते
तथा गुणैः सर्वगुणाश्रयः परः ॥ ४३ ॥

सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ।
यः श्रोता योऽनुवक्तेह न स दृश्येत कर्हिचित् ॥ ४४ ॥

न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ।
यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥ ४५ ॥

भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः ।
भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥ ४६ ॥

यावल्लिङ्गान्वितो ह्यात्मा तावत् कर्मनिबन्धनः ।
ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ४७ ॥

वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ।
यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥

अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः ।
नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥ ४९ ॥

लुब्धको विपिने कश्चित् पक्षिणां निर्मितोऽन्तकः ।
वितत्य जालं विदधे तत्र तत्र प्रलोभनम् ॥ ५० ॥

कुलिङ्गमिथुनं तत्र विचरन् समदृश्यत ।
तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥

साऽसज्जत सिचा तन्त्या महिषी कालयन्त्रिता ।
कुलिङ्गस्तां तथाऽऽपन्नां निरीक्ष्य भृशदुःखितः ॥ ५२ ॥

स्नेहादकल्पः कृपणां पर्यदेवयदातुरः ।
अहो अकरुणो देवः स्त्रिया कृपणया विभुः ॥ ५३ ॥

कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति ।
कामं नयतु मां देवः किमर्द्धेनात्मनो हि मे ॥ ५४ ॥

दीनेन जीवता दुःखं मन्देन विधुरायुषा ।
कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ।
मन्दभाग्या प्रतीक्षन्ते नीडे मे मातरं प्रजाः ॥ ५५ ॥

एवं कुलिङ्गं विरुवन्तमारात् प्रियावियोगातुरमश्रुकण्ठम् ।
तदैव तं शाकुनिकः शरेण विव्याध कालप्रहितो निलीनः ॥

एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः ।
नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥ ५७ ॥

हिरण्यकशिपुरुवाच–
बाल एवं प्रवदति सर्वे विस्मितचेतसः ।
ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥

यम एतदुपाख्याय तत्रैवान्तरधीयत ।
ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत् सांपरायिकम् ।
ततः शोचत मा यूयं परं चात्मानमेव च ॥ ५९ ॥

क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव च ।
स्वपराभिनिवेशेन विनाऽज्ञानेन देहिनः ॥ ६० ॥

नारद उवाच–
इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ।
पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

नारद उवाच–
हिरण्यकशिपू राजन्नजेयमजरामरम् ।
आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥ १ ॥

स तेपे मन्दरद्रोण्यां तपः परमदारुणम् ।
ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २ ॥

जटादीधितिभी रेजे संवर्तार्क इवांशुभिः ।
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥

तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधोलोकानतपद् विष्वगीरितः ॥ ४ ॥

चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः ।
निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥ ५ ॥

तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ।
धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥

दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ।
तस्य चोपशमं ब्रह्मन् विधेहि यदि मन्यसे ॥ ७ ॥

लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तव प्रभो ।
तस्यायं किल सङ्कल्पश्चरतो दुश्चरं तपः ॥ ८ ॥

श्रूयतां किं न विदितं तथापि विनिवेद्यते ।
सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ॥
अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥

तदहं वर्धमानेन तपोयज्ञसमाधिना ।
कालात्मनोश्च नित्यत्वात् साधयिष्ये तथाऽऽत्मनः ॥ १० ॥

अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ।
किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः ॥ ११ ॥

इति शुश्रुम निर्बन्धं तपः परममास्थितः ।
विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १२ ॥

तवासनं हि जगतां पारमेष्ठ्यं जगत्पते ।
भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १३ ॥

इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ।
परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १४ ॥

तं ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ।
पिपीलिकाभिराकीर्ण(र्णं)मेदत्वङ्मांसशोणितम् ॥ १५ ॥

तपन्तं तपसा लोकान् यथा भावितते रविम् ।
विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ॥ १६ ॥

ब्रह्मोवाच–
उत्तिष्ठोत्तिष्ठ भद्रं ते तपः सिद्धोऽसि काश्यप ।
वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ १७ ॥

अद्राक्षमहमेतत् ते हृत्सारं महदद्भुतम् ।
दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १८ ॥

नैतत् पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे ।
निरम्बुर्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥ १९ ॥

व्यवसायेन तेऽनेन दुष्करेणामनस्विभिः ।
तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ॥ २० ॥

ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव ।
मर्त्यस्य ते ह्यमर्त्यस्य दर्शनं न च निष्फलम् ॥ २१ ॥

नारद उवाच–
इत्युक्त्वाऽऽदिभवो देवो भक्षिताङ्गं पिपीलिकैः ।
कमण्डलुजलेनौक्षद् दिव्येनामोघराधसा ॥ २२ ॥

स तत्कीचकवल्मीकात् सह ओजोबलान्वितः ।
सर्वावयवसम्पन्नो वज्रसंहननो युवा ।
उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २३ ॥

स निरीक्ष्याम्बरे देवं हंसवाहनमास्थितम् ।
ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २४ ॥

उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम् ।
हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणत् ॥ २५ ॥

हिरण्यकशिपुरुवाच–
कल्पान्ते कालसृष्टेन योऽन्धेन तमसाऽऽवृतम् ।
अभिव्यनग् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ २६ ॥

आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति ।
रजःसत्वतमोधाम्ने पराय महते नमः ॥ २७ ॥

नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ।
प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥

त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ।
चित्तस्य चित्तिर्मनइन्द्रियाणां पतिर्महाभूतगुणाशयेशः ॥२९॥

त्वं सप्ततन्तून् वितनोषि तन्वा त्रय्या चतुर्होत्रकविद्यया च ।
त्वमेक आत्माऽऽत्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥

त्वमेव कालोऽनिमिषो जनाना-
मायुर्लवाद्यावयवैः क्षिणोषि ।
कूटस्थ आत्मा परमेष्ठ्यजो महान्
त्वं जीवलोकस्य च जीव आत्मा ॥ ३१ ॥

त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद् व्यतिरिक्तमस्ति ।
विद्याकलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत् त्रिपृष्ठः ॥

व्यक्तं विभो स्थूलमिदं शरीरं
येनेन्द्रियप्राणमनोगुणांस्त्वम् ।
भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये
अव्यक्त आत्मा पुरुषः पुराणः ॥ ३३ ॥

अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ।
चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३४ ॥

यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम ।
भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो ॥ ३५ ॥

नान्तर्बहिर्दिवानक्तमन्यस्मादपि चायुधैः ।
न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ३६ ॥

व्यसुभिर्वासुमद्भिर्वा सुरासुरमहोरगैः ।
अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥ ३७ ॥

सर्वेषां लोकपालानां महिमानं तथाऽऽत्मनः ।
तपोयोगप्रभावेन यो न रिष्यति कर्हिचित् ॥ ३८ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

एवं वृतः शतधृतिः हिरण्यकशिपोरथ ।
प्रादात् तत्तपसा प्रीतो वरान् तस्य सुदुर्लभान् ॥ १ ॥

ब्रह्मोवाच–
तातेमे दुर्लभाः पुंसो यान् वृणीषे वरान् मम ।
तथाऽपि वितराम्यङ्ग वरान् यदपि दुर्लभान् ॥ २ ॥

ततो जगाम भगवानमोघानुग्रहो विभुः ।
पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥

एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ।
भगवत्यकरोद् द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥

स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ।
देवासुरमनुष्येन्द्रान् गन्धर्वगरुडोरगान् ॥ ५ ॥

सिद्धचारणविद्याध्रान् ऋषीन् पितृपतीन् मनून् ।
यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनपि ॥ ६ ॥

सर्वसत्वपतीन् जित्वा वशमानीय विश्वजित् ।
जहार लोकपालानां स्थानानि सह तेजसा ॥ ७ ॥

देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ।
महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ ८ ॥

त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ।
यत्र विद्रुमसोपाना महामरकता भुवः ॥ ९ ॥

यत्र स्फटिककुड्यानि वैदूर्यस्तम्भपङ्क्तयः ।
यत्र चित्रवितानानि पद्मरागासनानि च ॥ १० ॥

पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ।
कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ।
रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥ ११ ॥

तस्मिन् महेन्द्रभवने महासुरो
महाबलो निर्जितलोक एकराट् ।
रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः
प्रतापितैरूर्जितचण्डशासनः ॥ १२ ॥

तमङ्ग मत्तं मधुनोरुगन्धिना
विवृत्तताम्राक्षमशेषधिष्ण्यपाः ।
उपासतोपायनपाणिभिर्विना
त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥

जगुर्महेन्द्रासनमोजसाऽऽस्थितं
विश्वावसुस्तुम्बुरुरस्मदादयः ।
गन्धर्वसिद्धा ऋषयोऽस्तुवन् मुहु
र्विद्याधरा अप्सरसश्च पाण्डव ॥ १४ ॥

स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ।
इज्यमानो हविर्भागानग्रहीत् स्वेन तेजसा ॥ १५ ॥

अकृष्टपच्या तस्यासीत् सप्तद्वीपवती मही ।
तथा कामदुघा द्यौश्च नानाश्चर्यपदं नभः ॥ १६ ॥

रत्नाकराश्च रत्नानि तत्पत्न्यश्चोहुरूर्मिभिः ।
क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥

शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान् द्रुमाः ।
दधार लोकपालानामेक एव पृथग् गुणान् ॥ १८ ॥

स इत्थं निर्जितककुबेकराड् विषयान् प्रियान् ।
यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥ १९ ॥

एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ।
कालो महान् व्यतीयाय ब्रह्मशापमुपेयुषः ॥ २० ॥

तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः ।
अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥

तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ।
यद् गत्वा न निवर्तन्ते शान्ताः संन्यासिनोऽमलाः ॥ २२ ॥

इति ते संयतात्मानः समाहितधियोऽमलाः ।
उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३ ॥

ओं नमो भगवते महापुरुषाय महात्मने ।
विशुद्धानुभवानन्दसन्दोहाय यतोऽभयम् ॥ २४ ॥

तेषामाविरभूद् वाणी अरूपा मेघनिस्वना ।
सन्नादयन्ती ककुभः साधूनामभयङ्करी ॥ २५ ॥

मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ।
मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ २६ ॥

ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत् ।
तस्य शान्तिं करिष्यामि कालस्तावत् प्रतीक्ष्यताम् ॥ २७ ॥

यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ।
धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ २८ ॥

निर्वैराय प्रशान्ताय स्वसुताय महात्मने ।
प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २९ ॥

नारद उवाच–
इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ।
न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम् ॥ ३० ॥

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभून्महान् तेषां गुणैर्महदुपासकः ।
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ॥ ३१ ॥

आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ।
दासवत् सन्नतार्याङ्घ्रिः पितृवद् दीनवत्सलः ॥ ३२ ॥

भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः ।
विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥ ३३ ॥

नोद्विग्नचित्तो व्यसनेषु निःस्पृहः
श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।
दान्तेन्द्रियप्राणशरीरधीः सदा
प्रशान्तकामो रहितासुरोऽसुरः ॥ ३४ ॥

यस्मिन् महागुणा राजन् गृह्यन्ते कविभिर्मुहुः ।
न तेऽधुनाऽभिधीयन्ते यथा भगवतीश्वरे ॥ ३५ ॥

यं साधुगाथासदसि रिपवोऽपि सुरा नृप ।
प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः ॥ ३६ ॥

गुणैरलमसङ्ख्येयैर्माहात्म्यं तस्य सूच्यते ।
वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३७ ॥

न्यस्तक्रीडनको बालो जडवत् तन्मनाः सदा ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३८ ॥

आसीनः पर्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन् ।
नानुसन्धत्त एतानि गोविन्दपरिरम्भितः ॥ ३९ ॥

क्वचिद् रुदति गोविन्दचिन्ताचञ्चलचेतनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ ४० ॥

नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४१ ॥

क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ ४२ ॥

स उत्तमश्लोकपदारविन्दयो-
र्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन् परां निर्वृतिमात्मनो मुहु-
र्दुःसङ्गदीनस्य मनःशमं व्यधात् ॥ ४३ ॥

तस्मिन् महाभागवते महाभागे महात्मनि ।
हिरण्यकशिपू राजन् अकरोदघमात्मजे ॥ ४४ ॥

युधिष्ठिर उवाच–
देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ।
यदात्मजाय शुद्धाय पिताऽधात् साधवे अघम् ॥ ४५ ॥

पुत्रान् विप्रतिकूलांश्च पितरः पुत्रवत्सलाः ।
उपालभन्ते शिक्षार्थं नैवाघमपरे यथा ॥ ४६ ॥

किमुतानुवशान् साधून् तादृशान् गुरुदेवतान् ।
एतत् कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ।
पितुः पुत्राय यद् द्वेषो मरणाय प्रयोजितः ॥ ४७ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः

नारद उवाच–
पौरोहित्याय भगवान् वृतः काव्यः किलासुरैः ।
शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥

तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ।
पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥

यत् तत्र गुरुणा प्रोक्तं शुश्रुवे न पपाठ ह ।
न साधु मनसा मेने स्वरूपासद्ग्रहाश्रयम् ॥ ३ ॥

एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ।
पप्रच्छ कथ्यतां वत्स मन्यते साधु यद् भवान् ॥ ४ ॥

प्रह्लाद उवाच–
तत् साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वाऽऽत्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

नारद उवाच–
श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमीहिताः ।
जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥

सम्यग् विधार्यतां बालो गुरुगेहे द्विजातिभिः ।
विष्णुपक्षप्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ७ ॥

गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ।
प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥

वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा ।
बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥

बुद्धिभेदः परकृत उताहो ते स्वतो भवेत् ।
भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥ १० ॥

प्रह्लाद उवाच–
परः स्वश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।
विमोहितधियां दृष्टः तस्मै भगवते नमः ॥ ११ ॥

स यदाऽनुगतः पुंसां पशुबुद्धिर्विभिद्यते ।
अन्य एष तथाऽन्योऽहमिति देहगताऽसती ॥ १२ ॥

स एष आत्मा स्वपरेत्यबुद्धिभि-
र्दुरन्वयानुक्रमणो निरुप्यते ।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो
ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥

यथा भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणौ यदृच्छया ॥ १४ ॥

नारद उवाच–
एतावद् ब्राह्मणायोक्त्वा विरराम महामतिः ।
तं निर्भर्त्स्याथ कुपितः सुदीनो राजसेवकः ॥ १५ ॥

आनीयतामरे वेत्रमस्माकमयशस्करः ।
कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ।
तन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥

इति तं विविधोपायैर्भीषयन् तर्जनादिभिः ।
प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥

तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ।
दैत्येन्द्रं दर्शयामास मातृमृष्टमलंकृतम् ॥ १९ ॥

पादयोः पतितं बालं प्रतिनन्द्याशिषाऽसुरः ।
परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥

आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः ।
आसिञ्चन् विकसद्वक्त्रमिदमाह युधिष्ठिर ॥ २१ ॥

प्रह्लादानूच्यतां तात स्वधीतं किञ्चिदुत्तमम् ।
कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥

प्रह्लाद उवाच–
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥

नारद उवाच–
निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा ।
गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥

हिरण्यकशिपुरुवाच–
ब्रह्मबन्धो किमेतत् ते विपक्षं श्रयताऽसता ।
असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥

सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ।
तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥

गुरुपुत्र उवाच–
न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ।
नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं कद तदात्ममानः ॥

नारद उवाच–
गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ।
न चेद्गुरुमुखीयं ते कुतोऽभद्रासती मतिः ॥ २९ ॥

प्रह्लाद उवाच–
मतिर्न कृष्णे परतः स्वतोऽपि वा मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम् ॥

न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थभावाः ।
अन्धा यथान्धैरुपनीयमाना वाचीशतन्त्यामुरुदाम्नि बद्धाः ॥

नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः ।
महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥

नारद उवाच–
इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ।
अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले ।
आहामर्षरुषाऽऽविष्टः कषायीकृतलोचनः ॥ ३३ ॥

हिरण्यकशिपुरुवाच –
वध्यतामाश्वयं वध्यो निस्सारयत नैर्ऋताः ।
अयं मे भ्रातृहा शोच्यो हित्वा स्वान् सुहृदोऽधमः ॥ ३४॥

पितृव्यहन्तुः पादौ यो विष्णोर्दासवदर्चति ।
विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ॥
सौहृदं दुस्त्यजं पित्रोरत्यजत् पञ्चहायनः ॥ ३५ ॥

परोऽप्यपत्यं हितकृद् यथौषधं
स्वदेहजोऽप्यामयवत् सुतोऽहितः ।
छिन्द्यात् तदङ्गं यदुतात्मनोऽहितं
शेषं सुखं जीवति यद्विसर्जनात् ॥ ३६ ॥

सर्वैरुपायैर्हन्तव्यः सम्भोगशयनासनैः ।
सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३७ ॥

नैर्ऋतास्ते समुद्दिष्टा भर्त्रा वै शूलपाणयः ।
तिग्मदंष्ट्राः करालास्याः ताम्रश्मश्रुशिरोरुहाः ॥ ३८ ॥

नदन्तो भैरवं नादं छिन्धि भिन्धीति वादिनः ।
आसीनं चाहनन् शूलैः प्रह्लादं सर्वमर्मसु ॥ ३९ ॥

परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ।
युक्तात्मन्यफला आसन्नपुण्यस्येव तत्क्रियाः ॥ ४० ॥

प्रयासेऽपिहते तस्मिन् दैत्येन्द्रः परिशङ्कितः ।
चकार तद्वधोपायान् निर्बन्धेन युधिष्ठिर ॥ ४१ ॥

दिग्गजैर्दन्दशूकेन्द्रैरभिचारावपातनैः ।
मायाभिः सन्निरोधैश्च गरदानैरभोजनैः ॥ ४२ ॥

हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ।
न शशाक यदा हन्तुमपापमसुरः सुतम् ॥ ४३ ॥

चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत ।
एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ॥ ४४ ॥

तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ।
वर्तमानोऽविदूरे वै बालोऽप्यजडधीरयम् ॥ ४५ ॥

न विस्मरति मेऽनार्यं शुनःशेप इव प्रभुः ।
अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः ॥ ४६ ॥

नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ।
इति तच्चिन्तया किञ्चिन्म्लानश्रियमधोमुखम् ।
शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४७ ॥

जितं त्वयैकेन जगत्त्रयं भ्रुवो-
र्विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ।
न तस्य चिन्त्यं तव नाथ चक्ष्महे
न वै शिशूनां गुणदोषयोः पदम् ॥ ४८ ॥

इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ।
बुद्धिश्च पुंसो वयसाऽऽर्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥

तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ।
धर्मो ह्यस्योपदेष्टव्यो राज्ञां यो गृहमेधिनाम् ॥ ५० ॥
धर्ममर्थं च कामं च नितरां चानुपूर्वशः ।
प्रह्रादायोचतू राजन् प्रश्रितावनताय च ॥ ५१ ॥
यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् ।
न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥ ५२ ॥

यदाऽऽचार्यः परावृत्तो गृहमेधीयकर्मसु ।
वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५३ ॥

अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ।
उवाच विद्वान् तन्निष्ठां कृपया प्रहसन्निव ॥ ५४ ॥
ते तु तद्गौरवाः सर्वे त्यक्तक्रीडापरिच्छदाः ।
बाला नदूषितधियो द्वन्द्वारामेरितेहितैः ॥ ५५ ॥

पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः ।
तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५६ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः

प्रह्राद उवाच–
हन्तार्भका मे शृणुत वचो वः सर्वतः शिवम् ।
वयस्यान् पश्यत मृतान् क्रीडान्धा मा प्रमाद्यथ ॥ १ ॥

न पुरा विवशा बाला आत्मनोऽर्थे प्रियेपिणः ।
गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम् ॥ २ ॥

यदुक्त्या न प्रबुध्येत सुप्तस्त्वज्ञाननिद्रया ।
न श्रद्दध्यान्मतं तस्य यथाऽन्धो ह्यन्धनायकः ॥ ३ ॥

कः शत्रुः क उदासीनः किं मित्रं चेह आत्मनः ।
भवत्स्वपि नयैः किं स्याद् दैवं संपद्विपत्पदम् ॥ ४ ॥

यो न हिंस्याद् धर्मकाममात्मानं स्वजनेऽवशः ।
पुनः श्रीलोकयोर्हेतुः स मुक्तान्योऽतिदुर्लभः ॥ ५ ॥

कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ ६ ॥

यदा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ।
यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ ७ ॥

सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ।
सर्वत्र लभ्यते दैवाद् यथा दुःखमयत्नतः ॥ ८ ॥

तत् प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ।
न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ९ ॥

ततो यतेत कुशलः क्षेमाय च यमाश्रितः ।
शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ १० ॥

पुंसां वर्षशतं ह्यायुः तदर्धं चाजितात्मनः ।
निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ११ ॥

मुग्धस्य बाल्यकौमारैः क्रीडतो याति विंशतिः ।
जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ १२ ॥

दुरापूरेण कामेन मोहेन च बलीयसा ।
शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ १३ ॥

पश्यध्वं मतिवैषम्यं ज्ञातीनां नः कुटुम्बिनाम् ।
श्रेयोविघातादायासादीहतामनु संसृतिम् ॥ १४ ॥

को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः ।
स्नेहपाशैर्दृढं बद्धमुत्सहेत विमोचितुम् ॥ १५ ॥
को न्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि य ईप्सितः ।
यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १६ ॥

कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ।
सुहृत्सुतस्नेहवशः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥१७॥

प्रत्ताः स्मरंस्ता दुहितृर्हृदय्या
भ्रातॄन् स्वसॄर्वा पितरौ च दीनौ ।
गृहान् मनोज्ञान् रुचिरच्छदांश्च
वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ १८ ॥

त्यजेत कोशस्य इवेहमानः कर्माणि लोभादवितृप्तकामः ।
औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥

कुटुम्बपोषाय च यन्निजायुर्न बुध्यतेऽर्थं विहितं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥

वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ।
प्रेत्येह चाऽथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥

विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन् स्वलोकाय न कल्पते वै ।
यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥

यतो न कश्चित् क्व च कुत्र विद्वान्
दीनं स्वमात्मानमलं समर्थः ।
विमोचितुं वामदृशां विहार-
क्रीडामृगो यन्निगडोऽक्षिसर्गः ॥ २३ ॥

ततो विदूरात् परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु ।
उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः ॥ २४ ॥

न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ।
आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ २५ ॥

परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु ।
भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २६ ॥

गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ।
एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २७ ॥

प्रत्यगात्मस्वरूपेण कालरूपेण च स्वयम् ।
व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २८ ॥

केवलानुभवानन्दस्वरूपः परमेश्वरः ।
माययाऽन्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २९ ॥

तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम् ।
भावमासुरमुन्मुच्य तया तुष्यत्यधोक्षजः ॥ ३० ॥

तुष्टे च तत्र किमलभ्यमनन्त आद्ये
किं तैर्गुणव्यतिकरैरिह येऽनुसिद्धाः ।
धर्मादिभिः किमगुणेन च काङ्क्षितेन
सारं जुषां चरणयोरुपगायतां नः ॥ ३१ ॥

धर्मार्थकाम इति यो विहितस्त्रिवर्ग
ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यम् ।
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ ३२ ॥

ज्ञानं तदेतदमलं दुरवापमाह
नारायणो नरसखः किल नारदाय ।
एकान्तिनां भगवतस्तदकिञ्चनानां
पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात् ॥ ३३ ॥

श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ।
धर्मं भागवतं शुद्धं नारदाद् देवदर्शनात् ॥ ३४ ॥

दैत्यपुत्रा ऊचुः–
प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ।
एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरः ॥ ३५ ॥

बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ।
छिन्धि नः संशयं सौम्य स्याच्चेद् विस्रम्भकारणम् ॥ ३६ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः

नारद उवाच–
एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ।
उवाच स्मयमानस्तान् स्मरन् मदनुशासनम् ॥ १ ॥

प्रह्लाद उवाच–
पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् ।
युद्धोद्योगं परं चक्रुर्विबुधा दानवान् प्रति ॥ २ ॥

पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ।
पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥

तेषामतिबलोद्योगं निशम्यासुरयूथपाः ।
वध्यमानाः सुरैर्भीताः दुद्रुवुः सर्वतो दिशम् ॥ ४ ॥

कलत्रपुत्रवित्ताप्तान् गृहान् पशुपरिच्छदान् ।
नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥

व्यलुम्पन् राजशिबिरममरा जयकाङ्क्षिणः ।
इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥

नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ।
यदृच्छयाऽऽगतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥

प्राह मैनां सुरपते नेतुमर्हस्यनागसीम् ।
मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम् ॥ ८ ॥

इन्द्र उवाच–
आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ।
आस्यतां यावत् प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥

नारद उवाच–
अयं निष्किल्बिषः साक्षान्महाभागवतो महान् ।
त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली ॥ १० ॥

इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन् वचः ।
अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥

ततो नो मातरमृषिः समानीय निजाश्रमम् ।
आश्वास्येहोष्यतां भद्रे यावत् ते भर्तुरागमः ॥ १२ ॥

तथेत्यवात्सीद् देवर्षेरन्ति साऽप्यकुतोभया ।
यावद् दैत्यपतिर्घोरात् तपसो न न्यवर्तत ॥ १३ ॥

ऋषिं पर्यचरत् तत्र भक्त्या परमया सती ।
अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥

ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ।
धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम् ॥ १५ ॥

तत् तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे ।
ऋषिणाऽनुगृहीतं मां नाधुनाप्यजहात् स्मृतिः ॥ १६ ॥

भवतामपि भूयान्मे यदि श्रद्दधते वचः ।
वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥

जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ।
फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग् वश्यो व्यापकोऽसङ्ग्यनावृतः ॥ १९ ॥

एतैर्द्वादशभिर्विद्वान् आत्मनो लक्षणैः परैः ।
अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥

हेमं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ।
क्षेत्रेषु देहेषु तथाऽऽत्मयोगैरध्यात्मविद् ब्रह्मगतिं लभेत ॥

अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ।
विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥

देहस्तु सर्वसङ्घातो जगत् तस्थुरिति द्विधा ।
अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत् त्यजन् ॥ २३ ॥

अन्वयव्यतिरेकेण विवेकेनागतात्मना ।
सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ।
ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥

एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ।
सरूपमात्मनो धत्ते गन्धैर्वायुरिवान्वयात् ॥ २६ ॥

एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः ।
अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवाप्यते ॥ २७ ॥

मनोमयत्वात् सर्वार्थाः स्वप्नजागरयोः समाः ।
दृष्टानर्थानपि ध्यातुः शोकमोहभयप्रदाः ॥ २८ ॥

तस्माद् भवद्भिः कर्तव्यः कर्मणां त्रिगुणात्मनाम् ।
बीजनिर्हरणे योगः प्रवाहोपरमो धियः ॥ २९ ॥

तत्रोपायसहस्राणामयं भगवतोदितः ।
यदीश्वरे भगवति भक्तिः स्यान्नान्यथा रतिः ॥ ३० ॥

गुरुशुश्रूषया भक्त्या सर्वलाभार्पणेन च ।
सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥ ३१ ॥

श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् ।
तत्पदाम्बुरुहध्यानात् तल्लिङ्गेक्षार्हणादिभिः ॥ ३२ ॥

हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ।
इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥ ३३ ॥

एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया संलभते रतिम् ॥ ३४ ॥

निशम्य कर्माणि गुणानतुल्यान्
वीर्याणि लीलातनुभिः कृतानि ।
यदाऽऽतिहर्षोत्पुलकाश्रुगद्गदः
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३५ ॥

यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्मगतिर्गतत्रपः ॥

तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥

अधोक्षजालापमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् ।
तद् ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥

कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः ।
अस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः॥

रायः कलत्रं पशवः सुतादयो
गृहा मही कुञ्जरकोशभूतयः ।
सर्वार्थकामाः क्षणभङ्गुरायुषः
कुर्वन्ति मर्त्यस्य कियत् प्रियं चलाः ॥ ४० ॥

एवं हि लोकाः क्रतुभिः कृता अमी
क्षयिष्णवः सातिशया न निर्मलाः ।
तस्माददृष्टश्रुतदूषणं परं
भक्त्यैकमीशं भजतात्मलब्धये ॥ ४१ ॥

यदर्थमिह कर्माणि विध्यङ्गान्यसकृन्नरः ।
करोत्यतो विपर्यासममोघं विन्दते फलम् ॥ ४२ ॥

सुखाय दुःखमोक्षाय संकल्प इह कर्मणः ।
सदाऽऽप्नोतीहया दुःखमनीहायां सुखोत्रतिम् ॥ ४३ ॥

कामान् कामयतेऽकाम्यान् यदर्थ इह पूरुषः ।
स वै देहस्तु पारक्यो भङ्गुरो यात्युपैति च ॥ ४४ ॥

किमु व्यवहितापत्यदारागाराधनादयः ।
राज्यकोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४५ ॥

किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ।
अनर्थैरर्थसंकाशैर्नित्यानन्दमहोदधेः ॥ ४६ ॥

निरूप्यतामिह स्वार्थः कियान् देहभृतोऽसुराः ।
निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४७ ॥

कर्माण्यारभते देही देहेनात्मानुवर्तिना ।
कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४८ ॥

तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ।
भजतानीहयाऽऽत्मानमनीहं हरिमीश्वरम् ॥ ४९ ॥

सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ।
भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ५० ॥

देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन् मुकुन्दचरणं स्वस्तिमान् स्याद् यथा वयम् ॥ ५१ ॥

नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ५२ ॥

न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनम् ॥ ५३ ॥

ततो हरौ भगवति भक्तिं कुरुत दानवाः ।
आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५४ ॥

दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ।
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५५ ॥

एतावानेव लोकेऽस्मिन् पुंसां स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत् सर्वत्र तदीक्षणम् ॥ ५६ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः

नारद उवाच–
अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ।
जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥ १ ॥

अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् ।
आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद् यथा ॥ २ ॥

श्रुत्वा तदप्रियं दैत्यो दुस्सहं तनयानयम् ।
कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥

क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् ।
आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥ ४ ॥

प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् ।
सर्पः पदाऽऽहत इव श्वसन् प्रकृतिदारुणः ॥ ५ ॥

हिरण्यकशिपुरुवाच–
हे दुर्विनीत मन्दात्मन् कुलभेदकराधम ।
स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाऽद्य यमक्षयम् ॥ ६ ॥

क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः ।
तस्य मेऽभिहितं मूढ शासनं किंबलोऽत्यगाः ॥ ७ ॥

प्रह्लाद उवाच–
न केवलं मे भवतश्च राजन् स वै बलं वलिनां चापरेषाम् ।
परावरेषां स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥

स ईश्वरः काल उरुक्रमोऽसावोजः सहः सत्त्वबलेन्द्रियात्मा ।
स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ९ ॥

जह्यासुरं भावमिमं त्वमात्मनः
समं मनो धत्स्व न सन्ति विद्विषः ।
ऋतेऽजितादात्मन उत्पथस्थितात्
तद् विद्धनन्तस्य महत् समर्हणम् ॥ १० ॥

दस्यून् पुरं पण्णविजित्य लुम्पतो
मन्यन्त एके स्वजिता दिशो दश ।
जितात्मनो ज्ञस्य समस्य देहिनां
साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥

हिरण्यकशिपुरुवाच–
व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन् ननु स्युर्विक्लुता गिरः ॥ १२ ॥

यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
कासौ यदि स सर्वत्र कस्मात् स्तम्भे न दृश्यते ॥ १३ ॥

सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ।
गोपायेत हरिस्त्वाऽद्य यस्ते शरणमीप्सितः ॥ १४ ॥

नारद उवाच–
एवं दुरुक्तैर्मुहुरर्दयन् रुषा
सुतं महाभागवतं महासुरः ।
खड्गं प्रगृह्योत्पतितो वरासनात्
स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १५ ॥

तदैव तस्मिन् निनदोऽतिभीषणो
बभूव येनाण्डकटाहमस्फुटत् ।
यं वै स्वधिष्ण्योपगतं ह्यजादयः
श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे ॥ १६ ॥

अभिक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ।
अन्तः सभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥

सत्यं विधातुं निजभृत्यभाषितं
व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन्
स्तम्भे सभायां नमृगं नमानुषम् ॥ १८ ॥

ससत्वमेवं परितो विपश्यन्
स्तम्भस्य मध्यादनु निर्जिहानम् ।
नायं मृगो नापि नरो विचित्र-
महो किमेतन्नृमृगेन्द्ररूपम् ॥ १९ ॥

मीमांसमानस्य समुत्थितोऽग्रतो
नृसिंहरूपस्तदलं भयानकम् ।
प्रतप्तचामीकरचण्डलोचनं
स्फुरत्सटाकेसरजृम्भिताननम् ॥ २० ॥

करालदंष्ट्रं करवालचञ्चलं
क्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम् ।
स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुत-
व्यात्तास्यनासं हनुभेदभीषणम् ॥ २१ ॥

दिवि स्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षः स्थलमल्पमध्यमम् ।
चन्द्रांशुगौरैश्छुरितं तनूरुहै-
र्विष्वग्भुजानीकशतैर्नखायुधैः ॥ २२ ॥

दुरासदं सर्वनिजेतरायुध-
प्रवेकविद्रावितदैत्यदानवम् ।
प्रायेण मेऽयं हरिणोरुमायिना
वधः स्मृतोऽनेन समुद्यतस्य किम् ॥ २३ ॥

एवं ब्रुवंस्त्वभ्यपतद् गदायुधो
नदन् नृसिंहं प्रति दैत्यकुञ्जरः ।
अलक्षितोऽग्नौ पतितः पतङ्गमो
यथा नृसिंहौजसि सोऽसुरस्तथा ॥ २४ ॥

न तद् विचित्रं खलु सत्वधामनि
स्वतेजसा यो नु पुराऽपिबत् तमः ।
ततोऽभिपद्याभ्यहनन्महासुरो
रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥

तं विक्रमन्तं सगदं गदाधरो
महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ।
स तस्य हस्तोत्कलितस्तदाऽसुरो
विक्रीडतो यद्वदहिर्गरुत्मतः ॥ २६ ॥

असाध्वमन्यन्त हतौकसोऽमरा
घनच्छदा भारत सर्वधिष्ण्यपाः ।
तं मन्यमानो निजवीर्यशङ्कितं
यद्धस्तमुक्तो नृहरिं महासुरः ॥ २७ ॥

पुनस्तमासज्जत खड्गचर्मणी
प्रगृह्य वेगेन गतश्रमो मृधे ।
तं श्येनवेगं शतचन्द्रवर्त्मभि-
श्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ २८ ॥

कृत्वाऽट्टहासं खरकेसरोल्बणो
निमीलिताक्षं जगृहे महाजवः ।

विष्वक् स्फुरन्तं ग्रहणातुरं हरि-
र्व्यालो यथाऽऽखुं कुलिशाक्षतत्वचम् ॥ २९ ॥

द्वार्यूरुवापात्य ददार लीलया
नखैर्यथाऽहिं गरुडो महाविषम् ।
संरम्भदुष्प्रेक्ष्यकरालोचनो
व्यात्ताननान्तं विलिहन् स्वजिह्वया ॥ ३० ॥

असृग्लवाक्तारुणकेसराननो
यथाऽऽन्त्रमाली द्विपहत्यया हरिः ।
नखाङ्कुरोत्पाटितहृत्सरोरुहं
विसृज्य तस्यानुचरानुदायुधान् ॥ ३१ ॥

अहन् समस्तान्नखशस्त्रपाणिभि-
र्दोर्दण्डयूथानुपथान् सहस्रशः ।
सटावधूता जलदाः परापतन्
ग्रहाश्च तद्दृष्टिविनिष्टरोचिषः ॥ ३२ ॥

अम्भोधयः श्वासहता विचुक्षुभु-
र्निर्ह्रादभीता दिगिभा जहुर्दिशः ।
द्यौस्तत्सटोत्क्षिप्तविमानसंकुला
प्रोत्सर्पत क्ष्मा च पदाऽतिपीडिता ॥ ३३ ॥

शैलाः समुत्पेतुरमुष्य रंहसा
तत्तेजसा खं ककुभो न रेजिरे ।
ततः सभायामुपविष्टमुत्तमे
नृपासने सम्भृततेजसं विभुम् ॥ ३४ ॥

अलक्षितद्वैरथमत्यमर्षणं
प्रचण्डवक्त्रं न बभाज कश्चन ।
निशाम्य लोकत्रयमस्तकज्वरं
तमादिदैत्यं हरिणा हतं मृधे ॥ ३५ ॥

प्रहर्षवेगोत्कलितानना मुहुः
प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ।
तदा विमानावलिभिर्नभःस्थलं
दिदृक्षतां संकुलमास नाकिनाम् ॥ ३६ ॥

सुरानका दुन्दुभयो विनेदिरे गान्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥ ३७ ॥

त उपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः ।
ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ ३८ ॥

मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः ।
यक्षाः किम्पुरुषास्तात वेतालाः सह किन्नराः ॥ ३९ ॥

ते विष्णुपार्षदाः सर्वे सुनन्दकुमुदादयः ।
मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ।
ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ ४० ॥

ब्रह्मोवाच–

नतोऽस्म्यनन्ताय दुरन्तशक्तये
विचित्रवीर्याय पवित्रकर्मणे ।
विश्वस्य सर्गस्थितिसंयमान् गुणैः
स्वलीलया सन्दधतेऽव्ययात्मने ॥ ४१ ॥

रुद्र उवाच–

कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः ।
तत्सुतं पाह्यनुसृतं भक्तं ते भक्तवत्सल ॥ ४२ ॥

इन्द्र उवाच–

प्रत्यानीताः परम भवता त्रायता नः स्वभागा
दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ।
कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते
मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥ ४३ ॥

ऋषय ऊचुः–

त्वं नस्तपः परममात्थ यदात्मतेजो
येनेदमादिपुरुषात्मगतं ससर्क्थ ।
तद् विप्रलुप्तममुनाद्य शरण्यपाल
रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४४ ॥

पितर ऊचुः–

श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजै-
र्दत्तानि तीर्थसमयेऽपि तिलाम्बु चापिवत् ।
तस्योदरान्नखविदीर्णवपाद् य आर्च्छत्
तस्मै नमो भगवतेऽखिलकर्मगोप्त्रे ॥ ४५ ॥

सिद्धा ऊचुः–

यो नो गतिं योगसिद्धामसाधुरहार्षीद् योगतपोबलेन ।
नानादर्पं तं नखैर्विददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥

विद्याधरा ऊचुः –
विद्यां पृथग्धारणयाऽनुरुद्धां
न्यषेददज्ञो बलवीर्यदृप्तः ।
स येन सङ्ख्ये पशुवद्धतस्तं
महानृसिंहं प्रणताः स्म नित्यम् ॥ ४६ ॥

नागा ऊचुः –
येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ।
तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ४८ ॥

मनव ऊचुः –
मनवो वयं तव निदेशकारिणो
दितिजेन देव परिभूतसेतवः ।
भवता खलः स उपसंहृतः प्रभो
करवाम ते किमनुशाधि किङ्करान् ॥ ४९ ॥

प्रजापतय ऊचुः–
प्रजेशा वयं ते परेशाभिसृष्टा न
येन प्रजा वै सृजामो निषिद्धाः ।
स एष त्वया भिन्नवक्षास्तु शेते
जगन्मङ्गलं सत्वमूर्तेऽवतारः ॥ ५० ॥

गन्धर्वा ऊचुः–
वयं विभो ते नटनाट्यगायका
येनात्मसाद् वीर्यबलौजसा कृताः ।
स एष नीतो भवता दशामिमां
किमुत्पथस्थः कुशलाय कल्पते ॥ ५१ ॥

चारणा ऊचुः–
हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः ।
य एष साधुहृच्छयस्त्वयाऽसुरः समापितः ॥ ५२ ॥

यक्षा ऊचुः–
वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञै
स्त इह दितिसुतेन प्रापिता वाहकत्वम् ।
अनुजनपरितापं तत्कृतं जानता ते
नरहर उपनीतः पञ्चतां पञ्चविंश ॥ ५३ ॥

किंपुरुषा ऊचुः–
वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वरः ।
अयं कापुरुषो नष्टो धिक्कृतः साधुभिर्यतः ॥ ५४ ॥

वेताला ऊचुः–
सभासु सत्रेषु तवामलं यशो
गीत्वा सपर्यां महतीं लभामहे ।
यस्तान् व्यनैषीद् भृशमेष दुर्जनो
दिष्ट्या हतस्ते भगवन् यथाऽऽमयः ॥ ५५ ॥

किन्नरा ऊचुः–
वयमीश किन्नरगणास्तवानुगा
दितिजेन विष्टिममुनाऽनुकारिताः ।
भवता हरे स वृजिनोऽवसादितो
नरसिंह नाथ विभवाय नो भव ॥ ५६ ॥

विष्णुपार्षदा ऊचुः–
अद्यैतद्धरिनररूपमद्भुतं ते
दृष्टं नः शरणद सर्वलोकशर्म ।
सोऽयं ते विधिकर ईश विप्रशापा-
त्तस्येदं निधनमनुग्रहाय विद्मः ॥ ५७ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धेऽष्टमोऽध्यायः ॥

## अथ नवमोऽध्यायः

नारद उवाच–
एवं सुरादयः सर्वे ब्रह्मरुद्रपुरस्सराः ।
नोपैतुमशकन् मन्युसंरम्भं सुदुरासदम् ॥ १ ॥

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ।
अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ॥ २ ॥

प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके ।
तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥

तथेति शनकै राजन् महाभागवतोऽर्भकः ।
उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ४ ॥

स्वपादमूले पतितं तमर्भकं
विलोक्य देवः कृपया परिप्लुतः ।

उत्थाप्य तच्छीर्ष्ण्यदधात् कराम्बुजं
कालाहिनिर्दिष्टधियां कृताभयम् ॥ ५ ॥

स तत्करस्पर्शधुताखिलाशुभः
सपद्यभिव्यक्तपरात्मदर्शनः ।
तत्पादपद्मं हृदि निर्वृतो दधौ
हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥

अस्तौषीद् हरिमेकाग्रमनसा सुसमाहितः ।
प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ७ ॥

प्रह्लाद उवाच–

ब्रह्मादयः सुरगणाः मुनयोऽथ सिद्धाः
सत्त्वैकतानमतयो वचसां प्रवाहैः ।
नाराधितुं पुरुगुणैरधुनापि पिप्रुः
किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥

मन्ये धनाभिजनरूपतपःश्रुतौज-
स्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो
भक्त्या तुतोष भगवान् ननु यूथपाय ॥ ९ ॥

विप्राद् द्विषड्गुणयुतादरविन्दनाभ
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनात्मगेह
प्राणः पुनाति सकलं न तु भूरिमानः ॥ १० ॥

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद् यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११ ॥

तस्मादहं विगतविक्लव ईश्वरस्य
सर्वात्मना न हि गृणामि यथामनीषम् ।
नीचोऽजया गुणविसर्गमनुप्रविष्टः
पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥

सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो
ब्रह्मादयो वयमिवेश न चोद्विजन्तः ।
क्षेमाय भूतय उतात्मसुखाय चाऽस्य
विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥

तद् यच्छ मन्युमसुरश्च हतस्त्वयाऽद्य
मोदेत साधुरपि वृश्चिकसर्पहत्या ।
लोकाश्च निर्वृतिमिताः प्रतियान्ति सर्वे
रूपं नृसिंहविभयाय जनाः स्मरन्ति ॥ १४ ॥

नाहं बिभेम्यजित तेऽतिभयानकास्य
जिह्वाग्निनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ।
आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णा
न्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्र
संसारचक्रकदनात् कृशतां प्रणीतः ।
बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं
प्रीतापवर्गमरणं समियां कदा नु ॥ १६ ॥

यस्मात् प्रियाप्रियवियोगसुयोगजन्म
शोकाग्निना सकलयोनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाऽहं
भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥

सोऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास्तव नृसिंह विरिञ्चगीताः ।
अञ्जस्तराम्यनुगृणन् गुणविप्रमुक्तो
दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १८ ॥

बालस्य नेह शरणं पितरौ नृसिंह
आर्तस्य चागदमुदन्वति मज्जतो नौः ।
तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्ट
स्तावत्विभो तनुभृतां त्वदुपेक्षितानाम् ॥ १९ ॥

यस्मिन् यतो यर्हि येन च यस्य यस्माद्
यस्मै यथा यदुत यस्त्वपरः परो वा ।
भावः करोति विकरोति पृथक् स्वभावः
सञ्चोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥

माया मनः सृजति कर्ममयं बलीयः
कालेन चोदितगुणानुमतेन पुंसः ।
छन्दोमयं यदजयार्पितषोडशारं
संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥ २१ ॥

स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना
कालो वशीकृतविसृज्यविसर्गशक्तिः ।
चक्रे विसृष्टमजयेश्वर षोडशारे
निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् ॥ २२ ॥

दृष्टा मया दिवि विभोऽखिलधिष्ण्यपाना
मायुः श्रियो विभव इच्छति यान् जनोऽयम् ।
येऽस्मत्पितुः कुपितहासविजृम्भितभ्रू
विस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २३ ॥

तस्मादमूस्तनुभृतामहमाशिषो ज्ञः
आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात् ।
नेच्छामि ते विलुलिता गुरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २४ ॥

कुत्राशिषः श्रुतिसुखा मृगतृष्णरूपाः
क्वेदं कलेवरमशेषरुजां विरोहम् ।
निर्विद्यते न तु जनो यदपीह विद्वान्
कामानलं मधुलवैः शमयन् दुरापैः ॥ २५ ॥

क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्
जातः सुरेतरकुले क्व तवानुकम्पा ।
न ब्रह्मणो न तु भवस्य न वै रमाया
यन्मेऽर्पितः शिरसि पद्मकरप्रसादः ॥ २६ ॥

नैषा परावरमतिर्भवतो ननु स्यात्
जन्तोर्यथाऽऽत्मसुहृदो जगतस्तथाऽपि ।
संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूप उदयो न परावरत्वम् ॥ २७ ॥

एवं जनं निपतितं प्रभवाहिकूपे
कामाभिकाममनु यः प्रपतन् प्रसङ्गात् ।
कृत्वाऽऽत्मसात् सुरर्षिणा भगवन् गृहीतः
सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥

मत्प्राणरक्षणमनन्त पितुर्वधं च
मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ।
खड्गं प्रगृह्य यदवोचदसद् विधित्सु-
स्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥

एकस्त्वमेव जगदेतदमुष्य यत् त्व-
माद्यन्तयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥

त्वं वा इदं सदसदीश भवांस्ततोऽन्यो
माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद् यस्य जन्मनिधनं स्थितिरीक्षणं च
तद् वै तदेव खलु कालवदष्टितर्वोः ॥ ३१ ॥

न्यस्येदमात्मनि जगद् विलयाम्बुमध्ये
शेषात्मना निजसुखानुभवो निरीहः ।
योगेन मीलितदृगात्मनि वीतनिद्र
स्तुर्यस्थितो ननु तमोऽनुगुणांश्च युंक्षे ॥ ३२ ॥

तस्यैव ते वपुरिदं निजकालशक्त्या
सञ्चोदितं प्रकृतिधर्मिण आत्मगूढम् ।
अम्भस्यनन्तशयनाद्विरमत्समाधेः
नाभेरभूत् स्वकणिकाद्वटवन्महाब्जम् ॥ ३३ ॥

तत्सम्भवः कविरतोऽन्यदपश्यमान
स्त्वां बीजमात्मनि ततं स बहिर्विचिन्त्य ।
नाविन्ददब्दशतमप्सु निमज्जमानो
जातेऽङ्कुरे कथमिहोपलभेत बीजम् ॥ ३४ ॥

स त्वात्मयोनिरति विस्मित आश्रितोऽब्जं
कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं
भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥

एवं सहस्रवदनाङ्घ्रिशिरःकरोरु
नासास्यकर्णनयनाभरणायुधाढ्यम् ।
मायामयं सदुपलक्षणसन्निवेशं
दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६ ॥

तस्मै भवान् हयशिरस्तनुवं च बिभ्रद्
वेदद्रुहावतिबलौ मधुकैटभाख्यौ ।
हत्वाऽनयत् श्रुतिगणांश्च रजस्तमश्च
सत्त्वं तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥

इत्थं नृतिर्यगृषिदेवझषावतारै
र्लोकान् विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥ ३८ ॥

नैतन्मनस्तवकथासु विकुण्ठनाथ
सम्प्रीयते दुरितदुष्टमसाधु तीव्रम् ।
कामातुरं हर्षशोकभयैषणार्तं
तस्मिन् कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥

जिह्वैकतोऽच्युत विकर्षति मा वितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति
र्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ॥

एवं स्वकर्मपतितं भववैतरण्या
मन्योन्यजन्ममरणाशनभीतभीतम् ।
पश्यन् जनं स्वपरविग्रहवैरमैत्रं
हन्तेति पारमतिपिपृहि मूढमस्त्वम् ॥ ४१ ॥

कोऽन्वत्र तेऽखिलगुरो भगवन् प्रयास
उत्तारणेऽस्य भवसम्भवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो
किं तेन ते प्रियजनाननुसेवमानः ॥ ४२ ॥

नैवोद्विजे भवदुरत्ययवैतरण्या
स्त्वद्वीर्यगायनमहामृतपानमत्तः ।
शोचे नु ता विमुखचेतस इन्द्रियार्थ
मायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥

प्रायेण देवमुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजने न परार्थनिष्ठाः ।
नैतान् विहाय कृपणान् विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥

यन्मैथुनादि गृहमेधिसुखं हि तुच्छं
कण्डूयनेन करयोरिव दुःखदुःखम् ।
तृप्यन्ति नेह कृपणा बहुदुःखभाजः
कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥

मौनव्रतश्रुततपोऽध्ययनस्वधर्म
व्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां
वार्ता भवन्त्युत न वाऽत्र तु दाम्भिकानाम् ॥ ४६ ॥

रूपे इमे सदसती तव वेदसृष्टे
बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां
योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥

त्वं वायुरग्निरवनिर्वियदम्बुमात्राः
प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन्
नान्यत् त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥

नैते गुणा न गुणिनो महदादयो ये
सर्वे मनःप्रभृतयः सहदेवमर्त्याः ।
आद्यन्तवन्त उरुगाय विदन्ति हि त्वा
मेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४९ ॥

तत्ते मनो दर्शने दृगपि स्तुतौ च
वाक् कर्मणि ह्यपि करौ श्रवणं कथायाम् ।
संसेवया त्वयि विनेति षडङ्गया किं
भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥

नारद उवाच–
एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ।
प्रह्लादं प्रणतं प्रीतो गतमन्युरभाषत ॥ ५१ ॥

श्रीभगवानुवाच–
प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥

मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५३ ॥

प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवम् ।
श्रेयस्कामा महाभागाः सर्वेषामाशिषां पतिम् ॥ ५४ ॥

नारद उवाच–
एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद् भगवति नैच्छत् तानसुरोत्तमः ॥ ५५ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे नवमोऽध्यायः ॥

# अथ दशमोऽध्यायः

नारद उवाच–
भक्तियोगस्य तत् सर्वमन्तरायतयाऽर्भकः ।
मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥

प्रह्लाद उवाच–
मा मा प्रलोभयोत्पत्त्याऽसक्तं कामेषु तैर्वरैः ।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्तं कामेषु चोदयात् ।
भवान् संसारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥

नान्यथा तेऽखिलगुरोर्घटते करुणात्मनः ।
नष्टदृष्टेस्तमस्यन्धे त्वं पारः पारदर्शिनः ॥ ४ ॥

यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ ॥ ५ ॥

आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ।
न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ॥ ६॥

अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ७ ॥

यदि रासीश मे कामान् वरान् त्वं वरदर्षभ ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥ ८ ॥

इन्द्रियाणि मनः प्राणा आत्मा धर्मो धृतिर्मतिः ।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं येषां नश्यन्ति जन्मना ॥ ९ ॥

विमुञ्चति यदा कामान् मानवो मनसि श्रितान् ।
तर्ह्येव पुण्डरीकाक्ष न भवायावकल्पते
नारदेनोपदिष्टं मे तव मन्त्रमिमं स्मरे ॥ १० ॥

ओं नमो भगवते तुभ्यं पुरुषाय महात्मने ।
हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ ११ ॥

श्रीनृसिंह उवाच–
नैकान्तिनो मे मयि जात्विहाशिष
आशासतेऽमुत्र तथा भवादृशाः ।
तथाऽपि मन्वन्तरमेतदत्र
दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ १२ ॥

कथा मदीया जुषमाणः प्रियास्त्व-
मावेश्य मामात्मनि सन्तमेकम् ।
सर्वेषु भूतेष्वधियज्ञमीशं
यजस्व योगेन च कर्म हिन्वन् ॥ १३ ॥

भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ।
कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥

य एतत् कीर्तयेन्मह्यं त्वया गीतमिदं नरः ।
त्वां च मां च स्मरन् काले कर्मबन्धाद् विमुच्यते ॥ १५ ॥

प्रह्लाद उवाच–
वरं वरय एतत् ते वरदेशान्महेश्वर ।
यदनिन्दत् पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १६ ॥

बद्धामर्षाशयः साक्षात् सर्वलोकगुरुं प्रभुम् ।
भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १७ ॥

तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात् ।
पूतस्तेऽपाङ्गसन्दृष्टस्तदा कृपणवत्सल ॥ १८ ॥

श्रीभगवानुवाच–
त्रिः सप्तभिः पिता पूतः पितृभिः सह तेऽनघ ।
यत् साधोऽस्य कुले जातो भवान् वै कुलपावनः ॥ १९ ॥

यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ।
साधवः समुदाचारास्ते पूयन्तेऽपि कीकटान् ॥ २० ॥

सर्वात्मना न हिंसन्ति भूतग्रामेषु किञ्चन ।
उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥ २१ ॥

भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ।
भवान् मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २२ ॥

कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ।
मदङ्गस्पर्शनेनाङ्ग लोकान् यास्यति सुप्रजाः ॥ २३ ॥

पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ।
मय्यावेश्य मनस्तात कुरु कर्माणि तत्परः ॥ २४ ॥

नारद उवाच–
प्रह्लादोऽपि तथा चक्रे पितुर्यत् साम्परायिकम् ।

यथाऽऽह भगवान् राजन्नभिषिक्तो द्विजोत्तमैः ।
प्रह्लादस्तु तथाऽकार्षीद् राज्यं निहतकण्टकम् ॥ २५ ॥

प्रह्लादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ।
स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २६ ॥

ब्रह्मोवाच–
देवदेवाखिलाध्यक्ष भूतभावन पूर्वज ।
दिष्ट्या ते निहतः पापो लोकसन्तापनोऽसुरः ॥ २७ ॥

योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ।
तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥ २८ ॥

दिष्ट्याऽस्य तनयः साधुर्महाभागवतोऽर्भकः ।
त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २९ ॥

एतद् वपुस्ते भगवन् ध्यायतः प्रयतात्मनः ।
सर्वतो गोप्तृ सन्त्रासान्मृत्योरपि जिघांसतः ॥ ३० ॥

श्रीभगवानुवाच–
मैवंविधोऽसुराणां ते प्रदेयः पद्मसम्भव ।
वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३१ ॥

नारद उवाच–
इत्युक्त्वा भगवान् राजन् ततश्चान्तर्दधे हरिः ।
अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३२ ॥

ततः सम्पूज्य विधिवद् ववन्दे परमेष्ठिनम् ।
भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कलाः ॥ ३३ ॥

ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः ।
दैत्यानां दानवानां च प्रह्लादमकरोत् पतिम् ॥ ३४ ॥

प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ।
स्वधामानि ययू राजन् ब्रह्माद्याः प्रतिपूजिताः ॥ ३५ ॥

एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ।
हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३६ ॥

पुनस्तौ पूर्वशापेन राक्षसौ तौ बभूवतुः ।
कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३७ ॥

शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ।
तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३८ ॥

तावेवाद्य पुनर्जातौ शिशुपालकरूषजौ ।
हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३९ ॥

एनः पूर्वकृतं यत् तद् राजानः कृष्णवैरिणः ।
जहुस्तेऽन्ते तदात्मानः कीटाः पेशस्कृतो यथा ॥ ४० ॥

यथा यथा भगवतो भक्त्या परमया भिदाम् ।
नृपाश्चैद्यादयः साम्यं हरेस्तच्चिन्तया ययुः ॥ ४१ ॥

आख्यातं सर्वमेतत् ते यन्मां त्वं परिपृष्टवान् ।
दमघोषसुतादीनां हरेः साम्यमपि द्विषाम् ॥ ४२ ॥

एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ।
अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४३ ॥

प्रह्लादस्यानुचरितं महाभागवतस्य च ।
भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४४ ॥

सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ।
परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४५ ॥

धर्मो भागवतानां च भगवान् येन गम्यते ।
आख्यानेऽस्मिन् समाख्यातमाध्यात्मिकमशेषतः ॥ ४६ ॥

य एतत् पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ।
कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ॥ ४७ ॥

एतद् य आद्यपुरुषस्य मृगेन्द्रलीलां
दैत्येन्द्रयूथपवधं प्रयतः पठेत ।
दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं
श्रुत्वानुभावमकुतोभयमेति लोकम् ॥ ४८ ॥

यूयं नृलोके बत भूरिभागा
लोकं पुनाना मुनयोऽभियान्ति ।
एषां गृहानावसतीति साक्षाद्
गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ४९ ॥

स वा अयं ब्रह्म महद् विमृग्यं
कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय
आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ५० ॥

न यस्य साक्षाद् भवपद्मजादिभी
रूपं धिया वस्तुतयोपवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः
प्रसीदतामेष स सात्वतां पतिः ॥ ५१ ॥

नारद उवाच–
स एष भगवान् राजन् व्यतनोद् विततं यशः ।
पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥ ५२ ॥

राजोवाच–
कस्मिन् कर्मणि देवस्य यशोऽभृज्जगदीशितुः ।
यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ ५३ ॥

नारद उवाच–
निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ।
मायिनां परमाचार्यं मयं शरणमाययुः ॥ ५४ ॥

स निर्ममे पुरस्तिस्रो हैमरोप्यायसीर्विभुः ।
दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५५ ॥

ताभिस्तेऽसुरसेनान्यो लोकान् त्रीन् सेश्वरान् नृप ।
स्मरन्तो नाशयांचक्रुः पूर्ववैरमलक्षिताः ॥ ५६ ॥

ततस्ते सेश्वरा लोका उपासाद्येश्वरं ततः ।
त्राहि नस्तावकान् देव विनष्टान् त्रिपुरालयैः ॥ ५७ ॥

अथानुगृह्य भगवान् मा भैष्टेति सुरान् विभुः ।
शरं धनुषि सन्धाय पुर्यास्त्रं व्यमुञ्चत ॥ ५८ ॥

ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् ।
यथा मयूखसन्दोहा नादृश्यन्त पुरो यतः ॥ ५९ ॥

तैः स्पृष्टा व्यसवः सर्वे निपेतुस्त्रिपुरौकसः ।
ताननीय महायोगैर्मयः कूपरसेऽक्षिपत् ॥ ६० ॥

सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ।
उत्तस्थुर्मेघदलनाद् वैद्युता इव वह्नयः ॥ ६१ ॥

विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम् ।
तदायं भगवान् विष्णुस्तत्रोपायमकल्पयत् ॥ ६२ ॥

वत्स आसीत् तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ।
प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ ६३ ॥

तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन् विमोहिताः ।
तद् विज्ञाय महायोगी रसपालानिदं जगौ ।
स्मयन् विशोकः शोकार्तान् स्मरन् दैवगतिं च ताम् ॥ ६४॥

देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ।
आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ ६५ ॥

अथासौ शक्तिभिः स्वाभिः शम्भोः प्राधनिकं व्यधात् ।
धर्मज्ञानविरक्त्यादितपोविद्याक्रियादिभिः ॥ ६६ ॥

रथं सूतं ध्वजं वाहं धनुर्वर्म शरादि यत् ।
सन्नद्धो रथमास्थाय सशरं धनुराददे ॥ ६७ ॥

शरं धनुषि सन्धाय मुहूर्तेऽभिजितीश्वरः ।
भगवत्तेजसा गुप्तो ददाह त्रिपुरं नृप ॥ ६८ ॥

दिवि दुन्दुभयो नेदुर्विमानशतसङ्कुले ।
देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ।
अवाकिरन् जगुर्हृष्टा ननृतुश्चाप्सरो गणाः ॥ ६९ ॥

एवं दग्ध्वा पुरस्तिस्रो भगवान् पुरहा नृप ।
ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ ७० ॥

एवंविधान्यस्य हरेः स्वमायया
विडम्बमानस्य नृलोकमात्मनः ।
वीर्याणि गीतान्यृषिभिर्जगद्गुरो-
र्लोकान् पुनानान्यपरं वदामि किम् ॥ ७१ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे दशमोऽध्यायः ॥

# अथ एकादशोऽध्यायः

श्रीशुक उवाच–
श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ।
युधिष्ठिरो दैत्यपतेर्मुदान्वितः पप्रच्छ भूतस्तनयं स्वयम्भुवः ॥

युधिष्ठिर उवाच–
भगवन् श्रोतुमिच्छामि नृणां धर्मं सनातनम् ।
वर्णाश्रमाचारयुतं यत् पुमान् विन्दते परम् ॥ २ ॥

भवान् प्रजापतेः साक्षादात्मजः परमेष्ठिनः ।
सुतानां सम्मतो ब्रह्मन् तपोज्ञानसमाधिभिः ॥ ३ ॥

नारायणपरा विप्रा धर्मं गुह्यं यथा विदुः ।
करुणाः साधवः शान्तास्त्वद्विधा न तथा परे ॥ ४ ॥

नारद उवाच–
नत्वा भगवतेऽजाय लोकानां धर्मसेतवे ।
वक्ष्ये सनातनं धर्मं नारायणमुखाच्छुतम् ॥ ५ ॥

योऽवतीर्यात्मनोंऽशे दाक्षायण्यां तु धर्मतः ।
लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥

धर्ममूलं हि भगवान् सर्ववेदमयो हरिः ।
स्मृतिश्च तद्विदां राजन् येन चात्मा प्रसीदति ॥ ७ ॥

सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥

सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥

अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृपु पाण्डव ॥ १० ॥

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्याऽवनतिः सख्यं दास्यमात्मसमर्पणम् ॥ ११ ॥

नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणसंयुक्तः सर्वात्मा येन तुष्यति ॥ १२ ॥

संस्कारा यत्राविच्छिन्ना स द्विजो वैदिकादयः ।
इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ १३ ॥

जन्मकर्मावदातानां क्रियाश्च निगमोदिताः ।
विप्रस्याध्यापनादीनि ततोऽन्यस्यापरिग्रहः ॥ १४ ॥

राज्ञो वृत्तिः प्रजागोप्तुरविप्राद् वा करादिभिः ।
वैश्यस्तु वार्तावृत्तिः स्यान्नित्यं ब्रह्मकुलानुगः ॥ १५ ॥

शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १६ ॥

वार्ता विचित्रशालीनं यायावर्यं शिलोञ्छनम् ।
विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ।
जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ १७ ॥

ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ।
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ १८ ॥

सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथञ्चन ।
ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम् ॥ १९ ॥

मृतं तु नित्ययाञ्चा स्यात् प्रमृतं कर्षणं स्मृतम् ।
सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ २० ॥

वर्जयेत् तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २१ ॥

शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
दानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २२ ॥

शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ।
ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥ २३ ॥

देवगुर्वार्यगोभक्तिस्त्रिवर्गपरितोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥ २४ ॥

शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया ।
अमन्त्रयज्ञो ह्यस्तेयं सौदृढ्यं गोविप्ररक्षणम् ॥ २५ ॥

स्त्रीणां तु पतिदेवानां तच्छुश्रूषाऽनुकूलता ।
तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २६ ॥

सम्मार्जनोपलेपाभ्यां गृहमण्डनवर्तनैः ।
स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ २७ ॥

कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ।
वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत् पतिम् ॥ २८

सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ।
अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥ २९ ॥

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ ३० ॥

वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत् ।
अचोराणामपापानामन्त्यजान्तेऽवसायिनाम् ॥ ३१ ॥

प्रायः स्वभावविहितो नृणां धर्मो युगे युगे ।
वेददृग्भिः स्मृतो राजन् प्रेत्य चेह च शर्मकृत् ॥ ३२ ॥

वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मणि ।
हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३३ ॥

उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामियात् ।
न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति ॥ ३४ ॥

एवं कामाशयं चित्तं कामानामतिसेवया ।
विरज्येत यथा राजन्नाग्निवत् कामबिन्दुभिः ॥ ३५ ॥

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
यदन्यत्रापि दृश्येत तत् तेनैव विनिर्दिशेत् ॥ ३६ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे एकादशोऽध्यायः ॥

# अथ द्वादशोऽध्यायः

नारद उवाच–
ब्रह्मचारी गुरुकुले वसेद् दान्तो गुरोर्हितम् ।
आचरेद् दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥

सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् ।
सन्ध्ये उभे च यतवाग् जपन् ब्रह्म समाहितः ॥ २ ॥

छन्दांस्यधीयेत गुरोराहूतश्च सुयन्त्रितः ।
उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥

मेखलाजिनवासांसि जटादण्डकमण्डलून् ।
बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥

सायं प्रातश्चरेद् भैक्ष्यं गुरवे तन्निवेदयेत् ।
भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत् क्वचित् ॥ ५ ॥

सुशीलो मितभुग् दक्षः श्रद्दधानो जितेन्द्रियः ।
यावदर्थं व्यवहरेत् स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥

वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः ।
इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः ॥ ७ ॥

केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् ।
गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥

नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् ।
सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥

कल्पयित्वाऽऽत्मना यावदाभासमिदमीश्वरः ।
द्वैतं तावन्न विरमेत् ततो ह्यस्य विपर्ययः ॥ १० ॥

एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ।
गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥

अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु ।
स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥

उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च ।
त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥

दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ।
गृहं वनं वा प्रविशेत् प्रव्रजेत् तत्र वा वसेत् ॥ १४ ॥

अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ।
भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥

एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ।
चरन् विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥

वानप्रस्थस्य वक्ष्यामि नियमान् मुनिसम्मतान् ।
यानातिष्ठन् मुनिर्गच्छेद् ऋषिलोकमिहाञ्जसा ॥ १७ ॥

न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ।
अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ १८ ॥

वन्यैश्चरुपुरोडाशान् निर्वपेत् कालचोदितान् ।
लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ १९ ॥

अग्न्यर्थमेव शरणमुटजं वाद्रिकन्दरम् ।
श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥ २० ॥

केशरोमनखश्मश्रुमलानि जटिलो दधत् ।
कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥ २१ ॥

चरेद् वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ।
द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः ॥ २२ ॥

यदाकल्पः स्वक्रियायां व्याधिभिर्जरयाथवा ।
आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥

आत्मन्यग्नीन् समारोप्य संन्यस्याहं ममात्मताम् ।
कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथार्हतः ॥ २४ ॥

खे खानि वायौ निःश्वासान् तेजस्यूष्माणमात्मवान् ।
अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥ २५ ॥

वाचमग्नौ सवक्तव्यमिन्द्रे शिल्पं करावपि ।
पदानि गतिभिर्विष्णौ रत्योपस्थं प्रजापतौ ॥ २६ ॥

मित्रे पायुं विसर्गं च यथास्थानं विनिर्दिशेत् ।
दिक्षु श्रोत्रं स नादेन स्पर्शेनाध्यात्मनि त्वचम् ॥ २७ ॥

रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत् ।
अप्सु प्रवेशयेद् जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥
मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ २८ ॥

कर्माण्यध्यात्मना रुद्रे यदहंममताः क्रियाः ।
सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥

अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ।
कूटस्थे तच्च महति तदव्यक्तेऽक्षरे तु तत् ॥ ३० ॥

इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम् ।
ज्ञात्वाऽद्वयोऽथ विरमेद् दग्धयोनिरिवानिलः ॥ ३१ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे द्वादशोऽध्यायः ॥

## अथ त्रयोदशोऽध्यायः

नारद उवाच–
कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः
ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥

बिभृयाद् यद्यसौ वासः कौपीनाच्छादनं परम् ।
त्यक्तं न लिङ्गदण्डाभ्यामन्यत् किञ्चिदनापदि ॥ २ ॥

एक एव चरेद् भिक्षुरात्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥

पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये ।
आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥

सुप्तप्रबोधयोः सन्धावात्मनो गतिमात्मदृक् ।
पश्यन् बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥ ५ ॥

नाभिनन्देद् ध्रुवं मृत्युमध्रुवं वा स्वजीवितम् ।
कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥

नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादान् त्यजेत् तर्कान् पक्षं कञ्चिन्न संश्रयेत् ॥ ७ ॥

न शिष्याननुबध्नीत ग्रन्थान् नैवाभ्यसेद् बहून् ।
न व्याख्यामुपजीवेत नारम्भानारभेत् क्वचित् ॥ ८ ॥

न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ।
शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥

अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत् ।
कविर्मूकवदात्मानमदृश्यो दर्शयेन्नृणाम् ॥ १० ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥

तं शयानं धरोपस्थे कावेर्यां सिंहसानुनि ।
रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥

ददर्श लोकान् विचरन् लोकतत्त्वविवित्सया ।
वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥

कर्मणाऽऽकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ।
नाविन्दत जनोऽयं वै सोऽसाविति न वेति च ॥ १४ ॥

तं नत्वाभ्यर्च्य विधिवत् पादयोः शिरसा स्पृशन् ।
विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥

प्रह्लाद उवाच–
बिभर्षि कायं पीवानं सोद्यमो भोगवान् यथा ।
वित्तं नैवाद्य भवतो भोगो वित्तवतामिह ॥
भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १६ ॥

न ते शयानस्य निरुद्यमस्य
ब्रह्मन्नु हार्थो यत एव भोगः ।
अभोगिनोऽयं तव विप्र देहः
पीवा यतस्तद् वद नः क्षमं चेत् ॥ १७ ॥

कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ।
लोकस्य कुर्वतः कर्म शेषे न द्वेष्टि नौषि वा ॥ १८ ॥

नारद उवाच–
स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ।
स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ १९ ॥

ब्राह्मण उवाच–
वेदेदमसुरश्रेष्ठ भवान् नन्वार्यसम्मतः ।
ईहोपरमयोर्नृणां पदमध्यात्मचक्षुषा ॥ २० ॥

यस्य नारायणो देवो भगवान् हृद्गतः सदा ।
भक्त्या केवलया ज्ञिष्टो धुनोति ध्वान्तमर्कवत् ॥ २१ ॥

अथापि ब्रूमहे प्रश्नान् तव राजन् यथाश्रुतम् ।
सम्भाषणीयो हि भवानात्मनः शुद्धिमिच्छता ॥ २२ ॥

तृष्णया भववाहिन्या ग्रास्यकामैरपूर्यया ।
कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २३ ॥

यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ।
स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥ २४ ॥

अत्रापि दम्पतीनां च सुखायान्यापनुत्तये ।
कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २५ ॥

सुखमस्यात्मनो रूपं सर्वेहोपरतेर्हि यत् ।
मनःसंस्पर्शजान् दृष्ट्वा भोगान् शस्तान्न संविशेत् ॥ २६ ॥

इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ।
विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २७ ॥

जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ।
मृगतृष्णामुपाधावेत् तथाऽन्यत्रार्थदृक् स्वतः ॥ २८ ॥

देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः ।
दुःखात्ययं वाऽनीशस्य क्रिया मोघाः कृताः कृताः ॥ २९ ॥

आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ।
मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३० ॥

पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ।
भयादलब्धनिद्राणां सर्वतोऽपि विशङ्किनाम् ॥ ३१ ॥

राजतश्चौरतः शत्रोः स्वजनात् पशुपक्षितः ।
अर्थिभ्यः कालतः स्वस्मात् नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥

शोकमोहभयक्रोधा रागक्लैव्यश्रमादयः ।
यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३३ ॥

मधुकारमहासर्पौ लोकेऽस्मिन् नो गुरूत्तमौ ।
वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३४ ॥

विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् ।
कृच्छ्राप्तं मधु तद्वित्तं हत्वाऽप्यन्यो हरेत् पतिम् ॥ ३५ ॥

अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ।
नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३६ ॥

क्वचिदल्पं क्वचिद् भूरि भुञ्जेऽन्नं स्वाद्वस्वादु वा ।
क्वचिद् भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३७ ॥

श्रद्धयोपहृतं क्वापि कदाचिन्मानवर्जितम् ।
भुञ्जे भुक्त्वाथ कस्मिंश्चिद् दिवा नक्तं यदृच्छया ॥ ३८ ॥

क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ।
वसेऽन्यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम् ॥ ३९ ॥

क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ।
क्वचित् प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४० ॥

क्वचित् स्नातोऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलङ्कृतः ।
रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवत् क्वचित् ॥ ४१ ॥

नाहं निन्दे च न स्तौमि स्वभावविषमं जनम् ।
एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४२ ॥

विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ।
मनो वैकारिके हुत्वा तं मायायां वै जुहोत्यमुम् ॥ ४३ ॥

आत्मानुभूतौ तां मायां जुहुयात् सत्यदृङ् मुनिः ।
ततो निरीहो विरमेत् स्वानुभूत्याऽऽत्मनि स्थितः ॥ ४४ ॥

स्वात्मवृत्तं मयेत्थं ते सुगुप्तमनुवर्णितम् ।
व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्प्रियः ॥ ४५ ॥

नारद उवाच–
धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ।
पूजयित्वा ततः प्रीतः आमन्त्र्य प्रययौ गृहान् ॥ ४६ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे त्रयोदशोऽध्यायः ॥

# अथ चतुर्दशोऽध्यायः

युधिष्ठिर उवाच–
गृहस्थ एतां पदवीं विधिना येन चाञ्जसा ।
यायाद् देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥

नारद उवाच–
साधु पृष्टं महाभाग लोकानामनुगृह्णता ।
तत्त्वेन तदहं वक्ष्ये नैष्कर्म्यं येन कर्मणाम् ॥ २ ॥

गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः ।
वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ ३ ॥

शृण्वन् भगवतोऽभीक्ष्णमवतारकथामृतम् ।
श्रद्दधानो यथाकालमुपशान्तजनावृतम् ॥ ४ ॥

तत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु ।
विमुञ्चेन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ५ ॥

यावदर्थं उपासीनो देहे गेहे च पण्डितः ।
विरक्तो रक्तवत् तत्र नृलोके नरतां न्यसेत् ॥ ६ ॥

ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ।
यद् वदन्ति यदिच्छन्ति अनुमोदेत निर्ममः ॥ ७ ॥

दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम् ।
तत्सर्वमुपभुञ्जीरन् न स्वीकुर्यात् स्वतो बुधः ॥ ८ ॥

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ ९ ॥

मृगोष्ट्रखराश्वमर्कास्तु सरीसृपविमक्षिकान् ।
आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ॥ १० ॥

त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ।
यथादेशं यथाकालं यावत् दैवोपपादितम् ॥ ११ ॥

आश्वाघान्तेवसायिभ्यः कामान् संविभजेद् यथा ।
अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यतः ॥ १२ ॥

जह्याद् यदर्थे स्वान् प्राणान् हन्याद् वा पितरं गुरुम् ।
तस्यां स्वत्वं स्त्रियां जह्याद् यस्तेन ह्यजितो जितः ॥ १३ ॥

कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥ १४ ॥

सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद् वृत्तिमात्मनः ।
शेषे स्वत्वं त्यजेत् प्राज्ञः पदवीं महतामियात् ॥ १५ ॥

देवानृषीन् नृभूतानि पितॄनात्मानमन्वहम् ।
स्ववृत्त्याऽऽगतवित्तेन यजेत पुरुषं पृथक् ॥ १६ ॥

यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसम्पदः ।
वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥ १७ ॥

न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ।
इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥ १८ ॥

तस्माद् ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः ।
तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणाननम् ॥ १९ ॥

कुर्यादपरपक्षीयं मासि प्रौष्ठपदे द्विजः ।
श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान् ॥ २० ॥

अयने विषुवे कुर्याद् व्यतीपाते दिनक्षये ।
चन्द्रादित्योपरागे च द्वादश्यां श्रवणेषु च ॥ २१ ॥

तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके ।
चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २२ ॥

माघे च सितसप्तम्यां मघाराकासमागमे ।
राकया चानुमत्या वा मासर्क्षाणि युतान्यपि ॥ २३ ॥

द्वादश्यामनुराधा स्यात् श्रवणस्तिस्र उत्तराः ।
तिसृष्वेकादशी वासु जन्मर्क्षश्रोणयोगयुक् ॥ २४ ॥

त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः ।
कुर्यात् सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २५ ॥

एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ।
पितृदेवनृभूतेभ्यो यद् दत्तं तद्ध्यनश्वरम् ॥ २६ ॥

संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ।
प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २७ ॥

अथ देशान् प्रवक्ष्यामि धर्मादिश्रेयआवहान् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २८ ॥

बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ।
यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥ २९ ॥

यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ ३० ॥

सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ।
कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ ३१ ॥

नैमिषं फल्गुनं सेतुः प्रभासोऽथ कुशस्थली ।
वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥ ३२ ॥

नारायणाश्रमो नन्दा सीतारामाश्रमादयः ।
सर्वे कुलाचला राजन् महेन्द्रमलयादयः ॥ ३३ ॥

एते पुण्यतमा देशा हरेरर्चाश्रिताः पुनः ।
एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ ३४ ॥

धर्मो ह्यत्रोदितः पुंसां सहस्राधिफलोदयः ।
पात्रं चात्र निरुक्तं वै कविभिः पात्रवित्तमैः ॥ ३५ ॥

हरिरेवैक उर्वीश यन्मयं च चराचरम् ।
देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ।
राजन् यदग्रपूजायां मतः पात्रतयाऽच्युतः ॥ ३६ ॥

जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ।
तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३७ ॥

पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ।
शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ ३८ ॥

तेष्वेशो भगवान् राजन् तारतम्येन वर्तते ।
तस्मात् पात्रं हि पुरुषो यावानात्मा यथेयते ॥ ३९ ॥

दृष्ट्वा तेषां मिथो नृणामवज्ञात्मनो नृप ।
त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ४० ॥

ततोऽर्चायां हरिं केचिच्छ्रद्धया च सपर्यया ।
उपासते उपास्ता हि नार्थदा पुरुषद्विषाम् ॥ ४१ ॥

पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ।
तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥ ४२ ॥

तन्वोऽस्य ब्राह्मणा राजन् कृष्णस्य जगदात्मनः ।
पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४३ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे चतुर्दशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

नारद उवाच–
कर्मनिष्ठा द्विजाः केचित् तपोनिष्ठा नृपापरे ।
स्वाध्यायेऽन्ये प्रवचने अन्ये च ज्ञानयोगयोः ॥ १ ॥

ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ।
दैवे च तदलावे स्यादितरेभ्यो यथाऽर्हतः ॥ २ ॥

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम् ॥ ३ ॥

देशकालोचितश्रद्धाद्रव्यपात्रार्हणानि च ।
सम्यग् भवन्ति नैतानि विस्तरात् स्वजनार्पणात् ॥ ४ ॥

देशे काले च सम्प्राप्तमुत्पन्नं हरिदैवतम् ।
श्रद्धया विधिवत् पात्रे न्यस्तं कामधुगक्षयम् ॥ ५ ॥

देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ।
अन्नं संविभजन् पश्येत् सर्वतः पुरुषात्मकम् ॥ ६ ॥

न दद्यादामिषं श्राद्धे न चाद्याद् धर्मतत्त्ववित् ।
मुनीनां स्यात् परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥

नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ।
न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ ८ ॥

एके कर्ममयान् यज्ञान् ज्ञानिनो यज्ञवित्तमाः ।
आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥

द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ।
एष माकरुणो हन्यादतज्ज्ञो ह्यसुतृव् ध्रुवम् ॥ १० ॥

तस्माद् दैवोपपन्नेन मुन्यन्नेनैव धर्मवित् ।
सन्तुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकाः क्रियाः ॥ ११ ॥

विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत् त्यजेत् ॥ १२ ॥

धर्मबाधो विधर्मः स्यात् परधर्मोऽन्यचोदितः ।
उपधर्मस्तु पाखण्डो दम्भो वा धर्मभिच्छलः ॥ १३ ॥

यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमः पृथक् ।
स्वभावविहितो धर्मः कल्पतेऽस्योपशान्तये ॥ १४ ॥

धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ।
अनीहाऽनीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥

सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत् सुखम् ।
कुतस्तत् कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥

सदा सन्तुष्टमनसः सर्वाः सुखमया दिशः ।
शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ १७ ॥

सन्तुष्टः केन वा राजन् न वर्तेतापि वारिणा ।
औपस्थ्यजैह्व्यकार्पण्याद् गृहपालायते जनः ॥ १८ ॥

असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः ।
स्रवतीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥

कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ।
जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ २० ॥

पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः ।
सदसस्पतयोऽप्येके असन्तोषात् पतन्त्यधः ॥ २१ ॥

असङ्कल्पाज्जयेत् कामान् क्रोधं कामविवर्जनात् ।
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ २२ ॥

आन्वीक्षक्या शोकमोहौ दम्भं महदुपास्रयात् ।
योगान्तरायान् मौनेन हिंसां कायाद्यनीहया ॥ २३ ॥

कृपया भूतजं दुःखं दैवं जह्यात् समाधिना ।
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ॥ २४ ॥

रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ।
एतत् सर्वं गुरौ भक्त्या पुरुषो मनसा जयेत् ॥ २५ ॥

यस्य साक्षाद् भगवति ज्ञानदीपप्रदे गुरौ ।
अभिसन्धिः श्रुतं तस्य सर्वं कुञ्जरशौचवत् ॥ २६ ॥

एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ।
योगेश्वरैर्विमृग्याङ्घ्रिर्लोकोयं मन्यते नरम् ॥ २७ ॥

षड्वर्गसंयमैकान्ताः सर्वा निगमचोदनाः ।
तदन्ता यदि नो योगमावहेयुः श्रमावहाः ॥ २८ ॥

यथा वार्तादयो ह्यर्थाः पुंसः स्वार्थं न बिभ्रति ।
अनर्थाय भवेयुश्च पूर्तमिष्टं तथाऽसतः ॥ २९ ॥

यश्चित्तविजयेच्छुः स्यान्निःसङ्गो निष्परिग्रहः ।
एको विविक्तशरणो भिक्षुर्भैक्ष्यमिताशनः ॥ ३० ॥

शुचौ देशे समे राजन्संस्थाप्यासनमात्मनः ।
स्थिरं सुखं समं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥

प्राणापानौ सन्निरुन्ध्यात् पूरकुम्भकरेचकैः ।
यावन्मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥

यतो यतो निःसरति मनः कामहतं भ्रमत् ।
ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥

एवमभ्यसतश्चित्तं कालेनाल्पीयसा मुनेः ।
अविषण्णं च निर्वाणं यात्यनिन्धनवह्निवत् ॥ ३४ ॥

कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ।
चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥ ३५ ॥

यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गावपनात् पुनः ।
यदा सेवेत तान् भिक्षुः स पापो निरपत्रपः ॥ ३६ ॥

यैः स्वदेहः स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मवत् ।
तमेव स्वात्मसात् कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥ ३७ ॥

गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि ।
तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता ॥ ३८ ॥

आश्रमापसदा ह्येते खल्वाश्रमविडम्बिनः ।
देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥

आत्मानं चेद् विजानीयादेवं ज्ञानधृताशयः ।
किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥

आहुः शरीरं रथमिन्द्रियाणि हयानभीषुं मन इन्द्रियेशम् ।
वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशधाम ॥

अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ।
धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥

रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ।
मानोऽभिमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥

रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः ।
रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४ ॥

यावन्नृकायरथमात्मवशोपकल्पं
धत्ते गरिष्ठचरणार्चनया निशातम् ।
ज्ञानासिमच्युतबलं दधदस्तशत्रुः
स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥ ४५ ॥

नो चेत् प्रमत्तमसदिन्द्रियवाजिसूता
नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति ।
ते दस्यवः सहयसूतममुं तमोऽन्धे
संसारकूप उरुमृत्युभये क्षिपन्ति ॥ ४६ ॥

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
आवर्तते प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥

हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ।
दर्शश्च पूर्णमासश्च चातुर्मास्यः पशुः पुनः ॥ ४८ ॥

एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ।
पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥

द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः ।
अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ॥ ५० ॥

अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ।
एकैकश्येनानुपूर्व्याद् भूत्वा भूत्वेह जायते ॥ ५१ ॥

निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः ।
इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति ॥ ५२ ॥

इन्द्रियाणि मनस्येवं वाचि वैकारिकं मनः ।
तां तु वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ॥ ५३ ॥

ओङ्कारं बिन्दुनादे तु तं तु प्राणे महत्यमुम् ।
अग्निः सूर्यो दिवा वायुः शुक्लो राकोत्तरः स्वराट् ॥ ५४ ॥

विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मा समन्वयः ।
देवयानमिदं प्राहुर्भूत्वा भूत्वाऽनुपूर्वशः ।
आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते ॥ ५५ ॥

य एते पितृदेवानामयने वेदनिर्मिते ।
शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥

आदावन्तेऽजनानां सद् बहिरन्तः परावरम् ।
ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयम् ॥ ५७ ॥

अबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ।
दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥

क्षित्यादीनां पदार्थानां छाया न कतमापि हि ।
न संघातो विकारोऽपि न पृथङ् नान्वितोऽपि वा ॥ ५९ ॥

धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ।
न स्युर्ह्यसत्यवयविन्यसन्नवयवा इव ॥ ६० ॥

स्यात् सादृश्यभ्रमस्तावद् विकल्पे सति वस्तुनः ।
जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥

भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथैव च ।
वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥ ६२ ॥

कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत् ।
अवस्तुत्वाद् विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥

यद् ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम् ।
मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥

आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ।
यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥

यद् यस्य वाऽनिषिद्धं स्याद् येन यत्र यतो नृप ।
स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥

एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ।
गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ् नरः ॥ ६७ ॥

यथा हि यूयं नृपदेवदुस्त्यजादापद्गणादुत्तरतात्मनः प्रभो ।
यत्पादपङ्केरुहसेवया भवानहार्षीन्निर्जितदिग्गजः क्रतुः ॥ ६८॥

अहं पुराऽभवं कश्चिद् गन्धर्व उपबर्हणः ।
नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसम्मतः ॥ ६९ ॥

रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः ।
स्त्रीणां प्रियतमो नित्यं मत्तस्तु पुरलम्पटः ॥ ७० ॥

एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः ।
उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥

अगायं तद् विदित्वाऽहं स्त्रीभिः परिवृतो गतः ।
ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ॥ ७२ ॥

याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ।
तावद् दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ।
शुश्रूषयाऽनुसङ्गेन प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥

धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ।
गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥ ७४ ॥

यूयं नृलोके बत भूरिभागा लोकं
पुनाना मुनयोऽभियान्ति ।
येषां गृहानावसतीति साक्षाद्
गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ७५ ॥

स वा अयं ब्रह्म महद् विमृग्यं
कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय
आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ७६ ॥

न यस्य साक्षाद् भवपद्मजादिभी
रूपं धिया वस्तुतयोपवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः
प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥

श्रीशुक उवाच–
इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः ।
पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥

कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः ।
श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥ ७९ ॥

इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः ।
देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धे पञ्चदशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां
पारमहंस्यां संहितायां सप्तमस्कन्धः ॥

# अष्टमस्कन्धः

## अथ प्रथमोऽध्यायः

राजोवाच–
स्वायम्भुवस्येह मनोर्वंशोऽयं विस्तराच्छ्रुतः ।
यत्र विश्वसृजां सर्गो मनूनन्यान् वदस्व नः ॥ १ ॥
यत्र धर्मा हि विविधाश्चतुर्वर्णाश्रिताः शुभाः ।
मन्वन्तरे हरेर्जन्म कर्माणि च महीयसः ॥ २ ॥
गृणन्ति कवयो ब्रह्मन् तानि नो वद शृण्वताम् ।
यदस्मिन्नन्तरे ब्रह्मन् भगवान् विश्वभावनः
कृतवान् कुरुते कर्ता ह्यतीतेऽनागतेऽथ वा ॥ ३ ॥
ऋषिरुवाच–
मनवोऽस्मिन् व्यतीताः षट् कल्पे स्वायम्भुवादयः ।
आयस्ते कथितो यत्र देवादीनां च सम्भवः ॥ ४ ॥
आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ।
धर्मज्ञानोपदेशार्थं भगवान् पुत्रतां गतः ॥ ५ ॥
कृतं पुरा भगवतः कपिलस्यानुवर्णितम् ।
आख्यास्ये भगवान् यज्ञो यच्चकार कुरूद्वह ॥ ६ ॥
विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ।
विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥ ७ ॥
सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ।
तप्यमानस्तपो घोरमिदमन्वाह भारत ॥ ८ ॥
मनुरुवाच–
येनायं तपते विश्वं विश्वर्यं यतस्तपः ।
यो जागर्ति शयानेऽस्मिन् नायं तं वेद वेद सः ॥ ९ ॥
आत्मावास्यमिदं विश्वं यत्किञ्चिज्जगत्यां जगन्मनः ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद् धनम् ॥ १० ॥
यं न पश्यन्ति पश्यन्तं चक्षुर्यस्य न रिष्यति ।
तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥
यस्याद्यन्तौ न मध्यं च न परो नान्तरं बहिः ।
विश्वस्यामूनि यद् यस्माद् विश्वं च तद् ऋतं महत् ॥ १२॥
स विश्वकालः पुरुहूत ईशः
सत्यं परंज्योतिरजः पुराणः ।
धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या
तां विद्ययोदस्य निरीह आस्ते ॥ १३॥
अथाग्र ऋषयः कर्माणीहन्ते कर्महन्तवे ।
ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४॥
ईहते भगवानीशो न हि तत्र विषज्जते ।
आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् ॥ १५ ॥
तमीहमानं निरहङ्कृतं बुधैर्निराशिषं पूर्णमनन्यचोदितम् ।
तच्छिक्षयन्तं निजवर्त्मगुढान् प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥
श्रीशुक उवाच–
इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ।
दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा ॥ १७ ॥
तांस्तथावसितान् वीक्ष्य यज्ञः सर्वगतो हरिः ।
यामैः परिवृतो देवैर्हत्वाऽशासत् त्रिविष्टपम् ॥ १८ ॥
स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ।
द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥
तत्रेन्द्रो रोचनस्त्वासीत् देवाश्च तुषितादयः ।
ऊर्जस्तम्भादयः सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥
ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् ।
तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥
अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ।
अन्वशिक्षन् व्रतं तस्य कौमारब्रह्मचारिणः ॥ २२ ॥
तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।
पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ॥ २३ ॥
वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ।
सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥ २४ ॥
धर्मस्य सूनृतायां तु भगवान् पुरुषोत्तमः ।
सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥

सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ।
भूतद्रुहो भूतगणांस्त्वबधीत् सत्यजित्सुतः ॥ २६ ॥

चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः ।
वृषख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥ २७ ॥

सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ।
ज्योतिर्धामादयः सप्त ऋषयस्तापसेऽन्तरे ॥ २८ ॥

देवा वैधृतयो नाम विधृतेस्तनया नृप ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥ २९ ॥

तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः ।
हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥ ३० ॥

राजोवाच–
बादरायण एतत्ते श्रोतुमिच्छामहे वयम् ।
हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥

तत् कथासु महापुण्यं धन्यं स्वस्त्ययनं शुभम् ।
यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥ ३२ ॥

सूत उवाच–
परीक्षितैवं स तु बादरायणिः
प्रायोपविष्टेन कथासु चोदितः ।
उवाच विप्राः प्रतिनन्द्य पार्थिवं
मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ३३ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

श्रीशुक उवाच–
आसीद् गिरिवरो राजंस्त्रिकूट इति विश्रुतः ।
क्षीरोदेनावृतः श्रीमान् योजनायुतमुच्छ्रितः ॥ १ ॥

तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ।
दिशश्च रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ २ ॥

अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ।
नानाद्रुमलतागुल्मैः निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥

सदा निर्णिज्यमानाङ्घ्रिः समन्तात् पयऊर्मिभिः ।
करोति श्यामलां भूमिं शुभैर्मरकताश्मभिः ॥ ४ ॥

सिद्धचारणगन्धर्वविद्याधरमहोरगैः ।
किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥ ५ ॥

यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया ।
अभि गर्जन्ति हरयः श्लाघिनः परशङ्कया ॥ ६ ॥

नानारण्यपशुव्रातसङ्कुलद्रोण्यलङ्कृतः ।
चित्रद्रुमसुरोद्यानकलकण्ठविहङ्गमः ॥ ७ ॥

सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ।
देवस्त्रीमज्जनामोदसौरभाम्ब्वनिलैर्युतः ॥ ८ ॥

तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः ।
उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥

सर्वतोऽलङ्कृतं दिव्यैर्नित्यपुष्पफलद्रुमैः ।
मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः ॥ १० ॥

चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ।
क्रमुकैर्नारिकेलैश्च खर्जूरैर्बीजपूरकैः ॥ ११ ॥

मधुकैः सालतालैश्च तमालै रसनार्जुनैः ।
अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ १२ ॥

पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ।
द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥

बिल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ।
तस्मिन् सरः सुविपुलं लसत्काञ्चनपङ्कजम् ॥ १४ ॥

कुमुदोत्पलकल्हारशतपत्रश्रियोर्जितम् ।
मत्तषट्पदनिर्जुष्टं शकुन्तैः कलनिःस्वनैः ॥ १५ ॥

हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ।
जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ १६ ॥

मत्स्यकच्छपसञ्चारचलत्पद्मरजः पयः ।
कदम्बवेतसनलनीपवञ्जुलकैर्वृतम् ॥ १७ ॥

कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः ।
कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८ ॥

मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ।
शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलंद्रुमैः ॥ १९ ॥

तत्रैकदा तद्गिरिकाननाश्रयः
करेणुभिर्वारणयूथपश्चरन् ।
सकण्टकं कीचकवेणुवेत्रव-
द्विशालगुल्मं प्ररुजन् वनस्पतीन् ॥ २० ॥

यद्गन्धमात्राद्धरयो गजेन्द्रा
व्याघ्रादयो व्यालमृगाः सखड्गाः ।
महोरगाश्चापि भयाद् द्रवन्ति
सगौरकृष्णाः शलभाश्चमर्यः ॥ २१ ॥

वृका वराहा महिषर्क्षशल्या
गोपुच्छशालावृकमर्कटाश्च ।
अन्ये च क्षुद्रा हरिणाः शशादय-
श्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥

स घर्मतप्तः करिभिः करेणुभि-
र्वृतो मदच्युत्कलभैरनुद्रुतः ।
गिरिं गरिम्णा परितः प्रकम्पयन्
निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥ २३ ॥

सरोऽनिलं पङ्कजरेणुरूषितं
जिघ्रन्विदूरान्मदविह्वलेक्षणः ।
वृतः स्वयूथेन तृषार्दितेन त-
त्सरोवराभ्याशमथागमद् द्रुतम् ॥ २४ ॥

विगाह्य तस्मिन्नमृताम्बु निर्मलं
हेमारविन्दोत्पलरेणुवासितम् ।
पपौ निकामं निजपुष्करोद्धृत-
मात्मानमद्भिः स्नपयन् गतक्लमः ॥ २५ ॥

स्वपुष्करेणोद्धृतशीकराम्बुभि-
र्निपाययन् संस्नपयन् यथा गृही ।
घृणी करेणूः कलभांश्च दुर्मदो
नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥

तं तत्र कश्चिन्नृप दैवचोदितो
ग्राहो बलीयांश्चरणे रुषाग्रहीत् ।
यदृच्छयैवं व्यसनं गतो गजो
यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥

तथाऽऽतुरं यूथपतिं करेणवो
विकृष्यमाणं तरसा बलीयसा ।
विचुक्रुशुर्दीनधियोऽपरे गजाः
पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥

नियुध्यतोरेवमिभेन्द्रनक्रयो-
र्विकर्षतोरन्तरतो बहिर्मिथः ।
समाः सहस्रं व्यगमन् महीपते
सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥

ततो गजेन्द्रस्य मनोबलौजसां
कालेन दीर्घेण महानभूद् व्ययः ।
विकृष्यमाणस्य जलेऽवसीदतो
विपर्ययोऽभूत् सकलं जलौकसः ॥ ३० ॥

इत्थं गजेन्द्रः स यदाप सङ्कटं
प्राणस्य देही विवशो यदृच्छया ।
अपारयन्नात्मविमोक्षणे चिरं
दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥

न मामिमे ज्ञातय आतुरं गजाः
कुतः करिण्यः प्रभवन्ति मोचितुम् ।
ग्राहेण पाशेन विधातुरावृतोऽ-
प्यहं च तं यामि परं परायणम् ॥ ३२ ॥

यः कश्चनेशो बलिनोऽन्तकोरगात्
प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भयात्
मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

श्रीशुक उवाच–
एवंव्यवसितो बुद्ध्या समाधाय मनो हृदि ।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥

गजेन्द्र उवाच–
ओं नमो भगवते तस्मै यत एतच्चिदात्मकम् ।
पुरुषायादिबीजाय परेशायाभिधीमहि ॥ २ ॥

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात् परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥

यः स्वात्मनीदं निजमाययार्पितं
क्वचिद् विभातं क्व च तत्तिरोहितम् ।
अविद्धदृक् साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥

कालेन पञ्चत्वमितेषु कृत्स्नशो
लोकेषु लोकेषु लीनेषु च सर्वहेतुषु ।
तमस्तदासीद् गहनं गभीरं
यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥

न यस्य देवा ऋषयः पदं विदु-
र्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ।
यथा नटस्याकृतिभिर्विचेष्टतो
दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥

दिदृक्षवो यस्य पदं सुमङ्गलं
विमुक्तसङ्गा मुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने
सर्वात्मभूताः सुहृदः स मे गतिः ॥ ७ ॥

न विद्यते यस्य च जन्म कर्म वा
न नामरूपे गुणदोष एव वा ।
तथापि लोकाप्ययसंभवाय यः
स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥

नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिताम् ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥

नमः शान्ताय घोराय मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥

सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
असताच्छाययोक्ताय सदाभासाय ते नमः ॥ १४ ॥

नमो नमस्तेऽखिलकारणाय
निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नायमहार्णवाय
नमोऽपवर्गाय परायणाय ॥ १५ ॥

गुणारणिच्छन्नचिदूष्मपाय
तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागम-
स्वयंप्रकाशाय नमस्करोमि ॥ १६ ॥

यं धर्मकामार्थविमुक्तिकामा
भजन्त इष्टां गतिमाप्नुवन्ति ।
किं चाशिषो रात्यपि देहमव्ययं
करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १७ ॥

एकान्तिनो यस्य न कञ्चनार्थं
वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमङ्गलं
गायन्त आनन्दसमुद्रमग्नाः ॥ १८ ॥

तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ १९ ॥

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २० ॥

यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो
निर्यान्ति संयान्त्यसकृत् स्वरोचिषः ।
तथा यतोऽयं गुणसम्प्रवाहो
बुद्धिर्मनः खानि शरीरसर्गाः ॥ २१ ॥

स वै न देवासुरमर्त्यतिर्यङ्
न स्त्री न षण्ढो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन् न चासन्
निषेधशेषो जयतादशेषः ॥ २२ ॥

जिजीविषे नाहमिहामुया कि-
मन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लव-
स्तस्यात्मलोकावरणस्य मोक्षणम् ॥ २३ ॥

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २४ ॥

योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥ २५ ॥

नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥

नायं वेद स्वमात्मानं यच्छक्त्याऽहं धिया हतः ।
तं दुरत्ययमाहात्म्यं भगवन्तं नतोऽस्म्यहम् ॥ २७ ॥

श्रीशुक उवाच–
एवं गजेन्द्रमुपवर्णितनिर्विशेषं
ब्रह्मादयो विविधलिङ्गभिदाभिमानाः ।
नैते यदोपससृपुर्निखिलात्मकत्वात्
तत्राखिलामरमयो हरिराविरासीत् ॥ २८ ॥

तं तद्वदार्तमुपलभ्य जगन्निवासः
स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ।
छन्दोमयेन गरुडेन समुह्यमान-
श्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥ २९ ॥

सोऽन्तःसरस्युरुबलेन गृहीत आर्तो
दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रा-
न्नारायणाखिलगुरो भगवन् नमस्ते ॥ ३० ॥

तं वीक्ष्य पीडितमजः सहसावतीर्य
सग्राहमाशु सरसः कृपयोज्जहार ।
ग्राहाद् विपाटितमुखादरिणा गजेन्द्रं
सम्पश्यतां हरिरमूमुचदुस्रियाणाम् ॥ ३१ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः

श्री शुक उवाच–
तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ।
मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥

नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ।
ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥

योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥

प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ।
अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥

सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ।
लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥

गजेन्द्रो भगवत्स्पर्शाद् विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥

स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ।
इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥

स एकदाऽऽराधनकाल आत्मवान्
गृहीतमौनव्रत ईश्वरं हरिम् ।
जटाधरस्तापस आप्लुतोऽच्युतं
समर्चयामास कुलाचलाश्रयः ॥ ८ ॥

यदृच्छया तत्र महायशा मुनिः
समागमच्छिष्यगणैः परिश्रितः ।
तं वीक्ष्य तूष्णीमकृतार्हणादिकं
रहस्युपासीनमृषिश्चुकोप ह ॥ ९ ॥

तस्मा इमं शापमदादसाधु-
रयं दुरात्माऽकृतबुद्धिरद्य ।
मद्धेलनात् प्राविशतां तमिस्रं
यथा गजः स्तब्धमतिः सदोषः ॥ १० ॥

श्री शुक उवाच–
एवं शप्त्वा गतोऽगस्त्यो भगवान् नृप सानुगः ।
इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥

आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीम् ।
हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः ॥ १२ ॥

एवं विमोक्ष्य गजयूथपमब्जनाभ-
स्तेनापि पारिषदतां गमितेन युक्तः ।
गन्धर्वसिद्धविबुधैरुपगीयमान-
कर्माऽद्भुतं स्वभवनं गरुडासनोऽगात् ॥ १३ ॥

एवं महाराज तवेरितो मया
कृष्णानुभावो गजराजमोक्षणम् ।
स्वर्ग्यं यशस्यं कलिकल्मषापहं
दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥

अथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ।
शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥ १५ ॥

इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ।
शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥

श्रीभगवानुवाच–
ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ।
वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥

शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ।
क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥

श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ।
सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥

शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ।
ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥

मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ।
कर्माण्यनन्तपुण्यानि सूर्यसोमहुताशनान् ॥ २१ ॥

प्रणवं सत्यमव्यक्तं गोविप्रान् धर्ममक्षयम् ।
दाक्षायणीं धर्मपत्नीं सोमकश्यपयोरपि ॥ २२ ॥

गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् ।
ध्रुवं ब्रह्मऋषीन् सप्त पुण्यश्लोकांश्च मानवान् ॥ २३ ॥

उत्थायापररात्रान्ते प्रयताः सुसमाहिताः ।
स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिलात् ॥ २४ ॥

ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुद्ध्य निशात्यये ।
तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥ २५ ॥

श्रीशुक उवाच–
इत्यादिश्य हृषीकेशः प्राध्माय जलजोत्तमम् ।
हर्षयन् विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः

श्रीशुक उवाच–
राजन्नुदितमेतत् ते हरेः कर्माघनाशनम् ।
गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥

पञ्चमो रैवतो नाम मनुस्तामससोदरः ।
बलविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥

विभुरिन्द्रः सुरगणा राजन् भूतरयादयः ।
हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥

पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ।
तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम् ॥ ४ ॥

वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः ।
रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥

तस्यानुभावः कथितो गुणाश्च परमोदयाः ।
भौमान् रेणून् स विममे यो विष्णोर्वर्णयेद् गुणान् ॥ ६ ॥

षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ।
पुरुः पुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥

इन्द्रो मन्त्रद्युमस्तत्र देवा आप्यादयो गणाः ।
मुनयस्तत्र वैराजहरिमद्रीरिकादयः ॥ ८ ॥

तत्रापि देवः सम्भूत्यां वैराजस्याभवत् सुतः ।
अजितो नाम भगवानंशेन जगतः पतिः ॥ ९ ॥

पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ।
भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥

राजोवाच–
यथा भगवता ब्रह्मन् मथितः क्षीरसागरः ।
यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ॥ ११ ॥

यथाऽमृतं सुरैः प्राप्तं किमन्यदभवत् ततः ।
एतद् भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥

त्वयेत्थं कथ्यमानेन महिम्ना सात्वतां पतेः ।
नातितृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥

सूत उवाच–
सम्पृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ।
अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥

श्रीशुक उवाच–
यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः ।
गतासवो निपतिता नोत्तिष्ठेरन् स्म भूयशः ॥ १५ ॥

यदा दुर्वाससशापेन सेन्द्रा लोकास्त्रयो नृप ।
निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादिकाः क्रियाः ॥ १६ ॥

निशाम्यैतत् सुरगणा महेन्द्रवरुणादयः ।
नाध्यगच्छन् स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ १७ ॥

ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः ।
सर्वं विज्ञापयाञ्चक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥

स विलोक्येन्द्रवाय्वादीन् निःसत्वान् विगतप्रभान् ।
लोकानमङ्गलप्रायान् सुरांश्चैव यथा विभुः ॥ १९ ॥

समाहितेन मनसा संस्मरन् पुरुषं परम् ।
उवाचोत्फुल्लवदनो देवान् स भगवान् परः ॥ २० ॥

अहंभवो यूयमथो सुरादयो मनुष्यतिर्यग्द्रुमघर्मजादयः ।
यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ।
अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्वतमांसि काले ॥

अयं तु तस्य स्थितिपालनक्षणः
सत्वं जुषाणस्य भवाय देहिनाम् ।
तस्माद् व्रजामः शरणं जगद्गुरुं
स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥

श्रीशुक उवाच–
इत्याभाष्य सुरान् वेधाः सह देवैररिन्दम ।
अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥

तत्रादृष्टस्वरूपाय श्रुतपूर्वाय चाभ्यधात् ।
स्तुतिमब्रुतदैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥ २५ ॥

ब्रह्मोवाच–
अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ।
मनोग्रयाणं वचसाऽनिरुक्तं नमाम हे देव वरं वरेण्यम् ॥२६

विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ।
छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥२७

अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ।
त्रिनाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥

यदेकवर्णं तमसः परं सदलोकमव्यक्तमनन्तपारम् ।
आसाञ्चकारोपसुपर्णपत्रमुपासते योगरथेन धीराः ॥ २९ ॥

न यस्य कश्चातिपिपर्ति मायां यया जनो मुह्यति वेदनार्थम् ।
तं निर्जितात्मात्मगुणं परेशं नमामि भूतेषु समं चरन्तम् ॥

इमे वयं यत्प्रिययैव सृष्टाः सत्वेन सृष्टा बहिरन्तरं विभो ।
गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः ॥

पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ।
स वै महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ॥

अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः ।
लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥

सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः ।
ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥

अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा ।
अन्तः समुद्रे पचतः स्वधातून् प्रसीदतां नः स महाविभूतिः ॥

यच्चक्षुरासीत् तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ।
द्वारं च मुक्तेरमृतस्य मृत्योः प्रसीदतां नः स महाविभूतिः ॥

प्राणादभूद् यस्य चराचराणां
प्राणः सहो वै बलमोजश्च वायुः ।
अन्वास्म सम्राजमिवानुगा वयं
प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥

श्रोत्राद् दिशो यस्य हृदश्च खानि
प्रजज्ञिरे खं पुरुषस्य नाभ्याः ।
प्राणेन्द्रियात्मा स्वशरीरबन्धुः
प्रसीदतां नः स महाविभूतिः ॥ ३८ ॥

बलान्महेन्द्रस्त्रिदशाः प्रसादा-
न्मन्योर्गिरीशोऽशरणाद् विरिञ्चः ।
खेभ्यश्च छन्दांस्यृषयस्तु मेढ्रतः
प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥

श्रीर्वक्षसः पितरश्छाययाऽसन्
धर्मः स्तनादितरः पृष्ठतोऽभूत् ।
द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्
प्रसीदतां नः स महाविभूतिः ॥ ४० ॥

विप्रो मुखाद् ब्रह्म च यस्य गुह्यं राजन्य आसीद् भुजयोर्बलं च ।
ऊर्वोर्विशोऽङ्घ्रेरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः ॥

लोभोऽधरात् प्रीतिरुपर्यभूद् द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ।
भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥

द्रव्यं वयः कर्म गुणाश्च शेषं यद्योगमायापहिताः पतन्ति ।
यद् दुर्विभाव्यं प्रबुधावबोधं प्रसीदतां नः स महाविभूतिः ॥

नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभपरिपूरितात्मने ।
गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नमः स्वभूतये ॥

स त्वं नो दर्शयात्मानमस्मत्करणगोचरः ।
प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥ ४५ ॥

तैस्तैः स्वेच्छाकृतै रूपैः काले काले स्वयं विभो ।
कर्म दुर्विषहं यन्नो भगवान् वै करोति हि ॥ ४६ ॥

क्लेशभूर्यल्पसाराणि कर्माणि विफलानि च ।
देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥ ४७ ॥

नाधमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ।
कल्पते पुरुषस्यैव स ह्यात्मा दयितो हितः ॥ ४८ ॥

यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥

नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ।
निर्गुणाय गुणेशाय सत्त्वस्थाय च साम्प्रतम् ॥ ५० ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः

श्रीशुक उवाच–
एवं स्तुतः सुरगणैर्भगवान् हरिरीश्वरः ।
तेषामाविरभूद् राजन् सहस्रार्कोदयद्युतिः ॥ १ ॥

तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ।
नापश्यन् खं दिशः क्षोणीमात्मानं चाग्रतो विभुम् ॥ २ ॥

विरिञ्चो भगवान् दृष्ट्वा सह शर्वेण भारत ।
स्वच्छं मरकतश्यामं कञ्जगर्भारुणेक्षणम् ॥ ३ ॥

तप्तहेमावदातेन लसत्कौशेयवाससा ।
प्रसन्नचारुसर्वाङ्गं सुमुखं सुन्दरभ्रुवम् ॥ ४ ॥

महामणिकिरीटेन केयूराभ्यां च भूषितम् ।
कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजम् ॥ ५ ॥

काञ्चीकलापवलयहारनूपुरशोभितम् ।
कौस्तुभाभरणं लक्ष्मं बिभ्रतं वनमालिनम् ॥ ६ ॥

सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासितम् ।
तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ।
सर्वामरगणैः सार्धं सर्वाङ्गैरवनिं गतैः ॥ ७ ॥

ब्रह्मोवाच–
अजाय जन्मस्थितिसंयमाय गुणाय निर्वाणसुखार्णवाय ।
अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ॥ ८ ॥

रूपं तवैतत् पुरुषर्षभेज्यं
श्रेयोऽर्थिभिर्वैदिकतान्त्रिकेश्च ।
योगेन धातः सह नस्त्रिलोकान्
पश्याम्यमुष्मिन् भुवि विश्वमूर्ते ॥ ९ ॥

त्वय्यग्र आसीदिदमात्मतन्त्रे
त्वमादिरन्तो जगतोऽस्य मध्यम् ।
घटस्य मृत्स्नेव परः परस्मात्
त्वमेव चाशेषविशेषनामा ॥ १० ॥

त्वं माययाऽऽत्माश्रयया स्वयेदं
निर्माय विश्वं तदनुप्रविष्टः ।
पश्यन्ति युक्ता मनसा मनीषिणो
गुणव्यवायेऽप्यगुणं विपश्चितः ॥ ११ ॥

यथाऽग्निमेधस्यमृतं च गोषु
भुव्यन्नमम्बूत्खनने तथोर्व्याः ।
योगैर्मनुष्या अधियन्ति हि त्वां
गुणेषु बुध्या कवयो वयन्ति ॥ १२ ॥

तं त्वा वयं नाथ समुज्जिहानं
सरोजनाभातिचिरेप्सितार्थम् ।
दृष्ट्वा गता निर्वृतिमद्य सर्वे
गजा दवार्ता इव गाङ्गमम्भः ॥ १३ ॥

स त्वं विधत्स्वाऽखिललोकपाला
वयं यदर्थास्तव पादमूलम् ।
समागतास्ते बहिरन्तरात्मन्
किं वान्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥

अहं गिरित्रश्च सुरादयो ये
दक्षादयोऽग्नेरिव केतवस्ते ।
किं वा विदामेश पृथग्विभाता
विधत्स्व शं नो द्विजदेवमन्त्रम् ॥ १५ ॥

श्रीशुक उवाच–
एवं विरिञ्च्यादिभिरीडितस्तद्
विज्ञाय तेषां हृदयं यथैव ।
जगाद जीमूतगभीरया गिरा
बद्धाञ्जलीन् संवृतसर्वकारकान् ॥ १६ ॥

एक एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वरः ।
विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥

श्रीभगवानुवाच–
हन्त ब्रह्मन्नहो शम्भो हे देवा मम भाषितम् ।
शृणुतावहिताः सर्वे श्रेयो वः स्याद् यथा पुरा ॥ १८ ॥

यातुधानैश्च दैतेयैस्तावत् सन्धिर्विधीयताम् ।
कालेनानुगृहीतैस्तैर्यावद् वो भव आत्मनः ॥ १९ ॥

अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे ।
अहिमूषकवद् देवा ह्यर्थस्य पदवीं गतैः ॥ २० ॥

अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ।
यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥

क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥

सहायेन मया देवा निर्मथध्वमतन्द्रिताः ।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ २३ ॥

यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ।
न संरम्भेण सिद्ध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥

न भेतव्यं कालकूटाद् विषाज्जलधिसम्भवात् ।
लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥

श्रीशुक उवाच–
इति देवान् समादिश्य भगवान् पुरुषोत्तमः ।
तेषामन्तर्दधे राजन् स्वच्छन्दगतिरीश्वरः ॥ २६ ॥

अथ तस्मै भगवते नमस्कृत्य पितामहः ।
भवश्च जग्मतुः स्वं स्वं धामं चेयुर्बलिं सुराः ॥ २७ ॥

दृष्ट्वाऽरीनप्यसम्पन्नान् जातक्षोभान् स्वनायकान् ।
न्यषेधद् दैत्यराट्श्लोक्यः सन्धिविग्रहकालवित् ॥ २८ ॥

ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ।
श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ।
अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥

तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ।
शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥

ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ।
उद्यमं परमं चक्रुरमृतार्थे परन्तप ॥ ३२ ॥

ततस्ते मन्दरगिरिमञ्जसोत्पाट्य दुर्मदाः ।
नदन्त उदधिं निन्युः शक्ताः परिघबाहवः ॥ ३३ ॥

दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ।
अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥

निपतन् सगिरिस्तावद् बहूनमरदानवान् ।
चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥

तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ।
विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥

गिरिपातविनिष्पिष्टान् विलोक्यामर दानवान् ।
ईक्षया जीवयामास निर्जरान् निर्व्रणान् यथा ॥ ३७ ॥

गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ।
आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥

अवरोप्य गिरिं स्कन्धात् सुपर्णः पततां वरः ।
ययौ जलान्त उत्सृज्य हरिणा स विवर्जितः ॥ ३९ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे षष्ठोऽध्यायः ॥

# अथ सप्तमोऽध्यायः

श्रीशुक उवाच–
ते नागराजमामन्त्र्य फलभागेन वासुकिम् ।
परिधाय गिरौ तस्मिन् नेत्रमब्धिं मुदान्विताः ॥ १ ॥

आरेभिरे सुरा यत्ता अमृतार्थे कुरूद्वह ।
हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥

तन्नैच्छन् दैत्यपतयो महापुरुषचेष्टितम् ।
न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥

स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः ।
इति तूष्णीं स्थितान् दैत्यान् विलोक्य पुरुषोत्तमः ॥ ४ ॥

स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ।
कृतस्थानविभागास्ते एवं कश्यपनन्दनाः ॥ ५ ॥

ममन्थुः परमायत्ता अमृतार्थे पयोनिधिम् ।
मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ६ ॥

ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन ।
ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ।
आसन् स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥

विलोक्य विघ्नेशगतिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं महत् प्रविश्य तोयं गिरिमुज्जहार ॥

तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः ।
दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥

सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ।
बिभ्रत् तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥१०॥

तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ।
उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः ॥११॥

उपर्यगेन्द्रं गिरिराडिवान्य
आक्रम्य हस्तेन सहस्रबाहुः ।
तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैः
अभिष्टुवद्भिः सुमनोभिवृष्ट्या(ष्टः) ॥ १२ ॥

उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ।
ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥

अहीन्द्रसाहस्रकरालदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ।
पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् ॥

देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननान् ।
समभ्यवर्षन् भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥

मथ्यमानात् तथा सिन्धोर्देवासुरवरूथपैः ।
यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ॥ १६ ॥

मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्-
मूर्ध्नि भ्राजद्विलुलितकचस्रग्धरो रक्तनेत्रः ।
जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा
मथ्नन् मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः ॥ १७ ॥

निर्मथ्यमानादुदधेरभूद् विषं
महोल्बणं हालहलाह्वमग्रतः ।
सम्भ्रान्तमीनोन्मकराहिकच्छपो-
त्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ १८ ॥

तदुग्रवेगं दिशि दिश्युपर्यधो
विसर्पदुत्सर्पदसह्यवीर्यम् ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा
अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥

विलोक्य तं देववरं त्रिलोक्या
भवाय देव्याऽभियुतं मुनीनाम् ।
आसीनमद्रावपवर्गहेतो-
स्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥

प्रजा ऊचुः–
देवदेव महादेव भूतात्मन् भूतभावन ।
त्राहि नः शरणापन्नान् त्रैलोक्यदहनाद् विषात् ॥ २१ ॥

त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ।
तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥

गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो ।
धत्से यदा स्वदृग् भूमन् ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥

त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम् ।
नानाशक्तिभिराभासस्त्वमात्मा जगदीश्वरः ॥ २४ ॥

त्वं शब्दयोनिर्जगदादिरात्मा
प्राणेन्द्रियद्रव्यगुणस्वभावः ।
कालः क्रतुः सत्यमृतं च धर्म-
स्त्वय्यक्षरं यत् त्रिवृदामनन्ति ॥ २५ ॥

अग्निर्मुखं तेऽखिलदेवतात्मा
क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ।
कालो गतिस्तेऽखिलदेवतात्मनो
दिशश्च कर्णौ रसनं जलेशः ॥ २६ ॥

नाभिर्नभस्ते श्वसनं नभस्वान्
सूर्यश्च चक्षूंषि जलं स्म रेतः ।
परावरात्मा द्रुहिणस्तवात्मा
सोमो मनो द्यौर्भगवंच्छिरस्ते ॥ २७ ॥

कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा
रोमाणि सर्वौषधिवीरुधस्ते ।
छन्दांसि साक्षात् तव सप्तधातव-
स्त्रयीमयात्मन् हृदयं स धर्मः

मुखानि पञ्चोपनिषत् तवेश
यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ।
यत् तच्छिवाख्यं परमात्मतत्त्वं
देव स्वयंज्योतिरवस्थितिस्ते

छाया त्वधर्मो मृड यैर्विसर्गो
नेत्राणि ते सत्वरजस्तमांसि ।
साक्षान्मनुः शास्त्रकृतस्तवेक्षा
छन्दोमयो देवऋषिः पुराणः

न ते गिरित्राखिललोकपाल
विरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च
सत्त्वं न यद् ब्रह्म निरस्तभेदम्

कामाध्वरत्रिपुरकालहराद्यनेक
भूतद्रुहः क्षपयतः स्तुतये न तत् ते ।
यस्त्वन्तकाल इदमात्मकृतं स्वनेत्र-
वह्निस्फुलिङ्गशिखया भसितं तवेश

ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रि-
द्वन्द्वं चरन्तमुमया तपसाऽभितप्तम् ।
कत्थन्त उग्रपरुषं निरतं श्मशाने
ते भूतभूतिमविदस्तव हीनलज्जाः

तत् तस्य ते सदसतोः परतः परस्य
नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ।
ब्रह्मादयः किमुत संस्तवने वयं तु
तत्सर्गसर्गविषया अपि भक्तिमात्रम्

एतत्परं प्रपश्यामो न परं ते महेश्वर ।
मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः

श्रीशुक उवाच–
तद् वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ।
सर्वभूतसुहृद् देव इदमाह सतीं प्रियाम्

शिव उवाच–
अहो बत भवान्येतत् प्रजानां पश्य वैशसम् ।
क्षीरोदमथनोद्भूतात् कालकूटादुपस्थितम् ॥ ३७ ॥

आसां प्राणपरीप्सूनां विधेयमभयं हि मे ।
एतावान् हि प्रभोरर्थो यद् दीनपरिपालनम् ॥ ३८ ॥

प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ।
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥

पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ।
तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥

श्रीशुक उवाच–
एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ।
तद् विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥

ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥

तस्यापि दर्शयामास स्ववीर्यं गलकल्मषः ।
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥

निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः ।
प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४५ ॥

प्रस्कन्नं पिबतः पाणेर्यत् किञ्चिज्जगृहुः स्म तत् ।
वृश्चिकाहिविषौषध्यो दन्दशूकाश्च ये परे ॥ ४६ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः

श्रीशुक उवाच–
पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ १ ॥

तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ।
यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥ २ ॥

तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ।
तस्मिन् बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३ ॥

तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महम् ॥ ४ ॥

ततोऽभवत् पारिजातः सुरलोकविभूषणः ।
पूरयत्यर्थिनो योऽर्थैः शश्वद् भुवि यथा भवान् ॥ ५ ॥

ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ६ ॥

ततश्चाऽऽविरभूत् साक्षाच्छ्रीरमा भगवत्प्रिया ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा ॥ ७ ॥

तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ।
रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ८ ॥

तस्याश्चासनमानिन्ये महेन्द्रो महदद्भुतम् ।
मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ ९ ॥

अभिषेचनिका भूमिराहरत् सकलौषधीः ।
गावः पञ्चपवित्राणि वसन्तो मधु माधवम् ॥ १० ॥

ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि ।
जगुर्भद्राणि गन्धर्वा नार्यश्च ननृतुर्जगुः ॥ ११ ॥

मेघा मृदङ्गपणवमुरजानकगोमुखान् ।
व्यनादयन् शङ्खवेणुवीणास्तुमुलनिःस्वनान् ॥ १२ ॥

ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ।
दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥ १३ ॥

समुद्रः पीतकौशेयवाससी समुपाहरत् ।
वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १४ ॥

भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ।
हारं सरस्वती पद्ममजो नागाश्च कुण्डले ॥ १५ ॥

ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ।
चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम् ॥

स्तनद्वयं चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम् ।
ततस्ततो नूपुरवल्गुसिञ्जितैर्विसर्पती हेमलतेव सा बभौ ॥ १७

विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ।
गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत् ॥ १८॥

नूनं तपो यस्य न मन्युनिर्जयो
ज्ञानं कचित् तच्च न सङ्गवर्जितम् ।
कश्चिन्महांस्तस्य न कामनिर्जयः
स ईश्वरः किं परतो व्यपाश्रयः ॥ १९ ॥

धर्मः कचित् तस्य न भूतसौहृदं
त्यागः कचित् तच्च न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं
न हि द्वितीयो गुणसङ्गवर्जितः ॥ २० ॥

कश्चिच्चिरायुर्न हि शीलमङ्गलं
कचित् तदप्यस्ति न वेद्यमायुषः ।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः
सुमङ्गलः कश्च न काङ्क्षते हि माम् ॥ २१ ॥

श्रीशुक उवाच–
एवं विमृश्याव्यभिचारिसद्गुणं
पदं निजैकाश्रयितगुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं
रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २२ ॥

तस्यांसदेश उशतीं नवकञ्जमालां
माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ।
तस्थौ निधाय निकटे तदुरः स्वधाम
सव्रीडहासविकसन्नयनेन भीता ॥ २३ ॥

तस्याः श्रियस्त्रिजगतो जनको जनन्या
वक्षो निवासमकरोत् परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २४ ॥

शङ्खतूर्यमृदङ्गानां वादित्राणां पृथक् स्वनः ।
देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २५ ॥

ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ।
ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २६ ॥

श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ।
शीलादिगुणसंपन्ना लेभिरे निर्वृतिं पराम् ॥ २७ ॥

निस्सत्त्वा लोलुपा राजन् निरुद्योगा गतत्रपाः ।
यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २८ ॥

अथासीद् वारुणी देवी कन्या कमललोचना ।
असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ २९ ॥

अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः ।
उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥ ३० ॥

दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३१ ॥

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ।
नीलकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥ ३२ ॥

अमृतापूर्णकलशं बिभ्रद् वलयभूषितः ।
स वै भगवतः साक्षाद् विष्णोरंशांशसम्भवः ॥ ३३ ॥

धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् ।
तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥ ३४ ॥

लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ।
नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ।
विषण्णमनसो देवा हरिं शरणमाययुः ॥ ३५ ॥

इति तद्दैन्यमालोक्य भगवान् भृत्यकामकृत् ।
मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३६ ॥

मिथः कलिरभूत् तेषां तदर्थे तर्षचेतसाम् ।
अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ३७ ॥

देवाः स्वभागमर्हन्ति ये तुल्यायासहेतवः ।
सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३८ ॥

इति स्वान् प्रत्यषेधन् वै दैतेया जातमत्सराः ।
दुर्बलाः प्रबलान् राजन् गृहीतकलशान् मुहुः ॥ ३९ ॥

एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ।
योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४० ॥

प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ।
समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४१ ॥

नवयौवननिष्पन्दस्तनभारकृशोदरम् ।
मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥ ४२ ॥
बिभ्रत् स्वकेशभारेण मालामुत्फुल्लमल्लिकाम् ।
सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥ ४३ ॥
विरजाम्बरसंवीतं चित्रं बध्नीयशोभया ।
काञ्च्या प्रविलसद् वल्गुस्फुरच्चरणनूपुरम् ॥ ४४ ॥
सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ।
दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥ ४५ ॥
तेऽन्योन्यतः सुधापात्रं हरन्तस्त्यक्तसौहृदाः ।
क्षिपन्तो दस्युधर्मेण आयान्तीं ददृशुः स्त्रियम् ॥ ४६ ॥
अहो रूपमहो धाम अहो अस्या नवं वयः ।
इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ ४७ ॥
का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि ।
कस्यासि वद वामोरु मथ्नन्तीव मनांसि नः ॥ ४८ ॥
न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ।
स्पृष्टपूर्वां तु जानीमो लोकेशैश्च कुतो नृभिः ॥ ४९ ॥
नूनं त्वं विधिना सुभ्रूः प्रेषितासि शरीरिणाम् ।
सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥ ५० ॥
सा त्वं नः स्पर्धमानानामेकवस्तुनि भामिनि ।
ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥ ५१ ॥
वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ।
विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ५२ ॥

श्रीशुक उवाच–
इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ।
प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ५३ ॥

श्रीभगवानुवाच–
कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः ।
विश्वासं पण्डितो जातु कामिनीषु न याति हि ॥ ५४ ॥
सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ।
सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ॥ ५५ ॥

श्रीशुक उवाच–
इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ।
जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ५६ ॥
ततो गृहीत्वाऽमृतभाजनं हरि-
र्बभाष ईषत्स्मितशोभया गिरा ।
यद्यभ्युपेतं क्व च साध्वसाधु वा
कृतं मया वो विभजे सुधामिमाम् ॥ ५७ ॥
इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः ।
अप्रमाणविदस्तस्यास्तत् तथेत्यन्वमंसत ॥ ५८ ॥
अथोपोऽष्य कृतस्नाना हुत्वा च हविषाऽनलम् ।
दत्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः ॥ ५९ ॥
यथोपजोषं वासांसि परिधायाहतानि ते ।
कुशेषु प्राविशन् सर्वे प्रागग्रेष्वभिभूषिताः ॥ ६० ॥
प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ।
धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥ ६१ ॥
तस्यां नरेन्द्रकरभोरुलसद्दुकूल-
श्रोणीतटालसगतिर्मदविह्वलाक्षी ।
सा कूजती कनकनूपुरसिञ्जितेन
कुम्भस्तनी कलशपाणिरथाविवेश ॥ ६२ ॥
तां श्रीमुखीं कनककुण्डलचारुकर्ण-
नासाकपोलवदनां परदेवताख्याम् ।
संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन
देवासुरा विगलितस्तनपट्टिकान्ताम् ॥ ६३ ॥
असुराणां सुधादानं सर्पाणामिव दुर्नयम् ।
मत्वा जातिनृशंसानां नतान् व्यभजदच्युतः ॥ ६४ ॥
कल्पयित्वा पृथक् पङ्क्तीरुभयेषां जगत्पतिः ।
तांश्चोपवेशयामास स्वासु स्वासु च पङ्क्तिषु ॥ ६५ ॥
दैत्यान् गृहीतकलशो वञ्चयन्नुपसञ्चरैः ।
दूरस्थान्पाययामास जरामृत्युहरं सुरान् ॥ ६६ ॥
ते पालयन्तः समयमसुराः स्वकृतं नृप ।
तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ ६७ ॥

तस्यां कृतातिप्रणयाः प्रणयापायकातराः ।
बहुमानेन चाबद्धा नोचुः किञ्चन विप्रियम् ॥ ६८ ॥
देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।
प्रविश्य सोमममपिबच्चन्द्रार्काभ्यां च सूचितः ॥ ६९ ॥
चक्रेण क्षुरधारेण जहार पिबतः शिरः ।
हरिस्तस्य कबन्धस्तु सुधयाप्लावितोऽपतत् ॥ ७० ॥
शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ।
यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥ ७१ ॥
पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः ।
पश्यतामसुरेन्द्राणां स्वरूपं जगृहे विभुः ॥ ७२ ॥
एवं सुरासुरगणाः समदेशकाल-
हेत्वर्थयोगगतयो विफले विकल्पाः ।
तत्रामृतं सुरगणाः फलमञ्जसाऽऽपुः
यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ ७३ ॥
यद्युज्यतेषु वसुकर्ममनोवचोभि-
र्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात् ।
तैरेव सद् भवति यत् क्रियते च तस्मिन्
सर्वस्य तद् भवति मूलनिषेचनं यत् ॥ ७४ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे अष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः

श्रीशुक उवाच–
इति दानवदैतेया नाविन्दन्नमृतं नृप ।
युक्ताः कर्मणि यत्ताश्च नारायणपराङ्मुखाः ॥ १ ॥
साधयित्वाऽमृतं राजन् पाययित्वाऽमृतं सुरान् ।
पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥
सपत्नानां परामृद्धिं दृष्ट्वा च दितिनन्दनाः ।
अमृष्यमाणा उत्पेतुर्देवान् प्रत्युद्यतायुधाः ॥ ३ ॥
ततः सुरगणाः सर्वे सुधया पीतयैधिताः ।
प्रतिसंयुयुधुः शस्त्रैर्नारायणपरायणाः ॥ ४ ॥
तत्र दैवासुरो नाम रणः परमदारुणः ।
रोधस्युदन्वतो राजन् तुमुलो रोमहर्षणः ॥ ५ ॥
तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे ।
समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥
शङ्खतूर्यमृदङ्गानां भेरीडमरिणां महान् ।
हस्त्यश्वरथपत्तीनां नदतां निस्स्वनोऽभवत् ॥ ७ ॥
रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ।
हया हयैरिभैश्चेभाः समसज्जन्त संयुगे ॥ ८ ॥
उष्ट्रैः केचिद् द्विजैः केचिदपरेऽभियुः खरैः ।
केचिद् गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९ ॥
गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः ।
शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥
शिवाभिराखुभिः केचित् कृकलासैः शशैर्नरैः ।
बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥
अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ।
सेनयोरुभयो राजन् विविशुस्तेऽग्रतोऽग्रतः ॥ १२ ॥
चित्रध्वजपटै राजन्नातपत्रैः शितामलैः ।
महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥
वातोद्धूतोत्तरोष्णीषैः सत्कृतैर्वर्मभूषणैः ।
स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥ १४ ॥
देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन ।
रेजतुर्वीचिमालाभिर्यादसामिव सागरौ ॥ १५ ॥
वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः ।
यानं वैहायसं नाम कामगं मयनिर्मितम् ॥ १६ ॥
सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो ।
अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥
आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ।
वालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये ॥ १८ ॥
तस्यासन् सर्वतो यानैर्यूथानां पतयोऽसुराः ।
नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥

द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः ।
शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥

हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः ।
तारकश्चक्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः ॥ २१ ॥

अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः ।
अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥

अलब्धभागाः सोमस्य केवलं क्लेशभागिनः ।
सर्व एते रणमुखे बहुशो निर्जितामराः ॥ २३ ॥

सिंहनादं विमुञ्चन्तः शङ्खान् दध्मुर्महारवान् ।
दृष्ट्वा सपत्नानुत्सिक्तान् बलभित् कुपितो भृशम् ॥ २४ ॥

ऐरावतं दिक्करिणमारूढो वियति स्वराट् ।
यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥

तस्यासन् सर्वतो देवा नानावाहध्वजायुधाः ।
लोकपालाः सह गणैर्वाय्वग्निवरुणादयः ॥ २६ ॥

तेऽन्योन्यमभिसंसृत्य क्षिपन्तो नामभिर्मिथः ।
आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः ॥ २७ ॥

युयुधे बलिरिन्द्रेण तारकेण दिवस्पतिः ।
वरुणो हेतिनाऽयुध्यन्मित्रो राजन् प्रहेतिना ॥ २८ ॥

यमस्तु कालनाभेन विश्वकर्मा मयेन वै ।
शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥ २९ ॥

अपराजितेन नमुचिरश्विनौ वृषपर्वणा ।
सूर्यो बलिसुतैर्देवो बाणज्येष्ठशतेन सः ॥ ३० ॥

राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।
निशुम्भशुम्भयोर्देवी भद्रकाली नराशनी ॥ ३१ ॥

वृषाकपिस्तु जम्भेन महिषेण विभावसुः ।
इल्वलः सहवातापिर्ब्रह्मपुत्रैररिन्दम ॥ ३२ ॥

कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह ।
बृहस्पतिस्तूशनसा नरकेण शनैश्चरः ॥ ३३ ॥

मरुतो निवातकवचैः कालेयैर्वसवोऽमराः ।
विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥

त एवमाजावसुराः सुरेन्द्रा
द्वन्द्वेन संहत्य च युध्यमानाः ।
अन्योन्यमासाद्य निजघ्नुरोजसा
जिगीषवस्तीक्ष्णशरांश्च चिक्षिपुः ॥ ३५ ॥

भूशुण्डिभिश्चक्रगदर्ष्टिपट्टिशैः
शक्त्युल्मुकैः प्रासपरश्वधैरपि ।
निस्त्रिंशभल्लैः परिघैः समुद्गरैः
सभिण्डिपालैश्च शिरांसि चिच्छिदुः ॥ ३६ ॥

गजास्तुरङ्गाः सरथाः पदातयः
सारोहवाहा विविधा विखण्डिताः ।
निकृत्तबाहूरुशिरोधराङ्घ्रय-
श्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥ ३७ ॥

तेषां पदाघातरथाङ्गचूर्णितात्
आयोधनादुल्बण उच्छ्रितस्तदा ।
रेणुर्दिशः खं द्युमणिं च छादयन्
न्यवर्ततासृक्स्रुतिभिः परिप्लुतः ॥ ३८ ॥

शिरोभिरुद्धूतकिरीटकुण्डलैः
संरम्भदृग्भिः परिदष्टदच्छदैः ।
महाभुजैः साभरणैः सहायुधैः
संप्रास्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥

कबन्धास्तत्र चोत्पेतुः पतितैः स्वशिरोऽक्षिभिः ।
उद्यतायुधदोर्दण्डैराधावन्तो भटान् मृधे ॥ ४० ॥

बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः ।
चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत् ॥ ४१ ॥

स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ।
चिच्छेद निशितैर्भल्लैरसंप्राप्तान् हसन्निव ॥ ४२ ॥

तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ।
तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥

ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ।
यद्यच्छस्त्रं समादद्यात् सर्वं तदच्छिनद् विभुः ॥ ४४ ॥

ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः ।
ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥ ४५ ॥

ततो निपेतुस्तरवो दह्यमाना दवाग्निना ।
शिलाविटङ्कशिखराश्चूर्णयन्तो द्विषद्बलम् ॥ ४६ ॥

महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः ।
सिंहव्याघ्रवराहाश्च मर्दयन्तो महासुरान् ॥ ४७ ॥

यातुधान्यश्च शतशः शूलहस्ता विवाससः ।
छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणा विभो ॥ ४८ ॥

ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः ।
अङ्गारान् मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥

सृष्टो दैत्येन सुमहान् वह्निः श्वसनसारथिः ।
सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥ ५० ॥

ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत ।
प्रचण्डवातैरुद्धूततरङ्गावर्तभीषणः ॥ ५१ ॥

एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः ।
सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥

न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप ।
ध्यातः प्रादुरभूत् तत्र भगवान् विश्वभावनः ॥ ५३ ॥

ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः ।
अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुण्डलः ॥ ५४ ॥

तस्मिन् प्रविष्टेऽसुरकूटकर्मजा
माया विनेशुर्महिना महीयसः ।
स्वप्नो यथा हि प्रतिबोध आगते
हरिस्मृतिः सर्वविपद्विमोक्षणम् ॥ ५५ ॥

दृष्ट्वा मृधे गरुडवाहमिभारिवाह
आविध्य शूलमहिनोदथ कालनेमिः ।
तल्लीलया गरुडमूर्ध्नि पतद् गृहीत्वा
तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥

माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण
कृत्तशिरसावथ माल्यवांस्तम् ।
आहत्य तिग्मगदयाहनदण्डजेन्द्रं
तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ॥ ५७ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे नवमोऽध्यायः ॥

# अथ दशमोऽध्यायः

श्रीशुक उवाच–
अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयाऽनुकम्पया ।
जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान् रणे यैरभिसंहताः पुरा ॥ १ ॥

वैरोचनाय संरब्धो भगवान् पाकशासनः ।
उदयच्छद् यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥

वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरः स्थितम् ।
मनस्विनं सुसम्पन्नं विचरन्तं महामृधे ॥ ३ ॥

इन्द्र उवाच–
नटवन्मूढ मायाभिर्मायेशान् नो जिगीषसि ।
जित्वा बालान् निबद्धाक्षान् यथा हरति तद्धनम् ॥ ४ ॥

आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम् ।
तान् दस्यून् विधुनोम्यज्ञान् पूर्वस्माच्च पदादधः ॥ ५ ॥

सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ।
शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह ॥ ६ ॥

बलिरुवाच–
सङ्ग्रामे वर्तमानानां कालेनोदितकर्मणाम् ।
कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥

तमिमं कालरशनं जनाः पश्यन्ति सूरयः ।
न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ॥ ८ ॥

न वयं मन्यमानानामात्मानं तत्र कारणम् ।
गिरो वः साधु शोच्यानां गृह्णीमो मर्मताडनाः ॥ ९ ॥

श्रीशुक उवाच–
प्रत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः ।
आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥ १० ॥

एवं निराकृतो देवो वैरिणा तथ्यवादिना ।
नामृष्यत् तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥

प्राहरत् कुलिशं तस्मा अमोघं परमर्दनम् ।
सयानो न्यपतद् भूमौ छिन्नपक्ष इवाचलः ॥ १२ ॥

सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् ।
अभ्ययात् सौहृदं सख्युर्हतस्यापि समाचरन् ॥ १३ ॥
स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ।
जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥
गदाप्रहारव्यथितो भृशं विह्वलितो गजः ।
जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥
ततो रथो मातलिना हरिभिर्दशशतैर्वृतः ।
आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥
तस्य तत् पूजयन् कर्म यन्तुर्दानवसत्तमः ।
शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे ॥ १७ ॥
सेहे रुजं सुदुर्मर्षं सत्त्वमालम्ब्य मातलिः ।
इन्द्रो जम्भस्य संक्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥
जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ।
नमुचिश्च बलः पाकस्तत्रापेतुस्त्वरान्विताः ॥ १९ ॥
वचोभिः परुषैरिन्द्रं मर्दयन्तोऽस्य मर्मसु ।
शरैरवाकिरन् मेघा धाराभिरिव पर्वतम् ॥ २० ॥
हरीन् दशशतान्याजौ हर्यश्वस्य बलः शरैः ।
तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥
शताभ्यां मातलिं पाको रथं सावयवं पृथक् ।
सकृत्सन्धानमोक्षेण तदद्भुतमभूद् रणे ॥ २२ ॥
नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः ।
आहत्य व्यनदत् सङ्ख्ये सतोय इव तोयदः ॥ २३ ॥
सर्वतः शरकूटेन शक्रं सरथसारथिम् ।
छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥
अलक्षयन्तस्तमतीव विह्वला
विचुक्रुशुर्देवगणाः सहानुगाः ।
अनायकाः शत्रुबलेन निर्जिता
वणिक्पथा भिन्ननवो यथार्णवे ॥ २५ ॥
ततस्तुराषाडिषुबद्धपञ्जराद्
विनिर्गतः साश्वरथध्वजाग्रणीः ।
बभौ दिशः खं पृथिवीं च रोचयन्
स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥
निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे ।
उदयच्छद् रिपून् हन्तुं वज्रं वज्रधरो रुषा ॥ २७ ॥
स तेनैवाष्टधारेण शिरसी बलपाकयोः ।
ज्ञातीनां पश्यतां राजन् जहार जनयन् भयम् ॥ २८ ॥
नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः ।
जिघांसुरिन्द्रं नृपते चकार परमोद्यमम् ॥ २९ ॥
अश्मसारमयं शूलं घण्टावद्धेमभूषणम् ।
प्रगृह्याभ्यद्रवत् क्रुद्धो नमुचिर्दानवोत्तमः ॥ ३० ॥
तदाविध्य महावीर्यो हतोऽसीति वितर्जयन् ।
प्राहिणोद् देवराजाय निनदन् मृगराडिव ॥ ३१ ॥
तदापतद् गगनतले महाजवं
निचिच्छिदे हरिरिषुभिः सहस्रधा ।
तमाहनन् नृप कुलिशेन कन्धरे
रुषान्वितस्त्रिदशपतिः शिरो हरन् ॥ ३२ ॥
ततोऽस्य न त्वचमपि वज्र ऊर्जितो
बिभेद यः सुरपतिनौजसेरितः ।
तदद्भुतं परमतिवीर्यवृत्रभित्
तिरस्कृतो नमुचिशिरोधरत्वचा ॥ ३३ ॥
तस्मादिन्द्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः ।
किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३४ ॥
येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ।
कृतो निविशतां भारैः पतत्त्रैः पततां भुवि ॥ ३५ ॥
तपःसारमयं त्वाष्ट्रं वृत्रो येन विपाटितः ।
अन्ये चातिबलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३६ ॥
सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ।
नाहं तदाददे वज्रं ब्रह्मतेजोऽप्यकारणम् ॥ ३७ ॥
इति शक्रं विषीदन्तमाह वागशरीरिणी ।
नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३८ ॥
मयास्मै यद् वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ।
अतोऽन्यश्चिन्तनीयस्ते उपायो मघवन् रिपोः ॥ ३९ ॥
तां दैवीं गिरमाकर्ण्य मघवान् सुसमाहितः ।
ध्यायन् फेनमथापश्यदुपायमुभयात्मकम् ॥ ४० ॥

नशुच्केण नचार्द्रेण जहार नमुचेः शिरः ।
तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन् विभुम् ॥ ४१ ॥

गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू ।
देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४२ ॥

अन्येऽप्येवं प्रतिद्वन्द्वान् वाय्वग्निवरुणादयः ।
सूदयामासुरस्त्रौघैर्मृगान् केसरिणो यथा ॥ ४३ ॥

ब्रह्मणा प्रेषितो देवान् देवर्षिर्नारदो नृप ।
वारयामास विबुधान् दृष्ट्वा दानवसङ्क्षयम् ॥ ४४ ॥

नारद उवाच–
भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः ।
श्रिया समेधिताः सर्वे उपारमत विग्रहात् ॥ ४५ ॥

श्रीशुक उवाच–
संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ।
संगीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४६ ॥

येऽवशिष्टा रणे तस्मिन् नारदानुमतेन ते ।
बलिं विपन्नमादाय अस्तंगिरिमुपागमन् ॥ ४७ ॥

तत्राविनष्टावयवान् विद्यमानशिरोधरान् ।
उशना जीवयामास सञ्जीविन्या स्वविद्यया ॥ ४८ ॥

बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः ।
पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४९ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे दशमोऽध्यायः ॥

# अथ एकादशोऽध्यायः

श्रीशुक उवाच–
वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् ।
मोहयित्वा सुरगणान् हरिः सोममपाययत् ॥ १ ॥

वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ।
सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥

सभाजितो भगवता सादरं सोमया भवः ।
सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन् हरिम् ॥ ३ ॥

देव देव जगद्व्यापिन् जगदीश जगन्मय ।
सर्वेषामेव भावानां त्वमात्मा हेतुरीश्वरः ॥ ४ ॥

तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः ।
विसृज्योभयतः सङ्गं मुनयः समुपासते ॥ ५ ॥

त्वं ब्रह्म पूर्णममृतं विगुणं विशोक-
मानन्दमात्रमविकारमनन्यदन्यत् ।
विश्वस्य हेतुरुदयस्थितिसंयमाना-
मात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ६ ॥

एकस्त्वमेव सदसद्द्वयमद्वयं च
स्वर्णं कृताकृतमिवेह न वस्तुभेदः ।
अज्ञानतस्त्वयि जनैर्विहितो विकल्पो
यस्माद् गुणव्यतिकरो निरुपाधिकश्च ॥ ७ ॥

त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक
एके परं सदसतोः पुरुषं परेशम् ।
अन्ये वदन्ति नवशक्तियुतं परं त्वां
केचिन्महापुरुषमव्ययमात्मतन्त्रम् ॥ ८ ॥

नाहं परायुर्ऋषयो न मरीचिमुख्या
जानन्ति यद्विरचितं खलु सत्वसर्गाः ।
यन्मायया मुषितचेतस ईश दैत्य-
मर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ ९ ॥

स त्वं समीहितमदः स्थितिजन्मनाशान्
भूतेहितं च जगतो भवबन्धमोक्षौ ।
वायुर्यथा विशति खं च चराचराख्यं
सर्वं त्वदात्मकतयाऽवगमो नुतिस्ते ॥ १० ॥

अवतारा मया दृष्टा रममाणस्य ते गुणैः ।
सोऽहं तद् द्रष्टुमिच्छामि यत् ते योषिद्वपुर्धृतम् ॥ ११ ॥

येन सम्मोहिता दैत्याः पायिताश्चामृतं सुराः ।
तद् दिदृक्षव आयाताः परं कौतूहलं हि नः ॥ १२ ॥

श्रीशुक उवाच–
एवमभ्यर्थितो विष्णुर्भगवान् शूलपाणिना ।
प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥ १३ ॥

श्रीभगवानुवाच–
कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः ।
पश्यता सुरकार्याणि गते पीयूषभाजने ॥ १४ ॥

तत् तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ।
तत्कामिनां च मन्तव्यं सङ्कल्पप्रभवोदयम् ॥ १५ ॥

श्रीशुक उवाच–
इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत ।
सर्वतश्चारयंश्चक्षुर्भव आस्त सहोमया ॥ १६ ॥

ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ।
विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥

आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदे पदे ।
प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥

दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ।
स्वकर्णविभ्राजितलोलकुण्डलोल्लसत्कपोलालकमण्डिताननाम् ॥

श्लथद्दुकूलं कवरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ।
विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्ममायया ॥

तां वीक्ष्य देव इति कन्दुकलीलयेषद्
व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ।
स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा
नात्मानमन्तिक उमां स्वगणांश्च वेद ॥ २१ ॥

तस्याः कराग्रात् स तु कन्दुको यदा
गतो विदूरं तमनुव्रजन्त्याः ।
वासः ससूत्रं लघु मारुतोऽहरद्
भवस्य देवस्य किलानुपश्यतः ॥ २२ ॥

एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् ।
दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां भवः किल ॥ २३ ॥

तयापहृतविज्ञानस्तत्कृतस्मरविह्वलः ।
भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥ २४ ॥

सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम् ।
निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत ॥ २५ ॥

तामन्वगच्छद् भगवान् भवः प्रव्यथितेन्द्रियः ।
कामस्य च वशं नीतः करेणुमिव यूथपः ॥ २६ ॥

सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् ।
केशबन्ध उपानीय बाहुभ्यां परिषस्वजे ॥ २७ ॥

सोपगूढा भगवता करिणा करिणी यथा ।
इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा ॥ २८ ॥

आत्मानं मोचयित्वाऽङ्ग सुरर्षभभुजान्तरात् ।
प्राद्रवत् सा पृथुश्रोणी माया देवविनिर्मिता ॥ २९ ॥

तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः ।
प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः ॥ ३० ॥

तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः ।
शुष्मिणो यूथपस्येव वासितामनुधावतः ॥ ३१ ॥

यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः ।
तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन् महीपते ॥ ३२ ॥

सरित्सरःसु शैलेषु वनेषूपवनेषु च ।
यत्र क्वचासन् ऋषयस्तत्र सन्निहितो हरः ॥ ३३ ॥

स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया ।
जडीकृतं नृपश्रेष्ठ सन्न्यवर्तत कश्मलात् ॥ ३४ ॥

अथावगतमाहात्म्य आत्मनो जगदात्मनः ।
अपरिज्ञेयवीर्यस्य न मेने तदुदाहृतम् ॥ ३५ ॥

तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ।
उवाच परमप्रीतो बिभ्रत् स्वां पौरुषीं तनुम् ॥ ३६ ॥

श्रीभगवानुवाच–
दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः ।
यतो दुस्तरया स्वैरं मोहितोऽप्यङ्ग मायया ॥ ३७ ॥

को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ।
तांस्तान् विसृजतीं भावान् दुस्तरामकृतात्मभिः ॥ ३८ ॥

सेयं गुणमयी माया न त्वामभिभविष्यति ।
मया समेतं कालेन कालरूपेण भागशः ॥ ३९ ॥

श्रीशुक उवाच–
एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः ।
आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४० ॥

आत्मांशभूतां तां मायां भवानीं भगवान् भवः ।
शंसतामृषिमुख्यानां प्रीत्या तुष्टाव भारत ॥ ४१ ॥

अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ।
अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुतास्वतन्त्राः ॥
यं मामपृच्छस्त्वमुपेत्य योगात् समासहस्रान्त उपारतं वै ।
स एष साक्षात् पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥
श्रीशुक उवाच–
इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः
सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥ ४४ ॥
एतन्मुहुः कीर्तयतोऽनृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ।
यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरि(श्र)श्रमापहम् ॥
असदविषयमङ्घ्रिं भावगम्यं प्रपन्ना-
नमृतममरवर्यानाशयत् सिन्धुमथ्यम् ।
कपटयुवतिवेषो मोहयन् यः सुरारीं-
स्तमिममुपसृतानां कामपूरं नतोऽस्मि ॥ ४६ ॥
॥ इति श्रीमद्भागवते अष्टमस्कन्धे एकादशोऽध्यायः ॥

# अथ द्वादशोऽध्यायः

श्रीशुक उवाच–
मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः ।
सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥ १ ॥
इक्ष्वाकुश्च नभश्चैव धृष्टः शर्यातिरेव च ।
नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥
करूषश्च वृषध्रश्च दशमो वसुमान् स्मृतः ।
मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ॥ ३ ॥
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।
अश्विनावृभवो राजनिन्द्रस्तेषां पुरन्दरः ॥ ४ ॥
कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥
अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ।
आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥
संक्षेपतो मयोक्तानि सप्तमन्वन्तराणि ते ।
भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्यन्वितानि च ॥ ७ ॥
विवस्वतश्च द्वे भार्ये विश्वकर्मसुते उभे ।
संज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव ॥ ८ ॥
तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः ।
यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥ ९ ॥
सावर्णिस्तपती कन्या भार्या संवरणस्य या ।
शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ ॥ १० ॥
अष्टमे अन्तरे याते सावर्णिर्भविता मनुः ।
निर्मोहविरजस्काद्याः सावर्णेस्तनया नृप ॥ ११ ॥
तत्र देवाः सुतपसो विरजा अमितप्रजाः ।
तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥
दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ।
राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ १३ ॥
योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ।
निवेशितोऽधिके स्वर्गादधुनाऽऽस्ते स्वराडिव ॥ १४ ॥
गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा ।
ऋष्यशृङ्गः पिताऽस्माकं भगवान् बादरायणः ॥ १५ ॥
इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः ।
इदानीमासते राजन् स्वे स्वे आश्रममण्डले ॥ १६ ॥
देवगुह्यात् सरस्वत्यां सार्वभौमपतिः प्रभुः ।
स्थानं पुरन्दराद् हृत्वा बलये दास्यतीश्वरः ॥ १७ ॥
नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः ।
भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप ॥ १८ ॥
पारामरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः स्मृतः ।
द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्तत ः ॥ १९ ॥
आयुष्मतोऽम्बुधारायामृषभो भगवत्कलः ।
भविता येन संत्रातस्त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥ २० ॥
दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ।
तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥
तत्रापि जन्म भविता हरेर्विश्वसृजां गृहे ।
श्रीमूर्तिरिति विख्यातो येनाप्यायेत वै जगत् ॥ २२ ॥

हविष्मान् सुकृतः सत्यो जयो मूर्तिस्तदा द्विजाः ।
सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥ २३ ॥
विष्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति ।
जातः शान्तस्तु भगवान् गृहे विश्वसृजां विभुः ॥ २४ ॥
मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ।
अनागतस्तत्सुताश्च सत्यधर्मादयो दश ॥ २५ ॥
विहङ्गमाः कामगमा निर्वाणरुचयः सुराः ।
इन्द्रश्च वैधृतस्तेषामृषयश्चारुणादयः ॥ २६ ॥
आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः ।
वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥ २७ ॥
भविता रुद्रसावर्णी राजन् द्वादशमो मनुः ।
देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २८ ॥
ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः ।
ऋषयश्च तपोमूर्तितपस्व्याग्नीध्रकादयः ॥ २९ ॥
स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ।
अन्तरं सत्यमहसः सूनृतायाः सुतो विभुः ॥ ३० ॥
मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ।
चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३१ ॥
देवाः सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः ।
निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा ॥ ३२ ॥
देवहोत्रस्य तनय उपहर्ता दिवस्पतेः ।
योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥ ३३ ॥
मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यते ।
जन्तुभीरवयाद्या इन्द्रसावर्णिवीर्यजाः ॥ ३४ ॥
विचित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ।
अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः ॥ ३५ ॥
सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ।
वितानायां महाराज क्रियातन्तून् वितायिता ॥ ३६ ॥
राजन् चतुर्दशैतानि त्रिकालानुगतानि ते ।
प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः ॥ ३७ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः

राजोवाच–
मन्वन्तरेषु भगवन् यथा मन्वादयस्त्विमे ।
यस्मिन् कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥ १ ॥
ऋषिरुवाच–
मनवो मनुपुत्राश्च मुनयश्च महीपते ।
इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥
यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ।
मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥ ३ ॥
चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान् यथा ।
तपसा ऋषयोऽपश्यन् यतो धर्मः सनातनः ॥ ४ ॥
ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ।
युक्ताः सञ्चारयन्त्यद्धा स्वे स्वे काले महीं नृपाः ॥ ५ ॥
पालयन्ति प्रजापाला यावदन्तं विभागशः ।
यज्ञभागभुजो देवा ये च तत्रानुकीर्तिताः ॥ ६ ॥
इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ।
भुञ्जानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति ॥ ७ ॥
ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ।
ऋषिरूपधरः कर्म योगं योगेशरूपधृक् ॥ ८ ॥
सर्गं प्रजेशरूपेण दस्यून् हन्ति स्वराड्वपुः ।
कालरूपेण सर्वेषामभावाय पृथग्गुणः ॥ ९ ॥
स्तूयमानो जनैरेभिर्मायया नामरूपया ।
विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते ॥ १० ॥
एतत् कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ।
यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः ॥ ११ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे त्रयोदशोऽध्यायः ॥

# अथ चतुर्दशोऽध्यायः

राजोवाच–
बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ।
भूत्वेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥

एतद् वेदितुमिच्छामो महत् कौतूहलं हि नः ।
याच्ञेश्वरस्य पूर्णस्य बन्धनं चाप्यनागसः ॥ २ ॥

श्रीशुक उवाच–
पराजितश्रीरसुभिश्च हापितो
इन्द्रेण राजन् गुरुभिः स जीवितः ।
सर्वात्मना तानभजद् भृगून् बलिः
शिष्यो महान् स्वार्थनिवेदनेन ॥ ३ ॥

तं ब्राह्मणा भृगवः प्रीयमाणा
अयाजयन् विश्वजिता त्रिलोकम् ।
जिगीषमाणं विधिनाऽभिषिच्य
महाभिषेकेण महानुभावाः ॥ ४ ॥

ततो रथः काञ्चनपट्टबद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः ।
ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिद्धात् ॥ ५

धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ।
पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥

एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् ।
प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥

अथारुह्य रथं दिव्यं भृगुदत्तं महारथः ।
सुस्रग्धरोऽथ सन्नद्धो धन्वी खड्गी धृतेषुधिः ॥ ८ ॥

हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः ।
रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥ ९ ॥

तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः ।
पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव ॥ १० ॥

वृतो विकर्षन् महतीमासुरीं ध्वजिनीं विभुः ।
ययाविन्द्रपुरीमृद्धां कम्पयन्निव रोदसीम् ॥ ११ ॥

रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः ।
कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥

प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ।
हंससारसचक्राह्वकारण्डवकुलाकुलाम् ॥ १३ ॥

नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः ।
आकाशगङ्गया देव्या वृतां परिखभूतया ॥ १४ ॥

प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ।
रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ॥ १५ ॥

जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ।
सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ।
शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥ १६ ॥

यत्र नित्यवयोरूपाः श्यामा विरजवाससः ।
भ्राजन्ते रूपवन्नार्यो ह्यर्चिर्भिरिव वह्नयः ॥ १७ ॥

सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् ।
यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥ १८ ॥

हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना ।
पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरस्त्रियः ॥ १९ ॥

मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ।
शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम् ॥

मृदङ्गशङ्खानकदुन्दुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ।
नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितग्रहाम् ॥

यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः ।
मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्त्युत ॥ २२ ॥

तां देवधानीं स वरूथिनीपति-
र्बहिः समन्ताद् रुरुधे पृतन्यया ।
आचार्यदत्तं जलजं महास्वनं
दध्मौ प्रयुञ्जन् भयमिन्द्रयोषिताम् ॥ २३ ॥

मघवांस्तदभिप्रेत्य बलेः परममुद्यमम् ।
सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥ २४ ॥

इन्द्र उवाच–
भगवन्नुद्यमो भूयान् बलेर्नः पूर्ववैरिणः ।
अविषह्यमिदं मन्ये केनासीत् तेजसाऽसमः ॥ २५ ॥

नैनं कश्चित् कुतो वापि प्रतिवोढुमधीश्वरः ।
पिबन्निव मुखेनेदं लिहन्निव दिशो दश ॥ २६ ॥

दहन्निव दिशो दृग्भिः संवर्ताग्निरिवोत्थितः ॥ २७ ॥

ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः ।
ओजः सहो बलं तेजो यत एष समुद्यमः ॥ २८ ॥

गुरुरुवाच–
जानामि मघवन् शत्रोरुन्नतेरस्य कारणम् ।
शिष्यायोपभृतं तेजो गुरुभिर्ब्रह्मवादिभिः ॥ २९ ॥

भवद्विधो भवान् वापि वर्जयित्वेश्वरं हरिम् ।
नास्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः ॥ ३० ॥

तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम् ।
यात कालं प्रतीक्षन्तो यतः शत्रोर्विपर्ययः ॥ ३१ ॥

एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रमः ।
एषामेवावमानेन सानुबन्धो विनङ्क्ष्यति ॥ ३२ ॥

श्रीशुक उवाच–
एवं सुमन्त्रितार्थास्ते गुरुणार्थानुदर्शिना ।
हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ॥ ३३ ॥

देवेष्वतिविलीनेषु बलिर्वैरोचनः पुरीम् ।
देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम् ॥ ३४ ॥

तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः ।
शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३५ ॥

ततस्तदनुभावेन भुवनत्रयविश्रुताम् ।
कीर्तिं दिक्षु वितन्वानः स रेज उडुराडिव ॥ ३६ ॥

बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलम्भिताम् ।
कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥ ३७ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे चतुर्दशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

श्रीशुक उवाच–
एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा ।
हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥

एकदा कश्यपस्तस्या आश्रमं भगवानगात् ।
निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥

स पत्नीं दीनवदनां कृतासनपरिग्रहः ।
सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥

अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनाऽऽगतम् ।
न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥ ४ ॥

अपि वाऽकुशलं किं वा गृहेषु गृहमेधिनि ।
धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥

अपि वाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया ।
गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥ ६ ॥

गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ।
यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥ ७ ॥

अप्यग्नयस्तु वेलायां न हुता हविषा सति ।
त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥

यत्पूजया कामदुघान् यान्ति लोकान् गृहान्विताः ।
ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥ ९ ॥

अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि ।
लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥

अदितिरुवाच–
भद्रं द्विजगवां ब्रह्मन् धर्मस्यास्य जनस्य च ।
त्रिवर्गस्य परं क्षेत्रं गृहमेधिन् गृहा इमे ॥ ११ ॥

अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः ।
सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥

को नु मे भगवन् कामो न सम्पद्येत मानसः ।
यस्या भवान् प्रजाध्यक्ष एवं धर्मान् प्रभाषते ॥ १३ ॥

तवैव मारीच मनःशरीरजाः प्रजा इमाः सत्वरजस्तमोजुषः ।
मनोरथं तासु सुरादिषु प्रभो यथाविभागं भजते महेश्वरः ॥

तस्मादंशं भजन्त्या मे श्रेयश्चिन्तय सुव्रत ।
हृतश्रियो हृतस्थानाः सपत्नैः पाहि नः प्रभो ॥ १५ ॥

परैर्विवासिता साऽहं मग्ना व्यसनसागरे ।
ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥

यथा तानि पुनः साधो प्रपद्येरन् ममात्मजाः ।
तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥ १७ ॥

श्रीशुक उवाच–
एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ।
अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥ १८ ॥

क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः ।
कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ १९ ॥

उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् ।
सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥ २० ॥

स विधास्यति ते कामान् हरिर्दीनानुकम्पनः ।
अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥ २१ ॥

अदितिरुवाच–
केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ।
यथा मे सत्यसङ्कल्पो विदध्यात्स मनोरथम् ॥ २२ ॥

आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् ।
आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥ २३ ॥

कश्यप उवाच–
एतन्मे भगवान् पृष्टः प्रजाकामस्य पद्मजः ।
यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥

फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ।
अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥ २५ ॥

सिनीवाल्यां मृदालिप्य स्नायात् क्रोडविदीर्णया ।
यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ॥ २६ ॥

त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ।
उद्धृताऽसि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ २७ ॥

निर्वर्तितात्मनियमो देवमर्चेत् समाहितः ।
अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥ २८ ॥

नमस्तुभ्यं भगवते पुरुषाय महीयसे ।
सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २९ ॥

नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ।
चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥ ३० ॥

नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे ।
सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥ ३१ ॥

नमः शिवाय रुद्राय नमः शक्तिधराय च ।
सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३२ ॥

नमो हिरण्यगर्भाय प्राणाय जगदात्मने ।
योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३३ ॥

नमस्त आदिदेवाय देवदेवाय ते नमः ।
नारायणाय ऋषये नराय हरये नमः ॥ ३४ ॥

नमो मरकतश्यामवपुषेऽधिगतश्रिये ।
केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ३५ ॥

त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ।
अतस्ते तपसा धीराः पादरेणुमुपासते ॥ ३६ ॥

अन्ववर्तन्त यं देवाः श्रीविनिर्जितपद्मयोः ।
स्पृहयन्त इवामोदं भगवान् मे प्रसीदताम् ॥ ३७ ॥

एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्सरम् ।
अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३८ ॥

अर्चित्वं गन्धमाल्याद्यैः पयसा स्नापयेद् विभुम् ।
वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ ३९ ॥

गन्धधूपादिभिश्चार्चेत् द्वादशाक्षरविद्यया ।
शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ४० ॥

ससर्पिः सगुडं दत्वा जुहुयान्मूलविद्यया ।
निवेदितं तद्भक्ताय दद्याद् भुञ्जीत वा स्वयम् ॥ ४१ ॥

दत्वाऽऽचमनमर्चित्वा ताम्बूलं च निवेदयेत् ।
जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥ ४२ ॥

कृत्वा प्रदक्षिणं भूमौ प्रणमेद् दण्डवन्मुदा ।
कृत्वा शिरसि तच्छेषं देवमुद्वासयेत् ततः ॥ ४३ ॥

क्षवरान् भोजयेद् विप्रान् पायसेन यथोचितम् ।
भुञ्जीत तैरनुज्ञातो हुतशेषं सभाजितैः ॥ ४४ ॥

ब्रह्मचार्यथ तद्रात्र्यां श्वो भूते प्रथमेऽहनि ।
प्रातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ ४५ ॥

पयसा स्नापयित्वाऽर्चेद् यावद् व्रतसमापनम् ।
पयोभक्षो व्रतमिदं चरेद् विष्ण्वर्चनादृतः ॥ ४६ ॥

पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ।
एवं त्वहरहः कुर्याद् द्वादशाहं पयोव्रतम् ॥ ४७ ॥

हरेराराधनं होममर्हणं द्विजतर्पणम् ।
प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ४८ ॥

ब्रह्मचर्यमधःस्वापं स्नानं त्रिषवणं चरेत् ।
वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ ४९ ॥

अहिंस्रः सर्वभूतानां वासुदेवपरायणः ।
त्रयोदश्यामथो विष्णोः स्नपनं स्नापकैर्विभोः ॥ ५० ॥

कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ।
पूजां च महतीं कुर्याद् वित्तशाठ्यविवर्जितः ॥ ५१ ॥

चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ।
सृतेन तेन पुरुषं यजेत सुसमाहितः ॥ ५२ ॥

नैवेद्यं चापि गुणवद् दद्यात् पुरुषतुष्टिदम् ।
आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः ॥ ५३ ॥

तोषयेद् ऋत्विजश्चैव तद् विद्ध्याराधनं हरेः ।
भोजयेत् तान् गुणवता सदन्नेन शुचिस्मिते ॥ ५४ ॥

अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र समागताः ।
दक्षिणां गुरवे दद्याद् ऋत्विग्भ्यश्च यथार्हतः ॥ ५५ ॥

अन्नाद्येनाश्वपाकांश्च प्रीणयेत् समुपागतान् ।
भुक्तवत्सु च विप्रेषु दीनान्धकृपणादिषु ॥ ५६ ॥

विष्णोस्तत्प्रीणनं विद्वान् सह भुञ्जीत बन्धुभिः ।
नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ॥ ५७ ॥

कारयेत् तत्कथाभिश्च पूजां भगवतोऽन्वहम् ।
एतत् पयोव्रतं नाम पुरुषाराधनं परम् ॥ ५८ ॥

पितामहेनाभिहितं मम ते समुदाहृतम् ।
त्वं चानेन महाभागे सम्यक् चीर्णेन केशवम् ॥ ५९ ॥

आत्मना शुद्धभावेन भजनीयं भजाव्ययम् ।
अयं वै सर्वयज्ञाख्यः सर्वव्रतमिदं श्रुतम् ॥ ६० ॥

तपःसारमिदं भद्रे दानं चेश्वरतर्पणम् ।
त एव नियमाः साक्षात् त एव च यमोत्तमाः ॥ ६१ ॥

तस्मादेतं व्रतं भद्रे प्रयता श्रद्धया चर ।
भगवान् परितुष्टस्ते वरानाशु विधास्यति ॥ ६२ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे पञ्चदशोऽध्यायः ॥

# अथ षोडशोऽध्यायः

श्रीशुक उवाच–
इत्युक्ता साऽदिती राजन् स्वभर्त्रा कश्यपेन वै ।
अन्वतिष्ठद् व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥

चिन्तयन्त्येकया बुद्ध्या भगवन्तमधोक्षजम् ।
प्रगृह्येन्द्रियदुष्टाश्वान् मनसा बुद्धिसारथिः ॥ २ ॥

मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ।
वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥

तस्याः प्रादुरभूत् तात भगवानादिपूरुषः ।
पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥ ४ ॥

तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ।
ननाम भुवि कायेन दण्डवत् प्रीतिविह्वला ॥ ५ ॥

सोत्थाय बद्धाञ्जलिरीडितुं स्थिता
नोत्सेह आनन्दजलाकुलेक्षणा ।
बभूव तूष्णीं पुलकाकुलाकृति-
स्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥

प्रीत्या शनैर्गद्गदया गिरा हरिं
तुष्टाव सा देव्यदितिः कुरूद्वह ।
उद्वीक्षती सा पिबतीव चक्षुषा
रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥

अदितिरुवाच–
यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद
तीर्थश्रव श्रवणमङ्गलनामधेय ।
आपन्नलोकवृजिनोपशमोदयाद्य
शं नः कृधीश भगवन्नसि दीननाथ ॥ ८ ॥

विश्वाय विश्वभवन स्थितिसंयमाय
स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ।
स्वच्छाय शश्वदुपबृंहितपूर्णबोध-
व्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥

आयुः परं वपुरभीष्टमतुल्यलक्ष्मी-
द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः ।
ज्ञानं च केवलमनन्त भवन्ति तुष्टात्
त्वत्तो नृणां किमुसपत्नजयादिराशीः ॥ १० ॥

श्रीशुक उवाच–
अदित्यैवं स्तुतो राजन् भगवान् पुष्करेक्षणः ।
क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ॥ ११ ॥

श्रीभगवानुवाच–
देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम् ।
यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः ॥ १२ ॥

तान् विनिर्जित्य समरे दुर्मदानसुरर्षभान् ।
प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥ १३ ॥

इन्द्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ।
स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४ ॥

आत्मजान् सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः ।
नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥ १५ ॥

प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः ।
यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥

अथाप्युपायो मम देवि चिन्त्यः सन्तोषितस्य व्रतचर्यया ते ।
ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १७ ॥

त्वयार्चितश्चाहमपत्यगुप्तये
पयोव्रतेनानुगुणं समीडितः ।
स्वांशेन पुत्रत्वमुपेत्य ते सुतान्
गोप्तास्मि मारीचतपस्यधिष्ठितः ॥ १८ ॥

उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ।
मां च भावयती पत्यावेवंरूपमवस्थितम् ॥ १९ ॥

नैतत् परस्मा आख्येयं पृष्टयापि कथञ्चन ।
सर्वं सम्पद्यते देवि देवगुह्यं सुसंवृतम् ॥ २० ॥

श्रीशुक उवाच–
एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ।
अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥
उपाधावत् पतिं भक्त्या परया कृतकृत्यवत् ॥ २१ ॥

स वै समाधियोगेन कश्यपस्तदबुध्यत ।
प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः ॥ २२ ॥

सोऽदित्यां वीर्यमाधत्त तपसा चिरसम्भृतम् ।
समाहितमना राजन् दारुण्यग्निं यथानिलः ॥ २३ ॥

अदित्या धिष्ठितं गर्भं भगवन्तं सनातनम् ।
हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः ॥ २४ ॥

ब्रह्मोवाच–
जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ।
नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः ॥ २५ ॥

पृश्नये गर्भाय देवाय वेदगर्भाय वेधसे ।
त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥ २६ ॥

त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः ।
कालो भवानाक्षिपतीश विश्वं स्रोतो यथान्तः पतितं गभीरम् ॥ २७ ॥

त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि सम्भविष्णुः ।
दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे षोडशोऽध्यायः ॥

# अथ सप्तदशोऽध्यायः

श्रीशुक उवाच–
इत्थं विरिञ्चिस्तुतकर्मवीर्यः
प्रादुर्बभूवामृतभूरदित्याम् ।
चतुर्भुजः शङ्खगदाब्जचक्रः
पिशङ्गवासा नलिनायतेक्षणः ॥ १ ॥

श्यामावदातो झषराजकुण्डल-
त्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ।
श्रीवत्सवक्षा बलयाङ्गदोल्लस-
त्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥

मधुव्रतव्रातविघुष्टया स्वया
विराजितश्रीवनमालया हरिः ।
प्रजापतेर्वेश्मतमः स्वरोचिषा
विनाशयन् कण्ठनिविष्टकौस्तुभः ॥ ३ ॥

दिशः प्रसेदुः सलिलाशयास्तदा
प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ।
द्यौरन्तरिक्षं क्षितिरग्निजिह्वा
गावो द्विजाः सञ्जहृषुर्नगाश्च ॥ ४ ॥

श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ।
सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥

द्वादश्यां सवितातिष्ठन्मध्यंदिनगतो नृप ।
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥

शङ्खदुन्दुभयो भेर्यो मृदङ्गपणवानकाः ।
चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥

प्रीताश्चाप्सरसोऽनृत्यन् गन्धर्वपतयो जगुः ।
तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥ ८ ॥

सिद्धविद्याधरगणाः सकिम्पुरुषकिन्नराः ।
चारणा यक्षरक्षांसि सुपर्णभुजगोत्तमाः ॥ ९ ॥

गायन्तोऽभिप्रशंसन्तो नृत्यन्तो विबुधानुगाः ।
अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥

दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता ।
गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥

यत् तद् वपुर्भाति विभूषणायुधैरव्यक्तचिद् व्यक्तमधारयद्धरिः ।
बभूव तेनैव स वामनो वटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः ॥ १२ ॥

तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः ।
कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥ १३ ॥

तस्योपनीयमानस्य सावित्रीं सविताब्रवीत् ।
बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपो ददौ ॥ १४ ॥

ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ।
कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ १५ ॥

कमण्डलुं वेदगर्भः कुशान् सप्तर्षयो ददुः ।
अक्षमालां महाराज सरस्वत्यक्षयात्मनः ॥ १६ ॥

तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ।
भिक्षां भगवती साक्षादुमाऽदादम्बिका सती ॥ १७ ॥

स ब्रह्मवर्चसेनैव सभां सम्भावितो वटुः ।
ब्रह्मर्षिगणसञ्जुष्टामत्यरोचत मारिषः ॥ १८ ॥

समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ।
परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद् द्विजः ॥ १९ ॥

श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं
बलिं भृगूणामुपकल्पितैस्ततः ।
जगाम तत्राखिलसारसम्भृतो
भारेण गां सन्नमयन् पदे पदे ॥ २० ॥

तं नर्मदायास्तट उत्तरे बलेर्य
ऋत्विजस्ते भृगुकच्छसंज्ञिके ।
प्रवर्तयन्तो भृगवः क्रतूत्तमं
व्यचक्षतारादुदितं यथा रविम् ॥ २१ ॥

त ऋत्विजो यजमानः सदस्या
हतत्विषो वामनतेजसा नृप ।
सूर्यः किमायात्यथवा विभावसुः
सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥

इत्थं सशिष्येषु भृगुष्वनेकधा
वितर्क्यमाणो भगवान् स वामनः ।
सदण्डछत्रं सजलं कमण्डलुं
विवेश बिभ्रद् हयमेधवाटम् ॥ २३ ॥

मौञ्ज्या मेखलयाऽऽवीतमुपवीताजिनोत्तरम् ।
जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥
प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः ।
प्रत्यगृह्णन् समुत्थाय संक्षिप्तास्तस्य तेजसा ॥ २५ ॥
यजमानः प्रमुदितो दर्शनीयं मनोरमम् ।
रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥
स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः ।
अवनिज्यार्चयामास मुक्तसङ्गं मनोरमम् ॥ २७ ॥
तत्पादशौचं कलिकल्मषापहं स धर्मविन्मूर्ध्न्यदधात् सुमङ्गलम् ।
यद् देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥

बलिरुवाच–
स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते ।
ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वाऽऽर्य वपुर्धरम् ॥ २९ ॥

अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ।
अद्य स्विष्टः क्रतुरयं यद् भवानागतो गृहान् ॥ ३० ॥
अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः ।
हतांहसो वार्भिरियं च भूमिरहो पुनीता तनुभिः पदैस्तव ॥ ३१ ॥
यद् यद् वटो वाञ्छसि तत् प्रतीच्छ
मे त्वामर्थिनं विप्रसुतानुतर्कये ।
गां काञ्चनं गुणवद् धाम मृष्टं
तथान्नपेयमुत वा विप्रकन्याम् ।
ग्रामान् समृद्धांस्तुरगान् गजान् वा
रथांस्तथार्हत्तम संप्रतीच्छ ॥ ३२ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे सप्तदशोऽध्यायः ॥

## अथ अष्टादशोऽध्यायः

श्रीशुक उवाच–
इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतम् ।
निशम्य भगवान् प्रीतः प्रतिनन्द्येदमब्रवीत् ॥ १ ॥

श्रीभगवानुवाच–
वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ।
यस्य प्रमाणं भृगवः साम्पराये पितामहः कुलवृद्धः प्रशान्तः ॥ २ ॥
न ह्येतस्मिन् कुले कश्चिन्निःसत्त्वः कृपणः पुमान् ।
प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥ ३ ॥
न सन्ति तीर्थे युधि वार्थिनार्थिताः
पराङ्मुखा ये त्वमनस्विनो नृप ।
युष्मत्कुले यद् यशसामलेन
प्रह्राद उद्भाति यथोडुपः खे ॥ ४ ॥
यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ।
प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥ ५ ॥
यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ।
आत्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥
निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ।
हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥

तमायान्तं समालोक्य शूलपाणिं कृतान्तवत् ।
चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥
यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ।
अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥
एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र ।
श्वासानिलान्तर्हितसूक्ष्मदेहस्तत्प्राणरन्ध्रेण विविग्नचेताः ॥ १० ॥
स तन्निकेतं परिमृश्य शून्यम-
पश्यमानः कुपितो ननाद ।
क्ष्मां द्यां दिशः खं विवरान् समुद्रान्
विष्णुं विचिन्वन् न ददर्श वीरः ॥ ११ ॥
अपश्यन्निति होवाच मयान्विष्टमिदं जगत् ।
भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥ १२ ॥
वैरानुबन्ध एतावानामृत्योरिह देहिनाम् ।
अज्ञानप्रभवो मन्युरहम्मानोपबृंहितः ॥ १३ ॥
पिता प्रह्रादपुत्रस्ते तद्विद्वान् द्विजवत्सलः ।
स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात् स याचितः ॥ १४ ॥

भवानाचरिता धर्मानास्थितान् गृहमेधिभिः ।
ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥

तस्मात् त्वत्तो महीमीषद् वृणेऽहं वरदर्षभ ।
पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम ॥ १६ ॥

नान्यं ते कामये राजन् वदान्याज्जगदीश्वरात् ।
नैनः प्राप्नोति वै विद्वान् यावदर्थ प्रतिग्रहात् ॥ १७ ॥

बलिरुवाच–

अहो ब्राह्मणदायाद वाचस्तेऽवृद्धसम्मताः ।
त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥ १८ ॥

मां वचोभिः समाराध्य लोकानामेकमीश्वरम् ।
पदत्रयं वृणीते योऽबुद्धिमान् द्वीपदाशुषम् ॥ १९ ॥

न पुमान् मामनुव्रज्य भूयो याचितुमर्हति ।
तस्माद् वृत्तिकरीं भूमिं वटो कामं प्रतीच्छ मे ॥ २० ॥

श्रीभगवानुवाच–

यावन्तो विषयाः प्रेष्ठास्त्रिलोक्यामजितेन्द्रियम् ।
न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥ २१ ॥

त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्यते ।
नववर्षसमेतेन सप्तद्वीपवरेच्छया ॥ २२ ॥

सप्तद्वीपाधिपतयो नृपा वैन्यगदादयः ।
अर्थैः कामैर्गता नान्तं तृष्णाया इति नः श्रुतम् ॥ २३ ॥

यदृच्छयोपपन्नेन सन्तुष्टो वर्तते सुखम् ।
नासन्तुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४ ॥

पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः ।
यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ २५ ॥

यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते ।
तत् प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणिः ॥ २६ ॥

तस्मात् त्रीणि पदान्येव वृणे त्वद् वरदर्षभात् ।
एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥

श्रीशुक उवाच–

इत्युक्तः स हसन्नाह वाञ्छितं प्रतिगृह्यताम् ।
वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८ ॥

विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम् ।
जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः ॥ २९ ॥

उशना उवाच–

एष वैरोचने साक्षाद् भगवान् विष्णुरव्ययः ।
कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३० ॥

प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ।
न साधु मन्ये दैत्यानां महानुपगतोऽनयः ॥ ३१ ॥

एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम् ।
दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥

त्रिभिः क्रमैरिमाँल्लोकान् विश्वकायः क्रमिष्यति ।
सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम् ॥ ३३ ॥

क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ।
खं च कायेन महता तार्तीयस्य कुतो गतिः ॥ ३४ ॥

निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम् ।
प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥ ३५ ॥

न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ।
दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥ ३६ ॥

धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ॥ ३७ ॥

अत्रापि बह्वृचैर्गीतं शृणुष्वासुरसत्तम ।
सत्यमोमिति यत् प्रोक्तं यन्नेत्याहानृतं हि तत् ॥ ३८ ॥

सत्यं पुष्पफलं विद्यादात्मवृक्षस्य जीवतः ।
वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥

यद् यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात् ।
एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥

पराग्रिक्तमपूर्णं वा अक्षरं यत् तदोमिति ।
तद् यत् किञ्चिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ॥ ४१ ॥

भिक्षवे सर्वमोङ्कुर्वन्नालं कामेभ्य आत्मने ।
अथैतत् पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ॥ ४२ ॥

सर्वं नेत्यर्थिनं ब्रूयात् स दुष्कीर्तिः श्वसन्मृतः ।
स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे ।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥ ४३ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे अष्टादशोऽध्यायः ॥

# अथ एकोनविंशोऽध्यायः

श्रीशुक उवाच –
बलिरेवं गृहपतिः कुलाचार्येण भाषितः ।
तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥ १ ॥

बलिरुवाच–
सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ।
अर्थं कामं यशो वृत्तं यो न बाधेत कर्हिचित् ॥ २ ॥

स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ।
प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥ ३ ॥

न ह्यसत्यात् परोऽधर्म इति होवाच भूरियम् ।
सर्वं वोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥

नाहं बिभेमि निरयान्नाधमर्दसुखार्णवात् ।
न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलोभनात् ॥ ५ ॥

यद् यद् हास्यति लोकेऽस्मिन् सम्परेतो धरादिकम् ।
तस्यात्यागे निमित्तं किं विप्रस्तुष्येत तेन चेत् ॥ ६ ॥

श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ।
दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥

यैरियं बुभुजे ब्रह्मन् दैत्येन्द्रैरनिवर्तिभिः ।
तेषां कालोऽग्रसील्लोकान् न यशोऽधिगतं भुवि ॥ ८ ॥

सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ।
न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥

मनस्विनः कारुणिकस्य शोभनं
यदर्थिकामोपनयेन दुर्गतिः ।
कुतः पुनर्ब्रह्मविदां भवादृशां
ततो वटोरस्य ददामि वाञ्छितम् ॥ १० ॥

यजन्ति यज्ञक्रतुभिर्यमादृता
भवन्त आम्नायविधानकोविदाः ।
स एव विष्णुर्वरदोऽस्तु वा परो
दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥ ११ ॥

यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ।
तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥

एष वा उत्तमश्लोको न जिहासति यद् यशः ।
हत्वा मैनां हरेद् युद्धे शयीत निहतो मया ॥ १३ ॥

श्रीशुक उवाच–
एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ।
शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥

दृढं पण्डितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया ।
मच्छासनातिगो यस्त्वमचिराद् भ्रश्यसे श्रियः ॥ १५ ॥

एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् ।
वामनाय ददावेतामर्चित्वोदकपूर्वकम् ॥ १६ ॥

विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी ।
आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥

यजमानः स्वयं तस्य श्रीमत्पादयुगं तदा ।
अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥ १८ ॥

तदाऽसुरेन्द्रं दिवि देवतागणा
गन्धर्वविद्याधरसिद्धचारणाः ।
तत्कर्म सर्वेऽपि गृणन्त आर्जवं
प्रसूनवर्षैः ववृषुर्मुदाऽन्विताः ॥ १९ ॥

नेदुर्मुहुर्दुन्दुभयः सहस्रशो
गन्धर्वकिम्पूरुषकिन्नरा जगुः ।
मनस्विनाऽनेन कृतं सुदुष्करं
विद्वानदाद् यद् रिपवे जगत्त्रयम् ॥ २० ॥

तद् वामनं रूपमवर्धताद्भुतं
हरेरनन्तस्य गुणत्रयात्मकम् ।
भूः खं दिशो द्यौर्विवराः पयोधयः
तिर्यङ्नृदेवा ऋषयः सदासन् ॥ २१ ॥

काये बलिस्तस्य महाविभूतेः
सहर्त्विगाचार्यसदस्य एतत् ।
ददर्श विश्वं त्रिगुणं गुणात्मके
भूतेन्द्रियार्थाशयजीवयुक्तम् ॥ २२ ॥

रसामचष्टाङ्घ्रितलेऽथ पादयोः
महीं महीध्रान् पुरुषस्य जङ्घयोः ।

पतत्त्रिणो जानुनि विश्वमूर्तेरू-
र्वोर्गणं मरुतामिन्द्रसेनः ॥ २३ ॥

सन्ध्यां विभोर्वाससि गुह्य ऐक्षत्
प्रजापतीन् जघने स्वात्ममुख्यान् ।
नाभ्यां नभः कुक्षिषु सप्तसिन्धून्
उरुक्रमस्योरसि ऋक्षमालाम् ॥ २४ ॥

हृद्यङ्ग धर्मं स्तनयोर्मुरारेर्ऋतं
च सत्यं च मनस्यथेन्दुम् ।
श्रियं च वक्षस्यरविन्दहस्तां
कण्ठे च सामानि समस्तरेफान् ॥ २५ ॥

इन्द्रप्रधानानमरान् भुजेषु
तत्कर्णयोः ककुभो द्यौश्च मूर्धनि ।
केशेषु मेघान् श्वसनं नासिकायाम्
अक्ष्णोश्च सूर्यं वदने च वह्निम् ॥ २६ ॥

वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ।
अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥

स्पर्शे च कामं नृप रेतस्यम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ।
छायासु मृत्युं हसिते च मायां तनूरुहेष्वौषधिजातयश्च ॥२८॥

नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ।
प्राणेषु गात्रे स्थिरजङ्गमानि क्षणार्धमात्रेण विवृद्धमूर्तेः ॥२९॥

सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग ।
सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥३०॥

पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी ।
वैद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ॥३१॥

सुनन्दनन्दा उपतस्थुरीशं पार्षदमुख्याः सहलोकपालाः ।
स्फुरत्किरीटाङ्गदमीनकुण्डलश्रीवत्सरत्नोत्तममेखलाम्बरैः ।

मधुव्रतस्रग्वनमालया वृतो रराज राजन् भगवानुरुक्रमः ॥

क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ।
पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयस्य तदीयमण्वपि ।
उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो दिवो महर्जनाभ्यां तपसः परं गतः ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे एकोनविंशोऽध्यायः ॥

# अथ विंशोऽध्यायः

श्रीशुक उवाच–
स तं समीक्ष्याब्जभवो नखेन्दुभि-
र्हतस्वधामद्युतिरावृतोऽभ्यगात् ।
मरीचिमिश्रा ऋषयो बृहद्व्रताः
सनन्दनाद्या नरदेव योगिनः ॥ १ ॥

वेदोपवेदा नियमा यमान्विता-
स्तर्केतिहासाङ्गपुराणसंहिताः ।
ये चापरे योगसमीरदीपित-
ज्ञानाग्निना रन्धितकर्मकल्मषाः ।
ववन्दिरे यत्स्मरणानुभावतः
स्वायम्भुवं धाम गता अकर्मकम् ॥ २ ॥

अथाङ्घ्रये प्रोन्नमिताय विष्णो-
रुपाहरत् पद्मभवोऽर्हणोदकम् ।
समर्च्य भक्त्याऽभ्यगृणाच्छुचिश्रवा
यन्नाभिपङ्केरुहसम्भवः स्वयम् ॥ ३ ॥

धातुः कमण्डलुजलं तदुरुक्रमस्य
पादावनेजनपवित्रतया नरेन्द्र ।
स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि
लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ४ ॥

ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ।
सानुगा बलिमाजह्रुः सङ्क्षिप्तात्मविभूतये ॥ ५ ॥

तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः ।
धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः ॥ ६ ॥

स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमाङ्कितैः ।
नृत्तवादित्रगीतैश्च शङ्खदुन्दुभिनिःस्वनैः ।
जाम्बवान् ऋक्षराजस्तु भेरीशब्दैर्मनोजवः ॥ ७ ॥

विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ।
महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया ।
ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ॥ ८ ॥

न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः ।
द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ ९ ॥

अनेन याचमानेन शत्रुणा बटुरूपिणा ।
सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि ॥ १० ॥

सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ।
नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ ११ ॥

तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः ।
इत्यायुधानि जगृहुर्बलेरनुचरासुराः ॥ १२ ॥

ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः ।
अनिच्छतो बले राजन् प्राद्रवञ्जातमन्यवः ॥ १३ ॥

तानभिद्रवतो दृष्ट्वा दितिजानीकपान् नृप ।
प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १४ ॥

नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः ।
कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्त्रिराट् ॥ १५ ॥

जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ।
सर्वे नागायुतप्राणाः स्वां स्वां ते जघ्नुरासुरीम् ॥ १६ ॥

हन्यमानान् स्वकान् दृष्ट्वा पुरुषानुचरैर्बलिः ।
वारयामास संरब्धान् काव्यशापमनुस्मरन् ॥ १७ ॥

हे विप्रचित्ते हे राहो हे हेते श्रूयतां वचः ।
मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ १८ ॥

यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ।
तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ १९ ॥

यो नो भवाय प्रागासीदभवाय दिवौकसाम् ।
स एव भगवानद्य वर्तते तद्विपर्ययम् ॥ २० ॥

बलेन सचिवैर्बुध्या दुर्गमन्त्रौषधादिभिः ।
सामादिभिरुपायैश्च कालं नात्येति वै जनः ॥ २१ ॥

भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ।
दैवर्द्धास्त एवाद्य युधि जित्वा नदन्ति नः ॥ २२ ॥

एतान् वयं विजेष्यामो यदि दैवं प्रसीदति ।
तस्मात् कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते ॥ २३ ॥

श्रीशुक उवाच–
पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ।
रसां निर्विविशू राजन् विष्णुपार्षदताडिताः ॥ २४ ॥

अथ तार्क्ष्यसुतो ज्ञात्वा विराड् विभुचिकीर्षितम् ।
बबन्ध वारुणैः पाशैर्बलिं सूत्येऽहनि क्रतोः ॥ २५ ॥

हाहाकारो महानासीद् रोदस्योः सर्वतो दिशम् ।
गृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २६ ॥

तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ।
नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २७ ॥

श्री भगवानुवाच–
पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर ।
द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ॥ २८ ॥

यावत् तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः ।
यावद् वर्षति पर्जन्यस्तावती भूरियं तव ॥ २९ ॥

पदैकेन मया क्रान्तो भूर्लोको विवरैः सह ।
स्वर्लोकस्तु द्वितीयेन पश्यतस्ते मयाऽऽत्मना ॥ ३० ॥

प्रतिश्रुतमदातुस्ते निरये वास इष्यते ।
विश त्वं निरयं तस्माद् गुरुणा चानुमोदितः ॥ ३१ ॥

यो विप्राय प्रतिश्रुत्य न तदर्पयते कचित् ।
वृथा मनोरथस्तस्य दूरस्वर्गः पतत्यधः ॥ ३२ ॥

विप्रलब्धो ददामीति त्वयाऽहं चाढ्यमानिना ।
तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित् समाः ॥ ३३ ॥

श्रीशुक उवाच–
एवं विप्रकृतो राजन् बलिर्भगवताऽसुरः ।
भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ ३४ ॥

बलिरुवाच–
यद्युत्तमश्लोक भवान् ममेरितं
वचो व्यलीकं सुरवर्य मन्यसे ।
करोम्यृतं तन्न भवेत् प्रलम्भनं
पदं तृतीयं कुरु शिर्ष्णि मे निजम् ॥ ३५ ॥

बिभेमि नाहं निरयात् पदच्युतो
न पाशबन्धाद् व्यसनाद् दुरत्ययात् ।

नैवार्थकृच्छ्राद् भवतो विनिग्रहात्
असाधुवादाद् भृशमुद्विजे यथा ॥ ३६ ॥

पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् ।
यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ ३७ ॥

त्वं नूनमसुराणां नः परोक्ष्यं परमो गुरुः ।
यो नोऽनेकमदान्धानां तद्भ्रंशं चक्षुरादिशः ॥ ३८ ॥

यस्मिन् वैरानुबन्धेन रूढेन विबुधेतराः ।
बहवो लेभिरे सिद्धिं यामिहैकान्तयोगिनः ॥ ३९ ॥

तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा ।
बद्धश्च वारुणैः पाशैर्नातिव्रीडे न विव्यथे ॥ ४० ॥

पितामहो मे भवदीयसम्मतः
प्रह्लाद आविष्कृतसाधुवादः ।
भवद्विपक्षेण विचित्रवैशसं
सम्प्रापितस्त्वत्परमः स्वपित्रा ॥ ४१ ॥

किमात्मनाऽनेन जहाति योऽन्ततः
किं रिक्थहारैः स्वजनाख्यदस्युभिः ।
किं जायया संसृतिहेतुभूतया
मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ ४२ ॥

इत्थं स निश्चित्य पितामहो
महानगाधबोधो भवतः पादपद्मम् ।
ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्
भीतः स्वपक्षक्षपणस्य सत्तमः ॥

अथाहमप्यात्मरिपोस्तवान्तिकं
दैवेन नीतः प्रसभं त्याजितश्रीः ।
इदं कृतान्तान्तिकवर्ति जीवितं
ययाऽध्रुवं स्तब्धमतिर्न बुध्यते ॥ ४४ ॥

श्रीशुक उवाच–
तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ।
आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ ४५ ॥

तमिन्द्रसेनः स्वपितामहं श्रिया
विराजमानं नलिनायतेक्षणम् ।
प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं
प्रलम्बबाहुं सुभगं समैक्षत ॥ ४६ ॥

तस्मै बलिर्वारुणपाशयन्त्रितः
समर्हणं नोपजहार पूर्ववत् ।
ननाम मूर्ध्नाऽश्रुविलोललोचनः
सव्रीडनीचीनमुखो बभूव ह ॥ ४७ ॥

स तत्र हासीनमुदीक्ष्य सत्पतिं
सुनन्दनन्दाद्यनुगैरुपासितम् ।
उपेत्य भूमौ तरसा महामना
ननाम मूर्ध्ना पुलकाश्रुविह्वलः ॥ ४८ ॥

प्रह्लाद उवाच–
त्वयैव दत्तं पदमैन्द्रमूर्जितं
हृतं तदेवाद्य तथैव शोभनम् ।
मन्ये महानस्य कृतोऽप्यनुग्रहो
विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ ४९ ॥

यया हि विद्वानपि मुह्यते जनः
तत्को विचष्टे गतिमात्मनो यथा ।
तस्मै नमस्ते जगदीश्वराय वै
नारायणायाखिललोकसाक्षिणे ॥ ५० ॥

श्रीशुक उवाच–
बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ।
प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप ॥ ५१ ॥

विन्ध्यावलिरुवाच–
क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते
स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः ।
कर्तुः प्रभोस्तव किमस्य त आवहन्ति
त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ ५२ ॥

श्रीशुक उवाच–
तस्या नु शृण्वतो राजन् प्रह्लादस्य कृताञ्जलेः ।
हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ ५३ ॥

ब्रह्मोवाच–
भूतभावन भूतेश देवदेव जगन्मय ।
मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ ५४ ॥

कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ।
निवेदितं च सर्वस्वमात्माऽविक्लवया धिया ॥ ५५ ॥

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं
दत्वा न विक्लवमनाः कथमार्तिमृच्छेत् ॥ ५६ ॥

श्रीभगवानुवाच–
ब्रह्मन् यमनुगृह्णामि तद्वित्तं विधुनोम्यहम् ।
यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ ५७॥

यदा कदाचिज्जीवात्मा संसरन् निजकर्मभिः ।
नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ ५८ ॥

जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ।
यद्यस्य न भवेत् स्तम्भस्तत्रायं मदनुग्रहः ॥ ५९ ॥

मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ।
सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥ ६० ॥

एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः ।
अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ ६१ ॥

क्षीणरिक्थश्च्युतः स्थानात् क्षिप्तो बद्धश्च शत्रुभिः ।
ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ ६२ ॥

गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ।
छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ६३ ॥

एवं मे प्रापितं स्थानं दुष्प्रापममरैरपि ।
सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ६४ ॥

तावत् सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ।
यत्राधयो व्याधयश्च क्लमस्तन्द्री पराभवः ॥ ६५ ॥

नोपसर्गा निवसतां सम्भवन्ति ममेक्षया ।
इन्द्रसेन महाराज याहि भो भद्रमस्तु ते ॥ ६६ ॥

सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ।
न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे ॥ ६७ ॥

त्वच्छासनातिगान् दैत्यान् चक्रं मे सूदयिष्यति ।
रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ॥ ६८ ॥

सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ।
तत्र दानवदैत्यानां सङ्गात् ते भाव आसुरः ।
दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनङ्क्ष्यति ॥ ६९ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे विंशोऽध्यायः ॥

# अथ एकविंशोऽध्यायः

श्रीशुक उवाच–
इत्युक्तवन्तं पुरुषं पुरातनं
महानुभावोऽखिलसाधुसम्मतः ।
बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो
भक्त्युद्गलो गद्गदया गिराब्रवीत् ॥ १ ॥

बलिरुवाच–
अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै-
रलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥

श्रीशुक उवाच–
इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः ।
विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥

एवमिन्द्राय भगवान् प्रीत्याऽऽनीय त्रिविष्टपम् ।
पूरयित्वाऽदितेः काममशासत् सकलं जगत् ॥ ४ ॥

लब्धप्रसादनिर्मुक्तं पौत्रं वंशधरं बलिम् ।
निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥

प्रह्लाद उवाच–
नेमं विरिञ्चो लभते प्रसादं
न श्रीर्न शर्वः किमुतापरे ते ।
यन्नोऽसुराणामसि दुर्गपालो
विश्वाभिवन्द्यैरभिवन्दिताङ्घ्रिः ॥ ६ ॥

यत्पादपद्ममकरन्दनिषेवणेन
ब्रह्मादयः शरणदाश्नुवते विभूतीः ।
कस्माद् वयं कुसृतयः खलयोनयस्ते
दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥

चित्रं तवेहितमहोऽमितयोगमाया-
लीलाविसृष्टभुवनस्य विशारदस्य ।
सर्वात्मनः समदृशो विषमस्वभावो
भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

श्रीभगवानुवाच–
वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम् ।
मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥

नित्यं द्रष्टाऽसि मां तत्र गदापाणिमवस्थितम् ।
मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥

श्रीशुक उवाच–
आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ।
बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥

परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ।
प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥

अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके ।
आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥

श्री भगवानुवाच–
ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ।
यत्तत्कर्मसुवैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

श्रीशुक्र उवाच–
कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ।
यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रमनुसंकीर्तनं तव ॥ १६ ॥

तथापि वदतो भूमन् करिष्याम्यनुशासनम् ।
एतच्छ्रेयः परं पुंसां यत् तवाज्ञानुपालनम् ॥ १७ ॥

श्रीशुक्र उवाच–
अभिनन्द्य हरेराज्ञामुशना भगवानिति ।
यज्ञच्छिद्रं समतनोद् बलेर्विप्रर्षिभिः सह ॥ १८ ॥

एवं बलेर्महीं राजन् भिक्षित्वा वामनो हरिः ।
ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत् परैर्हृतम् ॥ १९ ॥

प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ।
दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥

कश्यपस्यादितेः प्रीत्यै सर्वभूताभयाय च ।
लोकानां लोकपालानामकरोद् वामनं पतिम् ॥ २१ ॥

देवानां सर्वदेवानां धर्मस्य यशसः श्रियः ।
मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥

उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्वविभूतये ।
तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥

ततस्त्विन्द्रः (पुरःकृत्वा) पुरस्कृत्य देवयानेन वामनम् ।
लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥

आप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितम् ।
श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥

ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ।
पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥

सुमहत् कर्म तद् विष्णोर्गायन्तः परमाद्भुतम् ।
धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥

सर्वमेतन्मयाख्यातं भवतः कुरुनन्दन ।
उरुक्रमस्य चरितं श्रोतृणामघमोचनम् ॥ २८ ॥

पारं महिम्न उरुविक्रमतो मुरारे-
र्यः पार्थिवान्यपि कविर्विममे रजांसि ।
किं जायमान उत जात उपैति मर्त्य
इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥

य इदं देवदेवस्य हरेरद्भुतकर्मणः ।
अवतारानुचरितं शृण्वन् याति परां गतिम् ॥ ३० ॥

क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ।
यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे एकविंशोऽध्यायः ॥

# अथ द्वाविंशोऽध्यायः

राजोवाच–
भगवन् श्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
अवतारकथामायां मायामत्स्यविडम्बनाम् ॥ १ ॥

यदर्थमदधाद् रूपं मात्स्यं लोकजुगुप्सितम् ।
तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥

एतन्नो भगवन् सर्वं यथावद् वक्तुमर्हसि ।
उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥

सूत उवाच–
इत्युक्तो विष्णुरातेन भगवान् बादरायणिः ।
उवाच चरितं विष्णोर्मत्स्यरूपेण यत् कृतम् ॥ ४ ॥

श्रीशुक उवाच–
गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥

उच्चावचेषु भूतेषु चरन् वायुरिवेश्वरः ।
नोच्चावचत्वं भजते निर्गुणत्वाद् धियो गुणैः ॥ ६ ॥

आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।
समुद्रोपप्लुतास्तत्र लोका भूरादयोऽनघ ॥ ७ ॥

कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ।
मुखतो निःसृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत् ॥ ८ ॥

ज्ञात्वा तद् दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ।
दधार शफरीरूपं भगवान् हरिरीश्वरः ॥ ९ ॥

तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ।
नारायणपरोऽतप्यत् तपस्तत्सलिलाशनः ॥ १० ॥

योऽसावस्मिन् महाकल्पे तनयः स विवस्वतः ।
श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥ ११ ॥

एकदा कृतमालायां कुर्वतो जलतर्पणम् ।
तस्याञ्जल्युदके काचित् शफर्येकाऽभ्यपद्यत ॥ १२ ॥

सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत ।
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥

तमाह साऽतिकरुणं महाकारुणिकं नृपम् ।
यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ।
कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥ १४ ॥

श्रीशुक उवाच–
तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ।
अजानन् रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥

तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः ।
कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥

सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ ।
अलब्ध्वात्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥

नाहं कमण्डलावस्मिन् कृच्छ्रं वस्तुमिहोत्सहे ।
कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १८ ॥

स एनां तत आदाय न्यधादौदञ्चनोदके ।
तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥

मीन उवाच–
न म एतदलं राजन् सुखं वस्तुमुदञ्चनम् ।
पृथु देहि पदं मह्यं यत् त्वाऽहं शरणं गता ॥ २० ॥

श्रीशुक उवाच–
तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ।
तदावृत्यात्मना सर्वं महामीनोऽन्ववर्धत ॥ २१ ॥

मीन उवाच–
नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ।
निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ २२ ॥

इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ।
जलाशये सम्मितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥

क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ।
अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥

एवं विमोहितस्तेन वदता वल्गुभारतीम् ।
तमाह को भवानस्मान् मत्स्यरूपेण मोहयन् ॥ २५ ॥

नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा ।
यो भवान् योजनशतमह्नाभिव्यानशे सरः ॥ २६ ॥

नूनं त्वं (भगवन्) भगवान् साक्षाद् हरिर्नारायणोऽव्ययः ।
अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥

नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ।
भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मा गतिर्विभो ॥ २८ ॥

सर्वे लीलावतारास्ते भूतानां भूतिहेतवे ।
ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥

न तेऽरविन्दाक्ष पदोपसर्पणं मुधा भवेत् सर्वसुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनां सतामदीदृशो यद् वपुरद्भुतं हि नः ॥

इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ।
विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षुरेकान्तजनप्रियं प्रभुः ॥

श्रीभगवानुवाच–
सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम ।
निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥

त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ।
उपस्थास्यति नौः काचिद् विशाला त्वां मयेरिता ॥ ३३ ॥

त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ।
सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥ ३४ ॥

आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ।
एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥

दोधूयमानां तां नावं समीरेण बलीयसा ।
उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥ ३६ ॥

अहं त्वामृषिभिः साकं सह नावमुदन्वति ।
विकर्षन् विचरिष्यामि यावद् ब्राह्मी निशा प्रभो ॥ ३७ ॥

मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि ॥ ३८ ॥

श्रीशुक उवाच–
इत्थमादिश्य राजानं हरिरन्तरधीयत ।
सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥

आस्तीर्य दर्भान् प्राक्कूलान् राजर्षिः प्रागुदङ्मुखः ।
निषसाद हरेः पादौ चिन्तयन् मत्स्यरूपिणः ॥ ४० ॥

ततः समुद्र उद्वेलः सर्वतः प्लावयन् महीम् ।
वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥

ध्यायन् भगवदादेशं ददृशे नावमागताम् ।
तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥

तमूचुर्मुनयः प्रीतं राजन् ध्यायस्व केशवम् ।
स वै नः संकटादस्मादविता शं विधास्यति ॥ ४३ ॥

सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ।
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥

निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ।
वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥

राजोवाच–
अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ।
यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥

जनोऽबुधोऽयं निजकर्मबन्धनः
सुखेच्छया कर्म समीहतेऽसुखम् ।
यत्सेवया तां विधुनोत्यसन्मतिं
ग्रन्थिं विभिन्द्याद् हृदये स नो गुरुः ॥ ४७ ॥

यत्सेवयाऽग्नेरिव रुद्ररोदनं
पुमान् विजह्यान्मलमात्मनस्तमः ।
भजेत वर्णं निजमेष सोऽव्ययो
भूयात् स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥

न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ।
कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥४९॥

अचक्षुरन्धस्य यथाऽग्रणीः कृत-
स्तथा जनस्याविदुषो बुधो गुरुः ।
त्वमर्कदृक् सर्वदृशां समीक्षणो
वृतो गुरुर्नः सुगतिं विवित्सताम् ॥ ५० ॥

जनो जनस्यादिशतेऽसतीं गतिं यया प्रपद्येत दुरत्ययं तमः ।
त्वमव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥

त्वं सर्वलोकस्य सुहृत् प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ।
तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥

तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ।
छिन्ध्यर्थदीपैर्भगवन् वचोभिर्ग्रन्थीन् हृदय्यान् विवृणु स्वमोकः ॥

श्रीशुक उवाच–

इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः ।

मत्स्यरूपी महाम्भोधौ विहरंस्तत्वमब्रवीत् ॥ ५४ ॥

पुराणसंहितां दिव्यां साङ्ख्ययोगक्रियावतीम् ।

सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥

अश्रौषीद् ऋषिभिः साकमात्मतत्वमसंशयम् ।

नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥ ५६ ॥

अतीते प्रलयापाय उत्थिताय च वेधसे ।

हत्वाऽसुरं हयग्रीवं वेदान् प्रत्याहरद् हरिः ॥ ५७ ॥

स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ।

विष्णोः प्रसादात् कल्पेऽस्मिन्नासीद् वैवस्वतो मनुः ॥ ५८॥

सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ।

संवादं महदाख्यातं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥

अवतारं हरेर्योऽमुं कीर्तयेदन्वहं नरः ।

सङ्कल्पास्तस्य सिध्यन्ति प्रयाति परमां गतिम् ॥ ६० ॥

प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः

श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ।

दितिजमकथयच्च ब्रह्म सत्यव्रताय

तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे द्वाविंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां अष्टमस्कन्धः ॥

# नवमस्कन्धः

## अथ प्रथमोऽध्यायः

राजोवाच–
मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे
वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥

योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः ।
ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया ॥ २ ॥

स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् ।
त्वया तस्य सुताः प्रोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥

तेषां वंशं पृथग् ब्रह्मन् वंश्यानुचरितानि च ।
कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥

ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये ।
तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥ ५ ॥

सूत उवाच–
एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ।
पृष्टः प्रोवाच भगवान् शुकः परमधर्मवित् ॥ ६ ॥

श्रीशुक उवाच–
श्रूयतां मानवो वंशः सङ्क्षेपेण परन्तप ।
न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥

परावरेषां भूतानामात्मा यः पुरुषः परः ।
स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥ ८ ॥

तस्य नाभेः समभवत् स पद्मकोशो हिरण्मयः ।
तस्मिन् जज्ञे महाराज स्वयम्भूश्चतुराननः ॥ ९ ॥

मरीचिर्मानसस्तस्य जज्ञे तस्यापि कश्यपः ।
दाक्षायण्यां ततोऽदित्यां विवस्वानभवत् सुतः ॥ १० ॥

ततो मनुः श्राद्धदेवः सञ्ज्ञायामास भारत ।
श्रद्धायां जनयामास दश पुत्रान् स आत्मवान् ॥ ११ ॥

इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ।
नरिष्यन्तं पृषध्रं च नाभागं च नभं कविम् ॥ १२ ॥

अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल ।
मित्रावरुणयोरिष्टिं प्रजार्थमकरोद् विभुः ॥ १३ ॥

तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ।
दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥

प्रेषितोऽध्वर्युणा होता दध्यौ तत् सुसमाहितः ।
गृहीते तेन हविषि वषट्कारं गृणन् द्विजः ॥ १५ ॥

होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत् ।
तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् ॥ १६ ॥

भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ।
विपरीतमहो कष्टं मैवं स्याद् ब्रह्मविक्रिया ॥ १७ ॥

यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ।
कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥

तन्निशम्य वचस्तस्य भगवान् प्रपितामहः ।
होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥

एतत् सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः ।
तथापि साधयिष्येऽहं सुप्रजास्त्वं स्वतेजसा ॥ २० ॥

एवं व्यवसितो राजन् भगवान् स महायशाः ।
अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥ २१ ॥

तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः ।
ददाविलाऽभवत् तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥

स एकदा महाराज विचरन् मृगयां वने ।
वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥ २३ ॥

प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ।
दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥ २४ ॥

सुकुमारवनं मेरोरधस्तात् प्रविवेश ह ।
यत्रास्ते भगवान् शम्भू रममाणः सहोमया ॥ २५ ॥

तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा ।
अपश्यत् स्त्रियमात्मानमश्वं च वडवां नृप ॥ २६ ॥

तथा तदनुगाः सर्व आत्मलिङ्गविपर्ययम् ।
दृष्ट्वा विमनसोऽभूवन् वीक्षमाणाः परस्परम् ॥ २७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

राजोवाच–
कथमेवंगुणो देशः केन वा भगवन् कृतः ।
प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ १ ॥

श्रीशुक उवाच–
एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ।
दिशो वितिमिरा भासा कुर्वन्तस्तमुपागमन् ॥ २ ॥

तान् विलोक्याम्बिका देवी विवस्त्रा व्रीडिता भृशम् ।
भर्तुरङ्कात् समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३ ॥

ऋषयोऽपि तयोवीक्ष्य प्रसङ्गं रममाणयोः ।
निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ४ ॥

तदैवं भगवानाह प्रियायाः प्रियकाम्यया ।
स्थानं यः प्रविशेदेतत् स वै योषिद् भवेदिति ॥ ५ ॥

तत ऊर्ध्वं वनं तद् वै पुरुषा वर्जयन्ति हि ।
स चानुचरसंयुक्तो विचचार वनाद् वनम् ॥ ६ ॥

अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ।
स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ७ ॥

साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ।
स तस्यां जनयामास पुरूरवसमात्मजम् ॥ ८ ॥

एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ।
सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥ ९ ॥

स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः ।
सुद्युम्नस्याशयन् पुंस्त्वमुपधावत शङ्करम् ॥ १० ॥

तुष्टः स तस्मै भगवान् ऋषये प्रीतिमावहन् ।
स्वां च वाचमृतां कुर्वन्निदमाह विशाम्पते ॥ ११ ॥

श्री शङ्कर उवाच–
मासं पुमान् स भविता स्त्री मासं तपसा तव ।
इति व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ १२ ॥

श्रीशुक उवाच–
आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।
पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥ १३ ॥

तस्योत्कलो गयो राजन् विमलश्च सुतास्त्रयः ।
दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥ १४ ॥

ततः परिणतः काले प्रतिष्ठानपतिः प्रभुः ।
पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ १५ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

श्रीशुक उवाच–
एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ।
पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥ १ ॥

ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ।
इक्ष्वाकुपूर्वजान् पुत्रान् लेभे स्वसदृशान् दश ॥ २ ॥

पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ।
पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥ ३ ॥

एकदा प्राविशद् गोष्ठं शार्दूलो निशि वर्षति ।
शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥

एकां जग्राह बलवान् साऽक्रुक्रोशमयातुराम् ।
तस्यास्तु क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥

खड्गमादाय तरसा प्रलीनोडुगणे निशि ।
अजानन्नहनद् बभ्रोः शिरः शार्दूलशङ्कया ॥ ६ ॥

व्याघ्रो विवृक्णश्रवणो निस्त्रिंशाग्रहतस्ततः ।
निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥

मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ।
अद्राक्षीत् स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥

तं शशाप कुलाचार्यः कृतागसमकामतः ।
न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भवितामुना ॥ ९ ॥

एवं शप्तस्तु गुरुणा प्रत्यगृह्णात् कृताञ्जलिः ।
अधारयद् व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥

वासुदेवे भगवति सर्वात्मन्यमले परे ।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत् समः ॥ ११ ॥

विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥

आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ।
विचचार महीमेतां जडान्धबधिराकृतिः ॥ १३ ॥

एवंव्रतो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ।
तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥

कविस्तदाऽयं विषयेषु निःस्पृहो
विसृज्य सङ्गं सह बन्धुभिर्वनम् ।
निवेश्य चित्ते पुरुषं स्वरोचिषं
विवेश कैशोरवयाः परं गतः ॥ १५ ॥

करूशान्मानवादासन् कारूशाः क्षत्रजातयः ।
उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥

धृष्टाद्धार्ष्टमभूत् क्षत्रं ब्रह्मभूयं गतं क्षितौ ।
नभपुत्रोऽथि बलवान् स्वातिमूलोऽभवद्वसुः ॥ १७ ॥

वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्स्वसा ।
कन्या चोघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥

चित्रसेनो नरिष्यन्ताद् दक्षस्तस्य सुतोऽभवत् ।
तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥

वीतिहोत्रस्त्विन्द्रसेनात् तस्य सत्यश्रवा अभूत् ।
उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥

देवदत्तस्य भगवानग्निः स्वयमभूत् सुतः ।
कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥

ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ।
नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥

नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ।
भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥ २३ ॥

वत्सप्रीतेः सुतः प्रांशुस्तत्सुतः प्रमितिर्विभुः ।
खनित्रः प्रमितेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥ २४ ॥

विविंशतिसुतो रम्भः खनिनेत्रोऽस्य धार्मिकः ।
करन्धमो महाराज तस्यासीदात्मजो नृपः ॥ २५ ॥

तस्यावीक्षित् सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् ।
संवर्तोऽयाजयद् यं वै महायोग्यङ्गिरस्सुतः ॥ २६ ॥

मरुत्तस्य यथा यज्ञो न तथाऽन्योऽस्ति कश्चन ।
सर्वं हिरण्मयं त्वासीद् यत् किञ्चास्यतिशोभनम् ॥ २७ ॥

अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
मरुतः परिवेष्टारो विश्वे देवाः सभासदः ॥ २८ ॥

मरुत्तस्य दमः पुत्रस्तस्यासीद् राज्यवर्धनः ।
सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥

तत्सुतः केवलस्तस्माद् बन्धुमान् वेगवांस्ततः ।
बन्धुस्तस्याभवद् यस्य तृणबिन्दुर्महीपतिः ॥ ३० ॥

तं भेजेऽलम्बुसा देवी भजनीयगुणालयम् ।
वराप्सरा यतः पुत्राः कन्या चेलिविलाऽभवत् ॥ ३१ ॥

यस्यामुत्पादयामास विश्रवाश्च धनाधिपम् ।
प्रदाय विद्यां परमामृषिर्योगेश्वरः पितुः ॥ ३२ ॥

विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः ।
विशालो वंशकृद् राजा वैशालीं निर्ममे पुरीम् ॥ ३३ ॥

हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः ।
तत्पुत्रः सहदेवस्तु कृशाश्वः सहदेवजः ॥ ३४ ॥

कृशाश्वात् सोमदत्तोऽभूद् योऽश्वमेधैरिडस्पतिम् ।
इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रिताम् ॥ ३५ ॥

सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ।
एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥ ३६ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

श्रीशुक उवाच–
शर्यातिर्मानवो राजन् ब्रह्मिष्ठः सम्बभूव ह ।
यो वा अङ्गिरसां सत्रे द्वितीयमहरूचिवान् ॥ १ ॥

सुकन्या नाम तस्यासीत् कन्या कमललोचना ।
तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥

सा सखीभिः परिवृता विचिन्वन्त्यङ्घ्रिपान् वने ।
वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥

दैवेन चोदिता बाला ज्योतिषी कण्टकेन सा ।
अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥ ४ ॥

शकृन्मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात् ।
राजर्षिस्तमुपालभ्य पुरुषान् विस्मितोऽब्रवीत् ॥ ५ ॥

अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् ।
व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥ ६ ॥

सुकन्या प्राह पितरं भीता किञ्चित् कृतं मया ।
द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन ते ॥ ७ ॥

दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः ।
मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥

तदभिप्रायमाज्ञाय प्रादाद् दुहितरं मुनेः ।
कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात् सहानुगः ॥ ९ ॥

सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ।
प्रीणयामास चित्तज्ञा अप्रमत्ताऽनुवृत्तिभिः ॥ १० ॥

कस्यचित् त्वथ कालस्य नासत्यावाश्रमं गतौ ।
तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥

ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमयोः ।
क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥

बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ
निमज्यतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥ १३ ॥

इत्युक्तो जरया ग्रस्तदेहो धमनिसन्ततः ।
ह्रदं प्रवेशितोऽश्विभ्यां स्वयं चामज्जतां ह्रदे ॥ १४ ॥

पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ।
पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥ १५ ॥

तान्निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ।
अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥

दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ।
ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ १७ ॥

यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ।
ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥

राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ।
आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥ १९ ॥

चिकीर्षितं ते किमिदं पतिस्त्वया
प्रलोभितो लोकनमस्कृतो मुनिः ।
या त्वं जराग्रस्तमसत्यसम्मतं विहाय
जारं भजसेऽमुमध्वगम् ॥ २० ॥

कथं मतिस्तेऽम्ब गताऽन्यथा सतां
मार्गात्त्वियं मत्कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं
पितुश्च भर्तुः पतयस्यधस्तमः ॥ २१ ॥

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ।
उवाच तात जामाता तवैष भृगुनन्दनः ॥ २२ ॥

शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ।
विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥

सोमेन याजयन् वीरं ग्रहं सोमस्य चाग्रहीत् ।
असोमयोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥

हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः ।
सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥

अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ।
भिषजाविति यत् पूर्वं सोमे हुत्या बहिष्कृतौ ॥ २६ ॥

उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ।
शर्यातेरभवन् पुत्रा आनर्ताद् रेवतोऽभवत् ॥ २७ ॥

सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् ।
आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दम ॥ २८ ॥
तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ।
ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः ॥ २९ ॥
पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ।
आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥
तदन्ते विभुमानम्य स्वाभिप्रायं न्यवेदयत् ।
तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ ३१ ॥
ब्रह्मा उवाच–
अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥ ३२ ॥
मुहूर्तं शृण्वतोऽश्राव्यं प्रतियातस्य तेऽनघ ।
कालोऽभियातस्त्रिनव चतुर्युगविकल्पितः ॥ ३३ ॥
तद् गच्छ देवदेवांशो बलदेवो महाबलः ।
कन्यारत्नमिदं राजन् नररत्नाय देहि भो ॥ ३४ ॥
भुवो भारावताराय भगवान् भूतभावनः ।
अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ॥ ३५ ॥
श्रीशुक उवाच–
इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ।
त्यक्तं पुण्यजनत्रासाद् भ्रातृभिर्दिक्ष्ववस्थितैः ॥ ३६ ॥
सुतां दत्वाऽनवद्याङ्गीं बलाय बलशालिने ।
बदर्याख्यं ययौ राजा तप्तुं नारायणाश्रमम् ॥ ३७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः

श्रीशुक उवाच–
नाभागोऽन्यस्ततः प्राज्ञो यं मत्वा भ्रातरः कविम् ।
यविष्ठं व्यभजन् दायं ब्रह्मचारिणमाह सः ॥ १ ॥
भ्रातरोऽभाङ्क्त किं मह्यं भजाम पितरं तव ।
किं म आर्यास्तताभाङ्क्षुर्मा पुत्रक तदादृथाः ॥ २ ॥
इम अङ्गिरसः सत्रमासतेऽद्य सुमेधसः ।
षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥
तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ।
ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥
दास्यन्ते तेऽथ तान् गच्छ तथा स कृतवान् यथा ।
तस्मै दत्वा ययुः स्वर्गं ते सत्रपरिवेषणम् ॥ ५ ॥
तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ।
उवाचोत्तरतोऽभ्येत्य ममेदं वास्तवं वसु ॥ ६ ॥
ममेदमृषिभिर्दत्तमिति तर्हि स्म मानव ।
स्यान्नौ ते पितरि प्रश्नः स गतः पितरं तथा ॥ ७ ॥
यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ।
चक्रुर्हि भागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥
नाभागस्तं प्रणम्याह तवेश किल वास्तुगम् ।
इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥ ९ ॥
यत् ते पिताऽवदद् धर्मं त्वं च सत्यं प्रभाषसे ।
ददामि ते मन्त्रदृशो ज्ञानं ब्रह्म सनातनम् ॥ १० ॥
गृहाण द्रविणं दत्तं यत् सत्रपरिवेषितम् ।
इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान् भक्तवत्सलः ॥ ११ ॥
य एतत् संस्मरेत् प्रातः सायं च सुसमाहितः ।
कविर्भवति मन्त्रज्ञो गतिं चैव तथाऽऽत्मनः ॥ १२ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः

श्रीशुक उवाच–
नाभागादम्बरीषोऽभून्महाभागवतः कृती ।
नास्पृशद् ब्रह्मशापोऽपि चक्रप्रतिहतः क्वचित् ॥ १ ॥
राजोवाच–
भगवंछ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ।
न प्राभूद् यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ २ ॥

श्रीशुक उवाच–
अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ ३ ॥

मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसम्मितम् ।
विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥ ४ ॥

वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्टवत् स्मृतम् ॥ ५ ॥

स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये ॥ ६ ॥

मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम् ।
घ्राणं च तत्पादसरोजसौरभे
श्रीमत्तुलस्या रसनां तदर्पिते ॥ ७ ॥

पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया
तथोत्तमश्लोकजनाश्रयां रतिम् ॥ ८ ॥

एवं सदा कर्मकलापमात्मनः
परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां
तन्निष्ठविप्राभिहितः शशास ह ॥ ९ ॥

ईजेऽश्वमेधैरधियज्ञमीश्वरं
महाविभूत्योपचिताङ्गदक्षिणैः ।
ततैर्वसिष्ठासितगौतमादिभि-
र्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ १० ॥

यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ।
तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ ११ ॥

स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ।
शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ १२ ॥

संमर्द्धा यस्य नो कामाः स्वाराज्यपरिभाविताः ।
दुर्लभा अपि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ १३ ॥

स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिव ।
स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वाञ्छनैर्जहौ ॥ १४ ॥

गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ।
अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ १५ ॥

तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ।
एकान्तभक्तियोगेन प्रीतो भृत्याऽभिरक्षणम् ॥ १६ ॥

आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ।
युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ १७ ॥

व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ।
स्नातः कदाचित् कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ १८ ॥

महाभिषेकविधिना सर्वोपस्करसम्पदा ।
अभिषिच्य वराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ १९ ॥

तद्गतान्तरभावेन पूजयामास केशवम् ।
ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ २० ॥

गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ।
पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥ २१ ॥

प्राहिणोत् साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ।
भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तरम् ॥ २२ ॥

लब्धकामैरनुज्ञातः पारणायोपचक्रमे ।
तस्य तर्ह्यतिथिः साक्षाद् दुर्वासा भगवानभूत् ॥ २३ ॥

तमानर्चातिथिं भूयः प्रत्युत्थानासनार्हणैः ।
ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ २४ ॥

प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ।
निममज्ज बृहद् ध्यायन् कालिन्दीसलिले शुचौ ॥ २५ ॥

मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ।
चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटे ॥ २६ ॥

ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ।
यत् कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ २७ ॥

अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ।
आहुरब्भक्षणं विप्रा ह्यशितं नाशितं च यत् ॥ २८ ॥

इत्यपः प्राश्य राजर्षिश्चिन्तयन् मनसाऽच्युतम् ।
प्रत्याचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥ २९ ॥

दुर्वासा यमुनाकूलात् कृतावश्यक आगतः ।
राज्ञाऽभिच्छन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ३० ॥

मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ।
बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ३१ ॥

अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ।
धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥ ३२ ॥

यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ।
अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ३३ ॥

एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ।
तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ३४ ॥

तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ।
वेपयन्तीं समुद्वीक्ष्य न चचाल पदा नृपः ॥ ३५ ॥

आदिष्टं भक्तरक्षायां पुरुषेण महात्मना ।
ददाह कृत्यां तच्चक्रं क्रुद्धाहिमिव पावकः ॥ ३६ ॥

तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम् ।
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ३७ ॥

तमन्वधावद् भगवद्रथाङ्गं
दावाग्निरुद्धूतशिखो यथाहिम् ।
तथाऽनुषक्तं मुनिरीक्षमाणो
गुहां विविक्षुः प्रससार मेरोः ॥ ३८ ॥

दिशो नभः क्ष्मां विवरान् समुद्रान्
लोकान् सपालांस्त्रिदिवं गतः सः ।
यतो यतो धावति तत्र तत्र
सुदर्शनं दुष्प्रसहं ददर्श ॥ ३९ ॥

अलब्धनाथः स यदा कुतश्चित्
सन्त्रस्तचित्तोऽरणमेषमाणः ।
देवं विरिञ्चं समगाद् विधात-
स्त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ४० ॥

श्रीब्रह्मोवाच–
स्थानं मदीयं सह विश्वमेतत्
क्रिडावसाने द्विपरार्धसंज्ञे ।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः
कालात्मनः पश्यति को भविष्यत् ॥ ४१ ॥
अहं भवो दक्षभृगुप्रधानाः
प्रजेशभूतेशसुरेशमुख्याः ।
सर्वे वयं यन्नियमं प्रपन्ना
मूर्ध्नार्पितं लोकहितं वहामः ॥ ४२ ॥

श्रीशुक उवाच–
प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ।
दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ४३ ॥

श्रीशङ्कर उवाच–
वयं न तात प्रभवाम भूम्नि
भवन्ति काले न भवन्ति हीदृशाः ।
यस्मिन् परेऽन्येऽप्यजजीवकोशाः
सहस्रशो यत्र वयं भ्रमामः ॥ ४४ ॥

अहं सनत्कुमारश्च नारदो भगवानजः ।
कपिलोऽपान्तरतमा देवलो धर्म आसुरिः ॥ ४५ ॥

मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शिनः ।
विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः ॥ ४६ ॥

तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ।
तमेव शरणं याहि हरिस्ते शं विधास्यति ॥ ४७ ॥

ततो निराशो दुर्वासाः पदं भगवतो ययौ ।
विकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ४८ ॥

सन्दह्यमानोऽजितशस्त्रवह्निना
तत्पादमूले पतितः सवेपथुः ।
आहाच्युतानन्त सदीप्सित प्रभो
कृतागसं मामव विश्वभावन ॥ ४९ ॥

अजानता ते परमानुभावं
कृतं मयाऽघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधातः
मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ५० ॥

श्रीभगवानुवाच–

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ५१ ॥

नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥ ५२ ॥

ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ५३ ॥

मयि निर्बद्धहृदयाः साधवः समदर्शिनः ।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ५४ ॥

मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ॥ ५५ ॥

साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ५६ ॥

उपायं कथयिष्यामि तव विप्र शृणुष्व तत् ।
अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥ ५७ ॥

साधुषु प्रहितं तेजः प्रहर्तुः कुरुते भयम् ।
तपो विद्या च विप्राणां निःश्रेयसकरे उभे ॥ ५८ ॥

त एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ।
ब्रह्मंस्तद् गच्छ भद्रं ते नाभागतनयं नृपम् ।
क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ५९ ॥

श्रीशुक उवाच–

एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ।
अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ ६० ॥

तस्य तद् व्यसनं वीक्ष्य पादस्पर्शविलज्जितः ।
अस्तावीत् तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ ६१ ॥

अम्बरीष उवाच–

त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ।
त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ६२ ॥

सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय ।
सर्वास्त्रघातिन् विप्राय स्वस्ति भूया इडस्पते ॥ ६३ ॥

त्वं धर्मस्त्वं धृतिः सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ।
त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ६४ ॥

नमः सुनाभाखिलधर्मसेतवे
अधर्मशीलासुरधूमकेतवे ।
त्रैलोक्यगोपाय विशुद्धवर्चसे
मनोजवायाद्भुतकर्मणेऽस्तु ते ॥ ६५ ॥

यदा विसृष्टस्त्वमनञ्जनेन वै
बलं प्रविष्टोऽजितदैत्यदानवम् ।
बाहूदरोर्वङ्घ्रिशिरोधराणि
वृश्चन्नजस्रं प्रधने विराजसे ॥ ६६ ॥

त्वत्तेजसा धर्ममयेन संहृतं
तमः प्रकाशश्च दृशो महात्मनाम् ।
दुरत्ययस्ते महिमा गिरांपते
त्वद्रूपमेतत् सदसत् परावरम् ॥ ६७ ॥

स त्वं जगत्त्राणखलप्रहाणये
निरूपितः सर्वसहो गदाभृता ।
विप्राय चास्मत्कुलदैवहेतवे
विधेहि भद्रं तदनुग्रहो हि नः ॥ ६८ ॥

यद्यस्ति दत्तमिष्टं वा सधर्मो वा स्वनुष्ठितः ।
कुलं नो विप्रदैवं चेद् द्विजो भवतु विज्वरः ॥ ६९ ॥

यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ७० ॥

श्रीशुक उवाच–

इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ।
अशाम्यत् सर्वतो विप्रं प्रदहद् राजयाच्ञया ॥ ७१ ॥

स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः ।
प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ ७२ ॥

दुर्वासा उवाच–

अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे ।
कृतागसोऽपि यद् राजन् मङ्गलानि समीहसे ॥ ७३ ॥

दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम् ।
यैः सङ्गृहीतो भगवान् सात्वतामृषभो हरिः ॥ ७४ ॥

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ ७५ ॥

राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना ।
ममाघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ ७६ ॥

राजा तमकृताहारः प्रत्यागमनकाङ्क्षया ।
चरणावुपसंगृह्य प्रसाद्य समभोजयत् ॥ ७७ ॥

सोऽशित्वाऽऽहृतमानीतमातिथ्यं सार्वकामिकम् ।
तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ ७८ ॥

प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै ।
दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ ७९ ॥

कर्मावदातमेतत् ते गायन्ति स्वःस्त्रियो मुहुः ।
कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ ८० ॥

श्रीशुक उवाच–
एवं संकीर्त्य राजानं दुर्वासाः परितोषितः ।
ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ॥ ८१ ॥

संवत्सरोऽत्यगात् तावत् यावत् नागतो गतः ।
मुनिस्तद्दर्शनाकाङ्क्षी राजाऽब्भक्षो बभूव ह ॥ ८२ ॥

गतेऽथ दुर्वाससि सोऽम्बरीषो
द्विजोपभोगातिपवित्रमाहरन् ।
ऋषेर्विमोक्षं व्यसनाच बुद्ध्या
मेनेऽस्ववीर्यं च परानुभावम् ॥ ८३ ॥

एवंविधानेकगुणः स राजा
परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं
यया विरिञ्चादिमधश्चकार ॥ ८४ ॥

श्रीशुक उवाच–
अथाम्बरीषस्तनयेषु राज्यं
समानशीलेषु विसृज्य धीरः ।
वनं विवेशात्मनि वासुदेवे
मनो दधद् ध्वस्तगुणप्रवाहः ॥ ८५ ॥

इत्येतत् पुण्यमाख्यानमम्बरीषस्य भूपतेः ।
सङ्कीर्तयन्ननुध्यायन् भक्तो भगवतो भवेत् ॥ ८६ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः

श्रीशुक उवाच–
विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः ।
विरूपात् पृषदश्वोऽभूत् तत्पुत्रस्तु रथीतरः ॥ १ ॥

रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ।
अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥

एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥

क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।
तस्य पुत्रशतं ज्येष्ठा विकुक्षिनिमिदण्डकाः ॥ ४ ॥

तेषां पुरस्तादभवन् आर्यावर्ते नृपा नृप ।
पञ्चविंशति पश्चाच त्रयो मध्येऽपरेन्यतः ॥ ५ ॥

स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ।
मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥

तथेति सवनं गत्वा मृगान् हत्वा क्रियार्हणान् ।
श्रान्तो बुभुक्षितो वीरः शशमाददपस्मृतिः ॥ ७ ॥

शेषं निवेदयामास पित्रे तेन च तद्गुरुः ।
चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥

ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ।
देशान्निस्सारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥

स तु विप्रेण संवादं जापकेन समाचरन् ।
त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम् ॥ १० ॥

पितर्युपरतेऽभ्येत्य पृथिवीशासनं कृतम् ।
शासन्नीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥

पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ।
ककुत्स्थ इति वाप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥

कृतान्त आसीत् समरे देवानां सह दानवैः ।
पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥

वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ।
वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥

स सन्नद्धो धनुर्दिव्यमादाय विशिखान् शितान् ।
स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥

तेजसा व्यापितो विष्णोः पुरुषस्य परात्मनः ।
प्रतीच्यां दिशि दैत्यानां न्यरुणत् त्रिदशैः पुरम् ॥ १६ ॥

तैस्तस्य ह्यभवद् राजन् सङ्ग्रामो रोमहर्षणः ।
यमाय भल्लैरनयद् दैत्यान् ये युयुधुर्मृधे ॥ १७ ॥

तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् ।
विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥

जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ।
प्रत्ययच्छत् स राजर्षिरिति नामभिराहुतः ॥ १९ ॥

पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ।
विश्वगन्धिस्ततश्चन्द्रो युवनाश्वस्तु तत्सुतः ॥ २० ॥

शावस्तिस्तत्सुतो येन शावस्ती निर्मिता पुरी ।
बृहदश्वस्तु शावस्तेस्ततः कुवलयाश्वकः ॥ २१ ॥

यः प्रियार्थमुदङ्कस्य धुन्धुं नाम्नासुरं बली ।
सुतानामेकविंशत्या सहस्रैरहनद् वृतः ॥ २२ ॥

धुन्धुमार इति ख्यातस्तत्सुतास्ते प्रजज्वलुः ।
धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २३ ॥

दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ।
दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥ २४ ॥

बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित् ।
युवनाश्वोऽभवत् तस्य सोऽनपत्यो वनं गतः ॥ २५ ॥

भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ।
इष्टिं स्म वर्तयाञ्चक्रुरैन्द्रीं ते सुसमाहिताः ॥ २६ ॥

राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ।
दृष्ट्वा शयानान् विप्रांस्तान् पपौ मन्त्रजलं स्वयम् ॥ २७ ॥

उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥

राज्ञा पीतं विदित्वाथ ईश्वरप्रहितेन ते ।
ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥

ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ।
युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥

कं धास्यति कुमारोऽयं स्तन्ये रोरूयते भृशम् ।
मान्धातर्वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥ ३१ ॥

न ममार पिता तस्य विप्रदेवप्रसादतः ।
युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥

त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ।
यस्मात् त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥ ३३ ॥

यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥

ईजे च यज्ञं क्रतुभिरात्मविद् भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥

द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथार्त्विजः ।
धर्मो देशश्च कालश्च सर्वमेतद् यदात्मकम् ॥ ३६ ॥

यावत् सूर्य उदेति स्म यावच्चन्द्रः प्रतिष्ठति ।
सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥

शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ।
पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ।
तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥ ३८ ॥

यमुनान्तर्जले मग्नस्तप्यमानः परं तपः ।
निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ ३९ ॥

जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ।
सोऽप्याह गृह्यतां ब्रह्मन् कामं कन्या स्वयंवरे ॥ ४० ॥

स विचिन्त्याप्रियः स्त्रीणां जरठोऽयमसम्मतः ।
वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥

साधयिष्ये तथाऽऽत्मानं सुरस्त्रीणामभीप्सितम् ।
किं पुनर्मनुजस्त्रीणामिति व्यवसितः प्रभुः ॥ ४२ ॥

मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् ।
वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥ ४३ ॥

तासां कलिरभूद् भूयांस्तदर्थेऽपोह्य सौहृदम् ।
ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥

स वह्वृचस्ताभिरवारणीयश्रिया विराजत्सपरिच्छदेषु ।
गृहेषु नानोपवनामलाम्भःप्रसूनसौगन्धिककाननेषु ॥ ४५ ॥

महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजवृन्दवन्दिषु ॥

यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ।
विस्मितः स्तम्भमजहात् सार्वभौमश्रियान्वितः ॥ ४७ ॥

एवं गृहेष्वभिरतो विषयान् विविधैः सुखैः ।
सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥

स कदाचिदुपासीन आत्मापह्नवमात्मना ।
ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥ ४९ ॥

अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ।
अन्तर्जले वारिचरप्रसङ्गात् प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥

सङ्गं त्यजेत मिथुनव्रजिनान्मुमुक्षुः
सर्वात्मना न विसृजेद् बहिरिन्द्रियाणि ।
एकश्चरन् रहसि चित्तमनन्त ईशे
युञ्जीत तद्व्रतिषु साधुषु चेत् प्रसङ्गः ॥ ५१ ॥

एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात्
पञ्चाशताऽथ सुतपञ्चसहस्रसङ्गः ।
नान्तं व्रजाम्युभयकृत्यमनोरथानां
मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥

एवं वसन् गृहे कालं विरक्तो न्यासमाश्रितः ।
वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥

तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्शनमात्मवित् ।
सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥

ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् ।
अन्वीयुस्तत्प्रभावेण शान्तमग्निमिवार्चिषः ॥ ५५ ॥

मान्धातृपुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ।
मातामहेन प्रवृतो युवनाश्वस्तु तत्सुतः ॥ ५६ ॥

हरितस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे ।
नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय चोरगैः ॥ ५७ ॥

तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ।
गन्धर्वान् सोऽवधीत् तत्र वध्यश्वान् विष्णुशक्तिधृक् ॥५८॥

नागाल्लब्धवरः सर्पादभयं स्मरतामिमम् ।
त्रसदस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ ५९ ॥

हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ त्रिबन्धुरः ।
तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ॥ ६० ॥

प्राप्तश्चण्डालतां शापाद् गुरोः कौशिकतेजसा ।
सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ ६१ ॥

पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ।
त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ॥ ६२ ॥

यन्निमित्तमभूद् युद्धं पक्षिणोर्बहुवार्षिकम् ।
सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ॥ ६३ ॥

वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ।
यदि वीरो महाराज तेनैव त्वां यजे इति ॥ ६४ ॥

तथेति वरुणेनोक्ते पुत्रो जातस्तु रोहितः ।
जातः सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ॥ ६५ ॥

यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ।
निर्दशे च समागत्य यजस्वेत्याह सोऽब्रवीत् ॥ ६६ ॥

दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ।
जाता दन्ता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ ६७ ॥

यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ।
पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ॥ ६८ ॥

यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ।
पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ ६९ ॥

सान्नाहुको यदा राजन् राजन्योऽथ पशुः शुचिः ।
इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ।
कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥ ७० ॥

रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ।
प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ ७१ ॥

पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ ७२ ॥

भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ।
रोहितायादिशच्छक्रः सोऽप्यरण्येऽचरत् समाम् ॥ ७३ ॥

एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ।
अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह वृत्रहा ॥ ७४ ॥

षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ।
उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् ।
शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ॥ ७५ ॥

ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ।
मुक्तोदरो यजन् देवान् वरुणादीन् महाक्रतौ ॥ ७६ ॥

विश्वामित्रोऽभवत् तस्मिन् होताध्वर्युरथात्मवान् ।
जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्यसामगः ॥ ७७ ॥

तस्मै तुष्टो ददाविन्द्रः शातकुम्भमयं रथम् ।
शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रचक्षते ॥ ७८ ॥

सत्यसारं धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ।
विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ॥ ७९ ॥

मनः पृथिव्यां तामद्भिस्तेजसाम्भोऽनिलेन तत् ।
खे वायुं धारयंस्तं च शब्दादौ तन्महात्मनि ॥ ८० ॥

तस्मिन् ज्ञानकलां ध्यात्वा तया ज्ञानं विनिर्दहन् ।
हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ।
अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥ ८१ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः

श्रीशुक उवाच–
हरितो रोहितादासीच्चम्पस्तस्माद् विनिर्मिता ।
चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥

तरुकस्तत्सुतस्तस्माद् वृकस्तस्यापि बाहुकः ।
सोऽरिभिर्हृतराज्यस्तु सभार्यो वनमाविशत् ॥ २ ॥

वृद्धं तं पञ्चतां प्राप्तं महिष्यनु मरिष्यती ।
और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ॥ ३ ॥

आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽत्र साहसः ।
सह तेनैव सञ्जातः सगराख्यो महायशाः ॥ ४ ॥

सगरश्चक्रवर्त्यासीत् सागरो यत्सुतैः कृतः ।
यस्तालजङ्घान् यवनाञ्छकान् हैहयबर्बरान् ॥ ५ ॥

नावधीद् गुरुवाक्येन चक्रे विकृतवेषिणः ।
मुण्डान् श्मश्रुधरान् कांश्चिन्मुक्तकेशार्धमुण्डितान् ॥ ६ ॥

अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् ।
सोऽश्वमेधैरयजत् सर्ववेदसुरात्मकम् ॥ ७ ॥

और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ।
तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥

सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ।
हयमन्वेषमाणास्ते समन्तान्न्यखनन् महीम् ॥ ९ ॥

प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके ।
एष वाजिहरश्चोर आस्ते मीलितलोचनः ॥ १० ॥

हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ।
उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥

स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ।
महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥

न साधुवादो मुनिकोपभर्जिता
नृपेन्द्रपुत्रा इति सत्त्वधामनि ।
कथं तमो रोषमयं विभाव्यते
जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥

यस्येरिता साङ्ख्यमयी दृढेह
नौर्यया मुमुक्षुस्तरते दुरत्ययम् ।
भवार्णवं मृत्युपथं विपश्चितः
परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥

योऽसमञ्जस इत्युक्तः स केशिन्या नृपात्मजः ।
तस्य पुत्रोंऽशुमान् नाम्ना पितामहहिते रतः ॥ १५ ॥

असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ।
जातिस्मरः पुरा सङ्गाद् योगी योगाद् विचालितः ॥ १६ ॥

आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ।
सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयञ्जनम् ॥ १७ ॥

एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ।
योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥ १८ ॥

अयोध्यावासिनः सर्वे बालकान् पुनरागतान् ।
दृष्ट्वा विसिस्मिरे राजन् राजा चाप्यन्वतप्यत ॥ १९ ॥

अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ ।
पितृव्यखातानुपथं भस्मापि ददृशे हयम् ॥ २० ॥

तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ।
अस्तौत् समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥

अंशुमानुवाच–
न पश्यति त्वां परमात्मनोऽजनो
न बुध्यतेऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनःशरीर
विसर्गसृष्टा वयमप्रकाशाः ॥ २२ ॥

ये देहभाजस्त्रिगुणप्रधाना
गुणान् विपश्यन्त्युत वा तमश्च ।
यन्मायया मोहितचेतसस्त्वे
विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥

तं त्वामहं ज्ञानघनस्वभावं
प्रध्वस्तमायामयभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं
कथं विमूढः परिभावयामि ॥ २४ ॥

प्रशान्तमायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम् ।
ज्ञानोपदेशाय गृहीतलिङ्गं नमामहे त्वां पुरुषं पुराणम् ॥२५॥

यन्मायारचिते लोके वस्तुबुध्या गृहादिषु ।
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ २६ ॥

अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः ।
मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥

श्रीशुक उवाच–
इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः ।
अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥ २८ ॥

श्रीभगवानुवाच–
अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ।
इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥ २९ ॥

तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ।
सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥

राज्यमंशुमते न्यस्य निःस्पृहो मुक्तबन्धनः ।
और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥

अंशुमांश्च तपस्तेपे गङ्गागमनकाम्यया ।
कालं महान्तं नाशक्नोत् ततः कालेन संस्थितः ॥ ३२ ॥

दिलीपस्तत्सुतः तद्वदशक्तः कालमेयिवान् ।
भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ ३३ ॥

दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ।
इत्युक्तः स्वमभिप्रायं शशंसावनतो भृशम् ॥ ३४ ॥

गङ्गोवाच–
को विधारयिता वेगं पतन्त्या मे महीतले ।
अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम् ॥ ३५ ॥

किं चाहं दुर्गतिं यास्ये नरा मय्यामृजन्त्यघम् ।
मृजामि तदघं क्रूरं राजंस्तत्र विचिन्त्यताम् ॥ ३६ ॥

राजोवाच–
साधवो निराशिषः शान्ता ब्रह्मिष्ठा लोकपावनाः ।
हरन्त्यघं तेऽङ्गसङ्गात् ये प्राप्ताः स्वहृदा हरिम् ॥ ३७ ॥

धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ।
यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥ ३८ ॥

श्रीशुक उवाच–
इत्युक्त्वा स नृपो देवं तपसाऽतोषयच्छिवम् ।
कालेनाल्पीयसा चापि तस्येशः समतुष्यत ॥ ३९ ॥

तथेति राज्ञाऽभिहितः सर्वलोकहितः शिवः ।
दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ४० ॥

भगीरथोऽपि राजर्षिर्निन्ये भुवनपावनीम् ।
यत्र स्वपितृणां देहा भस्मीभूताः स्म शेरते ॥ ४१ ॥

रथेन वायुवेगेन प्रयान्तमनुधावती ।
देशान् पुनन्ती निर्दग्धानसिञ्चत् सगरात्मजान् ॥ ४२ ॥

यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ।
सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ ४३ ॥

भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः ।
किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥ ४४ ॥

न ह्येतत् परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ।
अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥ ४५ ॥

यस्मिन्मनः सन्निवेश्य श्रद्धया मुनयोऽमलाः ।
त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ ४६ ॥

श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ।
सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ ४७ ॥

ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ।
दत्त्वाऽक्षहृदयं तस्मै सर्वकामस्तु तत्सुतः ॥ ४८ ॥

ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृपः ।
आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् ॥ ४९ ॥

वसिष्ठशापाद् रक्षोऽभूदनपत्यः स्वकर्मणा ॥ ५० ॥

राजोवाच–
किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः ।
एतद् वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ ५१ ॥

श्रीशुक उवाच–
सौदासो मृगयां किञ्चिच्चरन् रक्षो जघान ह ।
मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ ५२ ॥

स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे ।
गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ ५३ ॥

परिवेक्ष्यमाणं भगवान् विलोक्याभक्ष्यमञ्जसा ।
राजानमशपत् क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ ५४ ॥

रक्षःकृतं तद् विदित्वा चक्रे द्वादशवार्षिकम् ।
सोऽप्यपोऽञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः ॥ ५५ ॥

वारितो मदयन्त्याऽऽपो रुशतीः पादयोर्जहौ ।
दिशः खमवनीं सर्वां पश्यन् जीवमयीं नृपः ॥ ५६ ॥

राक्षसं भावमापन्नः पादे कल्माषतां गतः ।
व्यवायकाले ददृशे वनौकोदम्पती द्विजौ ॥ ५७ ॥

क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ।
न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ ५८ ॥

मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ।
देहि मेऽपत्यकामायास्त्वकृतार्थं पतिं द्विजम् ॥ ५९ ॥

देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः ।
तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ ६० ॥

एष हि ब्राह्मणो विद्वान् तपःशीलगुणान्वितः ।
आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ ६१ ॥

सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ।
सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद् विभो ॥ ६२ ॥

कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः ।
तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ ६३ ॥

कथं वधं यथा बभ्रोर्मन्यते सम्मतो भवान् ।
यद्ययं क्रियते भक्ष्यस्तर्हि मां खाद पूर्वतः ॥ ६४ ॥

न जीविष्ये विना येन क्षणं च मृतकं यथा ।
एवं करुणभाषिण्या विलपन्त्या अनाथवत् ॥ ६५ ॥

व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः ।
ब्राह्मणी वीक्ष्य भर्तारं पुरुषादेन भक्षितम् ॥ ६६ ॥

शोचन्त्यात्मानमुर्वीशमशपत् कुपिता सती ।
यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ ६७ ॥

तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः ।
एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ ६८ ॥

तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ।
विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ॥ ६९ ॥

विज्ञाप्य ब्राह्मणीशापं महिष्या स निवारितः ।
तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः ॥ ७० ॥

वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ।
सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ॥ ७१ ॥

जघ्नेऽश्मनोदरं तस्मात् सोऽश्मकस्तेन कथ्यते ।
अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ ७२ ॥

नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ।
ततो दशरथस्तस्मात् पुत्र ऐलविलिः स्मृतः ॥ ७३ ॥

राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ।
यो देवैरर्थितो दैत्यानवधीद् युधि दुर्जयान् ॥ ७४ ॥

राजा उवाच–
मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः ।
न मे ब्रह्मकुलात् प्राणाः कुलदैवान्न चात्मजाः ॥ ७५ ॥

न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ।
न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ ७६ ॥

नापश्यमुत्तमश्लोकादन्यत् किञ्चन वस्त्वहम् ।
देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ ७७ ॥

न वृणे तमहं कामं भूतभावनभावनात् ।
येऽविक्षितेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ।
न विदन्ति प्रियं शश्वदात्मानं किमुतापरे ॥ ७८ ॥

अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु ।
रूढं प्रकृत्याऽऽत्मनि विश्वभर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥

इति व्यवसितो बुध्या नारायणगृहीतया ।
हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥ ८० ॥

यत् तद् ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ।
भगवान् वासुदेवेति यं गृणन्ति हि सात्वताः ॥ ८१ ॥

शुक उवाच–
खट्वाङ्गाद् दीर्घबाहुश्च रघुस्तस्मात् पृथुश्रवाः ।
अजस्ततस्मान्महाराजस्तस्माद् दशरथोऽभवत् ॥ ८२ ॥

तस्यापि भगवानेष साक्षाद् ब्रह्ममयो हरिः ।
अंशांशेन चतुर्धाऽगात् पुत्रत्वं प्रार्थितः सुरैः ।
रामलक्ष्मणभरतशत्रुघ्ना इति संज्ञया ॥ ८३ ॥

तस्यानुचरितं राजन् ऋषिभिस्तत्त्वदर्शिभिः ।
श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ८४ ॥

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथिरुजो यो हरीन्द्रानुजाभ्याम् ।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भ-
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः ॥

विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ।
पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ८६ ॥

यो लोकवीरसमितौ धनुरैशमुग्रं
सीतास्वयंवरगृहे त्रिशतोपनीतम् ।
आदाय बालगजलील इवेक्षुयष्टिं
सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥ ८७ ॥

जित्वाऽऽनुरूपगुणशीलवयोऽङ्गरूपां
सीताभिधां श्रियमुरस्यभिलब्धमानाम् ।
मार्गे व्रजन् भृगुपतेर्व्यनयत् प्ररूढं
दर्पं महीमकृत यस्त्रिरराजबीजाम् ॥ ८८ ॥

यः सत्यपाशपरिवीतपितुर्निदेशं
स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ।
राज्यं श्रियं प्रणयिनः सुहृदो निवासं
त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ८९ ॥

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धे-
स्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।
जघ्ने चतुर्दशसहस्रमपारणीय-
कोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९० ॥

सीताकथाश्रवणदीपितहृच्छयेन
सृष्टं विलोक्य नृपते दशकन्धरेण ।
जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो
मारीचमाशु विशिखेन यथा कमुग्रः ॥ ९१ ॥

रक्षोधमेन वृकवद् विपिनेऽसमक्षं
वैदेहराजदुहितर्यपयापितायाम् ।
भ्रात्रा वने कृपणवत् प्रियया वियुक्तः
स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥ ९२ ॥

दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन् कबन्धं
सख्यं विधाय कपिभिर्दयितागतिं तैः ।
बुद्ध्वाथ वालिनि हते प्लवगेन्द्रसैन्यै-
र्वेलामगात् स मनुजोऽजभवार्चिताङ्घ्रिः ॥ ९३ ॥

यद्रोषविभ्रमविवृत्तकटाक्षपात-
संभ्रान्तनक्रमकरो भयगीर्णघोषः ।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी
पादारविन्दमुपगम्य बभाष एतत् ॥ ९४ ॥

तं त्वा वयं जडधियो न विदाम भूमन्
कूटस्थमादिपुरुषं जगतामधीशम् ।
त्वं सत्त्वतः सुरगणान् रजसः प्रजेशान्
मन्योश्च भूतपतयः स भवान् गुणेशः ॥ ९५ ॥

कामं प्रयाहि जहि विश्रवसोऽवमेहं
त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् ।
बध्नीहि सेतुमिह ते यशसो वितत्यै
गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ ९६ ॥

बध्वोदधौ रघुपतिर्विविधाद्रिकूटैः
सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ।
सुग्रीवनीलहनुमत्प्रमुखैरनीकै-
र्लङ्कां विभीषणदृशाऽऽविशदाशु दग्धाम् ॥ ९७ ॥

स वानरेन्द्रबलरुद्धविहारकोष्ठ-
सद्द्वारगोपुरसदोवलभीविटङ्का ।
निर्भज्यमानधिषणध्वजहेमकुम्भ-
शृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ ९८ ॥

रक्षःपतिस्तदवलोक्य निकुम्भकुम्भ-
धूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ।
पुत्रान् प्रहस्तमतिकायविकम्पनादीन्
सर्वानुगान् समहिनोदथ कुम्भकर्णम् ॥ ९९ ॥

तां यातुधानपृतनामसिशूलचाप-
प्रासर्ष्टिशक्तिशरतोमरखड्गजुष्टाम् ।
सुग्रीवलक्ष्मणमरुत्सुतगन्धमाद-
नीलाङ्गदर्क्षपनसादिभिरन्वितोऽयात् ॥ १०० ॥

तेऽनीकपा रघुपतेरभिपत्य सर्वे
द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधम् ।
जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः
सीताभिमर्शहतमङ्गलरावणेशम् ॥ १०१ ॥

रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट
आरुह्य यानकमथाभिससार रामम् ।
स्वः स्यन्दने द्युमति मातलिनोपनीते
विभ्राजमानमहननिशितैः क्षुरप्रैः ॥ १०२ ॥

रामस्तमाह पुरुषादपुरीष यन्नः
कान्ताऽसमक्षमसताऽपहृता श्ववत् ते ।
त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य
इच्छामि काल इव कर्तुमलङ्घ्यवीर्यः ॥ १०३ ॥

एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज
बाणं स वज्रमिव तद्धृदयं बिभेद ।
सोऽसृग् वमन् दशमुखैर्न्यपतद् विमानाद्
हा हेति जल्पति जने सुकृतीव रक्तः ॥ १०४ ॥

ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः ।
मण्डोदर्या समं तस्मिन् प्ररुदन्त्य उपाद्रवन् ॥ १०५ ॥

स्वान् स्वान् बन्धून् परिष्वज्य लक्ष्मणेषुभिरर्दितान् ।
रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥ १०६ ॥

हा हताः स्म वयं नाथ लोकरावणरावण ।
कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥ १०७ ॥

न वै वेद महाभाग भवान् कामवशं गतः ।
तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥ १०८ ॥

कृतैषा विधवा लङ्का वयं च कुलनन्दन ।
देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥ १०९ ॥

श्रीशुक उवाच–
स्वानां विभीषणश्चक्रे कोसलेन्द्रानुमोदितः ।
पितृमेधविधानेन यदुक्तं साम्परायिकम् ॥ ११० ॥

ततो ददर्श भगवानशोकवनिकाश्रमे ।
क्षामां स्वविरहव्याधिं शिंशपामूलमाश्रिताम् ॥ १११ ॥

रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत ।
आत्मसन्दर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ ११२ ॥

आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ।
विभीषणाय भगवान् दत्वा रक्षोगणेशताम् ॥ ११३ ॥

लङ्कामायुश्च कल्पान्तं ययौ तीर्णव्रतः पुरीम् ।
अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ११४ ॥

उपगीयमानचरितः शतधृत्यादिभिर्मुदा ।
गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥ ११५ ॥

महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम् ।
भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ ११६ ॥

पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ।
नन्दिग्रामात् स्वशिविरात् गीतवादित्रनिःस्वनैः ॥ ११७ ॥

ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ।
स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ ११८ ॥

सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ।
श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चागात् सदोयतैः ॥ ११९ ॥

पारमेष्ठ्यान्युपादाय भाण्डान्युच्चावचानि च ।
पादयोर्न्यपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ १२० ॥

पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ।
तमाश्लिष्य दृढं दोर्भ्यां स्नापयन् नेत्रजैर्जलैः ॥ १२१ ॥

रामो लक्ष्मणसीताभ्यां विप्रेभ्यो योऽर्हवत्तमाः ।
तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ १२२ ॥

धुन्वन्त उत्तरासङ्गं पतिं वीक्ष्य चिरागतम् ।
उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा ॥ १२३ ॥

पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ।
विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ १२४ ॥

धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ।
अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ॥ १२५ ॥

पुष्पकस्थैर्नुतस्त्रीभिः स्तूयमानश्च वन्दिभिः ।
विरेजे भगवान् राजन् ग्रहैरिन्दुरिवोदितः ॥ १२६ ॥

भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत् पुरीम् ।
प्रविश्य राजभवनं गुरुपत्नीश्च मातरम् ॥ १२७ ॥

गुरून् वयस्यावरजान् पूजितः प्रत्यपूजयन् ।
वैदेही लक्ष्मणश्चैव यथायोग्यं प्रणेमतुः ॥ १२८ ॥

पुत्रांस्तन्मातरस्तावत् प्राणांस्तन्व इवोत्थिताः ।
आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः ॥ १२९ ॥

जटा निर्मुच्य विधिवत् कुलवृद्धैः समं गुरुः ।
अभ्यषिञ्चद् यथैवेन्द्रं चतुःसिन्धुजलादिभिः ॥ १३० ॥

एवं कृतशिरस्स्नानः सुवासाः सदलंकृतः ।
स्वलंकृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥ १३१ ॥

अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ।
प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥ १३२ ॥

जुगोप पितृवद् रामो मेनिरे पितरं च तम् ।
त्रेतायां वर्तमानायां कालः कृतसमोऽभवत् ॥ १३३ ॥

रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ।
वनानि नद्यो गिरयो वर्षाणि द्विपसिन्धवः ॥ १३४ ॥

सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ।
नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥ १३५ ॥

मृत्युश्चानिच्छतां नासीद् रामे राजन्यधोक्षजे ।
एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ १३६ ॥

स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन् ।
प्रेम्णानुवृत्त्या शीलेन प्रश्रयावनता सती ।
भिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ १३७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे अष्टमोऽध्यायः ॥

## अथ नवमोऽध्यायः

श्रीशुक उवाच–
भगवानात्मनाऽऽत्मानं राम उत्तमकल्पकैः ।
सर्वदेवमयं देवमीज आचार्यवान् मखैः ॥ १ ॥

होत्रेऽददाद् दिशं प्राचीं ब्रह्मणो दक्षिणां विभुः ।
अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥

आचार्याय ददौ शेषा यावती भूस्तदन्तरा ।
मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥ ३ ॥

इत्यदात् स्वमलङ्कारं वासोभ्यामवशेषितः ।
तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥

ते तु ब्राह्मणदेवस्य वात्सल्यं वीक्ष्य सज्जनाः ।
प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥

ब्राह्मणाः ऊचुः–
अप्रत्तं नस्त्वया किनु भगवन् भुवनेश्वर ।
यतोऽन्तर्हृदि संविश्य तमो हंसि स्वरोचिषा ॥ ६ ॥

नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ।
उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये ॥ ७ ॥

श्रीशुक उवाच–
कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ।
चरन् वचोऽशृणोद् रामो भार्यामुद्दिश्य कस्यचित् ॥ ८ ॥

नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ।
स्त्रैणो हि बिभृयात् सीतां रामो नाहं भजे पुनः ॥ ९ ॥

इति लोकाद् बहुमुखाद् दुराराध्यादसंविदः ।
श्रुत्वा भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥

अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ।
कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥ ११ ॥

अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ।
तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥

सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ।
गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् ।
तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥ १३ ॥

शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ।
हत्वा मधुवनं चक्रे मथुरां नाम वै पुरीम् ॥ १४ ॥

मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ।
ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥

तच्छ्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः ।
स्मरंस्तस्या गुणांस्तांस्तान् नाशक्नोद् रोद्धुमीश्वरः ॥ १६ ॥

स्त्रीपुम्प्रसङ्ग एतादृक् सर्वत्र त्रासमावहः ।
अपीश्वराणां किमुत ग्राम्यस्य गृहमेधिनः ॥ १७ ॥

तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत् प्रभुः ।
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥

स्मरतां हृदि विन्यस्य विद्धं पद्मविवांशुकैः ।
स्वपादपल्लवं राम आत्मज्योतिरगात् ततः ॥ १९ ॥

नेदं यशो रघुपतेरिह विश्वमूर्ते-
र्लीलातनोरधिकशान्तविमुक्तधाम्नः ।
रक्षोवधो जलधिबन्धनमस्त्रपाणेः
किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥

यस्यामलं नृपसदस्सु यशोऽधुनापि
गायन्त्यघघ्नमृषयो दिगिभेन्द्रपाते ।
तन्नाकपालवसुपालकिरीटजुष्टं
पादाम्बुजं रघुपतेः शरणं प्रपद्ये ॥ २१ ॥

स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ।
कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥ २२ ॥

पुरुषो रामचरितं श्रवणैरुपधारयन् ।
आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते ॥ २३ ॥

राजोवाच–
कथं स भगवान् रामो भ्रातॄन् वा स्वयमात्मनः ।
तस्मिन् वा तेऽन्ववर्तन्त प्रजाः पौरास्त ईश्वरे ॥ २४ ॥

श्रीशुक उवाच–
अथादिशद् दिग्विजये भ्रातॄंश्च त्रिदशेश्वरः ।
आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥

आसिक्तमार्गां गन्धोदैः करिणां मदसीकरैः ।
स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥

प्रासादगोपुरसभाचैत्यदेवगृहादिषु ।
विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम् ॥ २७ ॥

पूगैः सवृन्तैः रम्भाभिः पालिकाभिः सुवाससाम् ।
आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८ ॥

तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ।
आशिषो युयुजुर्देव पाहीमां प्राक् त्वयोद्धृताम् ॥ २९ ॥

तं ताः प्रजा वीक्ष्य पतिं चिरागतं
दिदृक्षयोत्सृज्य गृहान् स्त्रियो नराः ।
आरुह्य हर्म्याण्यरविन्दलोचनं
नतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥

अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ।
अनन्तगृहकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥

विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः ।
स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिकभित्तिभिः ॥ ३२ ॥

चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुभिः ।
मुक्ताफलैश्चिदुल्लासैः कान्तकामोपपत्तिभिः ॥ ३३ ॥

धूपदीपैः सुरभिभिर्मण्डितैः पुष्पमण्डकैः ।
स्त्रीपुंभिः सुरसङ्काशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥

तस्मिन् स भगवान् रामः स्निग्धया प्रिययेष्टया ।
रेमे स्वारामधीराणामृषभः सीतया सह ॥ ३५ ॥

बुभुजे च यथाकामं कामं धर्ममपीडयन् ।
वर्षपूगान् बहून् नृणामभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे दशमोऽध्यायः ॥

# अथ दशमोऽध्यायः

श्रीशुक उवाच–
कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ।
पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत् ततः ॥ १ ॥

देवानीकस्ततोऽहीनः पारिपात्रश्च तत्सुतः ।
ततो बलस्थलस्तस्माद् वज्रनाभोऽर्कसम्भवः ॥ २ ॥

खगणस्तत्सुतस्तस्माद् विधृतश्चाभवत् सुतः ।
ततो हिरण्यनाभोऽभूद् योगाचार्यस्तु जैमिनेः ॥ ३ ॥

शिष्यः सकलमध्यात्मं याज्ञवल्क्योऽध्यगाद् यतः ।
योगं महोदयमृषिर्हृदयग्रन्थिभेदनम् ॥ ४ ॥

पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ।
सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥

योऽसावास्ते योगसिद्धः कलापग्राममास्थितः ।
कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥

तस्मात् तु सुश्रुतस्तस्य सन्धिस्तस्यापि मर्षणः ।
महस्वांस्तत्सुतस्तस्माद् विश्वसाह्वान्वजायत ॥ ७ ॥

ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ।
एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ ८ ॥

बृहद्बलस्य भविता पुत्रो नाम्ना बृहद्रणः ।
उरुक्षयः सुतस्तस्य वत्सप्रीतिर्भविष्यति ॥ ९ ॥

प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः ।
सहदेवस्ततो भावी बृहदश्वोऽथ भानुमान् ॥ १० ॥

प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ।
भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ॥ ११ ॥

तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ।
बृहद्राजस्तु तस्यापि बर्हिस्तस्मात् कृतञ्जयः ॥ १२ ॥

रणञ्जयस्तस्य सुतः सञ्जयो भविता ततः ।
तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ॥ १३ ॥

ततः प्रसेनजित् तस्मात् क्षुद्रको भविता ततः ।
रणको भविता तस्मात् सुरथस्तनयस्ततः ।
सुमित्रो नाम निष्ठान्तस्त्वेते बार्हद्बला नृपाः ॥ १४ ॥

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १५ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे दशमोऽध्यायः ॥

# अथ एकादशोऽध्यायः

श्रीशुक उवाच–
निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ।
आरभ्य सत्रं सोऽप्याह शक्रेण प्राग् वृतोऽस्मि भोः ॥ १ ॥

तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ।
तूष्णीमासीद् गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥

निमिश्चलमिदं विद्वान्सत्रमारभतात्मवान् ।
ऋत्विग्भिरपरैस्तावद् यावत् नागमद् गुरुः ॥ ३ ॥

शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ।
अशपत् पततां देहो निमेः पण्डितमानिनः ॥ ४ ॥

निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ।
तवापि पततां देहो लोभाद्धर्ममजानतः ॥ ५ ॥

इत्युत्ससर्ज तं देहं निमिरध्यात्मकोविदः ।
मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥

गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः ।
समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥

राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ।
तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥ ८ ॥

यस्य योगं न वाञ्छन्ति वियोगभयकातराः ।
भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥ ९ ॥

देहं नावरुरुत्सेऽहं दुःखशोकभयाश्रयम् ।
सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥

देवा ऊचुः–
विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ।
उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥

अराजकभयं नृणां मन्यमाना महर्षयः ।
देहं ममन्थुश्च निमेः कुमारः समजायत ॥ १२ ॥

जननाज्जनकः सोऽभूद् वैदेहस्तु विदेहजः ।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥

तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः ।
ततः सुकेतुस्तस्यापि देवरातो महीपतिः ॥ १४ ॥

तस्माद् बृहद्रथस्तस्य महावीर्यः सुधृत्पिता ।
सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥

मरोः प्रतीन्धकस्तस्माज्जातः कृतरथो यतः ।
देवमीढस्तस्य सुतो विधृतोऽथ महाधृतिः ॥ १६ ॥

कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः ।
स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥

ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ।
सीता सीराग्रतो जाता तस्मात् सीरध्वजः स्मृतः ॥ १८ ॥

कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृप ।
धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥

कृतध्वजात् केशिध्वजः खाण्डिक्यस्तु मितध्वजात् ।
कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥

खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद् गतः ।
भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥

शुचिस्तु तनयस्तस्मात् सनद्वाजस्ततोऽभवत् ।
ऊर्जकेतुः सनद्वाजादजोऽथ कुरुजित्सुतः ॥ २२ ॥

अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ।
ततश्चित्ररथो यस्य क्षेमाधिर्मिथिलाधिपः ॥ २३ ॥

तस्मात्क्षेमरथस्तस्य सुतः सत्यरथस्ततः ।
आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः ॥ २४ ॥

वैवस्वतोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ।
श्रुतस्ततो जयस्तस्माद् विजयोऽस्माद् ऋतः सुतः ॥ २५ ॥

शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ।
बहुलाश्वो धृतस्तस्य कृतिरस्य महावशी ॥ २६ ॥

एते वै मैथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे एकादशोऽध्यायः ॥

# अथ द्वादशोऽध्यायः

श्रीशुक उवाच–
अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥ १ ॥

सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ।
जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥

तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल ।
विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥

सोऽयजद् राजसूयेन विजित्य भुवनत्रयम् ।
पत्नीं बृहस्पतेर्दर्पात् तारां नामाहरद् बलात् ॥ ४ ॥

यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ।
नात्यजत् तत्कृते जज्ञे सुरदानवविग्रहः ॥ ५ ॥

शुक्रो बृहस्पतेर्द्वेषादग्रहीत् सासुरोडुपम् ।
हरो गुरुसुतस्नेहात् सर्वभूतगणावृतः ॥ ६ ॥

सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् ।
सुरासुरविनाशोऽभूत् समरस्तारकामयः ॥ ७ ॥

निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् ।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत् पतिः ॥ ८ ॥

गर्भं त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ।
नाहं त्वां भस्मसात् कुर्यां स्त्रियं सान्तानिके सति ॥ ९ ॥

तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ।
तस्यां जज्ञे दस्युहन्ता कुमारः कनकप्रभः ॥ १० ॥

स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ।
ममायं न तवेत्युच्चैस्तयोर्विवदमानयोः ॥ ११ ॥

पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता च सा ।
कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ १२ ॥

किं न वोचस्यसद्वृत्ते पितरं मे वदाशु वै ।
न त्वां तु भस्मसात् कुर्यामात्मावद्यविगूहिनीम् ॥ १३ ॥

ब्रह्मा तं तु विनिर्भर्त्स्य क्षेत्रारं मातुरन्तिके ।
तामाहूय समप्राक्षीद् रह एव तु सान्त्वया ॥ १४ ॥

सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ।
तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ १५ ॥

बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण् मुदम् ।
ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ १६ ॥

तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ।
श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ १७ ॥

तदन्तिकमुपेयाय देवी स्मरशरार्दिता ।
मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ १८ ॥

निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ।
धृतिं विहाय ललना उपतस्थे तदन्तिकम् ॥ १९ ॥

स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ।
उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ २० ॥

राजोवाच–
स्वागतं ते वरारोहे आस्यतां करवाम किम् ।
संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ २१ ॥

ऊर्वश्युवाच–
कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ।
यदङ्गान्तरमासाद्य च्यवते ह रिरंसया ॥ २२ ॥

एतावुरणकौ राजन् न्यस्तौ रक्षस्व मानद ।
संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २३ ॥

घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ।
विवाससं तत् तथेति प्रतिपेदे महामनाः ॥ २४ ॥

राजोवाच–
अहो रूपमहो भावं नरलोकविमोहनम् ।
को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥ २५ ॥

शुक उवाच–
तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः ।
रेमे सुरविहारेषु कामं चैत्ररथादिषु ॥ २६ ॥

रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया ।
तन्मुखामोदमुषितो मुमुदेऽहर्गणान् बहून् ॥ २७ ॥

अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान् समचोदयत् ।
उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २८ ॥

त उपेत्य महारात्रौ तमसि प्रत्युपस्थिते ।
उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २९ ॥

निशम्याक्रन्दितं देवी पुत्रयोर्नीयमानयोः ।
हतास्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ ३० ॥

यद्विस्रम्भादहं नष्टा हतापत्या च दस्युभिः ।
यः शेते निशि सन्त्रस्तो यथा नारी दिवा पुमान् ॥ ३१ ॥

इति वाक्सायकैर्विद्धः प्रतोत्त्रैरिव कुञ्जरः ।
निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद् रुषा ॥ ३२ ॥

ते विसृज्योरणौ तत्र प्राद्योतन्त स्म विद्युतः ।
आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३३ ॥

निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ।
तवापि पततां देहो लोभाद्धर्ममजानतः ॥ ५ ॥

इत्युत्ससर्ज तं देहं निमिरध्यात्मकोविदः ।
मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥

गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः ।
समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥

राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ।
तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥ ८ ॥

यस्य योगं न वाञ्छन्ति वियोगभयकातराः ।
भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥ ९ ॥

देहं नावरुरुत्सेऽहं दुःखशोकभयाश्रयम् ।
सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥

देवा ऊचुः–
विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ।
उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥

अराजकभयं नृणां मन्यमाना महर्षयः ।
देहं ममन्थुश्च निमेः कुमारः समजायत ॥ १२ ॥

जननाज्जनकः सोऽभूद् वैदेहस्तु विदेहजः ।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥

तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः ।
ततः सुकेतुस्तस्यापि देवरातो महीपतिः ॥ १४ ॥

तस्माद् बृहद्रथस्तस्य महावीर्यः सुधृत्पिता ।
सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥

मरोः प्रतीन्धकस्तस्माज्जातः कृतरथो यतः ।
देवमीढस्तस्य सुतो विधृतोऽथ महाधृतिः ॥ १६ ॥

कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः ।
स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥

ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ।
सीता सीराग्रतो जाता तस्मात् सीरध्वजः स्मृतः ॥ १८ ॥

कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृप ।
धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥

कृतध्वजात् केशिध्वजः खाण्डिक्यस्तु मितध्वजात् ।
कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥

खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद् गतः ।
भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥

शुचिस्तु तनयस्तस्मात् सनद्वाजस्ततोऽभवत् ।
ऊर्जकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः ॥ २२ ॥

अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ।
ततश्चित्ररथो यस्य क्षेमाधिर्मिथिलाधिपः ॥ २३ ॥

तस्मात्क्षेमरथस्तस्य सुतः सत्यरथस्ततः ।
आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः ॥ २४ ॥

वैवस्वतोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ।
श्रुतस्ततो जयस्तस्माद् विजयोऽस्माद् ऋतः सुतः ॥ २५ ॥

शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ।
बहुलाश्वो धृतस्तस्य कृतिरस्य महावशी ॥ २६ ॥

एते वै मिथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे एकादशोऽध्यायः ॥

## अथ द्वादशोऽध्यायः

श्रीशुक उवाच–
अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥ १ ॥

सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ।
जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥

तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल ।
विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥

सोऽयजद् राजसूयेन विजित्य भुवनत्रयम् ।
पत्नीं बृहस्पतेर्दर्पात् तारां नामाहरद् बलात् ॥ ४ ॥

यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ।
नात्यजत् तत्कृते जज्ञे सुरदानवविग्रहः ॥ ५ ॥

शुक्रो बृहस्पतेर्द्वेषादग्रहीत् सासुरोडुपम् ।
हरो गुरुसुतस्नेहात् सर्वभूतगणावृतः ॥ ६ ॥

सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् ।
सुरासुरविनाशोऽभूत् समरस्तारकामयः ॥ ७ ॥

निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् ।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीं बृहस्पतिः ॥ ८ ॥

गर्भं त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ।
नाहं त्वां भस्मसात् कुर्यां स्त्रियं सान्तानिके सति ॥ ९ ॥

तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ।
तस्यां जज्ञे दस्युहन्ता कुमारः कनकप्रभः ॥ १० ॥

स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ।
ममायं न तवेत्युच्चैस्तयोर्विवदमानयोः ॥ ११ ॥

पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता च सा ।
कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ १२ ॥

किं न वोचस्यसद्वृत्ते पितरं मे वदाशु वै ।
न त्वां तु भस्मसात् कुर्यामात्मावद्यविगूहिनीम् ॥ १३ ॥

ब्रह्मा तं तु विनिर्भर्त्स्य क्षेत्तारं मातुरन्तिके ।
तामाहूय समप्राक्षीद् रह एव तु सान्त्वया ॥ १४ ॥

सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ।
तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ १५ ॥

बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण् मुदम् ।
ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ १६ ॥

तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ।
श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ १७ ॥

तदन्तिकमुपेयाय देवी स्मरशरार्दिता ।
मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ १८ ॥

निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ।
धृतिं विहाय ललना उपतस्थे तदन्तिकम् ॥ १९ ॥

स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ।
उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ २० ॥

राजोवाच–
स्वागतं ते वरारोहे आस्यतां करवाम किम् ।
संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ २१ ॥

उर्वश्युवाच–
कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ।
यदङ्गान्तरमासाद्य च्यवते ह रिरंसया ॥ २२ ॥

एतावुरणकौ राजन् न्यस्तौ रक्षस्व मानद ।
संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २३ ॥

घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वान्यत्र मैथुनात् ।
विवाससं तत् तथेति प्रतिपेदे महामनाः ॥ २४ ॥

राजोवाच–
अहो रूपमहो भावं नरलोकविमोहनम् ।
को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥ २५ ॥

शुक उवाच–
तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः ।
रेमे सुरविहारेषु कामं चैत्ररथादिषु ॥ २६ ॥

रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया ।
तन्मुखामोदमुषितो मुमुदेऽहर्गणान् बहून् ॥ २७ ॥

अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान् समचोदयत् ।
उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २८ ॥

त उपेत्य महारात्रौ तमसि प्रत्युपस्थिते ।
उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २९ ॥

निशम्याक्रन्दितं देवी पुत्रयोर्नीयमानयोः ।
हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ ३० ॥

यद्विस्रम्भादहं नष्टा हतापत्या च दस्युभिः ।
यः शेते निशि सन्त्रस्तो यथा नारी दिवा पुमान् ॥ ३१ ॥

इति वाक्सायकैर्विद्धः प्रतोत्त्रैरिव कुञ्जरः ।
निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद् रुषा ॥ ३२ ॥

ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः ।
आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३३ ॥

ऐलोऽपि शयने जायामपश्यन् विमना अभूत् ।
तच्चितो विक्लवः शोचन् बभ्रामोन्मत्तवन्महीम् ॥ ३४ ॥

स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ।
पश्यन् प्रहृष्टवदनः प्राह सूक्तं पुरूरवाः ॥ ३५ ॥

अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि ।
मन्त्रा अद्याप्यनिर्वृत्ता वचांसि कृणवावहै ॥ ३६ ॥

सुदेवोऽयं पतत्यत्र देवि दूरं हृतस्त्वया ।
खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३७ ॥

ऊर्वश्युवाच–
मा मृथा पुरुषोऽसि त्वं मा स्म त्वाऽद्युर्वृका इमे ।
क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥ ३८ ॥

स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ।
घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत ॥ ३९ ॥

विधायालीकविस्रम्भमज्ञेष्वत्यन्तसौख्यदाः ।
नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ४० ॥

संवत्सरान्तेऽपि भवानेकरात्रं मयेश्वर ।
वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः ।
अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम् ॥ ४१ ॥

पुनस्तत्र गतोऽब्दान्ते ऊर्वशीं वीरमातरम् ।
उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ ४२ ॥

अथैनमुर्वशी प्राह कृपणं विरहातुरम् ।
गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति ॥ ४३ ॥

तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ।
उर्वशीं मन्यमानस्तां नावुध्यत चरन् वने ॥ ४४ ॥

स्थालीं न्यस्य वने गत्वा गृहानध्युषितो निशि ।
त्रेतायां सम्प्रवृत्तायां मनसि त्रय्यवर्तत ॥ ४५ ॥

स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ।
तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४६ ॥

उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम् ।
आत्मानमुभयोर्मध्ये यत् तत् प्रजननं प्रभुः ॥ ४७ ॥

तस्य निर्मथनाज्जातो जातवेदा विभावसुः ।
त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥ ४८ ॥

तेनायजत यज्ञेशं भगवन्तमधोक्षजम् ।
उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४९ ॥

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ५० ॥

पुरूरवस एवासीत् त्रयी त्रेतामुखे नृप ।
अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ५१ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे द्वादशोऽध्यायः ॥

## अथ त्रयोदशोऽध्यायः

ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥ १ ॥

श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतञ्जयः ।
रयस्यादुभत एकस्तु जयस्य तनयोऽमितः ॥ २ ॥

भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ।
तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ॥ ३ ॥

जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ।
ततः कुशः कुशस्यापि कुशाम्बुस्तनयो वसुः ॥ ४ ॥

कुशानाभश्च चत्वारो गाधिरासीत् कुशाम्बुजः ॥ ५ ॥
तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ।
वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ६ ॥

एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं दीयतां शुल्कं कन्यायाः कुशिकान्वयः ॥ ७ ॥

इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ।
आनीय दत्वा तानश्वानुपयेमे वराङ्गनाम् ॥ ८ ॥

स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ।
श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ९ ॥

तावत् सत्यवती मात्रा स्वचरुं याचिता सती ।
श्रेष्ठं मत्वाऽनयाऽयच्छन्मात्रे मातुरदात् स्वयम् ॥ १० ॥

तद् विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ।
घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ ११ ॥

प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ।
अथ तर्हि भवेत् पौत्रो जमदग्निस्ततोऽभवत् ॥ १२ ॥

सा चाभूत् सुमहापुण्या कौशिकी लोकपावनी ।
रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १३ ॥

तस्यां वै भार्गवऋषेः सुता वसुमदादयः ।
यवीयान् जज्ञ एतेषां राम इत्यभिविश्रुतः ॥ १४ ॥

यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम् ।
त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १५ ॥

दृप्तं क्षत्रं भुवो भारमब्रह्मण्यमधार्मिकम् ।
रजस्तमोवृतमहन् फल्गुन्यपि कृतेंऽहसि ॥ १६ ॥

राजोवाच–
किं तदंहो भगवतो राजन्यैरजितात्मभिः ।
कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १७ ॥

श्रीशुक उवाच–
हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ।
दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ १८ ॥

बाहून् दशशतं लेभे दुर्धर्षत्वमरातिषु ।
अव्याहतेन्द्रियौजःश्रीतेजोवीर्ययशोबलम् ॥ १९ ॥

योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ।
चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ २० ॥

स्त्रीरत्नैरावृतः क्रीडन् रेवाम्भसि मदोत्कटः ।
वैजयन्तीं स्रजं बिभ्रद् रुरोध सरितं भुजैः ॥ २१ ॥

विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः ।
नामृष्यत् तस्य तद्वीर्यं वीरमानी दशाननः ॥ २२ ॥

गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ।
माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २३ ॥

स एकदा तु मृगयां विचरन् विजने वने ।
यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २४ ॥

तस्मै स नरदेवाय मुनिरर्हणमाहरत् ।
ससैन्यामात्यवाहाय हविर्धान्या तपोधनः ॥ २५ ॥

स वीरस्तस्य तद् दृष्ट्वा आत्मैश्वर्यातिशायनम् ।
तन्नाद्रियताग्निहोत्र्यां साभिलाषः स हैहयः ॥ २६ ॥

हविर्धानीमृषेर्दर्पान्नरान् हर्तुमचोदयत् ।
तां ते माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २७ ॥

अथ राजनि निर्याते राम आश्रम आगतः ।
श्रुत्वा तत् तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २८ ॥

परशुं योजयामास सतूणं चर्मकार्मुकम् ।
अन्वधावत दुर्धर्षो मृगेन्द्र इव यूथपम् ॥ २९ ॥

तमापतन्तं भृगुवर्यमोजसा
धनुर्धरं बाणपरश्वधायुधम् ।
ऐणेयचर्माम्बरमात्मधामभिर्युतं
जटाभिर्ददृशे पुरीं नृपः ॥ ३० ॥

अचोदयद्धस्तिरथाश्व पत्तिभिः
गदासिबाणर्ष्टिशतघ्निशक्तिभिः ।
अक्षौहिणीः सप्तदशातिभीषणाः
ता राम एको भगवानसूदयत् ॥ ३१ ॥

यतो यतोऽसौ प्रहरन् परश्वधो
मनोनिलौजाः परचक्रसूदनः ।
ततस्ततश्छिन्नभुजोरुकन्धरा
निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३२ ॥

दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे
रणाजिरे रामकुठारसायकैः ।
विवृक्णचर्मध्वजचापविग्रहं
निपातितं हैहय आपतद् रुषा ॥ ३३ ॥

अथार्जुनः पञ्चशतेषु बाहुभिर्धनुष्षु
बाणान् युगपत् स सन्दधे ।
रामाय रामोऽस्त्रभृतां समग्रणी-
स्तानेकवद्धेषुभिरच्छिनत् समम् ॥ ३४ ॥

पुनः स्वहस्तैरचलान् मृधेऽङ्घ्रिपान्
उत्क्षिप्य वेगादभिधावतो युधि ।

भुजान् कुठारेण कठोरनेमिना
चिच्छेद रामः प्रसभं हसन्निव ॥ ३६ ॥

कृन्तबाहोः शिरस्तस्य गिरिशृङ्गमिवाहरत् ।
हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३६ ॥

अग्निहोत्रीमुपावृत्य सवत्सां परवीरहा ।
समुपेत्याश्रमं पित्रे परिक्लिष्टां समार्पयत् ॥ ३७ ॥

स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ।
वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ।
राम राम महाबाहो भवान् पापमकारषीत् ॥ ३८ ॥

अवधीन्नरदेवं यत् सर्वदेवमयं वृथा ।
वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः ॥ ३९ ॥

यथा लोकगुरुर्देवः पारमेष्ठ्यमगात् पदम् ।
क्षमया रोचते लक्ष्मीः ब्राह्मी सौरी यथा प्रभा ।
क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४० ॥

राज्ञो मूर्धाभिषिक्तस्य वधो ब्रह्मवधाद् गुरुः ।
तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥ ४१ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे त्रयोदशोऽध्यायः ॥

# अथ चतुर्दशोऽध्यायः

श्रीशुक उवाच–
पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन ।
संवत्सरं तीर्थचर्यां चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥

कदाचिद् रेणुका याता गङ्गायां पद्ममालिनम् ।
गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥

विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ।
होमवेलां न सस्मार किञ्चिच्चित्ररथस्पृहा ॥ ३ ॥

कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ।
आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥ ४ ॥

व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ।
घ्नतैनां पुत्रकाः पापामित्युक्तास्तां न चक्रिरे ॥ ५ ॥

रामः सञ्चोदितः पित्रा भ्रातॄन् मात्रा सहावधीत् ।
प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥

वरेण छन्दयामास प्रीतः सत्यवतीसुतः ।
वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ७ ॥

उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा ।
पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥

येऽर्जुनस्य सुता राजन् स्मरन्तः स्म पितुर्वधम् ।
रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥

एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते ।
वैरं सिषाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥

दृष्ट्वाऽग्न्यागार आसीनमावेशितधियं मुनिम् ।
भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥

याचमानाः कृपणया राममात्राऽतिदारुणाः ।
प्रसह्य शिर उत्कृत्य जग्मुस्ते क्षत्रबन्धवः ॥ १२ ॥

रेणुका दुःखशोकार्ता निघ्नन्त्यात्मानमात्मना ।
राम रामेति तातेति विचुक्रोशोच्चकैः सती ॥ १३ ॥

तदुपश्रुत्य दूरस्था हा रामेत्यार्तवत्स्वरम् ।
त्वरयाऽऽश्रममासाद्य ददृशुः पितरं हतम् ॥ १४ ॥

ते दुःखरोषामर्षार्तिशोकवेगविमोहिताः ।
हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥

विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ।
प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे ॥ १६ ॥

गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ।
तस्यां स शीर्षभी राज्ञां मध्ये चक्रे महागिरिम् ॥ १७ ॥

तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ।
हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥

त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां विभुः ।
स्यमन्तपञ्चके चक्रे शोणितोदान् ह्रदान् नव ॥ १९ ॥

पितुः कायेन सन्धाय शिर आधाय बर्हिषि ।
सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥

ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ।
अध्वर्यवे प्रतीचीं वा उद्गात्र उत्तरां दिशम् ॥ २१ ॥

अन्येभ्योऽवान्तरदिशः काश्यपाय च मध्यतः ।
आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥

ततश्चावभृथस्नानविधूताशेषकिल्विषः ।
सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥

स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ।
ऋषीणां मण्डले सोऽभूत् सप्तमो रामपूजितः ॥ २४ ॥

जामदग्न्योऽपि भगवान् रामः कमललोचनः ।
आगामिन्यन्तरे राजन् वर्तयिष्यति वै बृहत् ॥ २५ ॥

आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ।
उपगीयमानचरितः सिद्धगन्धर्वचारणैः ॥ २६ ॥

एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः ।
अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥ २७ ॥

गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥ २८ ॥

विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप ।
मध्यमस्तु मधुच्छन्दा माधुच्छन्दस एव ते ॥ २९ ॥

पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ।
आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥

यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ।
स्तुत्वा देवान् प्रजेशादीन् मुमुचे पाशबन्धनात् ॥ ३१ ॥

यो रातो देवयजने देवैर्गाधिषु तापसः ।
देवरात इति ख्यातः शुनःशेपस्तु भार्गवः ॥ ३२ ॥

ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ।
अशपत् तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥ ३३ ॥

स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ।
यन्नो भवान् सञ्जानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥

ज्येष्ठं मन्त्रदृशं चक्रुः त्वामन्वञ्चो वयं स्म हि ।
विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ॥ ३५ ॥

ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ।
एष वः कौशिका वीरो देवरातस्तमन्वित ॥ ३६ ॥

अन्ये चाष्टकहारीता जयक्रतुमदादयः ।
एवं कौशिकगोत्रं तद् वैश्वामित्रैः पृथग्विधम् ।
प्रवरान्तरमापन्नं तद्धीत्येवं प्रकल्पितम् ॥ ३७ ॥

यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः ।
नहुषः क्षत्रवृद्धश्च रजी रामश्च वीर्यवान् ।
अनेना इति राजेन्द्र क्षत्रवृद्धान्वयं शृणु ॥ ३८ ॥

क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः ।
काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ ३९ ॥

शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ।
काश्यस्य काशिस्तत्पुत्रः सुराष्ट्रो दीर्घतमःपिता ॥ ४० ॥

धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्तकः ।
यज्ञभुग् वासुदेवांशः स्मृतिमात्रार्तिनाशनः ॥ ४१ ॥

तत्पुत्रः केतुमान् यस्य जज्ञे भीमरथस्ततः ।
दिवोदासो द्युमांस्तस्मात् प्रतर्दन इति स्मृतः ॥ ४२ ॥

स एव शत्रुजिद्वत्सो ऋतध्वज इतीरितः ।
तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ४३ ॥

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
नालर्कादपरो राजा बुभुजे मेदिनीं युवा ॥ ४४ ॥

अलर्कात् सन्ततिस्तस्मात् सुनीथोऽथ सुकेतनः ।
धर्मकेतुः सुतस्तस्मात् सत्यकेतुरजायत ॥ ४५ ॥

धृष्टकेतुस्ततस्तस्मात् सुकुमारः क्षितीश्वरः ।
वीतिहोत्रोऽस्य भर्गोऽतो भार्गभूमिरभून्नृपः ॥ ४६ ॥

इतीमे काश्यजा भूपाः क्षत्रवृद्धान्वयायिनः ।
रम्भस्य रभसः पुत्रो गम्भीरश्चाक्रकस्ततः ॥ ४७ ॥

तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ।
शुद्धस्ततः शुचिस्तस्मात् त्रिककुद् धर्मसारथिः ॥ ४८ ॥

ततः शान्तरया जज्ञे कृतकृत्यः स आत्मवान् ।
रजेः पञ्चशतान्यासन् पुत्राणाममितौजसाम् ॥ ४९ ॥

देवैरभ्यर्थितो दैत्यान् हत्वेन्द्रायाददाद् दिवम् ।
इन्द्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥ ५० ॥

आत्मानमर्थयामास प्रह्लादात् परिशङ्कितः ।
पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ ५१ ॥

त्रिविष्टपं महेन्द्राय यज्ञभागान् समाददुः ।
गुरुणा हूयमानेऽग्नौ बलभित् तनयान् रजेः ॥ ५२ ॥

अवधीद् भ्रंशितान् मार्गान्न कश्चिदवशेषितः ।
प्रतिक्षत्रः क्षत्रवृद्धात् सञ्जयस्तत्सुतो जयः ॥ ५३ ॥

ततः कृतः कृतस्यापि जज्ञे वीर्यधनस्ततः ।
सहदेवस्ततोऽहीनो जयत्सेनस्तु तत्सुतः ॥ ५४ ॥

सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः ।
क्षत्रवृद्धान्वया भूपा इमे शृण्वथ नाहुषान् ॥ ५५ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे चतुर्दशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

श्रीशुक उवाच–
यतिर्ययातिः संयातिरायातिर्वियतिः कृतिः ।
षडिमे नहुषस्यासन् इन्द्रियाणीव देहिनः ॥ १ ॥

राज्यं नैच्छद् यतिः पित्रा दत्तं तत्परिणामवित् ।
यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥

पितरि भ्रंशिते स्थानाद् इन्द्राण्या धर्षणाद् द्विजैः ।
प्रापितेऽजगरत्वं च ययातिरभवन्नृपः ॥ ३ ॥

चतसृष्वादिशद् दिक्षु भ्रातृन् गोप्तृन् यवीयसः ।
कृतदारो जुगोपोर्वी काव्यस्य वृषपर्वणः ॥ ४ ॥

राजोवाच–
ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबन्धुश्च नाहुषः ।
राजन्यविप्रयोः कस्माद् विवाहः प्रातिलोमकः ॥ ५ ॥

श्रीशुक उवाच–
एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ।
सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥

देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले ।
व्यचरत् कलगीतालिनलिनीपुलिनेऽबला ॥ ७ ॥

जलाशयं समासाद्य कन्याः कमललोचनाः ।
तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः ॥ ८ ॥

व्रजन्तं वीक्ष्य गिरिशं सह देव्या वृषे स्थितम् ।
सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥

शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ।
स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥

अहो निरीक्ष्यतां मह्यं दास्याः कर्म ह्यसाम्प्रतम् ।
अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥

यैरिदं तपसा सृष्टं मुखं पुंसः परस्य वै ।
धार्यते यैः परञ्ज्योतिः शिवः पन्थाश्च दर्शितः ॥ १२ ॥

येऽपीदमुपतिष्ठन्ते लोकनाथाः सुरेश्वराः ।
भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥ १३ ॥

वयं तत्रापि भृगवः शिष्योऽस्या नः पितासुरः ।
अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती ॥ १४ ॥

एवं क्षिपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत ।
रुषा श्वसन्ती नागीव धर्षिता दष्टदच्छदा ॥ १५ ॥

आत्मवृत्तिमविज्ञाय कत्थसे बहु भिक्षुकि ।
किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा ॥ १६ ॥

एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् ।
शर्मिष्ठा प्राक्षिपत् कूपे वासस्त्वादाय मन्युना ॥ १७ ॥

तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ।
प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥ १८ ॥

दत्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ।
गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥

तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ।
राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ।
हस्तग्रहोऽपरो मा भूद् गृहीतायास्त्वया हि मे ॥ २० ॥

एष ईशकृतो वीर सम्बन्धो नौ न पौरुषः ।
यदिदं कूपमग्नाया भवतो दर्शनं मम ॥ २१ ॥

न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ।
कचस्य बार्हस्पत्यस्य शापाद् यमशपं पुरा ॥ २२ ॥

ययातिरनभिप्रेतं दैवोपहृतमात्मनः ।
मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥

गते राजनि सा वीरे तत्र स्म रुदती पितुः ।
न्यवेदयत् ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥

दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् ।
स्तुवन् वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥

वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ।
गुरुं प्रसादयन् मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥

क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः ।
कामोऽस्याः क्रियतां राजन् नैनां त्यक्तुमिहोत्सहे ॥ २७ ॥

तथेत्यवस्थिते प्राह देवयानी मनोगतम् ।
पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥

स्वानां तत् सङ्कटं वीक्ष्य तदर्थस्य च गौरवम् ।
देवयानीं पर्यचरत् स्त्रीसहस्रेण दासिवत् ॥ २९ ॥

नाहुषाय सुतां दत्वा सह शर्मिष्ठयोशनाः ।
तमाह राजञ्छर्मिष्ठां मा धास्तल्पे तु कर्हिचित् ॥ ३० ॥

विलोक्यौशनसीं राजञ्छर्मिष्ठा सुप्रजां क्वचित् ।
तमेव वव्रे रहसि सख्याः पतिमृतौ सति ॥ ३१ ॥

राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ।
स्मरञ्छुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥

यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥

गर्भसम्भवमासुर्या भर्तुर्विज्ञाय मामिनी ।
देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥ ३४ ॥

प्रियामनुगतः कामी वचोभिरभिमन्त्रयन् ।
न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥

शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ।
त्वां जरा विशते मन्द विरूपकरणी नृणाम् ॥ ३६ ॥

ययातिरुवाच–
अतृप्तोऽस्म्यद्य कामानां ब्रह्मन् दुहितरि स्म ते ।
व्यत्यस्यैतां यथाकामं वयसा यो हि दास्यति ॥ ३७ ॥

श्रीशुक उवाच–
इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ।
यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥

मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ।
वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥

यदुरुवाच–
नोत्सहे जरया स्थातुमन्तरा प्राप्तया तव ।
अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥

तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ।
प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥

अपृच्छत् तनयं पूरुं वयसोनं गुणाधिकम् ।
न त्वमग्रजवद् वत्स मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥

पूरुरुवाच–
को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् ।
प्रतिकर्तुं क्षमो यस्य प्रसादाद् विन्दते परम् ॥ ४३ ॥

उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः ।
अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥

इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ।
सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृपः ॥ ४५ ॥

सप्तद्वीपपतिः सम्यक् पितृवत् पालयन् प्रजाः ।
यथोपजोषं विषयान् जुजोषाऽव्याहतेन्द्रियः ॥ ४६ ॥

देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ।
प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥

अयजद् यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥

यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ।
नानेव भाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥

तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ।
नारायणमणीयांसं निराशीरयजत् प्रभुः ॥ ५० ॥

एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ।
विदधानोऽपि नातृप्यत् सार्वभौमः कदिन्द्रियैः ॥ ५१ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे पञ्चदशोऽध्यायः ॥

# अथो षोडशोऽध्यायः

श्रीशुक उवाच–
स इत्थमाचरन् कामांस्त्रैणोऽपह्नवमात्मनः ।
बद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥

शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ।
धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥ २ ॥

वस्त एको वने कश्चित् विचिन्वन् प्रियमात्मनः ।
ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥

तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् ।
व्यधत्त तीर्थं उद्धृत्य विषाणाग्रेण रोधसि ।
सोत्तीर्य कूपात् सुश्रोणी तमेव चकमे किल ॥ ४ ॥

तया वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः ।
पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याबकोविदम् ॥ ५ ॥

स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥

तमेव प्रेष्ठतमया रममाणमजान्यया ।
विलोक्य रूपसंलग्ना नामृष्यद् बस्तकर्म तत् ॥ ७ ॥

तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ।
इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥

सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ।
कुर्वन् विलविलाकारं नाशक्नोत् पथि सन्धितुम् ॥ ९ ॥

तस्य तत्र द्विजः कश्चिदजास्वाम्यच्छिनद् रुषा ।
लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित् ॥ १० ॥

संबद्धवृषणः सोऽपि ह्यजया कूपलब्धया ।
कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥

तथाऽहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः ।
आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य मे ॥ १३ ॥

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥

यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥

या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ।
तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ १६ ॥

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥

पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत् ।
तथापि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥

तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निरहङ्कारश्चरिष्यामि मृगैः सह ॥ १९ ॥

दृष्टं श्रुतमसद् विद्वान् नानुध्यायेन्न संविशेत् ।
संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥ २० ॥

श्रीशुक उवाच–
इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ।
दत्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥

दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ।
प्रतीच्यां तुर्वसुं चक्रे उदीच्यामनुमीश्वरम् ॥ २२ ॥

भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ।
अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥

आसेवितं वर्षपूगान् षड्वर्गं विषयेषु सः ।
क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥

स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥

श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ।
स्त्रीपुंसोः स्नेहवैक्लव्यात् परिहासमिवोदितम् ॥ २६ ॥

सा संनिवासं सुहृदां प्रपायामिव गच्छताम् ।
विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभो ॥ २७ ॥

सर्वत्र सङ्गमुत्सृज्य स्वाप्नौपम्येन भार्गवी ।
कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥ २८ ॥

नमस्तुभ्यं भगवते वासुदेवाय वेधसे ।
सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे षोडशोऽध्यायः ॥

# अथ सप्तदशोऽध्यायः

श्रीशुक उवाच–
पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ।
यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥

जनमेजयो ह्यभूत् पूरोः प्रचिन्वांस्तत्सुतः स्मृतः ।
प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥

तस्य सुद्युरभूत् पुत्रस्तस्माद् बहुगवस्ततः ।
शंयातिस्तस्य हंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥

ऋतेयुस्तस्य कक्षेयुः स्थण्डिलेयुः कृतेयुकः ।
जलेयुः सन्ततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥

दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥

ऋतेयो रन्तिनारोऽभूत् त्रयस्तस्यात्मजा नृप ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥

तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या द्विजातयः ।
पुत्रोऽभूत् सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥ ७ ॥

दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥ ८ ॥

विलोक्य मुमुहे सद्यो देवमायामिव स्त्रियम् ।
बभाषे तां वरारोहां भटैः कतिपयैर्युतः ॥ ९ ॥

तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ।
पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥

का त्वं कमलगर्भाभे कस्यासि हृदयङ्गमे ।
किं वा चिकीर्षितं त्वत्र भवत्या विजने वने ॥ ११ ॥

व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ।
न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥

शकुन्तलोवाच–
विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद् भगवान् कण्वो वीर किं करवाम ते ॥ १३ ॥

आस्यतामरविन्दाक्ष गृह्यतामर्हणं च नः ।
भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥ १४ ॥

दुष्यन्त उवाच–
उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ।
स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥

श्रीशुक उवाच–
ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ।
गान्धर्वविधिना राजा देशकालविधानवित् ॥ १६ ॥

अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७ ॥

कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः ।
बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥ १८ ॥

तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसंभूतं भर्तुरन्तिकमागमत् ॥ १९ ॥

यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ।
शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥

माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ।
भरस्व पुत्रं दौष्यन्ति माऽवमंस्थाः शकुन्तलाम् ॥ २१ ॥

रेतोधाः पुत्रं नयति नरदेव यमक्षयम् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ २२ ॥

पितर्युपरते सोऽभूच्चक्रवर्ती महायशाः ।
महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥

चक्रं दक्षिणहस्तेऽस्य पद्मकोशश्च पादयोः ।
ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराट् प्रभुः ॥ २४ ॥

पञ्चपञ्चाशतैर्मेध्यैर्गङ्गायामनु वाजिभिः ।
दीर्घतमसं पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥

अष्टसप्तति मेध्याश्वान् बबन्ध प्रददे वसु ।
भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ।
सहस्रं बद्वशो यस्मिन् ब्राह्मणा गा विभेजिरे ॥ २६ ॥

त्रयस्त्रिंशच्छतं ह्यश्वान् बद्ध्वा विस्मापयन् नृपान् ।
दौष्यन्तिरत्यगान्मायां देवानां गुरुमाययौ ॥ २७ ॥

मृगान् शुक्लदतः कृष्णान् हिरण्येन परिष्कृतान् ।
अदात् कर्मणि मृष्णारे नियुतानि चतुर्दश ॥ २८ ॥

भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ।
नोदापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥

किरातहूणान् यवनावन्ध्रान् कङ्कान् कपान् शकान् ।
अब्रह्मण्यान् नृपांश्चाहन् म्लेच्छान् दिग्विजयेऽखिलान् ॥३०॥

जित्वा पुराऽसुरान् देवा येन स्वौकांसि भेजिरे ।
देवस्त्रियो रसां नीताः पणिभिः पुनराहरत् ॥ ३१ ॥

सर्वान् कामान् दुदुहतुः प्रजानां तस्य रोदसी ।
समास्त्रिनवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥

स सम्राट् लोकपालानामैश्वर्यमधिराट्श्रियम् ।
चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह ॥ ३३ ॥

तस्यासन् नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः ।
जघ्नुस्त्यागभयात् पुत्रान्नानुरूपा इतीरिते ॥ ३४ ॥

तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥

अन्तर्वत्न्या भ्रातृपत्न्या मैथुनाय बृहस्पतिः ।
प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥

तं त्यक्तुकामां ममतां भर्तुस्त्यागविशङ्किताम् ।
नामनिर्वचनं तस्य श्लोकमेतं जगुः सुराः ॥ ३७ ॥

मूढे भर द्वाजमिमं भरद् वाजं बृहस्पतेः ।
त्राता तु दुःखात् पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥

चोद्यमाना सुरैरेवं मत्वा तं देवमात्मजम् ।
व्यसृजन्मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे सप्तदशोऽध्यायः ॥

## अथ अष्टादशोऽध्यायः

श्रीशुक उवाच–
वितथस्य सुतान्मन्योर्बृहत्क्षेत्रो जयस्ततः ।
महावीर्यो नरो गर्गः सङ्कृतिस्तु नरात्मजः ॥ १ ॥

गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन ।
रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥

वीतवित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ।
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ॥ ३ ॥

व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ।
घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥

कृत्स्नप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ।
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥

तस्मै संव्यभजत् सोऽन्नमाहृत्य श्रद्धयाऽन्वितः ।
हरिं सर्वत्र संपश्यन् स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥

अथाऽन्यो भोक्ष्यमाणस्य विभक्तस्य महीपतेः ।
विभक्तं व्यभजत् तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥

याते शूद्रे तमभ्यागादतिथिः श्वभिरावृतः ।
राजन् मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥

स आतिथ्यावशिष्टं यद् बहुमानपुरस्सरम् ।
तच्च दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥

पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ।
पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥

तस्यातिकरुणां वाचं निशम्य विपुलश्रमम् ।
कृपया भृशसन्तप्त इदमाहामृतं वचः ॥ ११ ॥

न कामयेऽहं गतिमीश्वराणां महर्द्धियुक्तामपुनर्भवं च ।
आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितां येन भवन्त्यदुःखाः ॥

क्षुत्तृट्श्रमो गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः ।
सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणेन ॥

एवं प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसायाददाद् धीरो निसर्गकरुणो नृपः ॥ १४ ॥

तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ।
आत्मानं दर्शयाञ्चक्रुर्माया विष्णुविनिर्मिताम् ॥ १५ ॥

स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः ।
वासुदेवे भगवति भक्त्या चक्रे मनः परम् ॥ १६ ॥

ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः ।
माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत ॥ १७ ॥

तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ।
अभवन् योगिनः सर्वे नारायणपरायणाः ॥ १८ ॥

गर्गाच्छिनिस्ततो गार्ग्यात् क्षत्राद् ब्रह्म ह्यवर्तत ।
दुरितक्षयो महावीर्यात् तस्य त्रय्यारुणिः कविः ।
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ॥ १९ ॥

बृहत्क्षेत्रस्य होत्रोऽस्माद्धस्ती यद् हस्तिनापुरम् ।
अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ॥ २० ॥

अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥

अजमीढाद् बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।
बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥ २२ ॥

तत्सुतो विशदस्तस्य श्येनजित् समजायत ।
रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥

रुचिराश्वसुतो पारः पृथुसेनस्तदात्मजः ।
पारस्तत्तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥

अणुहो नाम यस्तेषां ज्येष्ठो सत्यात्मको नृप ।
स कल्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ २५ ॥

योगेशो गवि भार्यायां विश्वक्सेनमधात् सुतम् ।
जैगीषव्योपदेशेन योगतन्त्रं चकार ह ॥ २६ ॥

उदक्सेनस्ततस्तस्माद् भल्लाटो बार्हदीषवाः ।
यवीनरो द्विमीढस्य कृतिमांस्तत्सुतस्ततः ॥ २७ ॥

नाम्ना सत्यधृतिर्यस्माद् दृढनेमिः सुपार्श्वकृत् ।
सुपार्श्वात् सुमतिस्तस्य पुत्रः सन्ततिमांस्ततः ॥ २८ ॥

कृतिर्हिरण्यनाभाद् यो योगं प्राप्य जगौ द्विषट् ।
संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ॥ २९ ॥

तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः ।
ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ ३० ॥

नलिन्यामजमीढस्य नीलः शान्तिस्तु तत्सुतः ।
शान्तेः सुशान्तिस्तत्पुत्रः पुरजोऽर्कस्ततोऽभवत् ॥ ३१ ॥

हर्म्याश्वस्तत्सुतस्तस्य पञ्चासन् मुद्गलादयः ।
यवीनरो बृहदिषुः काम्पिल्यः सञ्जयस्ततः ॥ ३२ ॥

हर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ।
विषयाणामलमिमे इति पञ्चालसञ्ज्ञिताः ॥ ३३ ॥

मुद्गलाद् ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसञ्ज्ञितम् ।
मिथुनं मुद्गलाद्भार्म्याद् दिवोदासः पुमानभूत् ॥ ३४ ॥

अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ।
तस्य शतधृतिः पुत्रो धनुर्वेदविशारदः ॥ ३५ ॥

शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल ।
शरस्तम्बेऽपतद् रेतो मिथुनं तदभूच्छुभम् ॥ ३६ ॥

तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ।
कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ॥ ३७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे अष्टादशोऽध्यायः ॥

## अथ एकोनविंशोऽध्यायः

श्रीशुक उवाच–
मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ।
सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥

तस्य पुत्रशतं तेषां यवीयान् पृषतस्ततः ।
द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥

धृष्टद्युम्नाद् धृष्टकेतुर्हर्म्याः पाञ्चालका इमे ।
योऽजमीढसुतो ह्यन्य ऋक्षात् संवरणस्ततः ॥ ३ ॥

तत्पत्न्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ।
परीक्षित् सुधनुर्जह्नुर्निषधाश्च कुरोः सुताः ॥ ४ ॥

सुहोत्रोऽभूत् सुधनुषश्च्यवनस्तत्सुतः कृती ।
वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥

कुशाम्बुमत्स्यप्रत्यग्रचेदिपाद्याश्च चेदिपाः ।
बृहद्रथात् कुशाग्रोऽभूद् ऋषभस्तस्य तत्सुतः ॥ ६ ॥

जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ।
अन्यस्यामपि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥

ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ।
जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥ ८ ॥

ततश्च सहदेवोऽभूत् सोमापिर्यच्छ्रुतश्रवाः ।
परीक्षिदनपत्योऽभूत् सुरथो नाम जाह्नवः ॥ ९ ॥

ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् ।
जयत्सेनस्तत्तनयो राचीकोऽतो द्युमानभूत् ॥ १० ॥

ततश्च क्रोधनस्तस्माद् देवातिथिरमुष्य च ।
ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः ॥ ११ ॥

देवापिः शन्तनुस्तस्य वाह्लीक इति चात्मजाः ।
पितृराज्यं समुत्सृज्य देवापिस्तु वनं गतः ॥ १२ ॥

अभवच्छन्तनू राजा प्राङ्महाभिषजसञ्ज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥

शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ।
समा द्वादश तद्राष्ट्रे न ववर्ष यदा विभुः ॥ १४ ॥

शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक् ।
राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥

एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद् विभ्रंशितो गिरा ।
वेदवादातिवादान् वै ततो देवो ववर्ष ह ॥ १६ ॥

देवापिर्योगमास्थाय कलापग्राममास्थितः ।
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ १७ ॥

वाह्लीकात् सोमदत्तोऽभूद् भूरिर्भूरिश्रवास्ततः ।
शलश्च शन्तनोरासीद् गङ्गायां भीष्म आत्मवान् ॥ १८ ॥

सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ।
वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ १९ ॥

शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः ।
विचित्रवीर्योऽवरजो नाम्ना चित्राङ्गदो हतः ॥ २० ॥

यस्यां पराशरात् साक्षादवतीर्णो हरेः कला ।
वेदगुप्त्यै मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ २१ ॥

हित्वा स्वशिष्यान् पैलादीन् भगवान् वादरायणः ।
मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ॥ २२ ॥

विचित्रवीर्योऽथोवाह काशिराजसुते वलात् ।
स्वयंवरादुपानीते अम्बिकाम्बालिके उभे ॥ २३ ॥

तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥

क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो वादरायणः ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ २५ ॥

गान्धार्यां धृतराष्ट्रस्य जज्ञे सुतशतं नृप ।
तेषां दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका ॥ २६ ॥

शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ।
जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥

नकुलः सहदेवश्च माद्र्यां नासत्यदस्त्रयोः ।
द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥

युधिष्ठिरात् प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ।
अर्जुनाच्छ्तकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥

सहदेवसुतो राजन् श्रुतकीर्तिस्तथाऽपरे ।
युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥

भीमसेनाद् हिडिम्वायां काल्यां शर्वगतस्ततः ।
सहदेवात् सुहोत्रं तु विजयाऽसूत पार्वती ॥ ३१ ॥

करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ।
इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ ३२ ॥

मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ।
तव तातः सुभद्रायामभिमन्युरजायत ॥ ३३ ॥

सर्वातिरथजिद् वीर उत्तरायां ततो भवान् ।
परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ ३४ ॥

त्वं तु कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ।
तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ ३५ ॥

श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ।
जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ ३६ ॥

सर्पान् वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ।
कावषेयं पुरोधाय तुरं तुरगमेधया ॥ ३७ ॥

समन्तात् पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ।
तस्य पुत्रः शतानीको याज्ञवल्क्यात् त्रयीं पठन् ॥ ३८ ॥

अश्वज्ञानं क्रियाज्ञानं शौनकात् परमेष्यति ।
सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ ३९ ॥

विश्वम्भकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ।
गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ॥ ४० ॥

उक्तस्ततश्चित्ररथस्तस्माच्छुचिरथः सुतः ।
तस्माच्च धृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ ४१ ॥

सुनीथस्तस्य भविता नृचक्षुर्यत् सुखीनलः ।
पारिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ ४२ ॥

नृपञ्जयस्ततो दुर्वस्तिमिस्तस्माज्जनिष्यते ।
ततो बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ ४३ ॥

शतानीकाद् दुर्दमनस्तस्यापत्यं वहीनरः ।
दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृप ॥ ४४ ॥

ब्रह्मक्षत्रस्य वै योनिर्वंशो देवर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ ४५ ॥

पापानि कीर्तनादेषां विलयं यान्ति कृत्स्नशः ।
अथ मागधराजानो भाविनो ये वदामि ते ॥ ४६ ॥

भविता सहदेवस्य सोमापिर्य(स्तुतः)च्छुतश्रवाः ।
ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४७ ॥

सुनक्षत्रः सुनक्षत्राद् बृहत्सेनोऽथ कर्मजित् ।
ततः श्रुतञ्जयो विप्रः शुचिस्तस्य भविष्यति ॥ ४८ ॥

क्षेमोऽथ सुव्रतस्तस्माद् धर्मसत्रः शमस्ततः ।
द्युमत्सेनोऽथ सुमतिः सुबलो जनिता तत ॥ ४९ ॥

सुनीथः सत्यजिदथ विश्वजिद् यद् रिपुञ्जयः ।
बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ५० ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे एकोनविंशोऽध्यायः ॥

## अथ विंशोऽध्यायः

श्रीशुक उवाच–
अनोः सभानरश्चक्षुः परेक्षुश्च त्रयः सुताः ।
सभानरात् कालनरः सञ्जयस्तत्सुतस्ततः ॥ १ ॥

जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ।
उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥

शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ।
वृषदर्भः सुवीरश्च मद्रः केकय आत्मजाः ॥ ३ ॥

शिबेश्चत्वार एवासन् तितिक्षोश्च पृषद्रथः ।
ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥

अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रान्ध्रसञ्ज्ञिताः ।
जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥

चक्रुः स्वनाम्ना विषयान् षडिमान् प्राच्यकानिह ।
खनपानोऽङ्गतो जज्ञे तस्माद् दिविरथस्ततः ॥ ६ ॥

सुतो धर्मरथस्तस्य जज्ञे मित्ररथोऽप्रजः ।
रोमपाद इति ख्यातस्तस्मै दशरथः सखा ।
शान्तां स्वकन्यां प्रायच्छद् ऋष्यशृङ्ग उवाह ताम् ॥ ७ ॥

देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ।
वाद्यसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः ॥ ८ ॥

स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ।
प्रजामदाद् दशरथो येन लेभेऽप्रजः प्रजाः ॥ ९ ॥

चतुरङ्गो रोमपादात् पृथुलाक्षस्तु तत्सुतः ॥ १० ॥

बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ।
ततो बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥ ११ ॥

विजयस्तस्य सम्भूत्यां ततो धृतिरजायत ।
ततो धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः ॥ १२ ॥

योऽसौ गङ्गातटे क्रीडन् मञ्जूषान्तर्गतं शिशुम् ।
कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत् सुतम् ॥ १३ ॥

वृषसेनः सुतस्तस्य कर्णस्य जगतीपते ।
द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ॥ १४ ॥

आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः ।
धृतस्य दुर्मदस्तस्मात् प्रचेताः प्राचेतसं शतम् ॥ १५ ॥

म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ १६ ॥

तुर्वसोस्तु सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ।
नृभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ।
मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ १७ ॥
दुष्यन्तः स पुनर्भेजे स्वं साम्राज्यकामुकः ॥ १८ ॥
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ।
वर्णयामि महापुण्यं सर्वपापहरं नृप ॥ १९ ॥
यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।
यत्रावतीर्णो भगवान् परमात्मा नराकृतिः ॥ २० ॥
यदोः सहस्रजित् क्रोष्टा नलो रिपुरिति श्रुताः ।
चत्वारः सूनवस्तस्य शतजित् प्रथमात्मजः ।
महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥ २१ ॥
धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ।
सोहञ्जिरभवत् कुन्तेर्महिष्मान् भद्रसेनकः ॥ २२ ॥
दुर्मदो भद्रसेनस्य धनकः कृतवीर्यकः ।
कृत्याग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ २३ ॥
अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ।
दत्तात्रेयाद् हरेरंशात् प्राप्तयोगमहागुणः ॥ २४ ॥
न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यमदानतपोयोगैः श्रुतवीर्यजयादिभिः ॥ २५ ॥
पञ्चाशीतिसहस्राणि ह्यव्याहतबलः समाः ।
अकरोदर्जुनो राज्यं हरिं चैवान्वहं स्मरन् ॥ २६ ॥
अनष्टविष्णुस्मरणो बुभुजेऽक्षय्यपड्वसु ।
तस्य पुत्रसहस्राणां पञ्चैवोर्वरिता मृधे ॥ २७ ॥
जयध्वजः शूरसेनो ऋषभो मधुरूर्जितः ।
जयध्वजात् तालजङ्घस्तस्य पुत्रशतं त्वभूत् ॥ २८ ॥
क्षत्रं यत् तालजङ्घाख्यमौर्वतेजोपसंहृतम् ।
तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥ २९ ॥
तस्य पुत्रशतं त्वासीद् वृष्णिज्येष्ठं यतः कुलम् ।
माधवा वृष्णयो राजन् यादवाश्चेति सञ्ज्ञितम् ॥ ३० ॥
यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ।
वाहितोऽतोनुशेकुर्वै तस्य चित्ररथस्ततः ॥ ३१ ॥
शशबिन्दुर्महायोगी महाभोजो महानभूत् ।
चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ ३२ ॥
तस्य पत्नीसहस्राणां दशासन् स महायशाः ।
दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ ३३ ॥
तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ।
धर्मो नामोशनास्तस्य हयमेधशतस्य राट् ॥ ३४ ॥
तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ।
पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसञ्ज्ञिताः ॥ ३५ ॥
ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैव्यापतिर्भयात् ।
नाविन्दच्छत्रुभवनात् कन्यां भ्रष्टमहारपीत् ॥ ३६ ॥
रथस्थां तां निरीक्ष्याह शैव्या पतिममर्पिता ।
केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ ३७ ॥
स्नुषा तवेत्यभिहिता स्मयन्ती पतिमब्रवीत् ।
अहं वन्ध्याऽसपत्नी च स्नुषा युज्येत मे कथम् ॥ ३८ ॥
जनयिष्यसि यं राज्ञि तस्येयमुपपत्स्यते ।
अन्वमोदन्त तद् विश्वेदेवाः पितर एव च ॥ ३९ ॥
शैव्या गर्भमधात् काले कुमारं सुषुवे शुभम् ।
स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ४० ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे विंशोऽध्यायः ॥

## अथ एकविंशोऽध्यायः

श्रीशुक उवाच—
तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ ।
तृतीयं रोमपादं च वैदर्भकुलनन्दनम् ॥ १ ॥
रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ।
कुशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो यतः ॥ २ ॥
क्रथस्य कुन्तिः पुत्रोऽभूद् बलिस्तस्याथ निर्वृतिः ।
ततो दशार्हनामाऽथ तस्य व्योमः सुतस्ततः ॥ ३ ॥
जीमूतो विकृतिस्तस्य ततो भीमरथः सुतः ।
ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥

करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः ।
देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥

पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ।
भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥ ६ ॥

सात्वतस्य सुताः सप्त महाभोजश्च मारिष ।
भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव च ॥ ७ ॥

एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ।
शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥ ८ ॥

बभ्रुर्देवावृधसुतस्तयोः श्लोकं पठन्त्यमुम् ।
यथैव शृणुमो दूरात् सम्पश्यामस्तथाऽन्तिकात् ।
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ ९ ॥

पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च ।
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ १० ॥

महाभोजोऽतिधर्मात्मा भोजा आसन् तदन्वये ॥ ११ ॥

वृष्णेः सुमित्रः पुत्रोऽभूद् युधाजिच्च परन्तप ।
शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥ १२ ॥

सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ।
अनमित्रसुतो योऽन्यः शिनिस्तस्य च सत्यकः ॥ १३ ॥

युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ।
युगन्धरोऽनमित्रस्य पृश्निः पुत्रोऽपरस्ततः ॥ १४ ॥

श्वफल्कश्चित्ररथश्चैव गान्दिन्यां तु श्वफल्कतः ।
अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः ॥ १५ ॥

आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ।
धर्मो विधृष्टकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १६ ॥

शत्रुघ्नो गन्धमोदाह्वः प्रतिबाहुश्च द्वादश ।
तेषां स्वसा सुचाराख्या द्वावक्रूरसुतावपि ॥ १७ ॥

देववानुपदेवश्च तथा चित्ररथात्मजाः ।
पृथुर्विपृथुनामाद्या बहवो वृष्णिनन्दनाः ॥ १८ ॥

कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ।
कुकुरस्य सुतो धृष्णुर्विलोमा तनयस्ततः ॥ १९ ॥

कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः ।
अनोश्च दुन्दुभिस्तस्य दरियोतः पुनर्वसुः ॥ २० ॥

तस्याहुकश्चाहुकी च कन्या द्वावाहुकात्मजौ ।
देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥

देववानुपदेवश्च सुदेवो देववर्धनः ।
तेषां स्वसारः सप्तासन् धृतदेवादयो नृप ॥ २२ ॥

शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता ।
सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥

कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुभूस्तथा ।
राष्ट्रपालोऽथ्वसृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥

कंसा कंसवती कङ्का सुरभू राष्ट्रपालिका ।
औग्रसेना दुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥

शूरो विदूरथादासीद् भजमानसुतात् ततः ।
शिनिस्तस्मात् स्वयम्भोजो हृदिकस्तत्सुतो मतः ॥ २६ ॥

देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ।
दैवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥

तस्यां सञ्जनयामास दशपुत्रानकल्मषान् ।
वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥

सृञ्जयं श्यामकं कङ्कमनीकं वत्सकं वृकम् ।
देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥

वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ।
पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३० ॥

राजाधिदेवी चैतेषां भगिन्यः पञ्चकन्यकाः ।
कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥

सा च दुर्वाससो विद्यां देवहूतिं प्रतोपिताम् ।
तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः ॥ ३२ ॥

तदैवोपागतं देवं वीक्ष्य विस्मितमानसा ।
प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ॥ ३३ ॥

अमोघं देवसंदर्शमाधास्ये त्वयि चात्मजम् ।
योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥

इति तस्यां समाधाय गर्भं सूर्यो दिवं गतः ।
सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥ ३५ ॥

तं साऽत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ।
प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३६ ॥

श्रुतदेवां तु कारूशो वृद्धशर्मा समग्रहीत् ।
यस्यामभूद् दन्तवक्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥

कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ।
सन्तर्दनादयस्तस्याः पञ्चासुः कैकयाः सुताः ॥ ३८ ॥

राजाधिदेव्यामावन्त्यौ जयत्सेनोऽजनिष्ट ह ।
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥

शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः ।
देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥

कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ।
कङ्कायामानकाज्जातः सत्यजित् पुरुजित् तथा ॥ ४१ ॥

सृञ्जयो राष्ट्रपाल्यां तु वृषदुर्मर्षणादिकान् ।
हरिकेशहिरण्याक्षौ सुरभूम्यां तु श्यामकः ॥ ४२ ॥

मित्रकेश्यामप्सरसि वृकादीन् वत्सकस्तथा ।
तक्षपुष्करसालादीनुर्वश्यां वृक आदधे ॥ ४३ ॥

सुमित्रार्जुनपालादीनञीकात् तु सुदामनी ।
कङ्कश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥

पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥ ४५ ॥

बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतधीरुदपादयत् ॥ ४६ ॥

सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च ।
पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥ ४७ ॥

नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ।
भद्राख्या केशिनं त्वेकं कौसल्या कुलनन्दनम् ॥ ४८ ॥

रोचनायां ततो जाता हस्तहेमाङ्गदादयः ।
इलायां पुरुवल्कादीन् यदुमुख्यानजीजनत् ॥ ४९ ॥

विपृष्ठो धृतदेवायां जात आनकदुन्दुभेः ।
शान्तिदेवात्मजा राजन् प्रश्रमप्रश्रितादयः ॥ ५० ॥

राजानः कल्पवर्षाद्या उपदेव्याः सुता दश ।
वसुहंससुधन्वाद्याः श्रीदेवायाश्च षट् सुताः ॥ ५१ ॥

देवरक्षितया लब्धा नव चात्र गदादयः ।
वसुदेवः सुतानष्टावादधे सहदेवया ॥ ५२ ॥

पुरुवत्समृदुमुख्यान् साक्षाद्धर्मो वसूनिव ।
वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् ॥ ५३ ॥

कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ।
ऋजुं संमर्दनं भद्रं सङ्कर्षणमहीश्वरम् ॥ ५४ ॥

अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ।
सुभद्रा च महाभागा तव राजन् पितामही ॥ ५५ ॥

यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः ।
तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥

न ह्यस्य जन्मनो हेतुः कर्मणां वा महीपते ।
आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥

यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ।
अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥

अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ।
भुव आक्रम्यमाणाया अभावाय कृतोद्यमः ॥ ५९ ॥

कर्माण्यपरिमेयानि मनसाऽपि सुरेश्वरैः ।
सह सङ्कर्षणश्चक्रे भगवान् मधुसूदनः ॥ ६० ॥

कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ।
अनुग्रहाय भूतानां सुपुण्यं व्यतनोद् यशः ॥ ६१ ॥

यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरेऽसकृत् ।
श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाः ॥ ६२ ॥

भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ।
श्लाघनीयेहितः शश्वत् कुरुसृञ्जयपाण्डुभिः ॥ ६३ ॥

स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ।
नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥

यस्याननं मकरकुण्डलचारुकर्ण-
भ्राजत्कपोलसुभगं सविलासहासम् ।
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो
नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥

जातो गतः पितृगृहाद् व्रजमेधितोऽत्र
हत्वा रिपून् सुतशतानि कृतोरुदारः ।
उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे
आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥

पृथ्व्याः स वै गुरुभरं क्षपयन् कुरूणा
मन्तःसमुत्थकलिना युधि भूपचम्वः ।
दृष्ट्वा विधूय विजये जयमुद्विघुष्य
प्रोच्योद्धवाय च परं समगात् स्वधाम् ॥ ६७ ॥

॥ इति श्रीमद्भागवते नवमस्कन्धे एकविंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां
पारमहंस्यां संहितायां नवमस्कन्धः ॥

# दशमस्कन्धः

## अथ प्रथमोऽध्यायः

राजोवाच -

कथितो वंशविस्तारो भवता सोमसूर्ययोः ।
राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥

यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ।
तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥ २ ॥

अवतीर्य यदोर्वंशे भगवान् भूतभावनः ।
कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥

निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छ्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विनाऽपशुघ्नान् ॥

पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः ॥

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् ।
जुगोप कुक्षिङ्गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥

वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ॥७॥

रोहिण्यास्तनयः प्रोक्तो रामः सङ्कर्षणस्त्वया ।
देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना ॥ ८ ॥

कस्मान्मुकुन्दो भगवान् पितुर्गेहाद् व्रजं गतः ।
क्व वासं ज्ञातिभिः सार्धं कृतवान् सात्वतां पतिः ॥ ९ ॥

व्रजे वसन् किमकरोन्मधुपुर्यां च केशवः ।
भ्रातरं चावधीत् कंसं मातुरद्धाऽतदर्हणम् ॥ १० ॥

देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ।
यदुपुर्यां सहावात्सीत् पत्न्यः कत्यभवन् विभोः ॥ ११ ॥

एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ।
वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥ १२ ॥

नैषाऽतिदुस्सहा क्षुन्मां त्यक्तोदमपि बाधते ।
पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥ १३ ॥

सूत उवाच–

एवं निशम्य भृगुनन्दन साधुवादं
वैयासकिः स भगवानथ विष्णुरातम् ।
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं
व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥

श्रीशुक उवाच–

सम्यग् व्यवसिता बुद्धिस्तव राजर्षिसत्तम ।
वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ १५ ॥

वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि ।
वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा ॥ १६ ॥

भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १७ ॥

गौर्भूत्वाऽश्रुमुखी खिन्ना रुदन्ती करुणं यथा ।
उपस्थिताऽन्तिके त(स्य)स्मै व्यसनं समवोचत ॥ १८ ॥

ब्रह्मा तदुपधार्याथ सह देवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥

तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥

गिरं समाधौ गगने समीरितां
निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे शृणुतामराः पुन-
र्विधीयतामाशु तथैव मा चिरम् ॥ २१ ॥

पुरैव पुंसाऽवधृतो धराज्वरो
भवद्भिरंशैर्यदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः
स्वकालशक्त्या क्षपयंश्चरेद् भुवि ॥ २२ ॥

वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः ।
जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः ॥ २३ ॥

वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।
अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥

योगमाया भगवती यया सम्मोहितं जगत् ।
आदिष्टा प्रभुणांऽशेन कार्यार्थे सम्भविष्यति ॥ २५ ॥

श्रीशुक उवाच -
इत्यादिश्यामरगणान् प्रजापतिपतिर्विभुः ।
आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥

शूरसेनो यदुपतिर्मधुरामावसत् पुरीम् ।
माधुरान् शूरसेनांश्च विषयान् बुभुजे स्वराट् ॥ २७ ॥

राजधानी ततः साऽभूत्सर्वयादवभूभुजाम् ।
मधुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥ २८ ॥

तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ।
देवक्या भार्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥

उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ।
रश्मीन् हयानां जगृहे रौक्मै रथशतैर्वृतः ॥ ३० ॥

चतुश्शतं पारिबर्हं गजानां हेममालिनाम् ।
अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥ ३१ ॥

दासीनां सुकुमारीणां द्वे शते समलङ्कृते ।
दुहित्रे देवकः प्रादाद् यामे दुहितृवत्सलः ॥ ३२ ॥

शङ्खतूर्यमृदङ्गानि नेदुर्दुन्दुभयः समम् ।
प्रयाणप्रक्रमे तात वरवध्वोः सुमङ्गलम् ॥ ३३ ॥

पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ।
अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध ॥ ३४ ॥

इत्युक्तः स खलः पापो भोजानां कुलपांसनः ।
भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥ ३५ ॥

तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ।
वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥ ३६ ॥

वसुदेव उवाच–
श्लाघनीयगुणः शूरैर्भवान् भोजयशस्करः ।
स कथं भगिनीं हन्याः स्त्रियमुद्वाहपर्वणि ॥ ३७ ॥

मृत्युर्जन्मवतां वीर देहेन सह जायते ।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८ ॥

देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ।
देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९ ॥

व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलूकैवं देही कर्मगतिं गतः ॥ ४० ॥

स्वप्ने यथा पश्यति देहमीदृशं
मनोरथेनाभिनिविष्टचेतनः ।
दृष्टश्रुताभ्यां मनसाऽनुचिन्तयन्
प्रपद्यते तत् किमपि ह्यपस्मृतिः ॥ ४१ ॥

यतो यतो धावति दैवचोदितं
मनो विकारात्मकमात्मपञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ
प्रपद्यमानः सह तेन जायते ॥ ४२ ॥

ज्योतिर्यथैवोदकपार्थिवेष्वदः
समीरवेगानुगतं विभाव्यते ।
एवं स्वमायारचितेष्वसौ पुमान्
गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥

तस्मान्न कस्यचिद् द्रोहमाचरेत् स तथाविधः ।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥ ४४ ॥

एष तवानुजा बाला कृपणा पुत्रिकोपमा ।
हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सल ॥ ४५ ॥

श्रीशुक उवाच–
एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः ।
न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥ ४६ ॥

निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः ।
प्राप्तकालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥ ४७ ॥

मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ।
यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥

प्रत्यर्प्य मृत्यवे पुत्रान् मोचये कृपणामिमाम् ।
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥ ४९ ॥

विपर्ययो वा किं न स्याद् गतिर्धातुर्दुरत्यया ।
उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥ ५० ॥

अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यत्र निमित्तमस्ति ।
एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥५१॥

एवं विमृश्य तं पापं यावदात्मनि दर्शनम् ।
सान्त्वयामास वै शौरिर्बहुमानपुरस्सरम् ॥ ५२ ॥

प्रसन्नवदनाम्भोजो नृशंसं निरपत्रपम् ।
मनसा दूयमानेन प्रहसन्निदमब्रवीत् ॥ ५३ ॥

वसुदेव उवाच–
न ह्यस्यास्ते भयं सौम्य यद् वै त्वाऽऽहाशरीरवाक् ।
पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः

श्रीशुक उवाच–
सुहृद्धधान्निववृते कंसस्तद्वाक्यसारवित् ।
वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद् गृहम् ॥ १ ॥

अथ काल उपावृत्ते देवकी सर्वदेवता ।
पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ २ ॥

कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः ।
अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥ ३ ॥

किं दुस्सहं नु साधूनां विदुषां किमपेक्षितम् ।
किमकार्यं कदर्याणां दुस्त्यजं किम् ऋतात्मनाम् ॥ ४॥

दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ।
कंसस्तुष्टमना राजन् प्रहसन्निदमब्रवीत् ॥ ५ ॥

प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ।
अष्टमाद् युवयोः पुत्रान्मृत्युर्मे विहितः किल ॥ ६ ॥

तथेति सुतमादाय ययावानकदुन्दुभिः ।
नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥ ७ ॥

नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ।
सर्वे वै देवताप्राया उभयोरपि भारत ॥ ८ ॥

ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ।
असुराः सर्व एवैते लोकोपद्रवकारिणः ॥ ९ ॥

गतेऽथ वसुदेवे तु देवकार्यार्थमुद्यतः
एतत् कंसाय भगवान्शंसयामास नारदः ॥ १० ॥

भूमेर्भारावतीर्णानां दैत्यानां च वधोद्यमम् ॥ ११ ॥

ऋषेर्विनिर्गमे कंसो यदून् मत्वा सुरानिति ।
देवक्या गर्भसम्भूतं विष्णुं च स्ववधं प्रति ॥ १२ ॥

देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ।
जातं जातमहन् पुत्रं तयोरजनशङ्कया ॥ १३ ॥

मातरं पितरं भ्रातॄन् सर्वांश्च सुहृदः सखीन् ।
निघ्नन्त्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥ १४ ॥

आत्मानमिह सञ्जातं जानन् प्राग् विष्णुना हतम् ।
महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥ १५ ॥

उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ।
स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥ १६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः

श्रीशुक उवाच–
प्रलम्बवकचाणूरतृणावर्तमहाशनैः ।
मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥

अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ।
यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ २ ॥

ते पीडिता निविविशुः कुरुपाञ्चालकेकयान् ।
साल्वान् विदर्भान् निषधान् विदेहान् मागधानपि ॥ ३ ॥

एके तमनुरुन्धाना ज्ञातयः पर्युपासते ।
मधुरायां स्थिताश्चैव येऽक्रूराद्या विशाम्पते ।
हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥ ४ ॥

सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते ।
गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥ ५ ॥

भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ।
यदूनां निजनाथानां योगमायां समादिशत् ॥ ६ ॥

गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम् ।
रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ॥ ७ ॥

अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ।
देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ ८ ॥

तत् सन्निकृष्य रोहिण्या उदरे सन्निवेशय ।
अथाहं स्वांशभागेन देवक्याः पुत्रतां शुभे ॥ ९ ॥

प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ।
अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥ १० ॥

नानोपहारबलिभिः सर्वकामवरप्रदाम् ।
नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ॥ ११ ॥

दुर्गेति भद्रकालीति विजया वैष्णवीति च ।
कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ॥ १२ ॥

माया नारायणीशाना शारदेत्यम्बिकेति च ॥ १३ ॥

गर्भात्सङ्कर्षणात् तं वै प्राहुः सङ्कर्षणं भुवि
रामेति लोकरमणाद् बलभद्रं बलोच्छ्रयात् ॥ १४ ॥

श्रीशुक उवाच–
सन्दिष्टैवं भगवता तथेत्योमिति तद्वचः ।
प्रतिगृह्य परिक्रम्य गां गता तत् तथाऽकरोत् ॥ १५ ॥

गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया ।
अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥ १६ ॥

भगवानपि विश्वात्मा भक्तानामभयङ्करः ।
आविवेशांशभागेन मन आनकदुन्दुभेः ॥ १७ ॥

स बिभ्रत् पौरुषं धाम राजमानो यथा रविः ।
दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह ॥ १८ ॥

ततो जगन्मङ्गलमच्युतांशं
समाहितं शूरसुतेन देवी ।
दधार सर्वात्मकमात्मभूतं
काष्ठा यथाऽऽनन्दकरं मनस्तः ॥ १९ ॥

सा देवकी सर्वजगन्निवास-
निवासभूता नितरां विरेजे ।
भोजेन्द्रगेहेऽग्निशिखेव रुद्धा
सरस्वती ज्ञानखले यथा सती ॥ २० ॥

तां वीक्ष्य कंसः प्रभयाऽजितान्तरां
विरोचयन्तीं भवनं शुचिस्मिताम् ।
आहैष मे प्राणहरो हरिर्गुहां
ध्रुवं श्रितो यन्न पुरेयमीदृशी ॥ २१ ॥

किमद्य तस्मिन् करणीयमाशु मे
यदर्थतन्त्रो न विहन्ति विक्रमम् ।
स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं
यशः श्रियं हन्त्यनुकालमायुः ॥ २३ ॥

स एष जीवन् खलु सम्परेतो
वर्तेत योऽत्यन्तनृशंसितेन ।
देहे मृते तमनु ह्यर्थकामौ
यशोऽमलं गौरभिमानिनो ध्रुवम् ॥ २४ ॥

इति घोरतमाद् भावात् सन्निवृत्तः स्वयं प्रभुः ।
आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धवित् ॥ २४ ॥

आसीनः संविशंस्तिष्ठन् भुञ्जानः पर्यटन् पिबन् ।
चिन्तयानो हृषीकेशमपश्यत् तन्मयं जगत् ॥ २५ ॥

ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः ।
देवैः सानुचरैः साकं गीर्भिर्वृष्णमथास्तुवत् ॥ २६ ॥

ब्रह्मभवावूचतुः–
सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमृत सत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २७ ॥

एकायनोऽसौ द्विफलस्त्रिमूलः
चातूरसः पञ्चशिफः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो
दशच्छदी द्विखगो ह्यादिवृक्षः ॥ २८ ॥

त्वमेक एवास्य सतः प्रसूतिः
स्थानं निधानं त्वमनुग्रहश्च ।

त्वन्मायया संवृतचेतसस्त्वां
पश्यन्ति नाना न विपश्चितो ये ॥ २९ ॥

बिभर्षि रूपाण्यवबोध आत्मन्
क्षेमाय लोकस्य चराचरस्य ।
सत्वोपपन्नानि सुखावहानि
सतामभद्राणि मुहुः खलानाम् ॥ ३० ॥

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि
समाधिनाऽऽवेशितचेतसो ये ।
त्वत्पादपोतेन महत्कृतेन
कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ ३१ ॥

स्वयं समुत्तीर्य सुदुस्तरं द्युमन्
भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्र ते
निधाय याताः सदनुग्रहो भवान् ॥ ३२ ॥

येऽन्येऽरविन्दाक्ष विमुक्तमानिनः
त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ३३ ॥

तथा न ते माधव तावकाः क्वचिद्
भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदाः ।
त्वयाऽभिगुप्ता विचरन्ति निर्भया
विनायकानीकपमूर्धसु प्रभो ॥ ३४ ॥

सत्त्वं विशुद्धं श्रयते भवान्
स्थितौ शरीरिणां श्रेयउपायनं वपुः ।
वेदक्रियायोगतपःसमाधिभिः
तवार्हणं येन जनः समीहते ॥ ३५ ॥

सत्त्वं न चेद् धातरिदं निजं भवेद्
विज्ञानमज्ञानभिदापमार्जनम् ।
गुणप्रकाशैरनुमीयते भवान्
प्रकाशते यस्य च येन वाऽगुणः ॥ ३६ ॥

न नामरूपे गुणजन्मकर्मभिः
निरूपितव्ये तव तस्य साक्षिणः ।
मनोवचोभ्यामनुमेयवर्त्मनो
देवक्रियायाः प्रतियन्त्यथापि हि ॥ ३७ ॥

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्
नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयोरा-
विष्टचित्तो न भवाय कल्पते ॥ ३८ ॥

दिष्ट्या हरेऽस्या भवतः पदो भुवो
भारोऽपनीतस्तव जन्मनेशितुः ।
दिष्ट्याऽङ्कितां त्वत्पदकैः सुशोभनै-
र्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥ ३९ ॥

न तेऽभवस्येश भवस्य कारणं
विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्ययाऽऽ-
कृता यतस्त्वय्यभवाश्रयात्मनि ॥ ४० ॥

मत्स्याश्वकच्छपनृसिंहवराहहंस-
राजन्यविप्रविबुधेषु कृतावतारः ।
त्वं पासि नस्त्रिभुवनं च तथाऽधुनेश
भारं भुवो हर यदूत्तम वन्दनं ते ॥ ४१ ॥

दिष्ट्याऽम्ब ते कुक्षिगतः परः पुमान्
अंशेन साक्षाद् भगवान् भवाय नः ।
मा भूद् भयं भोजपतेर्मुमूर्षोः
गोप्ता यदूनां भविता तवात्मजः ॥ ४२ ॥

इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ।
ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥ ४३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

श्रीशुक उवाच–
अथ सर्वगुणोपेतः कालः परमशोभनः ।
यर्ह्यवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकः ॥ १ ॥

दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ।
मही मङ्गलभूयिष्ठा पुरग्रामव्रजाकरा ॥ २ ॥

नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ।
द्विजालिकुलसन्नादस्तवका वनराजयः ॥ ३ ॥

ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥

मनांस्यासन् प्रसन्नानि साधूनामसुरद्रुहाम् ।
जायमानेऽजने तस्मिन् नेदुर्दुन्दुभयो दिवि ॥ ५ ॥

जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः ।
विद्याधर्यश्च ननृतुरप्सरोभिः समं मुदा ॥ ६ ॥

मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः ।
मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ॥ ७ ॥

निशीथे तम उद्भूते जायमाने जनार्दने ।
देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ॥ ८ ॥

प्रादुरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ ९ ॥

तमद्भुतं बालकमम्बुजेक्षणं
चतुर्भुजं शङ्खगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं
पीताम्बरं सान्द्रपयोदसौभगम् ॥ १० ॥

महार्हवैदूर्यकिरीटकुण्डलत्विषा
परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभि-
र्विरोचमानं वसुदेव ऐक्षत ॥ ११ ॥

स विस्मयोत्फुल्लविलोचनो हरिं
सुतं विलोक्यानकदुन्दुभिस्तदा ।
कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्
मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥ १२ ॥

अथैनमस्तौदवधार्य पूरुषं
परं नताङ्गः कृतधीः कृताञ्जलिः ।
स्वरोचिषा भारत सूतिकागृहं
विरोचयन्तं गतभीः प्रभाववित् ॥ १३ ॥

वसुदेव उवाच–
विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः ।
केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥ १४ ॥

स एव स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकम् ।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥ १५ ॥

य एतेऽविकृता भावाः सप्त ते विकृतैः सह ।
नानावीर्याः पृथग्भूता विराजं शयनं तव ॥ १६ ॥

सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ।
प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ॥ १७ ॥

एवं भवान् बुद्ध्यनुमेयलक्षणै-
र्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ।
अनावृतत्वाद् बहिरन्तरं न ते
सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १८ ॥

यदात्मनो दृश्यगुणेषु सन्निधे-
र्व्यवस्यसेऽस्वव्यतिरेकतोऽबुधः ।
विनाऽनुवादं न च तन्मनीषितं
सम्यग् यतो व्यक्तमुपाददत्पुमान् ॥ १९ ॥

त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो
वदन्त्यनीहादगुणादविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते
तदाश्रयत्वादुपचर्यते गुणैः ॥ २० ॥

स त्वं त्रिलोकस्थितये स्वमायया
बिभर्षि शुक्लं खलु वर्णमात्मनः ।
सर्गाय रक्तं रजसोपबृंहितं
कृष्णं च वर्णं तमसा जनात्यये ॥ २१ ॥

त्वमस्य लोकस्य विभो रिरक्षिषु-
र्गृहेऽवतीर्णोऽसि ममाखिलेश्वर ।

राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्य-
मानां निहनिष्यसे चमूम् ॥ २२ ॥

अयं त्वसभ्यस्तव जन्म मे गृहे
श्रुत्वाऽग्रजांस्ते न्यहनत् सुरेश्वर ।
स तेऽवतारं पुरुषैः समर्पितं
श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २३ ॥

श्रीशुक उवाच–
अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ।
देवकी तमुपाधावत् कंसाद् भीता शुचिस्मिता ॥ २४ ॥

रूपं यत् तत् प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं
स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥ २५ ॥

नष्टे लोके द्विपरार्धावसाने
महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते
भवानेकः शिष्यतेऽशेषसंज्ञः ॥ २६ ॥

योऽयं कालस्तस्य तेऽव्यक्तबन्धो
चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयांस्तं
त्वेशानं क्षेमधाम प्रपद्ये ॥ २७ ॥

मर्त्यो मृत्युव्यालभीतः पलायन्
लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य
स्वस्थः शेते मृत्युरस्मादपैति ॥ २८ ॥

स त्वं घोरादुग्रसेनात्मजान्
नस्त्राहि त्रस्तान् भृत्यवित्रासहासि ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं
मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥ २९ ॥

जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ।
समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ ३० ॥

उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ।
शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ३१ ॥

विश्वं यदेतत् स्वतनौ निशान्ते
यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भगोऽभूदहो
नृलोकस्य विडम्बनं महत् ॥ ३२ ॥

श्रीभगवानुवाच–
त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति ।
तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३३ ॥

युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ।
सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३४ ॥

वर्षवातातपहिमघर्मकालगुणाननु ।
सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३५ ॥

शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ।
मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥ ३६ ॥

एवं वां तप्यतोर्भद्रे तपः परमदुष्करम् ।
दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥ ३७ ॥

तदा वां परितुष्टोऽहममुना वपुषाऽनघे ।
तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३८ ॥

प्रादुरासं वरदराड् युवयोः कामदित्सया ।
व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३९ ॥

अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ।
न वव्राथेऽपवर्गं मे मोहितौ मम मायया ॥ ४० ॥

गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ।
ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४१ ॥

अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ।
अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४२ ॥

तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ।
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४३ ॥

तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽनघे ।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥ ४४ ॥

एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ।
नान्यथा मद्भवज्ञानं मर्त्यलिङ्गेन जायते ॥ ४५ ॥

युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ।
चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ ४६ ॥

शुक उवाच–
इत्युक्त्वाऽऽसीद् हरिस्तूष्णीं भगवानात्ममायया ।
पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ ४७ ॥

ततश्च शौरिर्भगवत्प्रचोदितः
सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा
या योगमायाऽजनि नन्दजायया ॥ ४८ ॥

तया हृतप्रत्ययसर्ववृत्तिषु
द्वाःस्थेषु पौरेषु च यापितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया
बृहत्कपाटायसकीलशृङ्खलैः ॥ ४९ ॥

ताः कृष्णवाहे वसुदेव आगते
स्वयं व्यशीर्यन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशुगर्जितः
शेषोऽन्वगाद् वारि निवारयन् फणैः ॥ ५० ॥

मघोनि वर्षत्यसकृद् यमानुजा
गम्भीरतोयौघजवोर्मिफेनिला ।
भयानकावर्तशताकुला नदी मार्गं
ददौ सिन्धुरिव श्रियः पतेः ॥ ५१ ॥

नन्दव्रजं शौरिरुपेत्य तत्र तान्
गोपान् सुषुप्तानुपलभ्य निद्रया ।
शिशुं यशोदाशयने निधाय
तत्सुतामुपादाय पुनर्गृहानगात् ॥ ५२ ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ५३ ॥

यशोदा नन्दपत्नी च जातं परमबुध्यत ।
न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥ ५४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः

श्रीशुक उवाच -
बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः ।
ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥

ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ।
आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥

स तल्पात् तूर्णमुत्थाय कालोऽयमिति विह्वलः ।
सूतीगृहमगाच्छीघ्रं प्रस्खलन् मुक्तमूर्धजः ॥ ३ ॥

तमाह भ्रातरं देवी करुणं कृपणा सती ।
स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥

बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ।
त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥

नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ।
दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥

श्रीशुक उवाच -
उपगुह्यात्मजामेवं रुदत्या दीनदीनवत् ।
याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७ ॥

तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ।
अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥

सा तद्धस्तात् समुत्पत्य सद्यो देव्यम्बरं गता ।
अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥

दिव्यस्रगम्बरालेपरत्नाभरणभूषिता ।
धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥

सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ।
उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥

किं मया हतया मन्द जातः खलु तवान्तकः ।
यत्र क्वचित् पूर्वशत्रुर्मा हिंसीः कृपणान् वृथा ॥ १२ ॥

इति प्रभाष्य तं देवी माया भगवती भुवि ।
बहुनामनिकेतेषु बहुनामा बभूव ह ॥ १३ ॥

तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः ।
देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥

राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्य-
मानां निहनिष्यसे चमूम् ॥ २२ ॥

अयं त्वसभ्यस्तव जन्म नौ गृहे
श्रुत्वाऽग्रजांस्ते न्यहनत् सुरेश्वर ।
स तेऽवतारं पुरुषैः समर्पितं
श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २३ ॥

श्रीशुक उवाच–
अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ।
देवकी तमुपाधावत् कंसाद् भीता शुचिस्मिता ॥ २४ ॥

रूपं यत् तत् प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं
स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥ २५ ॥

नष्टे लोके द्विपरार्धावसाने
महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते
भवानेकः शिष्यतेऽशेषसंज्ञः ॥ २६ ॥

योऽयं कालस्तस्य तेऽव्यक्तबन्धो
चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयांस्
तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २७ ॥

मर्त्यो मृत्युव्यालभीतः पलायन्
लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य
स्वस्थः शेते मृत्युरस्मादपैति ॥ २८ ॥

स त्वं घोरादुग्रसेनात्मजान्
नस्त्राहि त्रस्तान् भृत्यवित्रासहाऽसि ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं
मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥ २९ ॥

जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ।
समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ ३० ॥

उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ।
शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ३१ ॥

विश्वं यदेतत् स्वतनौ निशान्ते
यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भगोऽभूदहो
नृलोकस्य विडम्बनं महत् ॥ ३२ ॥

श्रीभगवानुवाच–
त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति ।
तदायं सुतपा नाम प्रजापतिरकल्मषः ॥ ३३ ॥

युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ।
सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३४ ॥

वर्षवातातपहिमघर्मकालगुणाननु ।
सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३५ ॥

शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ।
मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥ ३६ ॥

एवं वां तप्यतोर्भद्रे तपः परमदुष्करम् ।
दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥ ३७ ॥

तदा वां परितुष्टोऽहममुना वपुषाऽनघे ।
तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३८ ॥

प्रादुरासं वरदराड् युवयोः कामदित्सया ।
व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३९ ॥

अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ।
न वव्राथेऽपवर्गं मे मोहितौ मम मायया ॥ ४० ॥

गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ।
ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४१ ॥

अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ।
अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४२ ॥

तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ।
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४३ ॥

तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽथ वाम् ।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥ ४४ ॥

एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ।
नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥ ४५ ॥

युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ।
चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ ४६ ॥

शुक उवाच–
इत्युक्त्वाऽऽसीद् हरिस्तूर्ष्णीं भगवानात्ममायया ।
पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ ४७ ॥

ततश्च शौरिर्भगवत्प्रचोदितः
सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा
या योगमायाऽजनि नन्दजायया ॥ ४८ ॥

तया हृतप्रत्ययसर्ववृत्तिषु
द्वाःस्थेषु पौरेषु च यापितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया
बृहत्कपाटायसकीलशृङ्खलैः ॥ ४९ ॥

ताः कृष्णवाहे वसुदेव आगते
स्वयं व्यशीर्यन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशुगर्जितः
शेषोऽन्वगाद् वारि निवारयन् फणैः ॥ ५० ॥

मघोनि वर्षत्यसकृद् यमानुजा
गम्भीरतोयौघजवोर्मिफेनिला ।
भयानकावर्तशताकुला नदी मार्गं
ददौ सिन्धुरिव श्रियः पतेः ॥ ५१ ॥

नन्दव्रजं शौरिरुपेत्य तत्र तान्
गोपान् सुप्तानुपलभ्य निद्रया ।
शिशुं यशोदाशयने निधाय
तत्सुतामुपादाय पुनर्गृहानगात् ॥ ५२ ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ५३ ॥

यशोदा नन्दपत्नी च जातं परमबुध्यत ।
न तल्लिङ्गं परिश्रान्ता निद्रयाऽपगतस्मृतिः ॥ ५४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः

श्रीशुक उवाच -
बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः ।
ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥

ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ।
आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥

स तल्पात् तूर्णमुत्थाय कालोऽयमिति विह्वलः ।
सूतीगृहमगाच्छीघ्रं प्रस्खलन् मुक्तमूर्धजः ॥ ३ ॥

तमाह भ्रातरं देवी करुणं कृपणा सती ।
स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥

बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ।
त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥

नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ।
दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥

श्रीशुक उवाच -
उपगुह्यात्मजामेवं रुदन्त्या दीनदीनवत् ।
याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७ ॥

तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ।
अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥

सा तद्धस्तात् समुत्पत्य सद्यो देव्यम्बरं गता ।
अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥

दिव्यस्रगम्बरालेपरत्नाभरणभूषिता ।
धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥

सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ।
उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥

किं मया हतया मन्द जातः खलु तवान्तकः ।
यत्र क्वचित् पूर्वशत्रुर्मा हिंसीः कृपणान् वृथा ॥ १२ ॥

इति प्रभाष्य तं देवी माया भगवती भुवि ।
बहुनामनिकेतेषु बहुनामा बभूव ह ॥ १३ ॥

तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः ।
देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥

अहो भगिन्यहो भाम मया वां बत पाप्मना ।
पुरुषादैरिवाभ्येत्य बहवो हिंसिताः सुताः ॥ १५ ॥

स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत् खलः ।
हा कान् लोकान् गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥ १६॥

दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ।
यद्विस्रम्भादहं पापः स्वसुर्निहतवान् सुतान् ॥ १७ ॥

मा शोचेथां महाभागावात्मजान् स्वकृतम्भुजः ।
जन्तवो न सदैकत्र दैवाधीनाः सहासते ॥ १८ ॥

भुवि भौमानि भूतानि यथाऽऽयान्त्यपयान्ति च ।
नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९ ॥

यतोऽनेकविधोऽभेदो यत आत्मविपर्ययः ।
देहयोगवियोगश्च संसृतिर्न निवर्तते ॥ २० ॥

तस्माद् भद्रे स्वतनयान् मया व्यापादितानपि ।
माऽनुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ २१ ॥

यावद् हतोऽस्मि हन्ताऽस्मीत्यात्मानं मन्यतेऽस्वदृक् ।
तावत् तदभिमान्यज्ञो बाध्यबाधकतामियात् ॥ २२ ॥

क्षमध्वं मम दौरात्म्यं साधवो वन्धुवत्सलाः ।
इत्युक्त्वाऽश्रुमुखः पादौ श्यालस्वस्रोरथाग्रहीत् ॥ २३ ॥

मोक्षयामास निगडाद् विस्रब्धः कन्यकागिरा ।
देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ २४ ॥

भ्रातुर्वचनमाश्रुत्य क्षान्त्वा रोषं च देवकी ।
व्यसृजद् वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥

एवमेतन्महाराज यथा वदसि देहिनाम् ।
अज्ञानप्रभवा हन्ति स्वपरेति भिदा यतः ॥ २६ ॥

शोकहर्षभयद्वेषलोभमोहमदान्विताः ।
मिथो घ्नन्तो न पश्यन्ति भावैर्भावान् पृथग्दृशः ॥ २७ ॥

कंस एवं प्रसन्नाभ्यां विस्रब्धः प्रतिभाषितः ।
देवकीवसुदेवाभ्यामनुज्ञातोऽविशद् गृहम् ॥ २८ ॥

तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः ।
तेभ्य आचष्ट तत् सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥

आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः ।
देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥

एवं चेत् तर्हि भोजेन्द्र पुरग्रामव्रजादिषु ।
अनिर्दशान् निर्दशांश्च हनिष्यामोऽद्य बालकान् ॥ ३१ ॥

किमुद्यमैः करिष्यन्ति देवाः समरभीरवः ।
नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥

अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः ।
जिजीविषव उत्सृज्य पलायनपरा ययुः ॥ ३३ ॥

केचित् प्राञ्जलयो भीता न्यस्तशस्त्रा दिवौकसः ।
मुक्तकच्छशिखाः केचिद् भीताः स्म इति वादिनः ॥ ३४॥

न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसन्नतान् ।
हंस्यन्यासक्तमनसो भग्नचापानयुध्यतः ॥ ३५ ॥

किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ।
रहोजुषा किं हरिणा शम्भुना वा वनौकसा ॥ ३६ ॥

किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ।
तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ।
ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ ३७ ॥

यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ।
यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान् लब्धबलो न चाल्यते ॥

मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ।
तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः ॥ ३९ ॥

तस्मात् सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः ।
तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः ॥ ४० ॥

विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ।
श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥ ४१ ॥

स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाचरः ।
तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ ४२ ॥

एवं दुर्मन्त्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः ।
ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ४३ ॥

सन्दिश्य साधुलोकस्य कदने कदनप्रियान् ।
कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥ ४४ ॥

ते वै रजःप्रकृतयस्तमसा मूढचेतसः ।
सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥ ४५ ॥

आयुः श्रियं यशो धर्मं लोकानाशिष एव च ।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः

श्रीशुक उवाच–

नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।
आहूय विप्रान् वेदज्ञान् स्नातः शुचिरलङ्कृतः ॥ १ ॥

वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ।
कारयामास विधिना पितृदेवार्चनं तथा ॥ २ ॥

धेनूनां नियुते प्रादाद् विप्रेभ्यः समलङ्कृते ।
तिलाद्रीन् सप्त रत्नौघान् शातकुम्भान्तरावृतान् ॥ ३ ॥

कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ।
शुद्ध्यन्ति दानैः सन्तुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यया ॥ ४॥

सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः ।
गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ ५ ॥

प्रजाः सम्मृष्टसंसिक्तद्वाराजिरगृहान्तराः ।
चित्रध्वजपताकास्रक्चैलपल्लवतोरणाः ॥ ६ ॥

गावो वृषाश्च वत्साश्च हरिद्रातैलरूषिताः ।
विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥ ७ ॥

महार्हवस्त्राभरणकञ्चुकोष्णीषभूषणाः ।
गोपाः समाययू राजन् नानोपायनपाणयः ॥ ८ ॥

गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ।
आत्मानं भूषयाञ्चक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥ ९ ॥

नवकुङ्कुमकिञ्जल्कमुखपङ्कजभूतयः ।
बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ १० ॥

गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यः
चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ।
नन्दालयं सवलया व्रजतीर्विरेजुः
व्यालोलकुण्डलपयोधरहारशोभाः ॥ ११ ॥

ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके ।
हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्योऽजनमुज्जगुः ॥ १२ ॥

अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे ।
कृष्णे विश्वेश्वरेऽनन्ते नन्दस्य व्रजमुपेयुषि ॥ १३ ॥

गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः ।
आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः ॥ १४ ॥

नन्दो महामनास्तेभ्यो वासोलङ्कारगोधनैः ।
सूतमागधवन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ १५ ॥

तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ।
विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६ ॥

रोहिणी च महाभागा नन्दगोपाभिनन्दिता ।
व्यचरद् दिव्यवासःस्रक्कण्ठाभरणभूषिता ॥ १७ ॥

तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् ।
हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप ॥ १८ ॥

गोपान् गोकुलरक्षायां निरूप्य मधुरां गतः ।
नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥ १९ ॥

वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् ।
ज्ञात्वा दत्तकरं राज्ञे ययौ तदवलोकनः ॥ २० ॥

तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ।
प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥ २१ ॥

पूजितः सुखमासीनः पृष्ट्वाऽनामयमादितः ।
प्रसक्तधीः स्वात्मजयोरिदमाह विशाम्पते ॥ २२ ॥

दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ।
प्रजाशाया निवृत्तस्य प्रजा यत् समजायत ॥ २३ ॥

दिष्ट्या संसारचक्रेऽस्मिन् वर्तमानः पुनर्भवे ।
उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ २४ ॥

नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ।
ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ २५ ॥

कच्चित् पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ।
बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ २६ ॥

भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ।
तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥ २७ ॥

पुंसस्त्रिवर्गो विहितः सुहृदां ह्यनुभावतः ।
न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥ २८ ॥

नन्द उवाच–
अहो ते देवकीपुत्राः कंसेन बहवो हताः ।
एकाऽवशिष्टाऽवरजा कन्या सापि दिवं गता ॥ २९ ॥

नूनं हि दृष्टनिष्ठोऽयं नादृष्टपरमो जनः ।
अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥ ३० ॥

वसुदेव उवाच–
करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ।
नेह स्थेयं बहुदिनं सन्त्युत्पाताश्च गोकुले ॥ ३१ ॥

श्रीशुक उवाच–
इति नन्दादयो गोपाः प्रोक्तास्ते शौरिणा ययुः ।
अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥ ३२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः

श्रीशुक उवाच–
नन्दः पथि वचः शौरेर्न मृषेति विचिन्तयन् ।
हरिं जगाम शरणमुत्पातागमशङ्कितः ॥ १ ॥

कंसेन प्रहिता घोरा पूतना बालघातिनी ।
शिशूंश्चचार निघ्नन्ती पुरग्रामव्रजादिषु ॥ २ ॥

न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ।
कुर्वन्ति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥ ३ ॥

सा खेचर्येकदोपेत्य पूतना नन्दगोकुलम् ।
गोपित्वा माययाऽऽत्मानं प्राविशत् कामचारिणी ॥ ४ ॥

तां केशपाशव्यतिषक्तमल्लिकां
बृहन्नितम्बस्तनकृच्छ्रमध्यमाम् ।
सुवाससं कम्पितकर्णभूषणत्विषो-
ल्लसत्कुन्तलमण्डिताननाम् ॥ ५ ॥

वल्गुस्मितापाङ्गविसर्गवीक्षितै-
र्मनो हरन्तीं वनितां व्रजौकसः ।
अमंसताम्भोजकरेण रूपिणीं
गोप्यः श्रियं द्रष्टुमिहागतां पतिम् ॥ ६ ॥

बालग्रही तत्र विचिन्वती शिशून्
यदृच्छया नन्दगृहेऽसदन्तकम् ।
बालं प्रतिच्छन्ननिजोरुतेजसं
ददर्श तल्पेऽग्निमिवाहितं भसि ॥ ७ ॥

विबुध्य तां बालकमारिकाग्रहं
चराचरात्मा स निमीलितेक्षणः ।
मही सुरत्वेऽपि च बालभावं
विभावयन् किञ्चिदुवाच न प्रभुः ॥ ८ ॥

अजानमानाऽथ निशाचरी हरिं
निसर्गविज्ञातजगद्विचेष्टितम् ।
अनन्तमारोपयदङ्कमन्तकं
यथोरगं सुप्तमबुद्धिरज्जुधीः ॥ ९ ॥

तां तीक्ष्णचित्तामतिवामचेष्टितां
वीक्ष्यान्तराकोशपरिच्छदासिवत् ।
वरस्त्रियं तत्प्रभया च धर्षिते
निरीक्षमाणे जननी अतिष्ठताम् ॥ १० ॥

तस्मिन् स्तनं दुर्जरवीर्यमुल्वणं
घोराऽङ्कमादाय शिशोर्ददावथ ।
गाढं कराभ्यां भगवान् प्रपीड्य तत्प्राणैः
समं रोषसमन्वितोऽपिबत् ॥ ११ ॥

सा मुञ्च मुञ्चेति गिरा प्रभाषिणी
निष्पीड्यमानाऽखिलजीवमर्मणि ।
विवृत्य नेत्रे चरणौ भुजौ मुहु-
र्विक्षिप्तगात्रा क्षिपती रुराव ह ॥ १२ ॥

तस्याः स्वनेनातिगभीररंहसाः
साद्रिर्मही द्यौश्च चचाल सग्रहा ।

रसा दिशः खं प्रतिनेदिरे जनाः
पेतुः क्षितौ वज्रनिपातशङ्कया ॥ १३ ॥

निशाचरीत्थं व्यथिता व्यसुः क्षितौ
विकीर्य केशांश्चरणौ भुजावपि ।
प्रसार्य गोष्ठे निजरूपमास्थिता
वज्राहतो वृत्र इवापतन्नृप ॥ १४ ॥

पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरे द्रुमान् ।
चूर्णयामास राजेन्द्र महदासीत् तदद्भुतम् ॥ १५ ॥

ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् ।
गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १६ ॥

अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ।
बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम् ॥ १७ ॥

सन्तत्रसुः स्म तद् वीक्ष्य गोपा गोप्यः कलेवरम् ।
पूर्वं तु तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः ॥ १८ ॥

बालं च तस्या उरसि क्रीडन्तमकुतोभयम् ।
गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसम्भ्रमाः ॥ १९ ॥

यशोदारोहिणीभ्यां ताः समं बालस्य सर्वशः ।
रक्षां विदधिरे सम्यग् गोपुच्छभ्रमणादिभिः ॥ २० ॥

गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ।
रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ॥ २१ ॥

गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ।
न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥ २२ ॥

अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू
यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
हृत् केशवस्त्वदुर ईश इनस्तु कण्ठं
विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ २३ ॥

चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्
त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ।
कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः
क्षितौ हलधरः पुरुषः समन्तात् ॥ २४ ॥

इन्द्रियाणि हृषीकेशः प्राणान् नारायणोऽवतु ।
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २५ ॥

पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः ।
क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ २६ ॥

व्रजन्तमव्याद् वैकुण्ठ आसीनं त्वां श्रियः पतिः ।
भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयङ्करः ॥ २७ ॥

डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः ।
भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥ २८ ॥

कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ।
उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ॥ २९ ॥

स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ।
सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ ३० ॥

इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ।
पाययित्वा स्तनं माता सन्न्यवीविशदात्मजम् ॥ ३१ ॥

तावन्नन्दादयो गोपा मथुराया व्रजं गताः ।
विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥ ३२ ॥

नूनं बतर्षिः सञ्जातो योगेशो वा समासतः ।
स एव दृष्टो ह्युत्पातो यदाऽऽहानकदुन्दुभिः ॥ ३३ ॥

कलेवरं परशुभिश्छित्त्वा तत् ते व्रजौकसः ।
दूरे क्षिप्त्वाऽवयवशो दहुः काष्ठवेष्टितम् ॥ ३४ ॥

दह्यमानस्य देहस्य धूमश्चागुरुसौरभः ।
उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥ ३५ ॥

पूतना लोकबालघ्नी राक्षसी रुधिराशना ।
जिघांसयाऽपि हरये स्तनं दत्त्वाऽऽप सद्गतिम् ॥ ३६ ॥

किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ।
यच्छन् प्रियतमं किञ्चिद् रक्तास्तन्मातरो यथा ॥ ३७ ॥

पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः ।
अङ्गं यस्याः समाक्रम्य भगवानपिबत् स्तनम् ॥ ३८ ॥

यातुधान्यपि सा स्वर्गमवाप जननीगतिम् ।
कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥ ३९ ॥

पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् ।
भगवान् देवकीपुत्रः कैवल्याद्यखिलार्थदः ॥ ४० ॥

तासामविरतं कृष्णे कुर्वन्तीनां सुते क्षणम् ।
न पुनः कल्पते राजन् संसारोऽज्ञानसम्भवः ॥ ४१ ॥

कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ।
किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥ ४२ ॥

ते तत्र वर्णितं गोपैः पूतनागमनादिकम् ।
श्रुत्वा तन्निधनं स्वस्ति शिशोरासन् सुविस्मिताः ॥ ४३ ॥

नन्दः स्वपुत्रमादाय प्रोष्यागत उदारधीः ।
मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥ ४४ ॥

य एतत् पूतनामोक्षं कृष्णस्यार्भकचेष्टितम् ।
निशम्य श्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः

श्रीशुक उवाच–
एवं स ववृधे विष्णुर्नन्दगेहे जनार्दनः ।
कुर्वन्ननिशमानन्दं गोपालानां सयोपिताम् ॥ १ ॥

राजोवाच–
येन येनावतारेण भगवान् हरिरीश्वरः ।
करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ॥ २ ॥

यच्छृण्वतोऽपैत्यरतिर्वितृष्णा
सत्वं विशुध्यत्यचिरेण पुंसः ।
भक्तिर्हरौ तत्पुरुषे च सख्यं
तदेव सारं वद मन्यसे चेत् ॥ ३ ॥

अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् ।
मानुषं देहमासाद्य तज्जातिमनुरुन्धतः ॥ ४ ॥

विस्तरेणेह कारुण्यात् सर्वपापप्रणाशनम् ।
वक्तुमर्हसि धर्मज्ञ दयालुस्त्वमिति प्रभो ॥ ५ ॥

श्रीशुक उवाच -
कदाचिदौत्थानिककौतुकाप्लवे
जन्मर्क्षयोगे समवेतयोषिताम् ।
वादित्रगीतद्विजमन्त्रवाचकैः
चकार सूनोरभिषेचनं सती ॥ ६ ॥

नन्दस्य पत्नी कृतमज्जनादिकं
विप्रैः कृतस्वस्त्ययनं सुपूजितैः ।
अन्नाद्यवासःस्रगभीष्टधेनुभिः
सञ्जातनिद्राक्षमशीशयच्छनैः ॥ ७ ॥

औत्थानिकौत्सुक्यमना मनस्विनी
समागतान् पूजयती व्रजौकसः ।
नैवाशृणोद् वै रुदितं सुतस्य
सा रुदन् स्तनार्थी चरणावुदक्षिपत् ॥ ८ ॥

अनः शयानस्य शिशोरथाल्पक-
प्रवालमृद्वङ्घ्रिहतं व्यवर्तत ।
विध्वस्तनानारसकुप्यभाजनं
व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥ ९ ॥

दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय
औत्थानिके कर्मणि याः समागताः ।
नन्दादयश्चाद्भुतदर्शनाकुलाः
कथं स्वयं वै शकटं विपर्यगात् ।
इति ब्रुवन्तोऽतिविषादमोहिता
जनाः समन्तात् परिवव्रुरार्तवत् ॥ १० ॥

ऊचुस्तदव्यक्तमतीन् गोपान् गोपीश्च बालकाः ।
रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥ ११ ॥

न ते श्रद्दधिरे गोपा बालभाषितमित्युत ।
अनन्तस्याप्रमेयस्य बलं तस्य न वै विदुः ॥ १२ ॥

रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता ।
कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥ १३ ॥

पूर्ववत् स्थापितं गोपैर्बलिभिः सपरिच्छदम् ।
विप्रा हुत्वाऽर्चयाञ्चक्रुर्दध्यक्षतकुशाम्बुभिः ॥ १४ ॥

येऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः ।
न तेषां सत्यशीलानामाशिषो विफलाः कचित् ॥ १५ ॥

इति बालकमानीय सामर्ग्यजुरुपाकृतैः ।
जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥ १६ ॥

वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः ।
हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥ १७ ॥

गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः ।
पुत्रस्याभ्युदयार्थाय प्राग्जातेश्चान्वयुञ्जत ॥ १८ ॥

विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः ।
ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् ॥ १९ ॥

एकदाऽऽरोहमारूढं लालयन्ती सुतं सती ।
गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥ २० ॥

भूमौ निधाय तं गोपी विस्मिता भारपीडिता ।
महापुरुषमादध्यौ जगामाशु च कर्मसु ॥ २१ ॥

दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रचोदितः ।
चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥ २२ ॥

गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः ।
ईरयन् सुमहाघोरशब्देन प्रदिशो दिशः ॥ २३ ॥

मुहूर्तमभवद् गोष्ठं रजसा तमसाऽऽवृतम् ।
सुतं यशोदा नापश्यत् तस्मिन् न्यस्तवती यतः ॥ २४ ॥

नापश्यत् कश्चनात्मानं परं चापि विमोहितः ।
तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः ॥ २५ ॥

इति खरपवनचक्रपांसुवर्षे
सुतपदवीमबलाऽविचक्षमाणा ।
अतिकरुणमनुस्मरन्त्यशोचद्
भुवि पतिता मृतवत्सका यथा गौः ॥ २६ ॥

रुदितमनुनिशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ।
रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥ २७ ॥

तृणावर्तः शान्तरयो वात्यारूपधरो हरन् ।
कृष्णं नभोगतो गन्तुं नाशक्नोद् भूरिभारभृत् ॥ २८ ॥

तमश्मानं मन्यमान आत्मनो गुरुमत्तया ।
गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥ २९ ॥

गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ।
अव्यक्तवाक्यो न्यपतत् सहबालो व्यसुर्व्रजे ॥ ३० ॥

तमन्तरिक्षात् पतितं शिलायां
विशीर्णसर्वावयवं करालम् ।
पुरं यथा रुद्रशरेण विद्धं
स्त्रियो रुदन्त्यो ददृशुः समेताः ॥ ३१ ॥

आदाय मात्रे प्रतिहृत्य विस्मिताः
कृष्णं च तस्योपरि लम्बमानम् ।
तं स्वस्तिमन्तं पुरुषादनीतं
विहायसा मृत्युमुखात् प्रमुक्तम् ॥ ३२ ॥

गोप्यः स गोपाः किल नन्दमुख्याः
लब्ध्वा पुनः प्रापुरतीव मोदम् ।
अहो बतात्यद्भुतमेष रक्षसा
बालो निवृत्तिं गमितोऽभ्यगात् पुनः ॥ ३३ ॥

हिंस्रः स्वपापेन विहिंसितः खलः
साधुः समत्वेन भयाद् विमुच्यते ।
किं नस्तपश्चीर्णमधोक्षजार्चनं
पूर्तेष्टदत्तं किमु भूतसौहृदम् ।
यः सम्परेतः पुनरेव बालको
दिष्ट्या स्वबन्धून् प्रणयन्नुपस्थितः ॥ ३४ ॥

दृष्ट्वाऽद्भुतानि बहुशो नन्दगोपो बृहद्वने ।
वसुदेववचो भूयो मानयामास विस्मितः ॥ ३५ ॥

एकदाऽर्भकमादाय स्वाङ्कमारोप्य भामिनी ।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ ३६ ॥

पीतप्रायस्य जननी सुतस्य रुचिरस्मितम् ।
मुखं लालयती राजन् जृम्भतो ददृशे इदम् ॥ ३७ ॥

खं रोदसी ज्योतिरनीकमाशाः
सूर्येन्दुवह्निश्वसनाम्बुधींश्च ।
द्वीपान् नगांस्तद्दुहितॄर्वनानि
भूतानि यानि स्थिरजङ्गमानि ॥

संवीक्ष्य विश्वं सहसा राजन् सञ्जातवेपथुः ।
सम्मील्य मृगशावाक्षी नेत्रे आसीत् सुविस्मिता ॥ ३९ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः

श्रीशुक उवाच–
गर्गः पुरोहितो राजन् यदूनां सुमहायशाः ।
व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः ॥ १ ॥

तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः ।
आनर्चाधोक्षजधिया प्रणिपातपुरस्सरम् ॥ २ ॥

सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम् ।
नन्दयित्वाऽब्रवीद् ब्रह्मन् पूर्णस्य करवाम किम् ॥ ३ ॥

महद्विचलनं नृणां गृहिणां दीनचेतसाम् ।
निःश्रेयसाय भगवान् कल्पते नान्यथा क्वचित् ॥ ४ ॥

ज्योतिषामयनं साक्षाद् यत्तज्ज्ञानमतीन्द्रियम् ।
प्रणीतं भवता येन पुमान् वेद परावरम् ॥ ५ ॥

त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान् कर्तुमर्हसि ।
बालयोरनयोर्नॄणां जन्मना ब्राह्मणो गुरुः ॥ ६ ॥

गर्ग उवाच–
यदूनामहमाचार्यः ख्यातश्च भुवि सर्वतः ।
सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥ ७ ॥

कंसः पापमतिः सख्यं तव चानकदुन्दुभेः ।
देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥ ८ ॥

इति सञ्चिन्तयन् श्रुत्वा देवकीदारिकावचः ।
अपि हन्ता गताशङ्कस्तर्हि तन्नोऽनयो महान् ॥ ९ ॥

नन्द उवाच–
अलक्षितेऽस्मिन् रहसि मामकैरपि गोव्रजे ।
कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥ १० ॥

श्रीशुक उवाच–
एवं सम्प्रार्थितो विप्रः स्वचिकीर्षितमेव तत् ।
चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥

अयं हि रोहिणीपुत्रो रमयन् सुहृदो गुणैः ।
आख्यास्यते राम इति बलाधिक्याद् बलं विदुः ।
यदूनामपृथग्भावात् सङ्कर्षणमुशन्त्युत ॥ १२ ॥

आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १३ ॥

प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ।
वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥ १४ ॥

बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ।
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १५ ॥

एष वः श्रेय आधास्यद् गोपगोकुलनन्दनः ।
अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १६ ॥

पुराऽनेन व्रजपते साधवो दस्युपीडिताः ।
अराजकेऽरक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥ १७ ॥

य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः ।
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥ १८ ॥

तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः ।
श्रिया कीर्त्याऽनुभावेन गोपायस्व समाहितः ॥ १९ ॥

इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते ।
नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् ॥ २० ॥

कालेन व्रजताऽल्पेन गोकुले रामकेशवौ ।
जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विचेरतुः ॥ २१ ॥

तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ
घोषप्रघोषरुचिरं व्रजकर्दमेषु ।
तन्नादहृष्टमनसावनुसृत्य लोकं
मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः ॥ २२ ॥

तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ
पङ्काङ्गरागरुचिरावुपगुह्य दोर्भ्याम् ।
दत्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य
मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥ २३ ॥

यर्ह्यङ्गनादर्शनीयकुमारलीला-
वन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः ।
वत्सैरितस्तत उभावनुकृष्यमाणौ
प्रेक्षन्त्य उत्सृजतगृहा जगृहुर्हसन्त्यः ॥ २४ ॥

शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः
क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम् ।
गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ
शेकात आपतुरलं मनसोऽनवस्थाम् ॥ २५ ॥

कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले ।
अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा ॥ २६ ॥

ततस्तु भगवान् कृष्णो वयस्यैर्व्रजबालकैः ।
सहरामो व्रजस्त्रीणां चिक्रीडे जनयन् मुदम् ॥ २७ ॥

कृष्णस्य रुचिरं गोप्योऽवीक्ष्य कौमारचापलम् ।
शृण्वन्त्याः किल तन्मातुरिति होचुः समागताः ॥ २८ ॥

वत्सान् मुञ्चन् क्वचिदसमये क्रोशसञ्जातहासः
स्तेयं स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः ।
मर्कान् भोक्ष्यन् विभजति स चेन्नात्ति भाण्डं भिनत्ति
द्रव्यालाभे सगृहकुपितो यात्युपक्रोश्य तोकान् ॥ २९ ॥

हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यै-
श्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित् ।
ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं
काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥ ३० ॥

एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ
स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते ।
इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभि-
र्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छत् ॥ ३१ ॥

एकदा क्रीडमानास्ते रामाद्या गोपदारकाः ।
कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥ ३२ ॥

सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी ।
यशोदा भयसम्भ्रान्तप्रेक्षणाक्षमभाषत ॥ ३३ ॥

कस्मान्मृदमदान्तात्मन् भवान् भक्षितवान् रहः ।
वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥ ३४ ॥

श्रीकृष्ण उवाच–
नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः ।
यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ॥ ३५ ॥

यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः ।
व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥ ३६ ॥

सा तत्र ददृशे विश्वं जगत् स्थास्नु च खं दिशः ।
साद्रिद्वीपाब्धि भूगोलं सवाय्वग्नीन्दुतारकम् ॥ ३७ ॥

ज्योतिश्चक्रं जलं तेजो नभस्वान् वियदेव च ।
वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ॥ ३८ ॥

एतद् विचित्रं सह जीवकाल-
स्वभावकर्माशयलिङ्गभेदम् ।
सूनोस्तनौ वीक्ष्य विदारितास्ये
व्रजं सहात्मानमवाप शङ्काम् ॥ ३९ ॥

किं स्वप्न एतदुत देवमाया
किं वा मदीयो बत बुद्धिमोहः ।
अथो अमुष्यैव ममार्भकस्य
यः कश्चनौत्पत्तिक आत्मयोगः ॥ ४० ॥

अथो यथावन्न वितर्कगोचरं
चेतोमनःकर्मवचोभिरञ्जसा ।
यदाश्रयं येन यतः प्रतीयते
सुदुर्विभाव्यं प्रणताऽस्मि तत्पदम् ॥ ४१ ॥

अहं ममासौ पतिरेष मे सुतो
व्रजेश्वरस्याखिलवित्तपा सती ।
गोप्यश्च गोपाः सहगोधनाश्च मे
यन्माययेत्थं कुमतिः स मे गतिः ॥ ४२ ॥

इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ।
वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥ ४३ ॥

सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् ।
प्रवृद्धस्नेहकलिलहृदयाऽऽसीद् यथा पुरा ॥ ४४ ॥

त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्वतैः ।
उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥ ४५ ॥

राजोवाच–
नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम् ।
यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥ ४६ ॥

पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम् ।
गायन्त्यद्यापि कवयो यल्लोकशमलापहम् ॥ ४७ ॥

श्रीशुक उवाच–
द्रोणो वसूनां प्रवरो धरया सह भार्यया ।
करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह ॥ ४८ ॥

जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ।
भक्तिः स्यात् परमा लोके ययाऽञ्जो दुस्तरं तरेत् ॥ ४९ ॥

अस्त्वित्युक्तः स एतेन व्रजे द्रोणो महायशाः ।
जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत् ॥ ५० ॥

ततो भक्तिर्भगवति पुत्रीभूते जनार्दने ।
दम्पत्योर्नितरामासीद् गोपगोपीषु भारत ॥ ५१ ॥

कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः ।
सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥ ५२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे नवमोऽध्यायः ॥

# अथ दशमोऽध्यायः

श्रीशुक उवाच–
एकदा गृहदासीषु यशोदा नन्दगेहिनी ।
कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि ॥ १ ॥

यानि यानीह गीतानि तद्बालचरितानि च ।
दधिनिर्मथने काले स्मरन्ती तान्यगायत ॥ २ ॥

क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं
पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः ।
रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च
स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ ॥ ३ ॥

तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः ।
गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन् ॥ ४ ॥

तमङ्कमारूढमपाययत् स्तनं
स्नेहस्नुतं सस्मितमीक्षती मुखम् ।
अतृप्तमुत्सृज्य जवेन सा यया-
वुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥

सञ्जातकोपः स्फुरितारुणाधरं
सन्दश्य दद्भिर्दधिमण्डभाजनम् ।
भित्त्वा मृषाश्रुर्दृषदश्मना रहो
जघास हैयङ्गवमन्तरं गतः ॥ ६ ॥

उत्तार्य गोपी सुशृतं पयः पुनः
प्रविश्य सन्दश्य च दध्यमत्रकम् ।
भग्नं विलोक्य स्वसुतस्य कर्म
तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥

उलूखलाङ्घ्रेरुपरि व्यवस्थितं
मर्काय कामं ददतं शिचि स्थितम् ।
हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य
पश्चात् सुतमागमच्छनैः ॥ ८ ॥

तामात्तयष्टिं प्रसमीक्ष्य सत्वर-
स्ततोऽवरुह्यापससार भीतवत् ।
गोप्यन्वधावन्न यमाप योगिनां
क्षमं प्रवेष्टुं तपसेरितं मनः ॥ ९ ॥

अन्वञ्चमाना जननी बृहच्चलच्छ्रो-
णीभराक्रान्तगतिः सुमध्यमा ।
जवेन विस्रंसितकेशबन्धन-
च्युतप्रसूनानुगतिः परामृशत् ॥ १० ॥

कृतागसं तं प्ररुदन्तमक्षिणी
कषन्तमञ्जन्मषिणी स्वपाणिना ।
उद्वीक्षमाणं भयविह्वलेक्षणं
हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥ ११ ॥

त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला ।
इयेष किल तं बन्धुं दाम्नातद्वीर्यकोविदा ॥ १२ ॥

न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ।
पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ॥ १३ ॥

तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ।
गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ॥ १४ ॥

तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः ।
द्व्यङ्गुलोनमभूत् तेन सन्दधेऽन्यच्च गोपिका ॥ १५ ॥

यदाऽऽसीत् तदपि न्यूनं तेनान्यदपि सन्दधे ।
तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥

एवं स्वगेहदामानि यशोदा सन्दधत्यपि ।
गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताऽभवत् ॥ १७ ॥

स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ।
दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत् स्वबन्धने ॥ १८ ॥

एवं सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यता ।
स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १९ ॥

नेमं विरिञ्चिर्न भवो न श्रीरप्यङ्गसंश्रया ।
प्रसादं लेभिरे गोप्यो यत् तत् प्राप विमुक्तिदात् ॥ २० ॥

नायं सुखाप्यो भगवान् देहिनां गोपिकासुतः ।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥ २१ ॥

कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः ।
अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥ २२ ॥

पुरा नारदशापात् तौ वृक्षतां प्रापितौ मदात् ।
नलकूबरमणिग्रीवाविति ख्यातौ श्रियाऽन्वितौ ॥ २३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे दशमोऽध्यायः ॥

# अथ एकादशोऽध्यायः

राजोवाच–
कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् ।
यत् तद् विगर्हितं कर्म येन देवर्षेस्तमः ॥ १ ॥

श्रीशुक उवाच–
रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ ।
कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥ २ ॥

वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ ।
स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥

अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि ।
चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥ ४ ॥

यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव ।
अपश्यन्नारदो देवौ क्षीबाणौ समबुध्यत ॥ ५ ॥

तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः ।
वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥ ६ ॥

तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ ।
तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥

नारद उवाच–
न ह्यन्यो जुषतो जोष्याद् बुद्धिभ्रंशो रजोगुणः ।
श्रीमदादभिजात्यादिर्यत्र स्त्रीद्यूतमासवः ॥ ८ ॥

हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः ।
मन्यमानैरिमं देहमजरामृत्यु नश्वरम् ॥ ९ ॥

देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम् ।
भूतध्रुक् कुरुते स्वार्थं किं वेद निरयो यतः ॥ १० ॥

देहः किमन्नदातुः स्वान्निषेक्तुर्मातुरेव वा ।
मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥ ११ ॥

एवं साधारणं देहमव्यक्तप्रभवाप्ययम् ।
को विद्वानात्मसात् कृत्वा हन्ति जन्तून् ऋतेऽसतः ॥ १२ ॥

मन्यमानैरिमं देहमजरामृत्यु नश्वरम् ।
देवसंज्ञितमप्यन्ते कृमिविट्भस्मसंज्ञितम् ॥ १३ ॥

असतः श्रीमदान्धस्य दारिद्र्यं परमञ्जनम् ।
आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥ १४ ॥

यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् ।
जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः ॥ १५ ॥

दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह ।
कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥ १६ ॥

नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकाङ्क्षिणः ।
इन्द्रियाण्यनु शुष्यन्ति हिंसाऽपि विनिवर्तते ॥ १७ ॥

दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः ।
सद्भिः क्षिणोति तत्तर्षं तत आराद्धि सिध्यति ॥ १८ ॥

साधूनां समचित्तानां मुकुन्दचरणैषिणाम् ।
उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः ॥ १९ ॥

तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः ।
तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥ २० ॥

यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ।
न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥ २१ ॥

अतोऽर्हथः स्थावरतां स्यातां नैवं यथा पुनः ।
स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥ २२ ॥

वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ।
वृत्ते स्वर्लोकतां भूयो लब्ध्वा भक्तौ भविष्यतः ॥ २३ ॥

श्रीशुक उवाच–
स एवमुक्त्वा देवर्षिर्गतो नारायणाश्रमम् ।
नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥ २४ ॥

ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः ।
जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ ॥ २५ ॥

देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ।
तत् तथा साधयिष्यामि यद् गीतं तन्महात्मना ॥ २६ ॥

इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ ।
आत्मनिर्वेशमात्रेण तिर्यगतमुलूखलम् ॥ २७ ॥

बालेन निष्कृष्टमुलूखलं तद्
दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।
निष्पेततुः पवनविक्रमितातिवेल-
स्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥ २८ ॥

तत्र श्रिया परमया ककुभः स्फुरन्तौ
सिद्धावुपेत्य कुजयोरिव जातवेदौ ।
कृष्णं प्रणम्य शिरसाऽखिललोकनाथं
बद्धाञ्जली विरजसाविदमूचतुः स्म ॥ २९ ॥

यक्षावूचतुः–
कृष्ण कृष्ण महायोगिन् त्वमाद्यः पुरुषः परः ।
व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥ ३० ॥

त्वमेकः सर्वभूतानां देह आत्मेन्द्रियेश्वरः ।
त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ॥ ३१ ॥

त्वं महान् प्रकृतिः सूक्ष्मा रजस्सत्त्वतमोमयी ।
त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥ ३२ ॥

गृह्यमाणस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ।
को न्विहार्हति विज्ञातुं प्राक् सिद्धं गुणसंस्थितैः ॥ ३३ ॥

तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ।
आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥ ३४ ॥

यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः ॥ ३५ ॥

स भवान् सर्वलोकस्य भवाय विभवाय च ।
अवतीर्णोऽसि भागेन साम्प्रतं पतिराशिषाम् ॥ ३६ ॥

नमः परमकल्याण नमस्ते विश्वमङ्गल ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ३७ ॥

अनुजानीहि नौ भूमन् सदाऽनुचरकिङ्करौ ।
दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥ ३८ ॥

वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्मसु मनस्तव पादयोर्नौ ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥ ३९ ॥

श्रीशुक उवाच-
इत्थं सङ्कीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः ।
दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ ॥ ४० ॥

श्रीभगवानुवाच–
ज्ञातं मया पुरैवेतद् ऋषिणा करुणात्मना ।
यच्छ्रीमदान्धयोर्वाग्भिः शापः सोऽनुग्रहः कृतः ॥ ४१ ॥

साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् ।
दर्शनान्नो भवेद् बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥ ४२ ॥

तद् गच्छतं मत्परमौ नलकूबर सादनम् ।
सञ्जातो मयि भावो वामीप्सितः परमोऽभवः ॥ ४३ ॥

श्रीशुक उवाच–
इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः ।
बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥ ४३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकादशोऽध्यायः ॥

# अथ द्वादशोऽध्यायः

श्रीशुक उवाच–
गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् ।
तत्राजग्मुः कुरुश्रेष्ठ निर्घातरवशङ्किताः ॥ १ ॥
भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ।
बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ २ ॥
उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् ।
कस्येदं कुत आश्चर्यमुत्पातभयकातराः ॥ ३ ॥
बाला ऊचुरनेनेति तिरश्चीनमुलूखलम् ।
विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥ ४ ॥
न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् ।
बालस्योत्पाटनं तर्वोः केचित् सन्दिग्धचेतसः ॥ ५ ॥
उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम् ।
विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ ६ ॥
गोपीभिः स्तोभितोऽनृत्यद् भगवान् बालवत् क्वचित् ।
उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत् ॥ ७ ॥
बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् ।
बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन् ॥ ८ ॥
दर्शयंस्तद्विदां लोक आत्मनो भक्तवश्यताम् ।
व्रजस्योद्वाहयन् हर्षं भगवान् बालचेष्टितैः ॥ ९ ॥
गोपवृद्धा महोत्पातानतुभूय बृहद्वने ।
नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ १० ॥
तत्रोपानन्दनामाऽऽह गोपो ज्ञानवयोऽधिकः ।
देशकालार्थतत्त्वज्ञः प्रियकृद् रामकृष्णयोः ॥ ११ ॥
उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ।
आयान्त्यत्र महोत्पाताः प्रजानां नाशहेतवः ॥ १२ ॥
मुक्तः कथञ्चिद् राक्षस्या बालघ्न्या बालकोऽप्यसौ ।
हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥ १३ ॥
चक्रवातेन नीतोऽयं दैत्येन वियदूवता ।
शिलायां पातितस्तत्र परित्रातः सुरेश्वरैः ॥ १४ ॥
यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः ।
असावन्यतमो वाऽपि तदप्यच्युतरक्षणम् ॥ १५ ॥
यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः ।
तावद् बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥ १६ ॥
वनं वृन्दावनं नाम पशव्यं नवकाननम् ।
गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥ १७ ॥
तत् तत्राद्यैव यास्यामः शकटान् युङ्क्त माचिरम् ।
गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥ १८ ॥
तच्छ्रुत्वैकधियो गोपास्सर्वे नन्दपुरोगमाः ।
उपनन्दवचो राजन् प्रतिनन्द्य गृहान् ययुः ॥ १९ ॥
सरित्तीरगतं कृष्णं भग्नार्जुनमथाह्वयत् ।
रामं च रोहिणी देवी क्रीडन्तौ बालकैर्भृशम् ॥ २० ॥
नोपेयातां यदाहूतौ क्रीडासङ्गेन पुत्रकौ ।
यशोदां प्रेषयामास रोहिणी पुत्रवत्सला ॥ २१ ॥
क्रीडन्तं स्वसुतं बालमतिवेलं सहाग्रजम् ।
यशोदाऽजोहवीद् वीक्ष्य पुत्रस्नेहस्नुतस्तनी ॥ २२ ॥
कृष्ण कृष्णारविन्दाक्ष तात एहि स्तनं पिब ।
अलं विहारैः क्षुत्क्षान्तस्तद् भवान् भोक्तुमर्हति ॥ २३ ॥
हे रामागच्छ ताताशु सानुजः कुलनन्दन ।
प्रातरेव कृताहारः क्रीडाश्रान्तोऽसि पुत्रक ॥ २४ ॥
प्रतीक्षते त्वां दाशार्हो भोक्ष्यमाणो व्रजाधिपः ।
एह्यावयोः प्रियं धेहि स्वगृहान् यान्तु बालकाः ॥ २५ ॥
जन्मर्क्षं तेऽद्य भविता विप्रेभ्यो देहि गाः शुचिः ।
धूलिधूसरिताङ्गस्त्वं तात मज्जनमावह ॥ २६ ॥
पश्य पश्य वयस्यांस्ते मातृमृष्टान् स्वलङ्कृतान् ।
त्वं च स्नातः कृताहारो विहरस्व स्वलङ्कृतः ॥ २७ ॥
इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप ।
हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥
अथ नन्दः समाहूय गोपानिदमभाषत ।
श्वोऽतो वृन्दावनं यामो यत्ता भवथ माचिरम् ॥ २९ ॥

तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः ।
रथान् स्वान् स्वान् समायुज्य ययू रूढपरिच्छदाः ॥ ३० ॥

वृद्धान् बालान् स्त्रियो राजन् सर्वोपस्करणानि च ।
अनस्स्वारोप्य गोपालान् यत्ता आत्तशरासनाः ॥ ३१ ॥

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः ।
तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ ३२ ॥

गोप्यो रूढरथा नृत्यत्कुचकुङ्कुमकान्तयः ।
कृष्णलीलां जगुः प्रीताः स्निग्धकण्ठ्यः सुवाससः ॥ ३३ ॥

तथा यशोदारोहिण्यावेकं शकटमास्थिते ।
रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ ३४ ॥

वृन्दावनं सम्प्रविश्य सर्वकालसुखावहम् ।
तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ ३५ ॥

वृन्दावनं गोवर्धनं यमुनापुलिनानि च ।
वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप ॥ ३६ ॥

एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ।
कलवाक्यैश्च कालेन वत्सपालौ बभूवतुः ॥ ३७ ॥

अविदूरे व्रजभुवः सह गोपालबालकैः ।
चारयामासतुर्वत्सान् नानाक्रीडापरिच्छदौ ॥ ३८ ॥

क्वचिद् वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित् ।
क्वचित् पदैः किङ्किणीभिः क्वचित् कृत्रिमगोवृषैः ॥ ३९ ॥

वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ।
अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥ ४० ॥

कदाचिद् यमुनातीरे वत्सान् चारयतोः स्वकैः ।
वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥ ४१ ॥

तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ।
दर्शयन् बलदेवाय शनैर्मुग्ध इवासदत् ॥ ४२ ॥

गृहीत्वाऽपरपादाभ्यां सहलाङ्गूलमच्युतः ।
भ्रामयित्वा कपित्थाग्रे प्राहिणोद् गतजीवितम् ॥ ४३ ॥

स कपित्थैर्महाकायः पात्यमानैः पपात ह ।
तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति ॥ ४४ ॥

देवाश्चोपरि सन्तुष्टा बभूवुः पुष्पवर्षिणः ।
तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ॥ ४५ ॥

सप्रातराशौ गोवत्सान् चारयन्तौ विचेरतुः ।
स्वंस्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा ॥ ४६ ॥

गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ।
ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् ॥ ४७ ॥

तत्रसुर्वज्रसंभिन्नगिरेः शृङ्गमिव च्युतम् ।
स वै बको नाम महानसुरो बकरूपधृक् ॥ ४८ ॥

आगत्य तरसा कृष्णं तीक्ष्णतुण्डोऽग्रसद् बली ॥ ४९ ॥

कृष्णं महासुरग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ।
बभूवुरिन्द्रियाणीव विना प्राणैर्विचेतसः ॥ ५० ॥

तं तालुमूलं प्रदहन्तमग्निवद्
गोपालसूनुं पितरं जगद्गुरोः ।
चच्छर्द सद्योऽतिरुषाऽक्षतं बकः
तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ ५१ ॥

तमापतन्तं स निगृह्य तुण्डयो-
र्दोर्भ्यां बकं कंससखं सतां पतिः ।
पश्यत्सु बालेषु ददार लीलया
मुदावहो वीरणवद् दिवौकसाम् ॥ ५२ ॥

तदा बकारिं सुरलोकवासिनः
समाकिरन् नन्दनमल्लिकादिभिः ।
समीडिरे चानकशङ्खसंस्तवैः
तद् वीक्ष्य गोपालसुता विसिस्मिरे ॥ ५३ ॥

मुक्तं बकास्यादुपलभ्य बालका
रामादयः प्राणमिवेन्द्रियो गणः ।
स्थानागतं तं परिरभ्य निर्वृताः
प्रणीय वत्सान् व्रजमेत्य तज्जगुः ॥ ५४ ॥

तच्छ्रुत्वा विस्मिता गोपा गोप्यश्चातिप्रियादृताः ।
प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणाः ॥ ५५ ॥

अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् ।
अप्यासीद् विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥ ५६ ॥

अथाप्यभिभवन्त्येनं न ह्येते घोरदर्शनाः ।
जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥ ५७ ॥

अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् ।
गर्गो यदाह भगवानन्वभावि तथैव तत् ॥ ५८ ॥

इति नन्दादयो गोपा रामकृष्णकथां मुदा ।
कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम् ॥ ५९ ॥

एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ।
निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥ ६० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः

श्रीशुक उवाच–
ततश्च पौगण्डवयः श्रितौ व्रजे
बभूवतुस्तौ पशुपालसम्मतौ ।
गाश्चारयन्तौ सखिभिः समं पदै-
र्वृन्दावनं पुण्यमतीव चक्रतुः ॥ १ ॥

तन्माधवो वेणुमुदीरयन् वृतो
गोपैर्गृणद्भिः स्वयशो बलान्वितः ।
पशून् पुरस्कृत्य पशव्यमाविशद्
विहर्तुकामः कुसुमाकरं वनम् ॥ २ ॥

तन्मञ्जुघोषालिमृगद्विजाकुलं
महन्मनः प्रख्यपयःसरस्वता ।
वातेन जुष्टं शतपत्रगन्धिना
निरीक्ष्य रन्तुं भगवान् मनो दधे ॥ ३ ॥

स तत्र तत्रारुणपल्लवश्रिया
फलप्रसूनोरुभरेण पादयोः ।
स्पृशच्छिखान् वीक्ष्य वनस्पतीन् मुदा
स्मयन्निवाहाग्रजमादिपूरुषः ॥ ४ ॥

श्रीभगवानुवाच–
अहो अमी देववरामरार्चितं
पदाम्बुजं ते सुमनःफलार्हणम् ।
नमन्त्युपादाय शिखाभिरात्मन-
स्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥

एतेऽलिनस्तव यशोऽखिललोकतीर्थं
गायन्त आदिपुरुषानुपथं भजन्ते ।
प्रायो अमी मुनिगणा भवदीयमुख्या
गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ ६ ॥

नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः
कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ।
सूक्तैश्च कोकिलगणा गृहमागताय
धन्या वनौकस इयान् हि सतां निसर्गः ॥ ७ ॥

श्रीशुक उवाच–
एवं वृन्दावनं कृष्णः श्रीमत् प्रीतमनाः पशून् ।
रेमे सञ्चारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ ८ ॥

क्वचिद् गायति गायत्सु मदान्धालिष्वनुव्रतैः ।
उपगीयमानचरितः सखिसङ्कर्षणान्वितः ॥ ९ ॥

क्वचिच्च कलहंसानामनु कूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥ १० ॥

मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् ।
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ ११ ॥

चकोरक्रौञ्चचक्राह्वभारद्वाजालिबर्हिणाम् ।
अनुरौति स्म सत्त्वानां भीतवद् व्याघ्रसिंहयोः ॥ १२ ॥

क्वचित् क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् ।
स्वयं विश्रामयत्यार्यं पादसंवाहनादिभिः ॥ १३ ॥

नृत्यतो गायतो वाऽपि वल्गतो युध्यतो मिथः ।
गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ॥ १४ ॥

क्वचित् पल्लवतल्पेषु नियुद्धश्रमकर्शितः ।
वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ १५ ॥

पादसंवाहनं चक्रुः केचित् तस्य महात्मनः ।
अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ १६ ॥

अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ।
गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥ १७ ॥

एवं निगूढात्ममतिः स्वमायया
गोपात्मजत्वं चरितैर्विडम्बयन् ।
रेमे रमालालितपादपल्लवो
ग्राम्यैः समं ग्राम्यवदीशचेष्टितम् ॥ १८ ॥

धन्येयमद्य धरणी तृणवीरुधस्त्वत्
पादस्पृशो द्रुमलताः करजाभिमृष्टाः ।
नद्योऽद्रयः खगमृगाः सदयावलोकै-
र्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ १९ ॥

श्रीदामा नाम गोपालो रामकेशवयोः सखा ।
सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥ २० ॥

रामराम महासत्त्व कृष्ण दुष्टनिबर्हण ।
इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलम् ॥ २१ ॥

फलानि तत्र भूरीणि पतन्ति पतितानि च ।
सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥

सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक् ।
आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥

तस्मात् कृतनराहाराद् भीतैर्नृभिरमित्रहन् ।
न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥

विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च ।
एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥ २५ ॥

प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम् ।
वाञ्छाऽऽस्ति महती राम गम्यतां यदि रोचते ॥ २६ ॥

एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ।
प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥ २७ ॥

बलः प्रविश्य बाहुभ्यां तालान् सम्परिकम्पयन् ।
फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥

फलानां पततां शब्दं निशम्यासुररासभः ।
अभ्यधावत् क्षितितलं सनगं परिकम्पयन् ॥ २९ ॥

समेत्य तरसाऽऽप्रत्यग् द्वाभ्यां पद्भ्यां बलं बली ।
निहत्योरसि काशब्दं मुञ्चन् पर्यसरत् खलः ॥ ३० ॥

पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ।
चरणावपरौ राजन् बलाय प्राक्षिपद् रुषा ॥ ३१ ॥

स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ।
चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥

तेनाहतो महातालः वेपमानो बृहच्छिराः ।
पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥ ३३ ॥

बलस्य लीलयोत्सृष्टखरदेहहताहताः ।
तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥

नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतप्रोतमिदं यस्मिन् तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥

ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ।
क्रोष्टारोऽभ्यद्रवन् सर्वे संरब्धा हतबान्धवाः ॥ ३६ ॥

तांस्तानापततः कृष्णो रामश्च नृप लीलया ।
गृहीतपश्चाच्चरणान् प्राहिणोत् तृणराजसु ॥ ३७ ॥

फलप्रकरसङ्कीर्णं दैत्यदेहैर्गतासुभिः ।
रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥

तयोस्तत् सुमहत्कर्म निशाम्य विबुधादयः ।
मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥

अथ तालफलान्यादन् मनुष्या गतसाध्वसाः ।
तृणं च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥

कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः ।
स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥

तं गोरजश्छुरितकुन्तलबद्धबर्ह-
वन्यप्रसूनरुचिरेक्षणचारुहासम् ।
वेणुं क्वणन्तमनुगैरुपगीतकीर्तिं
गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥ ४२ ॥

पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गै-
स्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं
सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥ ४३ ॥

तदा यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ।
यथाकालं यथाकामं व्यधत्तां परमाशिषः ॥ ४४ ॥

गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ।
नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥ ४५ ॥

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्येव तत् तदपि देव वरे त्वयीशे
प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ॥

कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्
नित्याप्रियैः पतिसुतादिभिरार्तिदैः किम् ।
तन्नः प्रसीद वरदेश्वर मा स्म छिन्द्या
आशां धृतां त्वयि परामरविन्दनेत्र ॥ ३३ ॥

चित्तं सखे न भवतापहृतं गृहेषु
यन्निर्विशत्युत करावपि गृह्यकृत्ये ।
पादौ पदं न चलतस्तव पादमूलाद्
यामः कथं व्रजमथो करवाम किं वा ॥ ३४ ॥

सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निम् ।
नो चेद् वयं विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग
स्थातुं त्वया विरहिता बत पारयामः ॥ ३६ ॥

श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम् ।
यस्याः स्ववीक्षणकृतोऽन्यसुरप्रयासः
तद्वद् वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥

तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम
तप्तात्मनां पुरुषभूषण देहि दास्यम् ॥ ३८ ॥

वीक्ष्यालकावृतमुखं तव कुण्डलश्री-
गण्डस्थलाधरसुधं हसितावलोकम् ।
दत्ताभयं च भुजदण्डयुगं विलोक्य
वक्षः श्रियैकरमणं च भवाम दास्यः ॥ ३९ ॥

का स्त्र्यङ्ग ते कलपदायतवेणुगीत
सम्मोहिताऽऽर्यचरितान्न चलेत् त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
यद् गोद्विजद्रुममृगाः पुलका न्यबिभ्रन् ॥ ४० ॥

व्यक्तं भवान् व्रजभयार्तिहरोऽभिजातो
देवो यथाऽऽदिपुरुषः सुरलोकगोप्ता ।
तन्नो निधेहि करपङ्कजमार्तबन्धो
तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥ ४१ ॥

श्रीशुक उवाच–
इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामो न्यरीरमत् ॥ ४२ ॥

ताभिः समेताभिरुदारचेष्टितः
प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।
उदारहासद्विजकुन्ददीधितिः
व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥

उपगीयमान उद्गायन् वनिताशतयूथपः ।
मालां बिभ्रद् वैजयन्तीं व्यचरन्मण्डयन् वनम् ॥ ४४ ॥

नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ।
जुष्टं तत्तरलानन्दिकुमुदामोदवायुना ॥ ४५ ॥

वाहुप्रसारपरिरम्भकरालको-
रुनीवीस्तनालभननर्मकराग्रपातैः ।
क्ष्वेलावलोकहसितैर्व्रजसुन्दरीणा-
मुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥

एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ।
स्वात्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं
(अधिक्याभ्यधिकं) भुवि ॥ ४७ ॥

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ।
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तविंशोऽध्यायः ॥

# अथ अष्टाविंशोऽध्यायः

श्रीशुक उवाच–
अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

गत्याऽनुरागस्मितरञ्जितेक्षितै-
र्मनोरमालापविहारविभ्रमैः ।
आक्षिप्तचित्ताः प्रमदा रमापते-
स्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥

गतिस्मितप्रेक्षणभाषणादिषु
प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।
असावहं त्वित्यबलास्तदात्मिका
नावेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥

गायन्त्य उच्चैरमुमेव सङ्गता
विचेरुरुन्मत्तकवद् वनाद् वनम् ।
पप्रच्छुराकाशवदन्तरं बहि-
र्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध किंशुक ।
नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥

कच्चित् कुरबकाशोक नाग पुन्नाग चम्पक ।
रामानुजो मानिनीनां दोग्धा नन्दस्य चात्मजः ॥ ६ ॥

कच्चित् तुलसि कल्याणि गोविन्दचरणप्रिये ।
सह त्वालिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥

मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके ।
प्रीतिं वा जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥

चूतप्रियालपनसासनकोविदारज-
म्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ।
येऽन्ये परार्थभविनो यमुनोपकूलाः
शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥

किं ते कृतं क्षिति तपो बत केशवाङ्घ्रि-
स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ।
अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा
आहो वराहवपुषः परिरम्भणेन ॥ १० ॥

अप्येणपत्न्युपगतः प्रिययेह गात्रै-
स्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः ।
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः
कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥

बाहुं प्रियांस उपधाय गृहीतपद्मो
रामानुजस्तुलसिकालिकुलैर्मदान्धैः ।
अन्वीयमान इह वस्तरवः प्रणामं
किं वाभिनन्दति चरन् प्रणयावलोकैः ॥ १२ ॥

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ।
नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ १४ ॥

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ।
लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः ॥ १५ ॥

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ १६ ॥

कस्याः पदानि चैतानि याताया नन्दसूनुना ।
अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ १७ ॥

अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः ।
यन्नो विहाय गोविन्दः प्रीतो यामनयद् रहः ॥ १८ ॥

धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ।
यान् ब्रह्मेशौ रमादेवी दधुर्मूर्ध्न्यघनुत्तये ॥ १९ ॥

तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ।
यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ॥ २० ॥

न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः ।
खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ २१ ॥

इमान्यधिकमग्नानि पदानि वहतो वधूम् ।
गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥ २२ ॥

अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ।
अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥ २३ ॥

प्रपदाक्रमणे एते पश्यतासकले पदे ।
केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥ २४ ॥

तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ।
रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥ २५ ॥

इत्येवं प्रलपन्त्यस्ताश्चेरुर्गोप्योविचेतनाः ।
कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ २६ ॥

यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने ।
सा च मेने तदाऽऽत्मानं वरिष्ठं सर्वयोषिताम् ॥ २७ ॥

हित्वा गोपीः कामयाना मामसौ भजतेऽति ह ।
ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥ २८ ॥

न पारयेऽहं चलितुं नय मां यत्र ते मनः ।
एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥ २९ ॥

ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ।
हा नाथ रमण प्रेष्ठ कासि कासि महाभुज ।
दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥ ३० ॥

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः ।
ददृशुः प्रियविश्लिष्टां मोहितां दुःखितां सतीम् ॥ ३१ ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ।
अवमानं च दौरात्म्याद् विस्मयं परमं ययुः ॥ ३२ ॥

गत्वा वनाद् वनं चन्द्रज्योत्स्ना यावद् विभाव्यते ।
तमःप्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ॥ ३३ ॥

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ।
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ३४ ॥

पुनः पुलिनमाविश्य कालिन्द्याः कृष्णभावनाः ।
समवेता जगुः कृष्णं तदागमकाङ्क्षिताः ॥ ३५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टाविंशोऽध्यायः ॥

## अथ एकोनत्रिंशोऽध्यायः

गोप्य ऊचुः–

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा साधु तत्र हि ।
दयित दृश्यतां त्वां दिदृक्षतां त्वयि धृतासवस्त्वा विचिन्वते ॥

व्रजजनार्तिहन् वीर योषितां निजजनस्मयध्वंसनस्मित ।
भज सखे भवे किङ्करीः स्म नो जलरुहाननं चारु दर्शयन् ॥

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥

विषजलाशयाद् व्यालराक्षसाद् वर्षमारुताद् वैद्युतानलात् ।
वृषमयाद् भयाद् विश्वतोमुखाद् वृषभ ते वयं रक्षिता मुहुः ॥

स खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ।
विखनसार्चितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥

विरचिताभयं वृष्णिवर्य ते शरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ६॥

प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ।
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्याययस्व नः ॥८॥

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९॥

प्रहसितं प्रिय प्रेमवीक्षितं विहरणं च ते ध्यानमङ्गलम् ।
रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥

चलसि यद् व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम् ।
तृणशिलाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥

दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ।
वनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि ॥

प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।
चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥

सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥१४॥

अटति यद् भवानह्नि काननं त्रुटि युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते जडवदीक्षतां पक्ष्मकृद् दृशाम् ॥

पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य ते ह्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥

रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरःश्रियो धाम वीक्ष्य ते मुहुरतिस्पृहा मुह्यते मनः ॥

व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
भज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनत्रिंशोऽध्यायः ॥

# अथ त्रिंशोऽध्यायः

श्रीशुक उवाच–
इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।
रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १ ॥

तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥

तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ।
उत्तस्थुर्युगपत् सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥

काचित् कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा ।
काचिद् दधार तद्बाहुमंसे चन्दनरूपितम् ॥ ४ ॥

काचिदञ्जलिनाऽगृह्णात् तन्वी ताम्बूलचर्वितम् ।
एका तदङ्घ्रिकमलं सन्तप्तस्तनयोरधात् ॥ ५ ॥

एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ।
प्रत्यैक्षत् कटाक्षेण निर्दष्टदशनच्छदा ॥ ६ ॥

अपराऽनिमिषं दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ।
आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥ ७ ॥

तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च ।
पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसम्प्लुता ॥ ८ ॥

सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ।
जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ९ ॥

ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ।
व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ १० ॥

ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ।
विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ११ ॥

शरच्चन्द्रांशुसन्दोहध्वस्तदोषातमः शिवम् ।
कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ १२ ॥

तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ।
स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे ॥ १३ ॥

तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः ।
चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥

सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवः ।
संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥

गोप्य ऊचुः–
भजतोऽनु भजन्त्येक एक एतद्विपर्ययम् ।
नोभयांश्च भजन्त्यन्य एतन्नो ब्रूहि साधु भोः ॥ १६ ॥

श्रीभगवानुवाच–
मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ १७ ॥

भजन्त्यभजतो ये वै करुणाः पितरो यथा ।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥

भजतोऽपि न वै केचिद् भजन्त्यभजतः कुतः ।
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥ १९ ॥

नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये ।
तथैव मत्तः फलसम्पदः स्युरुच्चावचाः कल्पतरोरिवार्थिनाम् ॥

यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यं निभृतो न वेद ।
एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ॥

मया परोक्षं भजता तिरोहितं मासूयितुं मार्हथ तत् प्रियं प्रियाः ॥

न पारयेऽहं निरवद्यसंयुजां
स्वसाधुकृत्यं विबुधायुषापि वः ।
या माभजन् दुर्जरगेहशृङ्खलाः
संवृश्च्य तद् वः प्रतियातु साधुना ॥ २२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे त्रिंशोऽध्यायः ॥

# अथ एकत्रिंशोऽध्यायः

श्रीशुक उवाच–

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ।
जहुर्विरहजं तापं तत्सङ्गोपचिताशिषः ॥ १ ॥

तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ।
स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ २ ॥

रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः ।
योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ।
प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥ ३ ॥

यन्मन्येरन् नभस्तावद् विमानशतसङ्कुलम् ।
दिवौकसां सदाराणामौत्सुक्यनिभृतात्मनाम् ॥ ४ ॥

ततो दुन्दुभयो नेदुः खात् पेतुः पुष्पवृष्टयः ।
जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥

वलयानां नूपुराणां किङ्किणीनां च योषिताम् ।
सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ६ ॥

तत्रापि शुशुभे ताभिर्भगवान् देवकीसुतः ।
मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥

पादन्यासैर्भुजविधुतिभिः सुस्मितैर्भ्रूविलासै-
र्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ।
स्विद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वो
गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥

उच्चैर्जगुः नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ।
कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥

काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः ।
उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति ।
तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ १० ॥

काचिद् रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ।
जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका ॥ ११ ॥

तत्रैका सगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥

कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् ।
गण्डं गण्डे सन्दधत्या आदात् ताम्बूलचर्वितम् ॥ १३ ॥

नृत्यन्ती गायती काचित् कूजन्नूपुरमेखला ।
पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात् स्तनयोः शिवम् ॥१४॥

गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकान्तवल्लभम् ।
गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥

कर्णोत्पलालकविटङ्ककपोलघर्म-
वक्त्रश्रियो वलयनूपुरघोषवाद्यैः ।
गोप्यः समं भगवता ननृतुः स्म केश-
स्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥

एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ।
रेमे रमेशो व्रजकामिनीभिर्यथा स्वतन्त्रः प्रतिबिम्बविभ्रमः ॥

तदङ्गसङ्गप्रमदाकुलेन्द्रियाः
केशान् दुकूलं कुचपट्टिकां वा ।
त्यक्तुं पतिं वोढुमलं व्रजस्त्रियो
विस्रस्तमाल्याभरणाः कुरूद्वह ॥ १८ ॥

कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ।
कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ १९ ॥

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ।
रराम भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥

तासां रतिविहारेण श्रान्तानां वदनानि सः ।
प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना ॥ २१ ॥

गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्-
गण्डश्रिया सुधितहासनिरीक्षणेन ।
मानं दधत्य ऋषभस्य जगुः कृतानि
पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥

ताभिर्युतः श्रममपोहितुमङ्गसङ्ग-
घृष्टस्रजः सकुचकुङ्कुमरञ्जितायाः ।
गन्धर्वपालिभिरनुद्रुत आविशद् वाः
श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ २३ ॥

सोऽन्तर्जले युवतिभिः परिषिच्यमानः
प्रेमेक्षितप्रहसिताभिरभिद्रुताङ्गः ।
वैमानिकैः कुसुमवर्षिभिरीड्यमानो
रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २४ ॥

ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ।
चचार भृङ्गप्रमदागणावृतो यथा मदच्युद् द्विरदः करेणुभिः ॥

एवं शशाङ्कांशुविराजिता निशाः
स सत्यकामोऽनुरतावलागणः ।
सिषेव आत्मन्यवरुद्धसौभगः सर्वाः
शरत्काव्यकथारसाश्रयाः ॥ २६ ॥

राजोवाच–
संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥

स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता ।
प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनम् ॥ २८ ॥

आत्मारामो यदुपतिः कृतवान् वै जुगुप्सितम् ।
किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥ २९ ॥

श्रीशुक उवाच–
धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥

नैतत् समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ।
नश्यत्याचरन् मौढ्याद् यथा रुद्रोऽब्धिजं विषम् ॥ ३१॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत् स्ववचोयुक्तं बुद्धिमान् नैतदाचरेत् ॥ ३२ ॥

कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्ययेण वानर्थो निरहङ्कारिणां प्रभो ॥ ३३ ॥

किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ।
ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥

यत्पादपङ्कजपरागनिषेवतृप्ता
योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमानाः
तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ॥ ३५ ॥

गोपीनां तत्पतीनां च सर्वेषामपि देहिनाम् ।
योऽन्तश्चरति सोऽध्यक्ष एष क्रीडनदेहभाक् ॥ ३६ ॥

अनुग्रहाय भक्तानां मानुषं देहमाश्रितः ।
भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत् ॥ ३७ ॥

नासूयन् नृप कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ॥

ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ।
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥ ३९ ॥

विक्रीडितं व्रजवधूभिरिदं च विष्णोः
श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद् यः ।
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकत्रिंशोऽध्यायः ॥

# अथ द्वात्रिंशोऽध्यायः

श्रीशुक उवाच–
एकदा देवयात्रायां गोपाला जातकौतुकाः ।
अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥ १ ॥

तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं प्रभुम् ।
आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥ २ ॥

गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ।
ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥

ऊषुः सरस्वतीतीरे जलं प्राश्य यतव्रताः ।
रजनीं तां महाभाग नन्दसुनन्दकादयः ॥ ४ ॥

कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः ।
यदृच्छयाऽऽगतो नन्दं शयानमुरगोऽग्रसीत् ॥ ५ ॥

स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् ।
सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥

तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः ।
ग्रस्तं च दृष्ट्वा सम्भ्रान्ताः सर्पं विव्यधुरुल्मुकैः ॥ ७ ॥
अलातैर्दह्यमानोऽपि नामुञ्चत् तमुरङ्गमः ।
तमस्पृशत् पदाऽभ्येत्य भगवान् सात्वतां पतिः ॥ ८ ॥
स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ।
भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥
तमपृच्छद् हृषीकेशः प्रणतं समुपस्थितम् ।
दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥
को भवान् परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ।
कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥ ११ ॥
सर्प उवाच–
अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः ।
श्रिया स्वरूपसम्पत्त्या विमानेनाचरन् दिशः ॥ १२ ॥
ऋषीन् विरूपानङ्गिरसः प्राहसं रूपदर्पितः ।
तैरिमां प्रापितो योनिं प्रलब्धः स्वेन पाप्मना ॥ १३ ॥
शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः ।
यदहं लोकगुरुणा पादस्पृष्टो हताशुभः ॥ १४ ॥
तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् ।
आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥ १५ ॥
प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते ।
अनुजानीहि मां कृष्ण सर्वलोकेश्वरेश्वर ॥ १६ ॥
ब्रह्मदण्डाद् विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात् ।
यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ।
सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ १७ ॥
श्रीशुक उवाच–
इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवाद्य च ।
सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः ॥ १८ ॥
निशाम्य कृष्णस्य तदात्मवैभवं
व्रजौकसो विस्मितचेतसस्ततः ।
समाप्य तस्मिन् नियमं पुनर्व्रजं
नृपाययुस्तत् कथयन्त आदृताः ॥ १९ ॥
कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः ।
विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥ २० ॥
उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः ।
स्वलङ्कृतानुलिप्ताङ्गौ स्रग्विणौ विरजाम्बरौ ॥ २१ ॥
निशामुखं मानयन्तावुदितोडुपतारकम् ।
मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥
जगतुः सर्वभूतानां मनःश्रवणमङ्गलम् ।
तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छनाम् ॥ २३ ॥
गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन् नृप ।
स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥
एवं विक्रीडतोः स्वैरं गायतोः सम्प्रमत्तवत् ।
शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥
तयोर्निरीक्षतोरेव तन्नाथं प्रमदाजनम् ।
क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥ २६ ॥
क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम् ।
यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥
मा भैष्टेत्यभयारावौ तालहस्तौ मनस्विनौ ।
आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥
स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ।
विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवनेच्छया ॥ २९ ॥
तमन्वधावद् गोविन्दो यत्र यत्र स धावति ।
जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बलः ॥ ३० ॥
इवाविदूर अभ्येत्य शिरस्तस्य दुरात्मनः ।
जहार मुष्टिनैवाङ्ग सहचूडामणिं विभुः ॥ ३१ ॥
शङ्खचूडं निहत्यैवं मणिमादाय भास्वरम् ।
अग्रजायाददात् प्रीत्या पश्यन्तीनां च योषिताम् ॥ ३२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे द्वात्रिंशोऽध्यायः ॥

# अथ त्रयस्त्रिंशोऽध्यायः

श्रीशुक उवाच–

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ।
कृष्णलीलां प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

गोप्य ऊचुः–

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥ २॥

व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥

हन्त चित्रमबलाः शृणुतेदं हारभास उरसि स्थितविद्युत् ।
नन्दसूनुरयमार्तजनानां शर्मदो यर्हि कूजितवेणुः ॥ ४ ॥

वृन्दशो व्रजवृषो मृगगावो वेणुवाद्यहृतचेतस एत्य ।
दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५॥

वर्हिणस्तवकधातुपलाशैर्वद्धमल्लपरिबर्हविडम्वः ।
कर्हिचित् सवल आलि सगोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥

तर्हि भग्नगतयः सरितो वै तत्पदाम्वुजरजोऽनिलनीतम् ।
स्पृहयतीर्वयमि वाबहुपुण्याः प्रेमवेपितभुजा स्मिमितापाः ॥

अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ।
वनचरो गिरितटेषु चरन्तीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥

वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९॥

दर्शनीय (तिलको वनमाला) विकचोत्पलमालादिव्यगन्ध-
तुलसीमधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्टमाद्रियद् यर्हि सन्धितवेणुः ॥ १० ॥

सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥

सहवलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
आह्वयद् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२॥

महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधे वितपत्रम् ॥

विविधगोपचरणेषु विदग्धो वेणुवाद्यमधुरां निजशिक्षाम् ।
तव सुतः सति यदाऽधरबिम्बे दत्तवेणुरनयत् स्वरजातीः ॥

सुमनसस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरगात्राः विस्मयं ययुरनिश्चिततत्त्वाः ॥

निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः प्रशमयन् खुरतोदं वर्ष्म धुर्यगतिरीरितवेणुः ॥१६॥

व्रजमितेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
व्रजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥

मणिधरः क्वचिदागमयन् गा मालया दयितगन्धतुलस्या ।
प्रणयिनोऽनुचरस्य कदांऽसे प्रक्षिपन् भुजमगायत यत्र ॥ १८

क्वणितवेणुरुप वञ्चितचित्ताः कृष्णमीयुरनु कृष्णगृहिण्यः ।
गुणगणार्णमनुगम्य हरिण्यो गोपिका इव विमुक्तगृहेशाः ॥

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २०॥

मन्दवायुरुपवात्यनुकूलं मानयन् मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतवलिभिः परिवव्रुः ॥ २१॥

वत्सलो व्रजगवां यदगाधो वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमपोह्य दिनान्ते गीतवेणुरनुगोद्धृतकीर्तिः ॥२२॥

उत्सवं श्रममपोह्य दृशीनामुद्वहन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥

मदविघूर्णितलोचन ईषन् मानदः स्वसुहृदां वनमाली ।
वदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥

यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥

श्रीशुक उवाच–

एवं व्रजस्त्रियो राजन् कृष्णलीला नु गायतीः ।
रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥

# अथ चतुस्त्रिंशोऽध्यायः

श्रीशुक उवाच–
अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ।
महीं महाककुत्कायः कम्पयन् खुरविक्षताम् ॥ १ ॥
रम्भमाणः खरतरं पदा च विलिखन् महीम् ।
उद्यम्य पुच्छमभ्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥
किञ्चित्किञ्चिच्छकृन्मुञ्चन् मूत्रयन् स्तब्धलोचनः ।
यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥ ३ ॥
पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै ।
निर्विशन्ति घना यस्य ककुद्यचलशङ्कया ॥ ४ ॥
तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ।
पशवो दुद्रुवुर्भीता राजन् सन्त्यज्य गोकुलम् ॥ ५ ॥
कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः ।
भगवानथ तद् वीक्ष्य गोकुलं भयविद्रुतम् ॥ ६ ॥
मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ।
गोपालैः पशुभिर्मन्द त्रासितैः किमसत्तम ॥ ७ ॥
बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ।
इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ।
सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ ८ ॥
सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ।
उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥
अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ।
कटाक्षिप्याद्रवत् तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ १० ॥
गृहीत्वा शृङ्गयोस्तं वा अष्टादशपदानि सः ।
प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा ॥ ११ ॥
सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः ।
आपतत् स्विन्नसर्वाङ्गो निःश्वसन् क्रोधमूर्च्छितः ॥ १२ ॥
तमापतन्तं स निगृह्य शृङ्गयोः
पदा समाक्रम्य निपात्य भूतले ।
निष्पीडयामास यथाऽऽर्द्रमम्बरं कृत्वा
विषाणे न जघान सोऽपतत् ॥ १३ ॥

असृग् वमन् मूत्रशकृत् समुत्सृजन्
क्षिपंश्च पादाननिमीलितेक्षणः ।
जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः
किरन्तो हरिमीडिरे सुराः ॥ १४ ॥
एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ।
विवेश भगवान् गोष्ठं गोपीनां नयनोत्सवः ॥ १५ ॥
अरिष्टे निहते गोष्ठे कृष्णेनाद्भुतकर्मणा ।
कंसाय प्राह भगवान् नारदो देवदर्शनः ॥ १६ ॥
यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ।
रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ।
न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः ॥ १७ ॥
निशम्य तद् भोगपतिः कोपात् प्रचलितेन्द्रियः ।
निशातमसिमादत्त वसुदेवजिघांसया ॥ १८ ॥
निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ।
ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया ॥ १९ ॥
प्रतियाते तु देवर्षौ कंस आशास्य केशिनम् ।
प्रेषयामास हन्येतां भवता रामकेशवौ ॥ २० ॥
ततो मुष्टिकचाणूरशलतोसलकादिकान् ।
अमात्यान् हस्तिपांश्चैव समाहूयाह भोजराट् ॥ २१ ॥
भोभो निशम्यतामेतद् वीर चाणूरमुष्टिकौ ।
नन्दव्रजे किलासाते सुतावानकदुन्दुभेः ॥ २२ ॥
रामकृष्णौ सुतौ मह्यं मृत्यू कालनिदर्शितौ ।
भवद्भ्यामिह सम्प्राप्तौ हन्येतां मल्ललीलया ॥ २३ ॥
मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः ।
पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥ २४ ॥
महामात्र निबोधेदं वचो मम महामते ।
गजः कुवलयापीडः प्रभिन्नकरटामुखः ॥ २५ ॥
संस्थाप्यो द्वारि रङ्गस्य करारोपितमुद्गरः ।
तेन ते तत्र हन्तव्यौ सुतावानकदुन्दुभेः ॥ २६ ॥

सोऽप्याकुलमतिः प्राह निहन्तव्यौ कथं मया ।
स्वस्रीयौ भोजराजस्य कंसस्य जगतीपतेः ॥ २७ ॥

इत्युक्तस्तेन कंसस्तु महामात्रेण दुर्मतिः ।
उवाच भूयो वचनं समेतान् श्रावयन् नृप ॥ २८ ॥

कंस उवाच–

शृणुध्वमेतद् वचनं मयोदितं निशाम्य सर्वे हृदि धारयन्तु तत् ।
येनाहमेतेष्वसुहृत्त्वमादितश्चरामि बन्धुष्वपि तस्य कारणम् ॥

माता मम महाभागा कदाचित् कमलेक्षणा ।
विचचार गृहोद्याने मन्दमारुतवीचिते ॥ ३० ॥

प्रोत्फुल्लाशोकवकुलपूगपुन्नागशोभिते ।
भ्रमद्भ्रमरसङ्घाते कूजत्कोकिलसङ्कुले ॥ ३१ ॥

नृत्यच्छिखण्डिनिवहे मर्कटाटोपसुन्दरे ।
वसन्तसमये रम्ये सालमण्डलमण्डिते ॥ ३२ ॥

चरन्ती तत्र मे माता चिन्तयामास सुव्रता ।
भर्तारं कामसन्तप्ता ऋतुस्नाता स्वलङ्कृता ॥ ३३ ॥

तत्रैव कश्चिद् गन्धर्वो द्रुमिलो नाम नामतः ।
चरन्नन्तर्हितः काले दृष्ट्वा तामेकचारिणीम् ॥ ३४ ॥

विज्ञाय चिन्तितं तस्याः सर्वसत्त्वाशयार्थवित् ।
उग्रसेनवपुर्बिभ्रत् सस्मितालापवीक्षितम् ॥ ३५ ॥

तामाससाद कामार्तः कामयानां पतिव्रताम् ।
अजानमाना साऽभ्येत्य रेमे तेन समं वने ॥ ३६ ॥

सा तं विदित्वा रमणेतरं सती नितान्तखेदाविललोचनाशया ।
उवाच कस्त्वं कितवार्यगर्हितं दुरात्मना येन कृतं त्वयेदृशम् ॥

इति ब्रुवन्तीं परिसान्त्वयन् शनैः स दीर्घबाहुर्द्रुमिलोऽभ्यभाषत ।
वयं हि गन्धर्वकुलोद्भवाः प्रिये गीर्वाणतुल्यामरवल्लभानुगाः ॥

भवादृशीनां मनुजाङ्गनानां जानीहि भद्रे सुलभा वयं न च ।
जराविनाशाद्यखिलाधिभागिनां नृणां सुराणां महदन्तरं प्रिये ॥

इति ब्रुवन्तं सा भूयः प्राह क्रोधाकुलेन्द्रिया ।
किं मां सान्त्वयसे भूयः कृत्वेत्थं दुष्टचेष्टितम् ॥ ४० ॥

इमानतिक्रम्य जलाग्निमेदिनीसमीरणाकाशनिशेशसूर्यान् ।
दिक्कालधर्मानवधीर्य येन दुरात्मनेत्थं मलिनीकृताऽहम् ॥

गजेनेव मदान्धेन पद्मिनी वनमध्यगा ।
विशृङ्खलेन विमला येनाहं मलिनीकृता ।
स त्वं किमिति मां भूयः सान्त्वयस्यमराधम ॥ ४२ ॥

इति ब्रुवन्तीं प्रोवाच स भूयः शापशङ्कितः ।
अनुलोमः सरोजाक्षि मनुष्यासु दिवौकसाम् ॥ ४३ ॥

नराणां देवकान्तासु प्रतिलोमो हि सङ्गमः ।
जानीहि नाहमागस्कृत् तेन पङ्कजगन्धिनि ॥ ४४ ॥

तस्मात् ते जायते पुत्रो मद्वीर्यं न वृथा भवेत् ।
श्रीमान् धीमान् महोत्साहो न मे वाग् जायते मृषा ॥४५॥

इत्येवं वादिनं क्रुद्धा माता मम यशस्विनी ।
प्राह सन्त्यज्य सन्तप्ता पातिव्रत्यं सुदुर्लभम् ॥ ४६ ॥

निस्सेतोर्भिन्नवृत्तस्य पापस्योन्मार्गवर्तिनः ।
क्रूरस्ते तनयो भूयात् साहसी निर्दयोऽघृणः ॥ ४७ ॥

नानुग्राह्यो देवतानां द्विजानां च तपस्विनाम् ।
इत्थं वदन्त्यां तस्यां स क्रुद्धायां शापशङ्कितः ।
तावकानां भवेच्छत्रु(स्तत्रैवा)रित्युक्त्वाऽन्तरधीयत ॥ ४८ ॥

गते तस्मिन् महोद्यानान्माता मम तपस्विनी ।
केनाप्यज्ञातवृत्तान्ता गृहानेवाभ्यपद्यत ॥ ४९ ॥

ततः सा गर्भमालभ्य कालेनैव सुषाव माम् ॥ ५० ॥

इति मे नारदः प्राह कदाचिद् भगवान् ऋषिः ।
ततः प्रभृत्यहं द्वेष्मि तानेतान् बन्धुदुर्जनान् ॥ ५१ ॥

यूयं तत्र प्रमाणं हि द्विषन्त्येतेऽपि मां सदा ।
उग्रसेनं च दुर्बुद्धिमाहुकं च दुराशयम् ॥ ५२ ॥

वसुदेवं च कितवमन्यांश्च तदुपाश्रयान् ।
हत्वा न जायते दोषो मम गन्धर्वजन्म नः ॥ ५३ ॥

तेनादेक्ष्यामि पुरुषं हन्येतामिति तावहम् ।
ताभ्यां हताभ्यां बालाभ्यां कुञ्जरेण बलीयसा ॥ ५४ ॥

कृत्वा पारत्रिकीं पूजां यान्तु तत्पदवीमिमे ।
वसुदेवोग्रसेनौ च तथाऽन्यौ नन्ददेवकौ ॥ ५५ ॥

गोपाला यादवाश्चैव ये चान्येताननुव्रताः ।
पश्यन्तु विवृतैर्नेत्रैर्हन्यमानौ स्वदारकौ ॥ ५६ ॥

आहूयन्तां जनपदाः पश्यन्तु मम पौरुषम् ।
महामात्र त्वया भद्र रङ्गद्वार्यपनीयताम् ॥ ५७ ॥
द्विपः कुवलयापीडो जहि तेन ममाहितौ ।
आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ ५८ ॥
विशसन्तु पशून् मेध्यान् भूतराजाय मीढुषे ।
इत्याज्ञाप्यार्थतन्त्रज्ञमाहूय यदुपुङ्गवम् ।
गृहीत्वा पाणिना पाणिं तत्राक्रूरमुवाच ह ॥ ५९ ॥
भो भो दानपते मह्यं क्रियतां मैत्रमादृतः ।
नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ ६० ॥
अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम् ।
यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद् विभुः ॥ ६१ ॥
गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः ।
आसाते ताविहानेन रथेनानय माचिरम् ॥ ६२ ॥
निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः ।
तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः ॥ ६३ ॥
घातयिष्य इहानीतौ कालकल्पेन हस्तिना ।
यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ६४ ॥
तयोर्निहतयोस्तप्तान् वसुदेवपुरोगमान् ।
तद्बन्धून् निहनिष्यामि वृष्णिभोजदशार्हकान् ॥ ६५ ॥
उग्रसेनं च पितरं स्थविरं राज्यकामुकम् ।
तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ६६ ॥
ततश्चैषा मही मित्र भवित्री नष्टकण्टका ।
जरासन्धो मम गुरुर्द्विविदो दयितः सखा ॥ ६७ ॥
शम्बरो नरको बाणो मय्येव कृतसौहृदाः ।
तैरहं सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥ ६८ ॥
एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ ।
धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥ ६९ ॥
अक्रूर उवाच–
राजन् मनीषितं सम्यक् तव चावद्यमार्जनम् ।
सिद्ध्यसिद्ध्योः समं कुर्याद् दैवं हि फलभावनम् ॥ ७० ॥
मनोरथान् करोत्युच्चैर्जनो दैवहतानपि ।
युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥ ७१ ॥
श्रीशुक उवाच–
एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः ।
प्रविवेश गृहं कंसस्तथाऽक्रूरः स्वमालयम् ॥ ७२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुस्त्रिंशोऽध्यायः ॥

# अथ पञ्चत्रिंशोऽध्यायः

श्रीशुक उवाच–
केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन् मनोजवः ।
सटावधूताभ्रविमानसङ्कुलं कुर्वन् नभो हेषितभीषिताखिलः ॥
विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपमः ।
दुराशयः कंसहितं चिकीर्षुर्व्रजं स नन्दस्य जगाम कम्पयन् ॥
तं त्रासयन्तं भगवान् स्वगोकुलं स्वहेषितैर्वालविघूर्णिताम्बुदम् ।
आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत्स व्यनदन् मृगेन्द्रवत् ॥
स तं निशम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ।
जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः ॥
तद् वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ।
सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥
स लब्धसञ्ज्ञः पुनरुत्थितो मुखं
व्यादाय केशी तरसाऽऽपतद् हरिम् ।
सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्
प्रवेशयामास यथोरगं बिले ॥ ६ ॥
दन्ता निपेतुर्भगवद्भुजस्पृशस्ते
केशिनस्तप्तमयस्पृशो यथा ।
बाहुश्च तद्देहगतो महात्मनो
यथाऽऽमयः संववृधे उपेक्षितः ॥ ७ ॥
समेधमानेन स कृष्णबाहुना
निरुध्यवायुश्चरणांश्च विक्षिपन् ।
प्रस्विन्नगात्रः परिवृत्तलोचनः
पपात लण्डं विसृजन् क्षितौ व्यसुः ॥ ८ ॥

तद्देहतः कर्कटिकाफलोपमाद्
व्यसोरपाकृष्य भुजं महाभुजः ।
अविस्मितोऽयं निहतारिरुत्सियैः
प्रसूनवर्षैर्वर्षद्भिरिडितः ॥ ९ ॥

देवर्षिरुपसङ्गम्य भागवतप्रवरो नृप ।
कृष्णमक्लिष्टकर्माणं रहसीदमभाषत ॥ १० ॥

कृष्णकृष्णाप्रमेयात्मन् योगेश जगदीश्वर ।
वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ ११ ॥

त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ।
गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ १२ ॥

आत्मनात्माश्रयः पूर्वं मायया सृजसे गुणान् ।
तैरिदं सत्यसङ्कल्पः सृजस्यत्स्यवसीश्वरः ॥ १३ ॥

स त्वं भूभारभूतानां दैत्यप्रमथरक्षसाम् ।
अवतीर्णो विनाशाय साधूनां रक्षणाय च ॥ १४ ॥

दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः ।
अस्य हेषितसंत्रस्तास्त्यजन्त्यनिमिषा दिवम् ॥ १५ ॥

चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिपान् ।
कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १६ ॥

तस्यानु शङ्खयवनमुराणां नरकस्य च ।
पारिजातस्य हरणमिन्द्रस्य च पराजयम् ॥ १७ ॥

उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् ।
नृगस्य मोक्षणं पापाद् द्वारकायां जगत्पते ॥ १८ ॥

स्यमन्तकस्य च मणेरादानं सह भार्यया ।
मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामतः ॥ १९ ॥

पौण्ड्रकस्य वधं पश्चात् काशिपुर्याश्च दीपनम् ।
दन्तवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ २० ॥

यानि चान्यानि वीर्याणि द्वारकामावसन् भवान् ।
कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥ २१ ॥

अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ।
अक्षोहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २२ ॥

विशुद्धविज्ञानघनं स्वसंस्थया
समाप्तसर्वार्थममोघवर्तिनम् ।
स्वतेजसा नित्यनिवृत्तमाया-
गुणप्रवाहं भगवन्तमीमहि ॥ २३ ॥

त्वामीश्वरं स्वाश्रयमात्ममायया
विनिर्मिताशेषविशेषकल्पनम् ।
क्रीडार्थमाद्यन्तमनुष्यविग्रहं
नतोऽस्मि धुर्यं यदुवृष्णिसात्त्वताम् ॥ २४ ॥

श्रीशुक उवाच–
एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः ।
प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥ २५ ॥

भगवानपि गोविन्दो हत्वा केशिनमाहवे ।
पशूनपालयत् पालैः प्रीतैर्व्रजसुखावहः ॥ २६ ॥

एकदा ते पशून् पालाश्चारयन्तोऽद्रिसानुषु ।
चक्रुर्निलायनक्रीडां चोरपालापदेशतः ॥ २७ ॥

तत्रासन् कतिचिच्चोराः पालाश्च कतिचिन्नृप ।
मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २८ ॥

मयपुत्रो महामायो व्योमो गोपालरूपधृक् ।
मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २९ ॥

गिरिदर्यां विनिक्षिप्य नीतंनीतं महासुरः ।
शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः ॥ ३० ॥

तस्य तत् कर्म विज्ञाय कृष्णः शरणदः सताम् ।
गोपान् नयन्तं जग्राह वृकं हरिरिवौजसा ॥ ३१ ॥

स निजं रूपमास्थाय गिरीन्द्रसदृशं बली ।
इच्छन् विमोक्तुमात्मनं नाशक्नोद् ग्रहणातुरः ॥ ३२ ॥

तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ।
पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३३ ॥

गुहापिधानं निर्भिद्य गोपान् निस्सार्य कृच्छ्रतः ।
स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥ ३४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चत्रिंशोऽध्यायः ॥

# अथ षट्त्रिंशोऽध्यायः

श्रीशुक उवाच–
अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ।
उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥

गच्छन् पथि महाभागो भगवत्यम्बुजेक्षणे ।
भक्तिं परामुपगत एवमेतदचिन्तयत् ॥ २ ॥

अक्रूर उवाच–
किं मयाऽऽचरितं भद्रं किं तप्तं परमं तपः ।
किं वाथाप्यर्हते दत्तं यद् द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥

ममैतद् दुर्लभं मन्ये उत्तमश्लोकदर्शनम् ।
विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥

मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् ।
ह्रियमाणः कालनद्या क्वचित् तरति कश्चन ॥ ५ ॥

ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥

कंसो बताद्याकृत मेऽत्यनुग्रहं
द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ।
कृतावतारस्य दुरत्ययं तमः
पूर्वेऽतरन् यन्नखमण्डलत्विषा ॥ ७ ॥

यदर्चितं ब्रह्मभवादिभिः सुरैः
श्रिया च देव्या मुनिभिः ससात्वतैः ।
गोचारणायानुचरैश्चरद् वने
यद् गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥

द्रक्ष्यामि नूनं सुकपोलनासिकं
स्मितावलोकारुणकञ्जलोचनम् ।
मुखं मुकुन्दस्य गुडालकावृतं
प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥ ९ ॥

अप्यद्य विष्णोर्मनुजत्वमीयुषो
भारावताराय भुवो निजेच्छया ।
लावण्यधाम्नो भवितोपलम्भनं
मह्यं न नु स्यात् फलमञ्जसा दृशः ॥ १० ॥

य ईक्षिताऽहंरहितोऽप्यसत्सतोः
स्वतेजसाऽपास्ततमोभिदाभ्रमः ।
स्वमाययाऽऽत्मन् रचितैस्तदीक्षया
प्राणाक्षधीभिः सदनेष्वभीयते ॥ ११ ॥

यस्याखिलामीवहभिः सुमङ्गलै-
र्वाचो विमिश्रा गुणकर्मजन्मभिः ।
प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्
यास्तद्विरक्ताः शवशोभना मताः ॥ १२ ॥

स चावतीर्णः किल सात्वतान्वये
स्वसेतुपालामरवर्यशर्मकृत् ।
यशो वितन्वन् व्रज आस्त ईश्वरो
गायन्ति देवा यदशेषमङ्गलम् ॥ १३ ॥

तं त्वद्य नूनं महतां गतिं गुरुं
त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ।
रूपं दधानं श्रिय ईप्सितास्पदं
द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥ १४ ॥

अथावरूढः सपदीशयो रथात्
प्रधानपुंसोश्चरणं स्वलब्धये ।
धिया धृतं योगिभिरप्यहं ध्रुवं
नमस्य आभ्यां च सखीन् वनौकसः ॥ १५ ॥

अप्यङ्घ्रिमूले पतितस्य मे विभुः
शिरस्यधास्यन्निजहस्तपङ्कजम् ।
दत्ताभयं कालभुजङ्गरंहसा
प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥

समर्हणं यत्र निधाय कौशिक-
स्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ।
यद् वा विहारे व्रजयोषितां श्रमं
स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥ १७ ॥

न मय्युपैष्यत्यरिबुद्धिमच्युतः
कंसस्य दूतः प्रहितोऽपि विश्वदृक् ।
योऽन्तर्बहिश्चेतस एतदीहितं
क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥

अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिं
मामीक्षिता सस्मितमार्द्रया दृशा ।
सपद्यपध्वस्तसमस्तकिल्बिषो
वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥ १९ ॥

सुहृत्तमं ज्ञातिमनन्यदैवतं
दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ।
आत्मा हि तीर्थीक्रियते तदैव मे
बन्धश्च कामात्मक उच्छ्वसित्यतः ॥ १९ ॥

लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं
मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ।
तदा वयं जन्मभृतो महीयसा
नैवादृतो यो धिगमुष्य जन्म तत् ॥ २० ॥

न तस्य कश्चिद् दयितः सुहृत्तमो
न वाऽप्रियो द्वेष्य उपेक्ष्य एव च ।
तथापि भक्तान् भजते यथा यथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ २१ ॥

किञ्चाग्रजो माऽवनतं यदूत्तमः
स्मयन् परिष्वज्य गृहीतमञ्जलौ ।
गृहं प्रवेश्याप्तसमस्तसत्कृतं
सम्प्रक्ष्यते कंसकृतं स्वबन्धुषु ॥ २२ ॥

श्रीशुक उवाच–
इति सञ्चिन्तयन् कृष्णं श्वफल्कतनयोऽध्वनि ।
रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥ २३ ॥

पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ।
ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥

तद्दर्शनाह्लादविवृद्धसम्भ्रमः प्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षणः ।
रथादवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥

ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ।
पीतनीलाम्बरधरौ शारदाम्बुरुहेक्षणौ ॥ २६ ॥

किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ।
सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २७ ॥

ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् ।
शोभयन्तौ महात्मानौ सानुक्रोशस्मितेक्षणौ ॥ २८ ॥

उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ।
पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ २९ ॥

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ।
अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३० ॥

दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया ।
यथा मरकतः शैलो रौप्यश्च कनकाञ्चितौ ॥ ३१ ॥

रथात् तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ।
पपात चरणोपान्ते दण्डवद् रामकृष्णयोः ॥ ३२ ॥

भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः ।
पुलकाञ्चित औत्कण्ठ्यात् स्वाख्याने नाशकन्नृप ॥ ३३ ॥

भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना ।
परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥ ३४ ॥

सङ्कर्षणश्च प्रणतमुपगुह्य महामनाः ।
गृहीत्वा पाणिना पाणिमनयत् सानुजो गृहम् ॥ ३५ ॥

पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य परमासनम् ।
प्रक्षाल्य विधिवत् पादौ मधुपर्कार्हमाहरत् ॥ ३६ ॥

निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः ।
अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद् विभुः ॥ ३७ ॥

तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ।
मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात् पुनः ॥ ३८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षट्त्रिंशोऽध्यायः ॥

# अथ सप्तत्रिंशोऽध्यायः

श्रीशुक उवाच–
सुखोपविष्टः पर्यङ्के रामकृष्णानुमोदितः ।
लेभे मनोरथान् सर्वान् पथि यान् स चकार ह ॥ १ ॥

किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।
तथापि तत्परा राजन् नैव वाञ्छन्ति किञ्चन ॥ २ ॥

सायन्तनाशनं कृत्वा भगवान् देवकीसुतः ।
सुहृत्सु वृत्तिं कंसस्य पप्रच्छान्यच्चिकीर्षितम् ॥ ३ ॥

पृष्टो भगवता सर्वं वर्णयामास माधवः ।
वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ४ ॥

यत्सन्देशो यदर्थे वा दूतः सम्प्रेषितः स्वयम् ।
यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः ॥ ५ ॥

श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा ।
प्रहस्य नन्दं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥ ६ ॥

गोपान् समादिशत् सोऽपि गृह्यतां सर्वगोरसः ।
उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ७ ॥

यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् ।
द्रक्ष्यामः सुमहत् पर्व यान्ति जानपदाः किल ॥ ८ ॥

एवमाघोषयत् क्षत्रा नन्दगोपः स्वगोकुले ।
गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिताशयाः ॥ ९ ॥

रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ।
काश्चित् तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ १० ॥

स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन ।
अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ॥ ११ ॥

नाभ्यजानन्निमं लोकमात्मलोकं गता इव ।
स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः ॥ १२ ॥

हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ।
गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ॥ १३ ॥

शोकापहानि नर्माणि प्रोद्दामचरितानि च ।
चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः ॥ १४ ॥

समेताः सङ्घशः प्रोचुरश्रुमुख्योऽच्युताशयाः ॥ १५ ॥

गोप्य ऊचुः—

अहो विधातस्तव न क्वचिद् दया
संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं
विचेष्टितं तेऽर्भकचेष्टितं यथा ॥ १६ ॥

यस्त्वं प्रदर्श्यासितकुन्तलावृतं
मुकुन्दवक्त्रं सुकपोलमुन्नसम् ।
शोकापनोदस्मितलेशसुन्दरं
करोषि पारोक्ष्यमसाधु ते कृतम् ॥ १७ ॥

क्रूरस्त्वमक्रूरसमाख्यया स्मृतः
चक्षुर्हि दत्तं हरसे बताज्ञवत् ।
येनैकदेशेऽखिलसर्गसौष्ठवं
तदीयमद्राक्ष्म वयं मधुद्विषः ॥ १८ ॥

न नन्दसूनुः क्षणभङ्गसौहृदः
समीक्षते नः स्वकृतातुरा अपि ।
विहाय गेहान् स्वजनान् सुतान् पतीन्
स्वदास्यमद्धोपगता नवप्रियाः ॥ १९ ॥

सुखं प्रभाता रजनीयमाशिषः
सत्या बभूवुः पुरयोषितां ध्रुवम् ।
याः संप्रविष्टस्य मुखं व्रजस्पतेः
पश्यन्त्यपाङ्गोत्कलितस्मितासवम् ॥ २० ॥

तासां मुकुन्दो मधुमञ्जुभाषितै-
र्गृहीतचित्तः परवान् मनस्व्यपि ।
कथं पुनर्नः प्रतियास्यतेऽबला
ग्राम्या अलज्जाः स्मितविभ्रमद्भ्रुवः ॥ २१ ॥

अद्य ध्रुवं तत्र दृशो महोत्सवो
दाशार्हभोजान्धकवृष्णिसात्वताम् ।
महोत्सवं श्रीरमणं गुणास्पदं
द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम् ॥ २२ ॥

मैतद्विधस्याकरुणस्य नाम
भूदक्रूर इत्येतदतीवदारुणः ।
योऽसावनाश्वास्य सुदुःखितं जनं
प्रियात् प्रियं नेष्यति पारमध्वनः ॥ २३ ॥

अनार्द्रधीरेष समास्थितो रथं
तमन्वमी च त्वरयन्ति दुर्मदाः ।
गोपा अनोभिः स्थविरैरुपेक्षितं
दैवं च नोऽद्य प्रतिकूलमीहते ॥ २४ ॥

निवारयामः समुपेत्य माधवं
किं नोऽकरिष्यन् कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद्
दैवेन विध्वंसितदीनचेतसाम् ॥ २५ ॥

यस्यानुरागललितस्मितवल्गुमन्त्र-
लीलावलोकपरिरम्भणरासगोष्ठ्याम् ।
नीताः स्म नः क्षणमिव क्षणदा विना तं
गोप्यः कथं न्वतितरेम तमोऽदुरन्तम् ॥ २६ ॥

योऽह्नः क्षये व्रजमनन्तसखः परीतो
गोपैर्विशन् खुररजश्छुरितालकस्रक् ।
वेणुं क्वणन् स्मितकटाक्षनिरीक्षणेन चित्तं
क्षिणोति तमृतेऽम्ब कथं भवेम ॥ २७ ॥

श्रीशुक उवाच–
एवं ब्रुवाणा विरहातुरा भृशं
व्रजस्त्रियः कृष्णनिषक्तमानसाः ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं
गोविन्द दामोदर माधवेति ॥ २८ ॥

स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ ।
अक्रूरश्चोदयामास कृतमैत्र्यादिको रथम् ॥ २९ ॥

गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः ।
आदायोपायनं भूरि कुम्भान् गोरससम्भृतान् ॥ ३० ॥

गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः ।
प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥ ३१ ॥

तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ।
सान्त्वयामास संप्रेष्यैरायास्य इति दौत्यकैः ॥ ३२ ॥

यावदालक्ष्यते केतुर्यावद् रेणू रथस्य च ।
अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे ॥ ३३ ॥

ता निराशा निववृतुर्गोविन्दविनिवर्तने ।
विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् ॥ ३४ ॥

भगवानपि सम्प्राप्तो रामाक्रूरौ तथा नृप ।
रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ३५ ॥

तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् ।
वृक्षखण्डमुपव्रज्य सरामो रथमाविशत् ॥ ३६ ॥

अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि ।
कालिन्द्या ह्रदमागम्य स्नानं विधिवदाचरन् ॥ ३७ ॥

निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् ।
तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ३८ ॥

तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः ।
तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ॥ ३९ ॥

तत्रापि च यथापूर्वमासीनौ पुनरेव सः ।
न्यमज्जद् दर्शनं मेने मृषा किं सलिले तयोः ॥ ४० ॥

भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् ।
सिद्धैर्भुजङ्गपतिभिरसुरैर्नतकन्धरैः ॥ ४१ ॥

सहस्रशिरसं देवं सहस्रफणमौलिनम् ।
नीलाम्बरं बिसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥ ४२ ॥

तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् ।
पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ४३ ॥

चारुप्रसन्नवदनं चारुहासनिरीक्षणम् ।
सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४४ ॥

प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् ।
कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥ ४५ ॥

बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ।
चारुजानुयुगं चारुजङ्घायुगलसंयुतम् ॥ ४६ ॥

तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् ।
नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥ ४७ ॥

महार्हमणिविभ्राजत्किरीटकटकाङ्गदैः ।
कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ४८ ॥

भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ४९ ॥

सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ।
सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ५० ॥

प्रह्रादनारदवसुप्रमुखैर्भागवतोत्तमैः ।
स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥ ५१ ॥

श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥ ५२ ॥

विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ।
हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५३ ॥

गिरा गद्गदयाऽस्तौषीत्सत्त्वमालम्ब्य सात्वतः ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुटः शनैः ॥ ५४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तत्रिंशोऽध्यायः ॥

# अथ अष्टत्रिंशोऽध्यायः

श्रीशुक उवाच–
एवं दृष्ट्वा तमक्रूरः प्रसन्नहृदयेन्द्रियः ।
तुष्टाव पुण्डरीकाक्षं भक्त्याऽवनतकन्धरः ॥ १ ॥

अक्रूर उवाच–
नतोऽस्म्यहं त्वाऽखिलहेतुभूतं
नारायणं पूरुषमादिमव्ययम् ।
यन्नाभिजातादरविन्दकोशाद्
ब्रह्माऽऽविरासीद् यत एष लोकः ॥ २ ॥

भूस्तोयमग्निः पवनः खमादि-
र्महानजादिर्मन इन्द्रियाणि ।
सर्वेन्द्रियार्था विबुधाश्च सर्वे
ये हेतवस्ते जगतोऽङ्गभूताः ॥ ३ ॥

नैते स्वरूपं विदुरात्मनस्ते
अजादयोऽन्यात्मतया गृहीताः ।
अजोऽनुबद्धः स गुणैरजाया
गुणात् परं वेद न ते स्वरूपम् ॥ ४ ॥

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् ।
साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥ ५ ॥

त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ।
यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ६ ॥

एके त्वखिलकर्माणि सन्न्यस्योपशमं गताः ।
ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ॥ ७ ॥

अन्ये तु संस्कृतात्मानो विधिना विहितेन वै ।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥ ८ ॥

त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचार्यविभेदेन भगवन् समुपासते ॥ ९ ॥

सर्व एव यजन्ति त्वां सर्वदेवमहेश्वरम् ।
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥ १० ॥

यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिता विभो ।
विशन्ति सर्वतः सिन्धुं तद्वत् त्वां गतयोऽन्ततः ॥ ११ ॥

सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः ।
तेषु हि प्राकृताः प्रोता आब्रह्म स्थावरादयः ॥ १२ ॥

तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये
सर्वात्मने सर्वधियां च साक्षिणे ।
गुणप्रवाहोऽयमविद्यया कृतः
प्रवर्तते देवनृतिर्यगात्मसु ॥ १३ ॥

अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं
सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवः
कुक्षिर्मरुत् प्राणबलं प्रकल्पितम् ॥ १४ ॥

रोमाणि वृक्षौषधयः शिरोरुहा
मेघाः परस्यास्थिनखानि तेऽद्रयः ।
निमेषणं रात्र्यहनी प्रजापति-
र्मेढ्रं तु वृष्टिस्तव वीर्यमिष्यते ॥ १५ ॥

त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता
लोकाः सपाला बहुजीवसङ्कुलाः ।
यथा जले सञ्जिहते जलौकसो-
ऽप्युदुम्बरे वा मशका मनोमये ॥ १६ ॥

यानियानीह रूपाणि क्रीडनार्थं बिभर्षि हि ।
तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १७ ॥

नमः कारणमत्स्याय प्रलयाब्धिचराय च ।
हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १८ ॥

अकूपाराय बृहते नमो मन्दरधारिणे ।
क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥ १९ ॥

नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ।
वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ २० ॥

नमो भृगूणाम्पतये दृप्तक्षत्रवनच्छिदे ।
नमस्ते रघुवर्याय रावणान्तकराय च ॥ २१ ॥

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ २२ ॥

नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ।
म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २३ ॥

भगवन् जीवलोकोऽयं मोहितस्तव मायया ।
अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ २४ ॥

अहं चात्मात्मजागारदारार्थस्वजनादिषु ।
भ्रमामि स्वप्नकल्पेषु मूढः सुखधिया विभो ॥ २५ ॥

अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ।
द्वन्द्वारामस्तमोविष्टो न जाने त्वां जगत्पते ॥ २६ ॥

यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ।
अभ्येति मृगतृष्णां वै हित्वाऽहं त्वा पराङ्मुखः ॥ २७ ॥

नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ।
रोद्धुं प्रमाथिभिः स्वाक्षैर्ह्रियमाणमितस्ततः ॥ २८ ॥

सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं
यच्चाप्यहं भवदनुग्रहमीश मन्ये ।
पुंसो भवेद् यर्हि संसरणापवर्ग-
स्त्वय्यब्जनाभ सदुपासनयाऽऽमतिः स्यात् ॥ २९ ॥

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ।
पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ ३० ॥

नमस्ते वासुदेवाय सर्वभूतक्षयाय च ।
हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥ ३१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टत्रिंशोऽध्यायः ॥

# अथ एकोनचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः ।
भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥ १ ॥

सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्य सत्वरः ।
कृत्वा चावश्यकं सर्वं विस्मितो रथमाविशत् ॥ २ ॥

तमपृच्छद् हृषीकेशः किं ते दृष्टमिहाद्भुतम् ।
भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥

अक्रूर उवाच–
अद्भुतानीह यावन्ति भूमौ वियति वा जले ।
त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥ ४ ॥

यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले
तं त्वाऽनुपश्यतो ब्रह्मन् किं मे दृष्टमिहाद्भुतम् ॥ ५ ॥

श्रीशुक उवाच–
इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः ।
मथुरामनयद् रामं कृष्णं चैव दिनात्यये ॥ ६ ॥

मार्गे ग्रामजना राजंस्तत्र तत्रोपसङ्गताः ।
वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥ ७ ॥

तावद् व्रजौकसस्तात नन्दगोपादयोऽग्रतः ।
पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ८ ॥

तान् समेत्याह भगवानक्रूरं जगदीश्वरः ।
गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥

भवान् प्रविशताग्रे सहयानः पुरीं गृहम् ।
वयं त्विहावमुच्याथ तावद् द्रक्ष्यामहे पुरीम् ॥ १० ॥

अक्रूर उवाच–
नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ।
त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥ ११ ॥

आगच्छ याम गेहान्नः सनाथान् कुर्वधोक्षज ।
साग्रजः सह गोपालैः सुहृद्भिश्च सुहृत्तमः ॥ १२ ॥

पुनीहि पादरजसा गृहान् नो गृहमेधिनाम् ।
यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥ १३ ॥

अवनिज्याङ्घ्रियुगलमासीच्छ्लाघ्यो बलिर्मखे ।
ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या ॥ १४ ॥

आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान् शुचयोऽपुनन् ।
शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥ १५ ॥

देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ।
यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥ १६ ॥

श्रीभगवानुवाच–
आयास्ये भवतो गेहमहमार्यसमन्वितः ।
यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥

श्रीशुक उवाच–
एवमुक्तो भगवता सोऽक्रूरो विमना इव ।
पुरीं प्रविश्य कंसाय कर्मावेद्य गृहं ययौ ॥ १८ ॥

ततोऽपराह्ने भगवान् कृष्णः सङ्कर्षणान्वितः ।
मधुरां प्राविशद् गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥

ददर्श तां स्फाटिकतुङ्गगोपुर
बृहत्स्फुरद्धेमकपाटतोरणाम् ।
ताम्रारकोष्ठपरिखां दुरासदाम्
उद्यानरम्योपवनालिशोभिताम् ॥ २० ॥

सौवर्णशृङ्गाटकहर्म्यनिष्कुट-
श्रेणीसभाभिर्भवनैरुपस्कृताम् ।
वैदूर्यवज्रामलनीलविद्रुमै-
र्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥ २१ ॥

जुष्टेषु जालामुखरन्ध्रकुट्टिमे-
ष्वाविष्टपारावतबर्हिनादिताम् ।
संसिक्तरथ्यापणमार्गचत्वरां
प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥ २२ ॥

आपूर्णकुम्भैर्दधिचन्दनोक्षितैः
प्रसूनदीपावलिभिः सपल्लवैः ।
सवृन्तरम्भाक्रमुकैः सकेतुभिः
स्वलङ्कृतद्वारगृहां सपट्टिकैः ॥ २३ ॥

तां सम्प्रविष्टौ वसुदेवनन्दनौ
वृतौ वयस्यैर्नरदेववर्त्मना ।
द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो
हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥ २४ ॥

काश्चिद् विपर्यग्धृतवस्त्रभूषणा
विस्मृत्य चैकं युगलेष्वथापराः ।
कृतैकपत्रश्रवणैकनूपुरा
नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम् ॥ २५ ॥

अश्नन्त्य एकास्तदपास्य सोत्सवा
अभ्यज्यमाना अकृतोपमज्जनाः ।
स्वपन्त्य उत्थाय निशम्य निःस्वनं
निपाययन्त्योऽर्भमपोह्य मातरः ॥ २६ ॥

मनांसि तासामरविन्दलोचनः
प्रगल्भलीलाहसितावलोकनैः ।
जहार मत्तद्विरदेन्द्रविक्रमो
दृशां ददच्छ्रीरमणो महोत्सवम् ॥ २७ ॥

दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं
तत्प्रेक्षितोत्स्मितसुधोक्षणलब्धमानाः ।
आनन्दमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो
जहुरनन्तमरिन्दमाधिम् ॥ २८ ॥

प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः ।
अभ्यवर्षन् सौमनस्यैः प्रमदा बलकेशवौ ॥ २९ ॥

दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः ।
तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥ ३० ॥

रजकं कञ्चिदायान्तं रङ्गकारं गदाग्रजः ।
दृष्ट्वायाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३१ ॥

देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः ।
भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ३२ ॥

स याचितो भगवता परिपूर्णेन सर्वतः ।
साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ३३ ॥

ईदृशान्येव वासांसि नित्यं गिरिवनेचराः ।
परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥ ३४ ॥

याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा ।
बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि हि ॥ ३५ ॥

इत्थं विकत्थमानस्य कुपितो देवकीसुतः ।
रजकस्य कराग्रेण शिरः कायादपाहरत् ॥ ३६ ॥

तस्यानुजीविनः सर्वे वासःकोशान् विसृज्य वै ।
दुद्रुवुः सर्वतो मार्गे वासांसि जगृहेऽच्युतः ॥ ३७ ॥

वसित्वाऽऽत्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा ।
शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३८ ॥

ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ।
विचित्रवर्णैः चैलेयैराकल्पैरनुरूपतः ॥ ३९ ॥

नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ।
स्वलङ्कृतौ बालगजौ पर्वणीव सितेतरौ ॥ ४० ॥

तस्य प्रसन्नो भगवान् प्रादात् सारूप्यमात्मनः ।
श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ॥ ४१ ॥

ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ।
तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ४२ ॥

तयोरासनमानीय पाद्यं चार्घ्यार्हणादिभिः ।
पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥ ४३ ॥

प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ।
पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ४४ ॥

भवन्तौ किल विश्वस्य जगतः कारणं परम् ।
अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४५ ॥

न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ।
समयोः सर्वभूतेषु भजन्तं भजतोरपि ॥ ४६ ॥

ताध्याज्ञापय मां भृत्यं किमहं करवाणि वाम् ।
पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ४७ ॥

इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः ।
शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥ ४८ ॥

ताभिः स्वलङ्कृतौ प्रीतौ कृष्णरामौ सहानुगौ ।
प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ४९ ॥

सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ।
तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ५० ॥

इति तस्मै वरं दत्वा श्रियं चान्वयवर्धिनीम् ।
बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥ ५१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनचत्वारिंशोऽध्यायः ॥

## अथ चत्वारिंशोऽध्यायः

श्रीशुक उवाच–
अथ व्रजन् राजपथेन माधवः
स्त्रियं गृहीताङ्गविलेपभाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां
पप्रच्छ धात्रीं वचसा रसप्रदः ॥ १ ॥

का त्वं वरोर्व्येतदिहानुलेपनं
कस्याङ्गने वा कथयस्व साधु नः ।
देह्यावयोरङ्गविलेपमुत्तमं
श्रेयस्ततस्ते नचिराद् भविष्यति ॥ २ ॥

सैरन्ध्र्युवाच–
दास्यस्म्यहं ते सुरवर्य सम्मता
त्रिवक्रनाम्नी ह्यनुलेपकर्मणि ।
मद्भावितं भोजपतेरतिप्रियं
विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥

रूपपेशलमाधुर्यहसितालापवीक्षितैः ।
धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥

ततस्तावङ्गरागेण सुवर्णेतरशोभिना ।
सम्प्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥ ५ ॥

प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचिराननाम् ।
ऋज्वीं कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥ ६ ॥

पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना ।
प्रगृह्य चुबुके ह्यस्यमुदनीनमदच्युतः ॥ ७ ॥

सा तदार्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा ।
मुकुन्दस्पर्शनात् सद्यो बभूव प्रमदोत्तमा ॥ ८ ॥

ततो रूपगुणौदार्यसम्पन्ना प्राह केशवम् ।
उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥ ९ ॥

एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे ।
त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥ १० ॥

एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः ।
मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥ ११ ॥

एष्यामि ते गृहं सुभ्रु पुंसामाधिविकर्शनम् ।
साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ १२ ॥

विसृज्य माध्व्या वाण्या तां व्रजन् मार्गे वणिक्पथैः ।
नानोपायनताम्बूलस्रग्गन्धैः साग्रजोऽर्चितः ॥ १३ ॥

ततः पौरान् पृच्छमानो धनुषः स्थानमच्युतः ।
तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥ १४ ॥

पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् ।
वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥ १५ ॥

करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ।
नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥

धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ।
पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥ १७ ॥

तद्रक्षिणः सानुचराः कुपिता आततायिनः ।
ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति ॥ १८ ॥

अथ तान् दुरभिप्रायान् विलोक्य बलकेशवौ ।
क्रुद्धौ धनुष आदाय शकले तांश्च जघ्नतुः ॥ १९ ॥

बलं च कंसप्रहितं हत्वा शालामुखात् ततः ।
निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः ॥ २० ॥

तयोस्तदद्भुतं वीर्यं निशम्य पुरवासिनः ।
तेजः प्रागल्भ्यरूपं च मेनिरे विबुधोत्तमौ ॥ २१ ॥

तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् ।
कृष्णरामौ सुरवं रात्रीं ज्ञात्वा कंसचिकीर्षितम् ॥ २२ ॥

अवनिज्याङ्घ्रियुगलं भुक्त्वा क्षीरोपसेचनम् ।
ऊषतुस्तां वृती गोपैः पुराच्छकटमीयतुः ॥ २३ ॥

कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ २४ ॥

दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्यचष्टोभयथा मृत्योर्दूतकराणि च ॥ २५ ॥

अदर्शनं स्वशिरसः प्रतिरूपेषु सत्स्वपि ।
असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ २६ ॥

छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ।
स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २७ ॥

स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम् ।
यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥ २८ ॥

अन्यानि चेत्थम्भूतानि स्वप्नजागरितानि च ।
पश्यन् मरणसन्त्रस्तो निद्रां लेभे न चिन्तया ॥ २९ ॥

व्युष्टायां निशि कौरव्य ! सूर्ये चाद्भ्यः समुत्थिते ।
कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ३० ॥

आनर्चुः पुरुषा रङ्गं तूर्यभेर्यश्च जघ्निरे ।
मञ्चाश्चालङ्कृताः स्रग्भिः पताकाचैलतोरणैः ॥ ३१ ॥

तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ।
यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३२ ॥

कंसः परिवृतोऽमात्यै राजमञ्च उपाविशत् ।
मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३३ ॥

वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ।
मल्लाः स्वलङ्कृता दृप्ताः स्वोपाध्यायाः समाविशन् ॥ ३४ ॥

चाणूरो मुष्टिकः कूटः शलः कोसल एव च ।
त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ३५ ॥

नन्दगोपादयो गोपा भोजराजसमाहुताः ।
निवेदितोपायनास्त एकस्मिन् मञ्च आविशन् ॥ ३६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चत्वारिंशोऽध्यायः ॥

## अथ एकचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
अथ कृष्णश्च रामश्च कृतशौचौ परन्तपौ ।
मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ १ ॥

रङ्गद्वारं समासाद्य तस्मिन् नागमवस्थितम् ।
अपश्यत् कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ॥ २ ॥

बद्ध्वा परिकरं शौरिः समूह्य कुटिलालकान् ।
उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥

अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्राम माचिरम् ।
नो चेत् सकुञ्जरं त्वाऽद्य नयामि यमसादनम् ॥ ४ ॥

एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् ।
चोदयामास कृष्णाय कालान्तकयमोपमम् ॥ ५ ॥

करीन्द्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ।
कराद् विगलितः सोऽमुं निहत्याङ्घ्रिष्वलीयत ॥ ६ ॥

संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ।
परामृशत् पुष्करेण स प्रसह्य विनिर्गतः ॥ ७ ॥

पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् ।
विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ८ ॥

स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः ।
बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥ ९ ॥

ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् ।
प्राद्रवन् यापयामास स्पृश्यमानः पदे पदे ॥ १० ॥

स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः ।
तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत् क्षितिम् ॥ ११ ॥

स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः ।
चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद् रुषा ॥ १२ ॥

तमापतन्तमासाद्य भगवान् मधुसूदनः ।
प्रगृह्य पाणिना हस्तं पातयामास भूतले ॥ १३ ॥

पतितस्य पदाऽऽक्रम्य मृगेन्द्र इव लीलया ।
दन्तमुत्पाट्य तेनेमं हस्तिपांश्चाहनद् हरिः ॥ १४ ॥

मृतकं द्विपमुत्सृज्य दन्तपाणी विरेजतुः ।
अंसन्यस्तविषाणासृङ्मदबिन्दुभिरङ्कितौ ।
विरूढस्वेदकणिकवदनाम्बुरुहावुभौ ॥ १५ ॥

वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ।
रङ्गं विविशतू राजन् गजदन्तवरायुधौ ॥ १६ ॥

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभृतां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विधातृविहितस्तत्त्वं परं योगिनां
वृष्णीनां च पतिः सदैव शुशुभे रङ्गेऽच्युतः साग्रजः ॥ १७ ॥

हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ।
कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥ १८ ॥

तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ।
यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥

निरीक्ष्य तावुत्तमपुरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप ।
प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ।
जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ २१ ॥

ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ।
तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥ २२ ॥

एतौ भगवतः साक्षाद् हरेर्नारायणस्य हि ।
अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ २३ ॥

स एष किल देवक्यां जातो नीतश्च गोकुलम् ।
कालमेतं वसन् गूढो ववृधे नन्दवेश्मनि ॥ २४ ॥

पूतनाऽनेन नीताऽन्तं चक्रवातश्च दानवः ।
अर्जुनौ धेनुकः केशी गुह्यकोऽन्ये च तद्विधाः ॥ २५ ॥

गावः सपाला एतेन दावाग्नेः परिमोचिताः ।
कालियो दमितः सर्पः शक्रश्च विमदः कृतः ॥ २६ ॥

सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ।
वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥

गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ।
पश्यन्त्यो विविधांस्तापांस्तरन्ति स्म श्रमं मुदा ॥ २८ ॥

वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ।
श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥ २९ ॥

अयं चास्याग्रजः श्रीमान् रामः कमललोचनः ।
प्रलम्बो निहतो येन बहवो धेनुकादयः ॥ ३० ॥

जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ।
कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ३१ ॥

हे नन्दसूनो हे राम भवन्तौ वीर्यसम्मतौ ।
नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥ ३२ ॥

प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विन्दन्ति वै प्रजाः ।
मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥

नित्यं प्रमुदिता गोपा वत्सपालास्तथा स्फुटम् ।

वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥ ३४ ॥
तस्माद् राज्ञः प्रियं यूयं वयं च करवामहे ।
भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥ ३५ ॥
तन्निशम्याब्रवीत् कृष्णो देशकालोचितं वचः ।
नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च ॥ ३६ ॥
श्रीभगवानुवाच–
प्रजा भोजपतेर्यूयं वयं चापि वनेचराः ।
करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ३७ ॥
बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ।
भवेन्नियुद्धं माधर्मः स्पृशेन्मल्ल सभासदः ॥ ३८ ॥
चाणूर उवाच–
न बालो न किशोरस्त्वं बलश्च बलिनां वरः ।
लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ३९ ॥
तस्माद् भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ।
मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥
॥ इति श्रीमद्भागवते दशमस्कन्धे एकचत्वारिंशोऽध्यायः ॥

# अथ द्विचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
एवं चिन्तितसङ्कल्पो भगवान् मधुसूदनः ।
आससाद ह चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥
आस्फोट्य हस्तौ हस्ताभ्यामूरू चैव परस्परम् ।
विसृज्य भूयः सङ्क्रम्य परिक्रम्य परस्परम् ॥
हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ।
विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥ २ ॥
अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ।
शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥ ३ ॥
परिभ्रामणविक्षेपपरिरम्भावपातनैः ।
उत्सर्पणापसर्पैश्चाप्यन्योन्यं प्रत्यरुध्यताम् ॥ ४ ॥
उत्थापनैरुन्नमनैश्चालनैः स्थापनैरपि ।
परस्परं जिगीषन्तावन्योन्यमभिचक्रतुः ॥ ५ ॥
तद् बालबलवद्युद्धं समेताः सर्वयोषितः ।
ऊचुः परस्परं प्रेक्ष्य सानुकम्पा वरूथशः ॥ ६ ॥
महानयं बताधर्म एषां राजसभासदाम् ।
ये बालबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥
क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ ।
क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८ ॥
धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ।
यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥ ९ ॥
न सभां प्रविशेत् प्राज्ञः सभ्यदोषाननुस्मरन् ।
अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥ १० ॥
वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम् ।
वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः ॥ ११ ॥
किं न पश्यत रामस्य मुखमाताम्रलोचनम् ।
मुष्टिकं प्रति सामर्षहाससंरम्भशोभनम् ॥ १२ ॥
पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढः
पुराणपुरुषो वनचित्रमाल्यः ।
गाश्चारयन् सहबलः क्वणयंश्च वेणुं
विक्रीडयाञ्चति गिरित्ररमार्चिताङ्घ्रिः ॥ १३ ॥
गोप्यस्तपः किमचरन् यदमुष्य रूपं
लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमे
एकान्तधाम यशसः श्रिय ईश्वरस्य ॥ १४ ॥
या दोहनेऽवहनने मथनोपलेप-
प्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यः
धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥ १५ ॥
प्रातर्व्रजाद् व्रजत आविशतश्च सायं
गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गत्य तूर्णमबलाः पथि भूरिपुण्याः
पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ १६ ॥

एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ।
शत्रुं हन्तुं मनश्चक्रे भगवान् भरतर्षभ ॥ १७ ॥

तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ।
युयुधाते तथाऽन्योन्यं तथैव बलमुष्टिकौ ॥ १८ ॥

भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ।
चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह ॥ १९ ॥

स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ।
भगवन्तं वासुदेवं क्रुद्धो वक्षस्यताडयत् ॥ २० ॥

नाचलत् तत्प्रहारेण स्रजा हत इव द्विपः ।
बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन् हरिः ॥ २१ ॥

भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ।
विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥ २२ ॥

तथैव मुष्टिकः पूर्वं स्वमुष्ट्याऽभिहतेन वै ।
बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥ २३ ॥

प्रवेपितः स रुधिरमुद्वमन् मुखतोऽर्दितः ।
व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ २४ ॥

ततः कूटमनुप्राप्तं रामः प्रहरतांवरः ।
अवधील्लीलया राजन् सावज्ञं वाममुष्टिना ॥ २५ ॥

तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः ।
द्विधा विदीर्णस्तोसलक उभावपि निपेततुः ॥ २६ ॥

चाणूरे मुष्टिके कूटे शले तोसलके हते ।
शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥ २७ ॥

गोपान् वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ।
वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥ २८ ॥

जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ।
ऋते कंसं विप्रमुख्याः साधवः साधुसाध्विति ॥ २९ ॥

हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ।
न्यवारयत् स्वतूर्याणि वाक्यं चेदमुवाच ह ॥ ३० ॥

निस्सारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ।
धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ ३१ ॥

वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ।
उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ३२ ॥

एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ।
लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥ ३३ ॥

तमाविशन्तमालोक्य मृत्युमात्मन आसनात् ।
मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ३४ ॥

तं खड्गपाणिं विचरन्तमाशु
श्येनं यथा दक्षिणसव्यमम्बरे ।
समग्रहीद् दुर्विषहोग्रतेजा
यथोरगं तार्क्ष्यसुतः प्रसह्य ॥ ३५ ॥

प्रगृह्य केशेषु चलत्किरीटं
निपात्य रङ्गोपरि तुङ्गमञ्चात् ।
तस्योपरिष्टात् स्वयमब्जनाभः
पपात विश्वाश्रय आत्मतन्त्रः ॥ ३६ ॥

कंसोऽपि कृष्णेन जगत्त्रयैक-
निवासभूतेन निपात्य सोऽधः ।
तेनात्मतन्त्रेण च पीडितोऽसुं
तत्याज राजन् निमिषान्तरेण ॥ ३७ ॥

कंसं परेतं विचकर्ष भूमौ
हरिर्यथेभं जगतो विपश्यतः ।
हाहेतिशब्दः सुमहांस्तदाऽभूत्
उदीरितः सर्वजनैर्नरेन्द्र ॥ ३८ ॥

स नित्यदोद्विग्नधिया तमीश्वरं
पिबन्वदन् वा विचरन् स्वपन् श्वसन् ।
ददर्श चक्रायुधमच्युतं यतः
तदेव रूपं दुरवापमाप ॥ ३९ ॥

तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः ।
अभ्यधावन्नतिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ४० ॥

तथाऽतिरभसांस्तांस्तु संयतान् रोहिणीसुतः ।
अहन् परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥

नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ।
पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥ ४२ ॥

तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ।
तत्राभीयुर्विनिघ्नन्त्यः स्वशीर्षाण्यश्रुलोचनाः ॥ ४३ ॥

शयानान् वीर शय्यायां पतीनालिङ्ग्य शोचतीः ।
विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥ ४४ ॥

हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल ।
त्वया हतेन निहता वयं ते सगृहप्रजाः ॥ ४५ ॥

त्वया विरहिता पत्या पुरीयं भरतर्षभ ।
न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥ ४६ ॥

अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणम् ।
तेनेमां भो दशां नीतो भूतध्रुक् को लभेत शम् ॥ ४७ ॥

सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ।
गोप्ता च तदवध्यायी न कचित् सुखमेधते ॥ ४८ ॥

श्रीशुक उवाच–
राजयोषित आश्वास्य भगवान् लोकभावनः ।
यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥

मातरं पितरं चैव मोचयित्वाऽथ बन्धनात् ।
रामकृष्णौ ववन्दाते शिरसाऽऽस्पृश्य पादयोः ॥ ५० ॥

देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ।
कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ ॥ ५१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे द्विचत्वारिंशोऽध्यायः ॥

# अथ त्रिचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ।
मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥

उवाच पितरावेत्य साग्रजः सात्वतर्षभः ।
प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ॥ २ ॥

नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि ।
बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् कचित् ॥ ३ ॥

न लब्धो दैवहतयोर्वासो नौ भवदन्तिके ।
ये बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ॥ ४ ॥

सर्वार्थसम्भवो देहो जनितः पोषितो यतः ।
न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥

यस्तयोरात्मजः कल्प आत्मना च धनेन च ।
वृत्तिं न दद्यात् तं प्रेत्य स्वमांसं खादयन्ति हि ॥ ६ ॥

मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ।
गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥ ७ ॥

तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ।
मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ॥ ८ ॥

तत् क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः ।
अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदोर्भृशम् ॥ ९ ॥

इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ।
मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥

सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन संवृतौ ।
न किञ्चिदूचतू राजन् बाष्पकण्ठौ विमोहितौ ॥ ११ ॥

एवमाश्वास्य पितरौ भगवान् देवकीसुतः ।
मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥

आह चास्मान् महराज प्रजाः स्वाज्ञप्तुमर्हसि ।
ययातिशापाद् यदुभिर्नासितव्यं नृपासने ॥ १३ ॥

मयि भृत्य उपासीने भवतो विबुधादयः ।
बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥ १४ ॥

सर्वान् स्वज्ञातिसम्बन्धान् दिग्भ्यः कंसभयाद् गतान् ।
यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् ॥ १५ ॥

सभाजितान् समाश्वास्य विदेशावासकर्शितान् ।
न्यवासयत् स्वगेहेषु वित्तैः सन्तर्प्य विश्वसृक् ॥ १६ ॥

कृष्णसङ्कर्षणभुजैर्गुप्ता लब्धमनोरथाः ।
गेहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ १७ ॥

वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम् ।
नित्यप्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥ १८ ॥

तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः ।
पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः ॥ १९ ॥

अथ नन्दं समासाद्य भगवान् देवकीसुतः ।
सङ्कर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः ॥ २० ॥

पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ।
पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥ २१ ॥

स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ।
शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥

यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ।
ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ २३ ॥

एवं सान्त्वय्य भगवान् नन्दं सव्रजमच्युतः ।
वासोऽलङ्कारकुप्याद्यैरर्हयामास सादरम् ॥ २४ ॥

इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः ।
पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥ २५ ॥

अथ शूरसुतो राजन् पुत्रयोः समकारयत् ।
पुरोधसा ब्राह्मणैश्च यथावद् द्विजसंस्कृतिम् ॥ २६ ॥

तेभ्योऽदाद्दक्षिणां गावो रुक्ममालाः स्वलङ्कृताः ।
स्वलङ्कृतेभ्यः सम्पूज्य सवत्साः क्षौममालिनीः ॥ २७ ॥

याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ।
ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥

ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ।
गर्गाद् यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ ॥ २९ ॥

प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ।
नान्यसिद्धामलं ज्ञानं गूहमानौ नरेहितैः ॥ ३० ॥

अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः ।
काश्यं सान्दीपनिं नाम ह्यवन्तिपुरवासिनम् ॥ ३१ ॥

यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् ।
ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥ ३२ ॥

तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ।
प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः ॥ ३३ ॥

सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ।
तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥

सर्वं तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ।
सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ॥ ३५ ॥

अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ।
गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥ ३६ ॥

द्विजस्तयोस्तं महिमानमद्भुतं
संलक्ष्य राजन्नतिमानुषीं मतिम् ।
सम्मन्त्र्य पत्न्या स महार्णवे मृतं
बालं प्रभासे वरयाम्बभूव ह ॥ ३७ ॥

तथेत्यथारुह्य महारथौ रथं
प्रभासमासाद्य दुरन्तविक्रमौ ।
वेलामुपव्रज्य निषीदतुः क्षणं
सिन्धुर्विदित्वार्हणमाहरत् तयोः ॥ ३८ ॥

तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् ।
योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥

तमाह वरुणो देवो विनयावनतः स्थितः ।
नैवाहार्षमहं देव दैत्यः पञ्चजनोऽहरत् ॥ ४० ॥

अन्तर्जलचरः कृष्ण शङ्खरूपधरोऽसुरः ।
जलमाविश्य तं हत्वा गृह्यतामित्युवाच सः ॥

ततस्तौ जलमाविश्य हत्वाऽन्तर्जलवासिनम् ।
विदार्य जठरं तस्य नापश्यदुदरेऽर्भकम् ॥ ४१ ॥

तदङ्गप्रभवं शङ्खमादाय रथमागमत् ॥ ४२ ॥

ततः संयमनीं नाम यमस्य दयितां पुरीम् ।
गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः ॥ ४३ ॥

शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ।
तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहितः ॥ ४४ ॥

उवाचावनतः कृष्णं सर्वभूताशयाश्रयम् ।
लीलामनुष्य हे विष्णो युवयोः करवाम किम् ।
इत्युक्तस्तेन देवेशो देवकीनन्दनोऽब्रवीत् ॥ ४५ ॥

श्री भगवानुवाच–
गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ।
आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४६ ॥

तथेति तेनोपनीतं गुरुपुत्रं यदूत्तमौ ।
दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥ ४७ ॥

ततः प्रीतमना राजन्निदं वचनमब्रवीत् ।
सान्दीपिनि महाभागो रामकृष्णावरिन्दमौ ॥ ४८ ॥

सम्यक् सम्पादितौ वत्स भवद्भ्यां गुरुनिष्क्रिया ।
को नु युष्मद्विधगुरोः कामानामवशिष्यते ।
गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥ ४९ ॥

गुरुणैवमनुज्ञातौ रथेनानिलरंहसा ।
आयातौ स्वपुरं तात पर्जन्यनिनदेन वै ॥ ५० ॥

समनन्दन् प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ ।
अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥ ५१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे त्रिचत्वारिंशोऽध्यायः ॥

# अथ चतुश्चत्वारिंशोऽध्यायः

श्रीशुक उवाच–
वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ।
शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १ ॥

तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित् ।
गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २॥

गच्छोद्धव व्रजं सौम्य पित्रोर्नः प्रीतिमावह ।
गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥ ३ ॥

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।
मामेव दयितं प्रेष्ठमात्मानं मनसाऽगताः ॥ ४ ॥

ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम् ।
मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥ ५ ॥

स्मरन्त्यङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ।
धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन ॥ ६ ॥

प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिकाः ।
इत्युक्त उद्धवो राजन् सन्देशान् भर्तुराहतः ॥ ७ ॥

आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ।
प्राप्तो नन्दव्रजं श्रीमान् निम्लोचति विभावसौ ॥ ८ ॥

छन्नयानः प्रविशतां पशूनां खुररेणुभिः ।
वासितार्थे नियुद्ध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ ९ ॥

धावन्तीभिश्च वास्राभिरूधोभारेण वत्सकान् ।
इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः ॥ १० ॥

गोदोहशब्दाभिरवैर्वेणूनां निस्स्वनेन च ।
गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः ॥ ११ ॥

स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ।
अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ॥ १२ ॥

धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ।
सर्वतः पुष्पितवनं द्विजालिकुलनादितम् ॥ १३ ॥

हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम् ।
तमागतं समालोक्य कृष्णस्यानुचरं प्रियम् ॥ १४ ॥

नन्दः प्रीतः परिष्वज्य वासुदेवधियाऽऽर्चयत् ।
भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ॥ १५ ॥
गतश्रमं पर्यपृच्छत् पादसंवाहनादिभिः ॥ १६ ॥

नन्द उवाच–
कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः ।
आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ १७ ॥

दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ।
साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १८ ॥

अपि स्मरति नः कृष्णो मातरः सुहृदः सखीन् ॥
गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥ १९ ॥

अप्यायास्यति गोविन्दः स्वजनान् सकृदीक्षितुम् ।
तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ २० ॥

दावाग्नेर्वातवर्षाच्च वृषात् सर्पाच्च रक्षिताः ।
दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २१ ॥

स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षणम् ।
हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः ॥ २२ ॥

सरिच्छैलवनोद्देशान् मुकुन्दपदभूषितान् ।
आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २३ ॥

मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ।
सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २४ ॥

कंसं नागायुतवलं मल्लौ गजपतिं तथा ।
अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ २५ ॥

तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ।
बभञ्जैकेन हस्तेन सप्ताहमदधाद् गिरिम् ॥ २६ ॥

प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ।
दैत्याः सुरासुरजितो हता येनेह लीलया ॥ २७ ॥

श्रीशुक उवाच–
इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः ।
अश्रुकण्ठोऽभवत् तूष्णीं प्रेमप्रसरविह्वलः ॥ २८ ॥

यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ।
शृण्वन्त्यश्रूण्यवास्राक्षीत् स्नेहस्नुतपयोधरा ॥ २९ ॥

तयोरित्थं भगवति कृष्णे नन्दयशोदयोः ।
वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ ३० ॥

उद्धव उवाच–
युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ।
नारायणेऽखिलगुरौ यत् कृता मतिरीदृशी ॥ ३१ ॥

एतौ हि विश्वस्य च बीजयोनी
रामो मुकुन्दः पुरुषः प्रधानम् ।
अन्वीय भूतेषु विलक्षणेषु
विज्ञाय चेशात इमौ पुराणौ ॥ ३२ ॥

यस्मिन् जनः प्राणवियोगकाले
क्षणं समावेश्य मनो विशुद्धम् ।
निर्हृत्य कर्माशयमाशु याति
परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३५ ॥

तस्मिन् भवन्तावखिलात्मयोनौ
नारायणे कारणमर्त्यमूर्तौ ।
भावं व्यधत्तां नितरां महात्मन्
किं वाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३४ ॥

आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ।
प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः ॥ ३५ ॥

हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् ।
यदाह वः समागम्य कृष्णः सत्यं करोति तत् ॥ ३६ ॥

मा खिद्येतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके ।
अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३७ ॥

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः ।
नोत्तमो नाधमो वाऽपि समानस्य समोऽपि वा ॥ ३८ ॥

न माता न पिता तस्य न भार्या न सुतादयः ।
नात्मीयो न परश्चास्य न देहो जन्म कर्म वा ॥ ३९ ॥

लोकेऽस्य जन्मकर्माणि सदसन्मिश्रयोनिषु ।
क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ४० ॥

सत्त्वं रजस्तम इति भजते निर्गुणो महान् ।
क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः ॥ ४१ ॥

युवयोरेव नैवायमात्मजो भगवान् हरिः ।
सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४२ ॥

दृष्टं श्रुतं भूतभवद्भविष्यत् स्थास्नु चरिष्णुमहदल्पकं च ।
विनाऽच्युताद् वस्तुतया न चान्यत् स एव सर्वं परमार्थरूपः ॥

श्रीशुक उवाच–
एवं निशा सा ब्रुवतोर्व्यतीता
नन्दस्य कृष्णानुचरस्य राजन् ।
गोप्यः समुत्थाय निरूप्य दीपान्
वास्तून् समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥

ता दीपदीप्तैर्मणिभिर्विरेजू
रज्जूर्विकर्षोज्वलकङ्कणाः स्रजः ।
चलन्नितम्बस्तनहारकुण्डल-
त्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४५ ॥

उद्गायतीनामरविन्दलोचनं
व्रजाङ्गनानां दिवमस्पृशद् ध्वनिः ।
दध्नश्च निर्मन्थनशब्दमिश्रितो
निरस्यते येन दिशाममङ्गलम् ॥ ४६ ॥

भगवत्युदिते सूर्ये व्रजद्वारि व्रजौकसः ।
दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन् ॥ ४७ ॥

अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ।
येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥

किं साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम् ।
इति स्त्रीणां वदन्तीनामुद्धवोऽगात् कृताह्निकः ॥ ४९ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुश्चत्वारिंशोऽध्यायः ॥

## अथ पञ्चचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम् ।
पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं परिमृष्टकुण्डलम् ॥

सुविस्मिताः कोऽयमतीवदर्शनः कुतश्च कस्याच्युतवेषभूषणः ।
इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥

तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ।
रहस्यपृच्छन्नुपविष्टमासने विज्ञाय सन्देशहरं रमापतेः ॥ ३॥

गोप्य ऊचु–
जानीमस्त्वां यदुपतेः पार्षदार्यमनुव्रतम् ।
भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥

अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ।
स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥

अन्येष्वर्थकृता मैत्री यावदर्थविडम्बना ।
पुम्भिः स्त्रीषु कृता यद्वत् सुमनस्स्विव षट्पदैः ॥ ६ ॥

निस्स्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ।
अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥

खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ।
दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा परस्त्रियम् ॥ ८ ॥

श्रीशुक उवाच–
ददर्श गोपीर्गोविन्दमनोवाग्देहचेष्टितैः ।
कृष्णदूतो व्रजं प्राप्त उद्धवस्त्यक्तलौकिकाः ॥ ९ ॥

गायन्त्यः प्रियकर्माणि रुदन्त्यश्च गतह्रियः ।
तस्य संस्मृत्यसंस्मृत्य यानि कैशोरबाल्ययोः ॥ १० ॥

काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ।
प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥

गोप्युवाच–
मधुप कितवबन्धो मा स्पृशास्मान् सपत्न्याः
कुचविलुलितमालाकुङ्कुमश्मश्रुभिस्त्वम् ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं
यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥

सकृदधरसुधां स्वां मोहिनीं पाययित्वा
सुमनस इव सद्यः कस्त्यजेन्मां भवादृक् ।
परिचरति कथं तत्पादकिञ्जल्कपादम
अपि बत हृतचित्ता उत्तमश्लोकजल्पैः ॥ १३ ॥

किमिह बहु षडङ्घ्रे गायसि त्वं यदूनाम
अधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गायतां तत्प्रसङ्गः
क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥

दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का
अपि च कृपणपक्षे उत्तमश्लोकशब्दः ॥ १५ ॥

विसृज शिरसि पादं वेद्म्यहं चाटुकारै-
रनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन् ॥ १६ ॥

मृगयुरिव कपीन्द्रं विव्यधे यः किरातः
स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिमत्त्वावेष्टयद् ध्वाङ्क्षवद्य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥

यदनुचरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ।

सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना
बहव इह विहङ्गा भैक्षचर्यां चरन्ति ॥ १८ ॥

वयमृतमिव जिह्मं व्याहृतं श्रद्दधानाः
कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशिम सकृदेतत्तन्नखस्पर्शतीव्रः
तनरुजपरमार्तिं भण्यतामस्य वार्ता ॥ १९ ॥

प्रियसख पुनरागाः प्रेयसा प्रेषितस्त्वं
वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान् दुस्त्यजं वन्धुपार्श्वं
सततमुरसि सौम्य श्रीवधूः साकमास्ते ॥ २० ॥

अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते
स्मरति स पितृगेहं सौम्य बन्धूंश्च गोपान् ।
क्वचिदपि स कथं नः किङ्करीणां गृहीतो
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥ २१ ॥

श्रीशुक उवाच–
अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ।
सान्त्वयन् प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पिता मतिः ॥ २३ ॥

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोविधिभिरन्यैश्च कृष्णे भक्तिर्हि साध्यते ॥ २४ ॥

भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥ २५ ॥

दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च ।
हित्वा वृणीत यूयं यत् कृष्णाख्यं पुरुषं परम् ॥ २६ ॥

सर्वात्मभावोऽधिगतो भवतीनामधोक्षजे ।
विरहेण महाभागा महान् वोऽनुग्रहः कृतः ॥ २७ ॥

श्रूयतां प्रियसन्देशो भवतीनां सुखावहः ।
यमादायागतो भद्रा अहं भर्तुर्हि किङ्करः ॥ २८ ॥

श्रीभगवानुवाच–
भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ।
यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ २९ ॥

तथाहं च मनःप्राणभूतेन्द्रियगुणाश्रयः ।
आत्मन्येवात्मनाऽऽत्मानं सृजे हन्म्यनुपालये ॥ ३० ॥

आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ।
आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तो गुणान्वयः ॥ ३१ ॥

सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३२ ॥

एतदन्तः समाम्नायो योगः साङ्ख्यं मनीषिणाम् ।
त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः ॥ ३३ ॥

यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ।
मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥

यथा दूरतरे प्रेष्ठे मन आविश्य वर्तते ।
स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षिगोचरे ॥ ३५ ॥

मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ।
अनुस्मरन्त्यो मां नित्यमचिरान्मामुपेष्यथ ॥ ३६ ॥

यन्मया क्रीडिता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः ।
अलब्धरासा कल्याण्यः आपुर्मा मद्विचिन्तया ॥ ३७ ॥

श्रीशुक उवाच–
एवं प्रियतमादेशमाकर्ण्य व्रजयोषितः ।
ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतयः ॥ ३८ ॥

गोप्य ऊचुः–
दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽधकृत् ।
दिष्ट्याऽऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥ ३९ ॥

कच्चिद् गदाग्रजः सौम्य करोति पुरयोषिताम् ।
प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥

कथं रतिविशेषज्ञः प्रियश्च पुरयोषिताम् ।
नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥

अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् ।
गोष्ठीमध्ये पुरस्त्रीणां ग्राम्यस्वैरकथान्तरे ॥ ४२ ॥

ताः किं निशाः स्मरति यासु तदा प्रियाभि-
र्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ।
रेमे कणच्चरणनूपुररासगोष्ठ्याम्
अस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ४३ ॥

अप्येष्यतीह दाशार्हस्तप्तं स्वकृतया शुचा ।
सञ्जीवयन् व्रजं गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ४४ ॥

कस्मात् कृष्ण इहायाति प्राप्तराज्यो हताहितः ।
विहृत्य नगरस्त्रीभिः प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥

किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ।
श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ४६ ॥

परं सुखं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला ।
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥

क उत्सहेत सन्त्यक्तुमुत्तमश्लोकसंविदम् ।
अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ॥ ४८ ॥

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ।
सङ्कर्षणसहायेन कृष्णेनाक्रीडिताः प्रभो ॥ ४९ ॥

पुनःपुनः स्मारयन्ति नन्दगोपसुतं बत ।
श्रीनिकेते तत्पदके विस्मर्तुं नैव शक्नुमः ॥ ५० ॥

गत्या ललितयोदारहासलीलावलोकनैः ।
माध्व्या गिरा हृतधियः कथं तद् विस्मरामहे ॥ ५१ ॥

हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ।
मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात् ॥ ५२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चचत्वारिंशोऽध्यायः ॥

# अथ षट्चत्वारिंशोऽध्यायः

श्रीशुक उवाच–
ततस्ताः कृष्णसन्देशैर्व्यपेतविरहामयाः ।
उद्धवं पूजयाञ्चक्रुर्ज्ञात्वा स्निग्धमधोक्षजे ॥ १ ॥

उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः ।
कृष्णलीलाकथा गायन् रमयामास गोकुलम् ॥ २ ॥

यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धवः ।
व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ॥ ३ ॥

सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् ।
कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥ ४ ॥

दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम् ।
उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५ ॥

उद्धव उवाच–
एताः परं तनुभृतां भुवि गोपवध्वो
गोविन्द एवमखिलात्मनि रूढभावाः ।
वाञ्छन्ति यद् भवभियो मुनयो वयं च
किं ब्रह्मजन्मभिरनन्तकथा न यत्र ॥ ६ ॥

केमाः स्त्रियो वनचरीर्व्यभिचारशीलाः
कृष्णे क्व चैष परमात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षात्
श्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ७ ॥

नायं श्रियो नन्‌ नितान्तरतेः प्रसादः
स्वर्योषितां च ललिताङ्गरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥ ८ ॥

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ९ ॥

या वै श्रियाऽर्चितमजादिभिराप्तकामैः
योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद्भगवतश्चरणारविन्दं
न्यस्य स्तनेषु विजहुः परिरभ्य तापम् ॥ १० ॥

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ११ ॥

श्रीशुक उवाच–
अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ।
गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ १२ ॥

तं निर्गतं समासाद्य नानोपायनपाणयः ।
नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ १३ ॥

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रवणादिषु ॥ १४ ॥

कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ १५ ॥

एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ।
उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ १६ ॥

कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ।
वासुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ १७ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षट्चत्वारिंशोऽध्यायः ॥

# अथ सप्तचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः ।
सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन् गृहं ययौ ॥ १ ॥

महार्होपस्करोपेतं कामोपायोपबृंहितम् ।
मुक्तादामपताकाभिर्वितानशयनासनैः ॥ २ ॥

धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ ३ ॥

गृहं तमायान्तमवेक्ष्य साऽऽसनात्
सद्यः समुत्थाय हि जातसम्भ्रमात् ।
यथोपसङ्गम्य सखीभिरच्युतं
सभाजयामास सदासनादिभिः ॥ ४ ॥

तथोद्धवः साधु तयाऽभिपूजितो
न्यपीददुर्व्यामभिमृश्य चासनम् ।
कृष्णोऽपि दान्तं शयनं महाधनं
विवेश लोकाचरितान्यनुव्रतः ॥ ५ ॥

सा मज्जनालेपदुकूलभूषण-
स्रग्गन्धताम्बूलसुधासवादिभिः ।
प्रसाधितात्मोपससार माधवं
सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ६ ॥

आहूय कान्तां नवसङ्गमह्रिया
विशङ्कितां कङ्कणभूषिते करे ।
प्रगृह्य शय्यामधिवेश्य रामया
रेमेऽनुलेपार्पणपुण्यलेशया ॥ ७ ॥

साऽनङ्गतप्तकुचयोरुरसस्तथाऽक्ष्णोः
जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ।
दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्त
आनन्दमूर्तिमजहादतिदीर्घतापम् ॥ ८ ॥

सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ।
अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ९ ॥

आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ।
रमस्व नोत्सहो त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ॥ १० ॥

तस्यै कामवरं दत्वा मानयित्वा च मानदः ।
सहोद्धवेन सर्वेशः स्वधामागमदृद्धिमत् ॥ ११ ॥

दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ।
यो वृणीते मनोग्राह्यमसत्त्वात् कुमतिर्हसौ ॥ १२ ॥

अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ।
किञ्चिच्चिकीर्षन् स प्रागादक्रूरप्रियकाम्यया ॥ १३ ॥

स तान् नरवरश्रेष्ठानाराद् वीक्ष्य स्वबान्धवान् ।
प्रत्युत्थाय प्रमुदितः परिष्वज्याभ्यनन्दत ॥ १४ ॥

ननाम कृष्णं रामं च स तैरप्यभिवादितः ।
पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १५ ॥

पादावनेजनीरापो धारयन् शिरसा नृप ।
अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १६ ॥

अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन् ।
प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १७ ॥

दिष्ट्या पापो हतः कंसः सानुगः पावितं कुलम् ।
भवद्भ्यामुद्धृतं कृच्छ्राद् दुरन्ताच्च समेधितम् ॥ १८ ॥

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ।
भवद्भ्यां न विना किञ्चित् परमस्ति न चापरम् ॥ १९ ॥

आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः ।
ईयते बहुधा ब्रह्मन् श्रुतिप्रत्यक्षगोचरः ॥ २० ॥

यथा हि भूतेषु चराचरेषु
मह्यादयो योनिषु भान्ति नाना ।

एवं भवान् केवल आत्मयोनिषु
आत्माऽऽत्मतन्त्रो बहुधा विभाति ॥ २१ ॥

सृजस्यथो लुम्पसि पासि विश्वं
रजस्तमस्सत्त्वगुणैः स्वशक्तिभिः ।
न बध्यसे त्वं गुणकर्मभिर्वा
ज्ञानात्मनस्ते क्व च नैव हेतुः ॥ २२ ॥

देहाद्युपाधेरनिरूपितत्वाद्
भवो हि साक्षान्न चिदात्मनः स्यात् ।
अतो न बन्धस्तव नैव मोक्षः
स्यातां निकामं त्वयि नो विवेकः ॥ २३ ॥

त्वयोदितोऽयं जगतो हिताय
यदा यदा वेदपथः पुराणः ।
बाध्येत पाखण्डपथैरसद्भि-
स्तदा भवान् सत्त्वगुणं बिभर्ति ॥ २४ ॥

स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः
स्वांशेन भारमपनेतुमिहासि भूमेः ।
अक्षोहिणीशतवधेन सुरेतरांशां
राज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २५ ॥

अद्येश नो वसतयः खलु भूरिभागा
यत् सर्वदेवपितृभूतनृदेवमूर्तिः ।
यत्पादशौचसलिलं त्रिजगत् पुनाति
स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २६ ॥

कः पण्डितस्त्वदपरं शरणं समीयात्
भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्वान् ददाति सुहृदो भजतोऽपि कामान्
आत्मानमप्युपचयापचयौ न यस्य ॥ २७ ॥

दिष्ट्या जनार्दन भवानिह नः प्रतीतो
योगेश्वरैरपि दुरापगतिः सुरेशैः ।
छिन्ध्याशु नः सुतकलत्रधनाप्तगेह-
देहाभिमोहरशनां भवदीयमायाम् ॥ २८ ॥

इत्यर्चितः संस्तुतश्च भक्तेन भगवान् हरिः ।
अक्रूरं सस्मितं प्राह गीर्भिः सम्मोहयन्निव ॥ २९ ॥

श्रीभगवानुवाच–
त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ।
वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥ ३०॥

भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ।
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३१ ॥

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ३२ ॥

स भवान् सुहृदां वै नः श्रेयः श्रेयश्चिकीर्षया ।
जिज्ञासार्थं पाण्डवानां गच्छ स्वगजसाह्वयम् ॥ ३३ ॥

पितर्युपरते बालाः सह मात्रा सुदुःखिताः ।
आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३४ ॥

तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः ।
समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३५ ॥

गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ।
विज्ञाय तद् विधास्यामो यथा शं सुहृदां भवेत् ॥ ३६ ॥

इत्यक्रूरं समादिश्य भगवान् हरिरीश्वरः ।
सङ्कर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३७ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तचत्वारिंशोऽध्यायः ॥

## अथ अष्टचत्वारिंशोऽध्यायः

श्रीशुक उवाच–
स गत्वा हस्तिनपुरं पौरवेन्द्रयशोऽङ्कितम् ।
ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥ १ ॥

सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् ।
कर्णं सुयोधनं द्रौणिं पाण्डवान् सुहृदोऽपरान् ॥ २ ॥

यथावदुपसङ्गम्य बन्धुभिर्गान्दिनीसुतः ।
सम्पृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥

उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया ।
दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ४ ॥

तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ।
प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥ ५ ॥

कृतं च धार्तराष्ट्रैर्यद् गरदानाद्यकौशलम् ।
आचख्यौ सर्वमेतस्मै पृथा विदुर एव च ॥ ६ ॥

पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ।
उवाच जन्मनिलयं स्मरन्त्यश्रुकुलेक्षणा ॥ ७ ॥

अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे ।
भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥

भ्रात्रीयो भगवान् कृष्णः शरण्यो भक्तवत्सलः ।
पैतृष्वस्रीयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥

सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ।
सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥ १०॥

कृष्ण कृष्ण महायोगिन् सर्वात्मन् विश्वपालक ।
प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ ११ ॥

नान्यत् तव पदाम्भोजात् पश्यामि शरणं नृणाम् ।
बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥ १२ ॥

नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।
योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥

इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ।
प्रारुदद् दुःखिता राजन् भवतां प्रपितामही ॥ १४ ॥

समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ।
सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥

यास्यन् राजानमभ्येत्य विषमं पुत्रलालसम् ।
प्रावदत् सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥ १६ ॥

भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ।
भ्रातर्युपरते पाण्डौ बन्धूनां सममास्थितः ॥ १७ ॥

धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् ।
वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ १८ ॥

अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ।
तस्मात् समस्त्वं वर्तस्व पाण्डवेष्वात्मजेषु च ॥ १९ ॥

नेह चात्यन्तसंवासः कस्यचित् केनचित् सह ।
राजन् स्वेनापि देहेन किमु जायात्मजादिभिः ॥ २० ॥

एकः प्रसूयते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥

अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पचेतसः ।
सम्भोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥

पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ।
अन्तेऽकृतार्थं हिन्वन्ति प्राणा रायः सुतादयः ॥ २३ ॥

स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ।
असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥ २४ ॥

तस्माल्लोकमिमं राजन् स्वप्नमायामनोरथम् ।
सम्भजनात्मनाऽऽत्मानं समः शान्तो भव प्रभो ॥ २५ ॥

धृतराष्ट्र उवाच–
यथा वदति कल्याणीं वाचं दानपते भवान् ।
तथानया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥ २६ ॥

तथापि सूनृता सौम्य हृदि न स्थीयते चले ।
पुत्रानुरागविषमे विद्युत् सौदामिनी यथा ॥ २७ ॥

ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ।
भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥

यो दुर्विमर्शपथया निजमाययेदं
सृष्ट्वा गुणान् विभजते तदनुप्रविष्टः ।
तस्मै नमो दुरवबोधविहारतन्त्र-
संसारचक्रगतये परमेश्वराय ॥ २९ ॥

श्रीशुक उवाच–
इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ।
सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥

शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ।
पाण्डवान् प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टचत्वारिंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां
पारमहंस्यां संहितायां दशमस्कन्धः ॥

# दशमस्कन्ध उत्तरार्धः

## अथ एकोनपञ्चाशोऽध्यायः

श्रीशुक उवाच –
अस्तिप्रास्तीति कंसस्य महिष्यौ भरतर्षभ ।
हते भर्तरि दुःखार्ते ईयतुः स्वपितुर्गृहान् ॥ १ ॥

पित्रे मगधराजाय जरासन्धाय दुःखिते ।
वेदयाश्चक्रतुः सर्वमात्मवैरूप्यकारणम् ॥ २ ॥

स तदप्रियमाकर्ण्य शोकामर्षयुतो नृपः ।
अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥

अक्षौहिणीभिर्विंशद्भिस्तिसृभिश्चापि संवृतः ।
यदुराजधानीं मथुरां न्यरुणत् सर्वतो दिशम् ॥ ४ ॥

निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ।
स्वपुरं तेन संरुद्धं स्वकुलं च भयाकुलम् ॥ ५ ॥

चिन्तयामास भगवान् हरिः कारणमानुषः ।
तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥

हनिष्यामि बलं ह्येतद् भुवि भारं समाहितम् ।
मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥

अक्षौहिणीभिः सङ्ख्यातं भटाश्वरथकुञ्जरैः ।
मागधोऽपि न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥

एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥

अन्योऽपि धर्मरक्षायै देहः सम्भ्रियते मया ।
विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥

एवं ध्यायति गोविन्दे मगधाधिपतिर्बली ।
मथुरां सवनोद्यानां रुरोध बहुसैनिकः ॥ ११ ॥

कलिङ्गश्चेकितानश्च दन्तवक्रविदूरथौ ।
उल्मुखो वेणुदारी च साल्वश्चैवश्च दुर्मतिः ॥ १२ ॥

पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया ।
विन्दानुविन्दावावन्त्यौ विराटो दरदस्तथा ॥ १३ ॥

एकलव्यो वाह्लिकश्च तथा पञ्चजनेश्वरः ।
रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महाबलः ॥ १४ ॥

युधामन्युर्बृहत्क्षत्रः शल्यो भूरिश्रवास्तथा ।
उत्तमौजाश्च रुग्मी च द्रुमश्चैव सुदक्षिणः ॥ १५ ॥

एते नियुक्ता राजानो जरासन्धेन जयद्रथः ।
पश्चिमद्वारमासाद्य रुरुधुर्मधुरां पुरीम् ॥ १६ ॥

द्रुपदः शिशुपालश्च त्रिगर्तोऽथ भारत ।
शकुनिः सोमदत्तश्च कुलिन्दश्च महाबलः ॥ १७ ॥

जरासन्धेन सहिताः सर्वे मदबलान्विताः ।
उत्तरद्वारमासाद्य रुरुधुर्भरतर्षभ ॥ १८ ॥

ते निरुध्य चतुर्द्वाराण्युद्वेलाम्भोधिसन्निभाः ।
सिंहनादं प्रकुर्वन्तो दध्मुः शङ्खाननेकशः ॥ १९ ॥

क्ष्वेलन्तो युद्धसन्नद्धा जघ्नुर्भेरीः सहस्रशः ॥ २० ॥

तद् वीरभूपालकदम्बजृम्भितं
युगावसानार्णवघूर्णितोपमम् ।
निशम्य कृष्णो न चचाल चेतसा
सृगालघोषं मृगराडिवोद्धतः ॥ २१ ॥

एतस्मिन्नेव काले तु गगनात् सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ २२ ॥

आयुधानि च दिव्यानि पुराणानि यदृच्छया ।
चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ॥ २३ ॥

गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा ।
त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसञ्ज्ञं गुणान्वितम् ॥ २४ ॥

तीक्ष्णधारः शितमुखः खड्गो नन्दकसञ्ज्ञितः ।
लघू शरचितौ रम्यौ तूणी चाक्षयसायकौ ॥ २५ ॥

तुरगाः सैन्यसुग्रीवमेघपुष्पवलाहकाः ।
हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥ २६ ॥

इत्येतान्यायुधान्याजौ गगनादागतानि सः ।
दृष्ट्वा राजन् हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ २७ ॥

पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ।
एष ते रथ आयातो दयितान्यायुधानि च ॥ २८ ॥

यानमास्थाय जह्येतद् व्यसनात् स्वान् समुद्धर ।
एतदर्थं हि नौ जन्म साधूनामीश सत्कृतम् ॥ २९ ॥

त्रयोविंशत्यनीकानां भूमेर्भारमपाकुरु ।
एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनां वरौ ॥ ३० ॥

दंशितैश्च यदुश्रेष्ठैर्बहुभिश्च समन्वितौ ।
निर्जग्मतुः पुरवराद् बलेनाल्पीयसा नृप ॥ ३१ ॥

निर्गत्य सदनात् कृष्णो वृष्णीनाहूय सर्वशः ।
आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥ ३२ ॥

वसुदेवं च निशठं कृतवर्माणमुद्धवम् ।
कृष्णो निर्यातयामास पूर्वद्वारेण भारत ॥ ३३ ॥

उग्रसेनं सुदामानं पृथुं विपृथुमेव च ।
हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥ ३४ ॥

सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम् ।
हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान् ॥ ३५ ॥

गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः ।
आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥ ३६ ॥

उत्तरेण विनिर्गम्य द्वारेण जगदीश्वरः ।
शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् ।
आह दारुकमासीनं रथाग्रे माधवः स्मयन् ॥ ३७ ॥

श्रीभगवानुवाच –
रथं वाहय धर्मज्ञ यत्र तौ चैद्यमागधौ ।
तर्पयामि नृपान् सर्वान् सायकैर्युद्धदुर्मदान् ॥ ३८ ॥

श्रीशुक उवाच –
इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत् ।
व्यनदत् सिंहनादं च गोविन्दः परवीरहा ॥ ३९ ॥

शङ्खमाध्माय रामोऽपि सिंहनादं व्यनीनदत् ।
ततोऽभूत् परसैन्यानां हृदि चिन्ता सवेपथुः ॥ ४० ॥

पूर्वद्वारि नृपैः सार्द्धं यदूनां कदनं महत् ।
आसीच्चतुर्भिरब्दानां तदद्भुतमिवाभवत् ॥ ४१ ॥

दक्षिणद्वार्यपि तथा गोविन्दाध्मातचेतसाम् ।
आसीद् यदूनां कदनं राजन्यकटकेन वै ॥ ४२ ॥

अपरद्वार्यपि तथा यदूनां दृढधन्विनाम् ।
आसीद् राजसमाजेन सङ्गमो रोमहर्षणः ॥ ४३ ॥

ते हन्यमाना यदवो राजभिः शक्रविक्रमैः ।
न चेलुः सङ्गराद् राजन् लोकद्वयजिगीषवः ॥ ४४ ॥

तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः ।
आससाद महाघोरौ यत्र तौ चैद्यमागधौ ॥ ४५ ॥

जरासुतस्तावभिवीक्ष्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ।
ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥

सुपर्णतालध्वजचिह्नितौ रथौ विलक्षयन्त्यो हरिरामयोर्मृधे ।
स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः सम्मुमुहुः शुचार्पिताः ॥

हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्वणवर्षपीडितम् ।
स्वसैन्यमालोक्य सुरासुरार्चितं व्यघूर्णयच्छार्ङ्गशरासनोत्तमम् ॥

गृह्णन् निषङ्गादथ सन्दधच्छरान् विकृष्य मुञ्चञ्छितवाणसञ्चयम् ।
निघ्नन् रथान् कुञ्जरवजियूथपान् निरन्तरं यद्वदलातचक्रम् ॥

ततः शशाङ्काकृतिपाञ्चजन्यं महारवं दैत्यकुलापचारम् ।
मुखे निधायाशु पुपूर यादवानाश्वासयन् क्षत्रियकूटयद्दितान् ॥

नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं क्रमेण निर्भिण्णहृदो बभूविरे ।
यदुप्रवीराश्च समुद्यतायुधा रणे नृपान् जघ्नुरनीकसंयुताः ॥

ततश्चतुर्द्वारगतान् महीपतीन्
यदुप्रवीराः परिभूय सर्वशः ।
चक्रुः शरौघैः सहसैकवाहिन
आप्यायिताः शार्ङ्गरवेण शौरिणा ॥ ५२ ॥

ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः ।
भर्त्सयन् कृष्ण कृष्णेति तिष्ठ तिष्ठेति चाब्रवीत् ॥ ५३ ॥

तमभ्यधावद् गोविन्दो विमुञ्चन् सायकान् बहून् ।
मण्डलीकृतकोदण्डस्तैलधौताञ्छितान् शरान् ॥ ५४ ॥

ततः पञ्च शरान् घोरानादाय दमघोषजः ।
चतुर्भिस्तुरगानाशु विव्याधैकेन सारथिम् ॥ ५५ ॥

भूयो दशाशु सन्धाय विव्याध मधुसूदनम् ।
व्यनदत् सिंहनादं च तदद्भुतमिवाभवत् ॥ ५६ ॥

ततस्तमाह गोविन्दः साधु साध्विति पूजयन् ।
भो भो चैद्य महेष्वास वीरोऽसि बलवानसि ॥ ५७ ॥

अतो मे पश्य दुर्बुद्धे धानुष्मत्त्वं स्वयं रणे ।
इति ब्रुवति गोविन्दे राजानः सर्व एव ते ॥ ५८ ॥

विव्यधुर्निशितैर्बाणैर्योगपद्येन माधवम् ।
तांस्तान् प्रत्येकशः कृष्णो विद्ध्वा पञ्चभिराशुगैः ॥ ५९ ॥

सारथिं चतुरो वाहाननयत् यमसादनम् ।
त्रिभिस्त्रिभिः शरैर्भूयोऽप्येकैकं नृपतीन् रणे ॥ ६० ॥

वक्षस्यास्ये ललाटे च विव्याध यदुनन्दनः ।
ततश्च त्रिंशतां राज्ञां त्रिंशत्कार्मुकमाहवे ॥ ६१ ॥

त्रिंशद्भिः सायकैराशु चिच्छेद यदुपुङ्गवः ।
दमघोषसुतस्यापि धनुश्छित्त्वा त्रिभिः शरैः ॥ ६२ ॥

ध्वजं च मुकुटच्छत्रे चकर्त प्रहसन्निव ।
ततो दश हरिर्भल्लान् शार्ङ्गे सन्धाय माधवः ॥ ६३ ॥

आकर्णान्तं समाकृष्य चैद्यं विव्याध सङ्गरे ।
तेन राजन्यकटकं विभ्रान्तं शरताडितम् ॥ ६४ ॥

कालान्तमारुतोद्धूतशैलद्रुमलतोपमम् ।
त्रातारं नाध्यगच्छद् वै हताश्वरथसारथिः ॥ ६५ ॥

शरान् विमुञ्चन् जलजं च पूरयन् विष्फूर्जयन् कार्मुकमुग्रपौरुषः ।
विलोलयन् मागधसैन्यमाहवे निरन्तरं यद्वदलातचक्रम् ॥

निर्भिन्नकुम्भाः करिणो निपेतुरनीकशोऽश्वाः शररुग्णकन्धराः ।
रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥

सञ्छिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ।
भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥६८॥

करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः ।
आस्फूर्जितावृत्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥

प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षवहाः परस्परम् ।
विनिघ्नताऽरीन् मुसलेन दुर्मदान् सङ्कर्षणेनापरिमेयतेजसा ॥

बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम् ।
क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥

स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया ।
न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥

हतेषु सर्वसैन्येषु जरासन्धो महाबलः ।
विद्रुतेष्ववशिष्टेषु रथेनैकेन शौरिणम् ॥ ७३ ॥

तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ ।
परस्परमयुध्येतां सामर्षौ बलशालिनौ ॥ ७४ ॥

मागधस्तु गदां गुर्वीमादायामर्षविह्वलः ।
भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ॥ ७५ ॥

तामापतन्तीं तरसा गदां शृङ्गोपमां गिरेः ।
व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ॥ ७६ ॥

व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः ।
पोथयित्वा रथे क्षुब्धो निहत्य रथसारथी ॥ ७७ ॥

जग्राह विरथं रामो जरासन्धं महाबलम् ।
हतानीकावशिष्टासु सिंहः सिंहमिवौजसा ॥ ७८ ॥

बध्यमानं हतानीकं पाशैर्वारुणमानुषैः ।
वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥ ७९ ॥

स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः ।
वनं विविक्षुस्तपसे वारितः पथि राजभिः ॥ ८० ॥

हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ।
उपेक्षितो भगवता मागधो दुर्मना ययौ ॥ ८१ ॥

(तपसे कृतसंकल्पो वारितः पथिराजभिः ॥
वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ।
स्वकर्मबन्धप्राप्तोऽयं यदुभिस्ते पराभवः ॥)

मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ।
गृहीत्वा मागधेन्द्रस्य धनं स्त्रीकोशवाहनम् ॥ ८२ ॥

विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ।
माधुरैरभिसङ्गम्य विज्वरैर्मुदितात्मभिः ।
उपगीयमानविजयः सूतमागधवन्दिभिः ॥ ८३ ॥

शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ।
वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ८४ ॥

सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् ।
निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ८५ ॥

निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः ।
निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ८६ ॥

आयोधनागतं वित्तमनन्तं वीरभूषणम् ।
यदुराजाय तत्सर्वमाहृतं प्रादिशत् प्रभुः ॥ ८७ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे एकोनपञ्चाशोऽध्यायः ॥

# अथ पञ्चाशोऽध्यायः

श्रीबादरायणिरुवाच –
तृतीये मासि भूयश्च राजा बार्हद्रथो बली ।
दिवानिशं तप्यमानः स्मरन् पूर्वपराभवम् ॥ १ ॥

आहूय सर्वान् भूपालान् चकार कदनोद्यमम् ।
समस्त्यान् (स्ववश्यान्) मालवांश्चेदीन् कुरुपाञ्चालकेरलान् ॥

कुलिन्दकुन्तलावन्तिकाशिगान्धारसृञ्जयान् ।
कलिङ्गकेकयानान्ध्रान् दशार्णान् वङ्गसैन्धवान् ॥ ३ ॥

माद्रान् त्रिगर्तान् सौवीरान् पार्वतेयांश्च सर्वशः ।
आहूयाक्षौहिणिगणैस्त्रयोविंशतिभिर्युतः ॥ ४ ॥

स मागधानतिक्रम्य पश्चिमाभिमुखो ययौ ।
आकर्षन्निव भूपालान् गजाश्वरथबल्लभान् ॥ ५ ॥

आगत्य मधुरां रोद्धुं प्राविशद् यमुनातटे ।
स्कन्धावारेण महता राजभिर्बहुभिर्युतः ॥ ६ ॥

उपगीयमानो न्यरमत् सूतमागधवन्दिभिः ।
तदाकर्ण्य रणोद्योगं मागधस्य बलीयसः ॥ ७ ॥

मन्त्रयामास शर्वर्यां कृष्णः सङ्कर्षणादिभिः ।
वसुदेवोद्धवाक्रूरशैनेयाहुकसारणैः ॥ ८ ॥

पतिरालोच्य शर्वर्यां सम्यङ् निर्धारितक्रियः ।
उपस्यनुदिते सूर्ये समाहूय भटोत्तमान् ॥ ९ ॥

त्रिधा विभज्य गोविन्दः स्वसेनां चतुरङ्गिणीम् ।
न्ययोजयदमेयात्मा मगधेन्द्रबलं प्रति ॥ १० ॥

सङ्कर्षणं च हार्दिक्यं गदं सारणमेव च ।
वामेन प्रेषयामास मार्गेण मधुसूदनः ॥ ११ ॥

सात्यकिं विपृथुं चैव पृथुमुद्धवमेव च ।
दक्षिणेनैव मार्गेण प्राहिणोत् सेनया सह ॥ १२ ॥

स्वयं कतिपयैर्युक्तो रथैः कमललोचनः ।
अग्रे मगधराजस्य प्रविवेश महद्बलम् ॥ १३ ॥

सा सेना बहुनागाश्वरथपादातिसङ्कुला ।
प्रसुप्ता यमुनातीरे विस्रब्धा रमते सुखम् ॥ १४ ॥

उदयाद्रिं समारोहत्यर्के तमसि नश्यति ।
नीडस्थेष्वेव कूजत्सु विहङ्गेषु ततस्ततः ॥ १५ ॥

विकसत्सु सरोजेषु गायत्स्वलिकुलेषु च ।
प्रविवेश बलं भीमं मगधेन्द्रस्य दुर्जयम् ॥ १६ ॥

हयाश्चाबद्धवैराणाः श्रेणीबद्धाः समन्ततः ।
कुञ्जराश्च तदा राजन्नारोपितपञ्जराः ॥ १७ ॥

अनादत्तप्रहरणा भटाश्चाबद्धमूर्धजाः ।
अप्रविष्टात्मवर्माणस्तदा नारूढवाहनाः ॥ १८ ॥

रथाश्चाबद्धतुरगाः सर्वतोऽनुद्धृतध्वजाः ।
सेनाया मगधेन्द्रस्य प्रवेशे पीतवाससः ॥ १९ ॥

त्रिदिक्ष्वापतितं सैन्यं दृष्ट्वा तद्राजमण्डलम् ।
इतिकर्तव्यतामूढं विभ्रान्तं समपद्यत ॥ २० ॥

केचिद्भटाः समापेतुर्भयात् केचिच्च दुद्रुवुः ।
केचिदात्तप्रहरणास्त्वभिसस्रुरीन् रणे ॥ २१ ॥

केचिद् विभिन्नवर्माणश्छिन्नपादोरुबाहवः ।
रिपूनेवाभ्यवर्तन्त क्रोधोद्वृत्तारुणेक्षणाः ॥ २२ ॥

केचिद् हयानपल्याणानारुह्य दृढविक्रमाः ।
मर्दयन्तो रिपून् युद्धे विमलं लेभिरे यशः ॥ २३ ॥

राजानः सहसोद्बुद्ध्य दृष्ट्वा सैनिकसङ्कयम् ।
विना रणोपस्करणं चक्रुः केचन सङ्गरम् ॥ २४ ॥

केचिद विसृज्य शिबिरं विविशुर्गहनं वनम् ।
केचिन्मागधमासाद्य विजयस्वेति चाब्रुवन् ॥ २५ ॥

रथेनैकेन गोविन्दः प्रविश्य रिपुवाहिनीम् ।
जघान सुबहून् वीरान् सायुधान् सरणोद्यमान् ॥ २६ ॥

सङ्कर्षणोऽपि बलवान् महत्या सेनया वृतः ।
बलं प्रविश्य वामेन मर्दयामास मागधम् ॥ २७ ॥

शैनेयोऽपि महाबाहुर्दक्षिणेनैव वर्त्मना ।
प्रविश्य चतुरङ्गेण सैन्येन महताऽर्दयत् ॥ २८ ॥

एवं सा व्यथिता सेना मगधेन्द्राभिरक्षिता ।
दुद्राव त्रास्यमाना वै क्षणमात्रं दिशो दश ॥ २९ ॥

ततोऽनुद्रुत्य वार्ष्णेयः सात्यकिः पञ्चयोजनम् ।
निहत्य मागधं सैन्यं जयी व्यावर्ततहवात् ॥ ३० ॥

मतङ्गजान् पर्वतसन्निभान् बहून्
निगृह्य सोपस्करतोमराङ्कुशान् ।
रथांश्च शस्त्रध्वजवाजिसंयुतान्
निनाय कृष्णो मधुरां मनोरमाम् ॥ ३१ ॥

छत्राणि हेमाम्बररत्नमिश्रितानि
अनेकबालव्यजनानि माधवः ।
किरीटपट्टाङ्गदकुण्डलांशुकान्यवाप
कृष्णोऽगणितानि संयुगे ॥ ३२ ॥

हलायुधो मागधकोशवाहान्
प्रजावरोधायुधभूषणादिकम् ।
नियोजितः कंसभिदा रणार्जितं
यदुप्रवीराय धनं न्यवेदयत् ॥ ३३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे पञ्चाशोऽध्यायः ॥

## अथ एकपञ्चाशोऽध्यायः

श्रीशुक उवाच–
मागधस्तु रणश्लाघी माधवेन पराजितः ।
जगाम शोणितपुरं बाणं द्रष्टुं बलेः सुतम् ॥ १ ॥

तं तथाऽऽयान्तमाकर्ण्य वृतराजन्यमण्डलम् ।
मित्रं पराजितं युद्धे विष्णुना दानवेश्वरः ॥ २ ॥

अलङ्कृतैर्गजैरश्वैर्विचित्रस्यन्दनैर्भटैः ।
वारकान्ताकदम्बैश्च सूतमागधवन्दिभिः ॥ ३ ॥

ध्वजैः पताकैश्छत्रैश्च माङ्गल्यैः पटहस्वनैः ।
सुवर्णतोरणैश्चित्रैर्दीपैः कलशदर्पणैः ॥ ४ ॥

उपतस्थे जरासन्धं बाणो बाहुसहस्रवान् ।
तौ दृष्ट्वा परमस्निग्धौ परस्परमनोनुगौ ॥ ५ ॥

पूजां चक्रतुरन्योन्यमन्योन्यप्रियकारिणौ ।
ततोऽब्रवीज्जरासन्धो बाणमाभाष्य संसदि ॥ ६ ॥

दानवेन्द्र निबोधेदं गोपेनाधर्मचारिणा ।
रात्रौ चौर्यप्रतापेन वञ्चितोऽस्मि दुरात्मना ॥ ७ ॥

गृहीता बहवस्तुङ्गा मातङ्गा मदशालिनः ।
तुरङ्गमाश्च बहवो रथाश्च सपरिच्छदाः ॥ ८ ॥

द्वन्द्वेन सज्यमानं मामिमे भूपा न सेहिरे ।
निरुद्धस्तैरहं भूपैरेतैः समसुखासुखैः ॥ ९ ॥

त्वत्सन्निधिमिहायातः साहाय्यं कुरु मे प्रभो ।
इत्युक्तस्तं निजपुरं प्रवेश्य बलिनन्दनः ॥ १० ॥

स राजमण्डलायाशु कारयामास सत्क्रियाम् ।
भोजनस्नानशयनगन्धताम्बूलपूर्वकैः ॥ ११ ॥

अर्हणैरर्हयामास सराजन्यं जरासुतम् ।
तं भुक्तवन्तं विश्रान्तं दृष्टदर्शनकौतुकम् ॥ १२ ॥

अलङ्कृतं सह नृपैरासीनं काञ्चनासने ।
उवाच दानवपतिर्नृपानाभाष्य सादरम् ॥ १३ ॥

बाण उवाच –
जरासन्ध निबोधेदं न मृषा कथ्यते मया ।
एते गजा इमे चाश्वा इदं राज्यमिमाः प्रजाः ।
त्वदधीनमिदं विश्वं यच्चान्यद् वस्तु विद्यते ॥ १४ ॥

श्रीशुक उवाच –

इत्युक्त्वा प्रददौ तस्मै मागधाय बलेः सुतः ।
गजानां षष्टिसाहस्रं रथानां नियुतं तथा ॥ १५ ॥

प्रयुतं चतुरङ्गाणां मनोमारुतरंहसाम् ।
दानवानां प्रसिद्धानां मायासङ्ग्रामवेदिनाम् ॥ १६ ॥

त्रिशतं स्वात्मसाम्यानां ददौ बाणो बलेः सुतः ।
विचित्रशिबिकाच्छत्रव्यजनाकल्पवाससाम् ॥ १७ ॥

असङ्ख्यातं ददौ राजन् भाण्डशय्यासनादिकम् ।
कुम्भाण्डं कूपकर्णं च मन्त्रिणौ दैत्यसत्तमौ ॥ १८ ॥

आज्ञापयामास बाणः साहाय्यार्थं कुरूद्वह ।
क्व सुरासुरसङ्घातसंहारणपटुर्हरिः ॥ १९ ॥

कुम्भाण्डकूपकर्णौ क्व वराकौ बाणमन्त्रिणौ ।
अजानन्तो विष्णुशक्तिं भूपाला विनशिष्णवः ॥ २० ॥

चक्रुर्भूयो रणोद्योगं मागधेन प्रचोदिताः ।
बाणेन समनुज्ञातो मागधः शोणितात् पुरात् ॥ २१ ॥

निर्गत्यानेकभूपालचतुरङ्गबलान्वितः ।
दिनैः कतिपयैर्भूयो मधुरामन्वपद्यत ॥ २२ ॥

सन्निरुध्य पुरद्वारं गोपुराट्टालतोरणैः ।
दीर्घिकोपवनोद्यानैरुपेतं सालभूषितम् ॥ २३ ॥

कुन्तैः कुठारैः कुद्दालैर्दण्डभारैश्च भूरिभिः ।
कर्षणस्थैश्च पाषाणैर्बभञ्ज परितः पुरम् ॥ २४ ॥

भज्यमाने वने तस्मिन् श्रुत्वा मागधमागतम् ।
सन्नाहभेरीः सन्नाद्य रामकृष्णावमर्षिणौ ॥ २५ ॥

रथाश्वकुञ्जरानीकैः सायुधैः सपरिच्छदैः ।
सात्यकिं कृतवर्माणमुग्रसेनं तथा गदम् ॥ २६ ॥

आहुकं वसुदेवं च पुरस्कृत्य महाबलौ ।
निर्जग्मतुरसम्भ्रान्तौ दीप्तौ केसरिणौ यथा ॥ २७ ॥

मधुराया विनिर्गत्य कृष्णः कमललोचनः ।
पाञ्चजन्यं महाशङ्खं प्रदध्मौ रिपुभूषणम् ॥ २८ ॥

ततः प्रववृते युद्धं यदूनां क्षत्रियैः सह ।
कुम्भाण्डकूपकर्णौ च दानवौ बाणमन्त्रिणौ ॥ २९ ॥

दैन्यसैन्येन महता वृतौ मायाविशारदौ ।
युयुधाते महावीर्यौ मायया वृष्णिभिः सह ॥ ३० ॥

स्वसैन्यं मायया क्लिष्टं दृष्ट्वा यादवसत्तमः ।
विज्ञानास्त्रेण तन्मायामपास्य निमिषान्तरे ।
सात्यकिं कृतवर्माणं चोवाचाहवलालसौ ॥ ३१ ॥

आभ्यां भवन्तौ रणदुर्मदाभ्यां रणं सुघोरं कुरुतं रणप्रियौ ।
तावेवमुक्तौ कदनं भयानकं महाबलौ सम्प्रति चक्रतुर्नृप ॥

चापेनैकेन गोविन्दः क्षत्रियैः शतसम्मितैः ।
युयुधे न हि तच्चित्रं राजन् विश्वात्मनो हरेः ॥ ३३ ॥

केचिद् हताः समापेतुः कुञ्जराश्छिन्नपुष्कराः ।
निपेतुर्बहवो राजंस्तुरङ्गाः कृत्तकन्धराः ॥ ३४ ॥

विशीर्णैरास्तृता पृथ्वी स्यन्दनैश्छिन्नबन्धनैः ।
भटाश्च रुधिराक्ताङ्गाश्छिन्नपादोरुबाहवः ॥ ३५ ॥

पेतुः कृत्तमहामूलाः किंशुका इव पुष्पिताः ।
शार्ङ्गमुक्ताः शरगणाः कङ्कबर्हिणवाससः ॥ ३६ ॥

तैलाक्ता नतपर्वाणः स्वर्णपुङ्खा अयोमुखाः ।
एकैकस्मिन् दशदश भटे चाश्वे शतंशतम् ॥ ३७ ॥

रथे रथे च साहस्रमयुतं च गजे गजे ।
अदृश्यन्त परानीके तदद्भुतमिवाभवत् ॥ ३८ ॥

तथा तैरर्द्यमानेषु चतुरङ्गेषु मागधः ।
रथेन क्रोडचिह्नेन बलभद्रमुपाद्रवत् ॥ ३९ ॥

स पूर्ववैरं नृपतिः स्मरन् रुषा
रथं महाकाञ्चनतालकूबरम् ।
आलक्ष्य दूरादधिगम्य रंहसा
जरासुतः प्राह हलायुधं गदी ॥ ४० ॥

आदत्स्व ते मुसलं राम तूर्णं
येनाहितानिच्छसि जेतुमाहवे ।
बलं च बाह्वोस्तव दर्शयाशु मे
यावद् गदां न प्रहराम्यहं त्वयि ॥ ४१ ॥

इत्येवमुक्तो मगधेश्वरेण
सङ्कर्षणोऽमर्षणविह्वलेक्षणः ।

आदाय घोरं मुसलं तटित्प्रभं
दण्डं यथा सूर्यसुतो युगक्षये ॥ ४२ ॥

आवर्तयित्वा मुसलं हलायुधः
सहस्रकृत्वो रिपुदर्पहारिणम् ।
धूमाङ्कुरोद्गारिणमाशु तस्मै
चिक्षेप राजन् व्यनदद्धरिर्यथा ॥ ४३ ॥

रामबाहुविमुक्तेन मुसलेन जरासुतः ।
साश्वसूते रथे क्षुण्णे क्षणेन व्यसितः स्वयम् ॥ ४४ ॥

ततः कालायसीं गुर्वीं गिरिकूटोपमां गदाम् ।
बिभ्रद् गुर्वीं पदा पृथ्वीं चालयन्नभ्यगाद् बलम् ॥ ४५ ॥

तमापतन्तमालोक्य विरथं रोहिणीसुतः ।
तमेवाभ्यद्रवत् पद्भ्यां विसृज्य स्यन्दनं रणे ॥ ४६ ॥

पश्यतां सर्वभूतानां मागधः क्रोधविह्वलः ।
आवर्तयन् गदां गुर्वीमयःसारमयीं दृढाम् ।
अभ्येत्य गदया रामं प्रजहार ननाद च ॥ ४७ ॥

तां गदां पतितां वक्षस्यश्मकुट्टनिभां दृढाम् ।
वामेन जगृहे रामः स्वहस्तेन कुरूद्वह ॥ ४८ ॥

विसृज्य स गदां तूर्णमुरसाऽऽहत्य मागधम् ।
जग्राहाक्षिप्य बलिनं बलवान् रोहिणीसुतः ॥ ४९ ॥

बबन्ध पद्भ्यां जठरं मागधस्य हलायुधः ।
चकार कुक्षौ तत्कण्ठं ततस्तौ पेततुर्भुवि ॥ ५० ॥

तयोर्निपततो राजन् उपर्यासीद्धलायुधः ।
तं मागधः क्षणेनाधश्चकारामितविक्रमः ॥ ५१ ॥

तत उत्थाय तौ वीरौ क्रोधसंरक्तलोचनौ ।
भूयो जग्रहतुर्घोरौ मत्तौ द्वाविव कुञ्जरौ ॥ ५२ ॥

तावुभौ परमक्रुद्धौ परस्परवधैषिणौ ।
उरसोः समाहत्य भीमौ चकृषतू रणे ॥ ५३ ॥

एवं धनुःशतशतं तावाकृष्य परस्परम् ।
निकटस्थान् द्रुमान् शैलांश्चूर्णयामासतुर्नृप ॥ ५४ ॥

तं विसृज्य जरासन्धो गदामादाय दुर्मदः ।
उदतिष्ठदमेयात्मा रामोऽपि बलिनां वरः ।
क्षणादादत्त मुसलं प्रहर्तुमुपचक्रमे ॥ ५५ ॥

तं कामपालो मुसलेन मूर्ध्नि
जत्रुण्यंसे भुजयोर्नाभिदेशे ।
शृङ्गे च जानौ जठरे च
वक्षस्यनेकशो वै प्रजहार युद्धे ॥ ५६ ॥

तं मागधो वक्षसि कन्धरे च
मुखे ललाटे चुबुके तथांऽसे ।
नाभौ नितम्बे च तथैव पार्श्वे
समं स मानी प्रजहार रामम् ॥ ५७ ॥

एवं प्रहरतोस्तत्र राममागधयोर्मृधे ।
राजानो रणसंविग्ना बभूवुर्भृशपीडिताः ॥ ५८ ॥

क्रमेण ते विमनसो निवृत्तकदनोद्यमाः ।
आसन्नासन्ननिधनं मन्वाना मागधेश्वरम् ॥ ५९ ॥

सात्यकिस्तु महातेजाः सङ्गरे बाणमन्त्रिणा ।
युध्यमानस्त्रिभिर्बाणैः कुभाण्डेन समर्पितः ॥ ६० ॥

सोऽतिविद्धो महाबाहुः क्रुद्धः सर्प इव श्वसन् ।
आददे पञ्च नाराचान् कुम्भाण्डं हन्तुमाहवे ॥ ६१ ॥

ततो हाहारवो जज्ञे सेनायां दैत्यमन्त्रिणः ।
सात्यकिस्तु महाबाहुराकृष्याकर्णमाशुगैः ॥ ६२ ॥

विव्याध कुरुशार्दूल कुम्भाण्डं बाणमन्त्रिणम् ।
नाभौ कण्ठे ललाटे च हृदि मूर्ध्न्यपि दानवम् ॥ ६३ ॥

अतिविद्धो रथोपस्थे निषसाद विचेतनः ।
तं विचेतनमालोक्य दुर्मनास्तस्य सारथिः ॥ ६४ ॥

अपोवाह रणात् तूर्णं रथेन भरतर्षभ ।
कूपकर्णस्तु दैतेयः प्रसक्तः कृतवर्मणा ॥ ६५ ॥

गतं कुम्भाण्डमालोक्य प्राप्तं च प्राणसंशयम् ।
विसृज्य कृतवर्माणमपायात् समराङ्गणात् ॥ ६६ ॥

तौ विसृज्य रणं दैत्यावनापृच्छ्य च भूपतिम् ।
अविसृष्टौ मागधेन हतशेषबलान्वितौ ।
दैत्यौ तेनैव मार्गेण जग्मतुः शोणितं पुरम् ॥ ६७ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे एकपञ्चाशोऽध्यायः ॥

# अथ द्विपञ्चाशोऽध्यायः

श्रीशुक उवाच —
बाणसेनां गतां दृष्ट्वा शस्त्रौघेण भृशार्दिताः ।
राजपुत्रा विमनसो बभूवुर्नृपसत्तम ॥ १ ॥
गतां च दानवीं सेनां श्रान्तांश्च धरणीपतीन् ।
दृष्ट्वा कृष्णं च युद्ध्यन्तं रामस्य ववृधे बलम् ॥ २ ॥
स मागधं गृहीत्वाऽऽजौ मौलौ वामेन पाणिना ।
प्रहर्तुमैच्छच्छिरसि मुसलेन हलायुधः ॥ ३ ॥
ततोऽन्तरिक्षे घनघोषघर्घरां
शुश्राव वाणीं विशदाशरीरिणीम् ।
न राम बध्यो भवता जरासुतः
सुखी निवर्तस्व रणादिति स्फुटम् ॥ ४ ॥
वचस्तदाकर्ण्य हलायुधो बली
विसृज्य चास्थाय रथं रणाङ्गणात् ।
न्यवर्तत ब्रह्मर्षिसिद्धसङ्घै-
रभिष्टुतो मागधसूतवन्दिभिः ॥ ५ ॥
जरासुतः सम्प्रति नम्रकन्धरो
नृपैश्च युद्धाभिजितैः समन्वितः ।
हतावशिष्टाल्पबलेन संवृतो
निवृत्तयुद्धः प्रययौ स्वकं पुरम् ॥ ६ ॥
गोविन्दस्तु महातेजाः सपत्नांश्छस्त्रसश्चयैः ।
आच्छाय भूपान् विद्राव्य हत्वा च सुबहून् रणे ॥ ७ ॥
संस्तूयमानः सन्तुष्टैः सूतमागधवन्दिभिः ।
ब्राह्मणैश्च महाविद्यैः स्तोत्रं कुर्वद्भिरुच्चकैः ॥ ८ ॥
अन्वीयमानो भगवान् प्राविशन्मधुरां पुरीम् ।
हृष्टपुष्टजनाकीर्णां तुङ्गप्राकारतोरणाम् ॥ ९ ॥
चलत्कदलिकोपेतां दीपाङ्कुरविराजिताम् ।
प्रविशन् राजमार्गेण स्त्रीभिः प्रासादसंस्थितैः ॥ १० ॥
पुष्पैश्च लाजाञलिभिः कीर्यमाणो व्यराजत ।
उपायनानि दिव्यानि पुष्पस्रगनुलेपनान् ॥ ११ ॥
प्रियङ्करा माधवाभ्यामुपाजह्नुः पुरौकसः ।
एवं स राजमार्गेण गत्वा यादवसत्तमः ॥ १२ ॥
सभां प्रविश्य विपुलामुपविश्य वरासने ।
रामेण सहितो वीरः शैनेयेन च धीमता ॥ १३ ॥
पूजितो यदुभिर्विप्रैर्दिवि शक्र इवामरैः ।
तत्रासीनैर्वृद्धिमद्भिर्यदुवृद्धैर्महात्मभिः ॥ १४ ॥
उग्रसेनोद्धवमुखैरक्रूरप्रमुखैर्हरिः ।
समाभाष्याभ्यनुज्ञातः सङ्कर्षणसहायवान् ॥ १५ ॥
द्रष्टुकामो महादुर्गं गोमन्तं पर्वतोत्तमम् ।
निर्गम्य मथुरां प्रातर्दक्षिणाभिमुखो ययौ ॥ १६ ॥
स रामानुगतः श्रीमानुत्तीर्य यमुनां हरिः ।
देशान् बहूनतिक्रम्य पर्वतान् सरितो गिरौ ॥ १७ ॥
गच्छन् कचिद् वनोद्देशे वृक्षमूलनिवासिनम् ।
ददर्श कञ्चन मुनिं जटामण्डलमण्डितम् ॥ १८ ॥
चीरकृष्णाजिनधरं कमण्डलुविराजितम् ।
समाधौ समुपाविष्टं तेजसा भास्करोपमम् ॥ १९ ॥
फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम् ।
दृष्ट्वा परमसन्तुष्टौ रामकृष्णौ जगत्पती ॥ २० ॥
प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ ।
इदं चोवाच भगवान् कृष्णस्तं मुनिपुङ्गवम् ॥ २१ ॥
नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन ।
रामकृष्णौ स्मृतावावां कचित् ते श्रवणं गतौ ॥ २२ ॥
इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः ।
निरीक्ष्य माधवौ प्राह प्रीत्युत्फुल्लमुखेक्षणः ॥ २३ ॥
स्वागतं ते यदुश्रेष्ठ साग्रजाय महात्मने ।
जाने त्वां यदुपूत्पन्नं भगवन्तमधोक्षजम् ॥ २४ ॥
कार्याणां कारणं पूर्वं जगतामादिपूरुषम् ।
नमस्ते पुण्डरीकाक्ष विश्वलोकैककारण ॥ २५ ॥
किमर्थमिह सम्प्राप्तौ भवन्तौ विश्ववन्दितौ ।
इत्युक्तौ जामदग्न्येन प्राहतू रामकेशवौ ॥ २६ ॥
गोमन्तं द्रष्टुमिच्छावो दुर्गहेतोरिति प्रभो ।
तदाकर्ण्याब्रवीद् रामो जामदग्न्यो जनार्दनम् ॥ २७ ॥

एवमस्तु महाबाहो गोमन्तं गच्छ साग्रजः ।
करवीरपुरं नाम तन्मूले परिपालितम् ॥ २८ ॥

सृगालवासुदेवेन स युवां न सहिष्यति ।
तं हत्वा समरे शैलं गोमन्तं साध्ववाप्स्यथ ॥ २९ ॥

इत्युक्तौ तेन रामेण जामदग्न्येन माधवौ ।
तमनुज्ञाप्य सर्वज्ञं जग्मतुर्दक्षिणामुखे ॥ ३० ॥

तौ तथा यदुशार्दूलौ गच्छन्तौ दक्षिणापथम् ।
ददर्शतुश्च गोमन्तमभ्रङ्कषमहाद्रुमम् ॥ ३१ ॥

करवीरपुरं चैव तन्मूले तुङ्गतोरणम् ।
दृष्ट्वा विचित्रप्राकारं हर्म्यप्रासादगोपुरम् ॥ ३२ ॥

शङ्खमाध्मापयामास शङ्खचक्रगदाधरः ।
तस्य शङ्खध्वनिं श्रुत्वा भूपालः क्रोधविह्वलः ॥ ३३ ॥

सृगालो वासुदेवाख्यः प्रत्यगाद् यदुनन्दनौ ।
सोऽभ्येत्य बहुपादातितुरङ्गरथकुञ्जरः ॥ ३४ ॥

अभ्यवर्षच्छरौघेण छादयन्निव माधवौ ।
तदनीकमनाधृष्यं दृष्ट्वा यादवसत्तमौ ॥ ३५ ॥

योधयामासतुर्वीरौ द्वावेवाजौ पदातिनौ ।
सैन्यं च बाणपूरेण व्यथितं भृशविह्वलम् ॥ ३६ ॥

दृष्ट्वा सृगालभूपालस्तावधावदमर्षणः ।
तमायान्तमभिप्रेक्ष्य रथिनं धृतकार्मुकः ।
न्यवारयद् वासुदेवो वेलेव वरुणालयम् ॥ ३७ ॥

तावुभौ परमक्रुद्धौ वासुदेवौ महाबलौ ।
युयुधाते तथाऽन्योन्यमन्योन्यवधकाङ्क्षिणौ ॥ ३८ ॥

स तथा विधमानस्य वासुदेवस्य सङ्गरे ।
शिरो जहार गोविन्दः क्षणेन मुकुटोज्ज्वलम् ॥ ३९ ॥

ततस्तत्सैनिकाः सर्वे हतशेषाः कुरूद्वह ।
कृष्णेन स्वामिनि हते दुद्रुवुः सर्वतो दिशम् ॥ ४० ॥

ततस्तौ रामगोविन्दौ करवीरपुरं महत् ।
प्रविश्य पूजितौ विप्रैर्वणिग्भिश्च यथा प्रियः ॥ ४१ ॥

तद्गजाश्वरथानीककोशादिधनसञ्चयम् ।
मधुरां प्रेषयामास तदीयैर्भृत्यपूरुषैः ॥ ४२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे द्विपञ्चाशोऽध्यायः ॥

## अथ त्रिपञ्चाशोऽध्यायः

श्री शुक उवाच–
गोमन्तं पर्वतश्रेष्ठं तुङ्गद्रुमलतान्वितम् ।
सालतालतमालाढ्यं प्रियालाशोकशोभितम् ॥ १ ॥

कदम्बनीपहिन्तालपूगपुन्नागशोभितम् ।
आरुह्य कदलीषण्डमण्डितं मत्तकोकिलम् ॥ २ ॥

भ्रमद्भ्रमरसङ्घातं प्लवगाकम्पितद्रुमम् ।
फलभारनतैः स्कन्धैर्नारिकेलैर्विराजितम् ॥ ३ ॥

बहुप्रस्रवणोपेतं सुच्छायं निर्मलोदकम् ।
रम्यं ददृशतुर्वीरौ प्रदेशं रामकेशवौ ॥ ४ ॥

तत्र प्रवर्षणं नाम शृङ्गं पर्वतमूर्धनि ।
अवापतुर्यत्र मेघा नित्यं वर्षन्त्यविक्लवाः ॥ ५ ॥

तत्रारुह्य यदुश्रेष्ठौ पश्यन्तौ हि दिशो दश ।
रममाणौ यथाकाममूषतुः पर्वतोत्तमे ॥ ६ ॥

एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे ।
निवासे देवदेवस्य शङ्खचक्रगदाभृतः ॥ ७ ॥

उपासीनो महाबाहुः श्रीमान् वैरोचनो बलिः ।
जहार देवदेवस्य किरीटं रत्नचित्रितम् ॥ ८ ॥

इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम् ।
पद्मरागमहानीलमुक्ताफलविराजितम् ॥ ९ ॥

पुष्परागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम् ।
हृतं दानववीरेण विदित्वा पुरपालकः ।
तमन्वधावत् त्वरितं वैनतेयो विहङ्गराट् ॥ १० ॥

तमन्तरे समासाद्य दानवेन्द्रं दुरासदम् ।
कृत्वा युद्धं महाघोरं जित्वा दानवपुङ्गवम् ॥ ११ ॥

गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम् ।
आगच्छन् ददृशे देवं देवकीनन्दनं हरिम् ॥ १२ ॥

वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोत्तमे ।
तस्य मूर्ध्नि निधायाशु किरीटं दिव्यभूषणम् ।
प्रणम्य पादयोर्मूर्ध्ना स्तोतुं तमुपचक्रमे ॥ १३ ॥
नमो नमः कारणपूरुषाय
नारायणायाखिलवल्लभाय ।
सुरारिसंहारणकारणाय
नारायणायाखिलकर्मसाक्षिणे ॥ १४ ॥
हिरण्यगर्भत्वमुपेत्य मूले
सृजस्यशेषं भुवनं स एव ।
नारायणात्मन् परिपासि भूयो
जहार चान्ते भगवन् शिवात्मन् ॥ १५ ॥
तं त्वा यदोर्वंशकरं सुरेशं
जानेऽवतीर्णं भुवने वृषाकपिम् ।
अहं हि भृत्यस्तव वैनतेयो
ब्रूहि क्रियां किं करवाणि देव ॥ १६ ॥
श्रीशुक उवाच –
इत्युक्त्वा देवदेवेशं प्रणिपत्य विहङ्गराट् ।
जानुनी(ना) धरणीं कृ(ग)त्वा तस्थौ प्राञ्जलिरग्रतः ॥१७॥
तं दृष्ट्वा यादवश्रेष्ठो गरुडं पक्षिपुङ्गवम् ।
प्रीत्युत्फुल्लमुखो दोर्भ्यां पस्पर्शाङ्गं तदुत्तमम् ॥ १८ ॥
गच्छ भद्र यथाकाममेहि काले मया स्मृतः ।
इत्युक्त्वा तं विसृज्योभावीश्वरौ रामकेशवौ ॥ १९ ॥
फलमूलकृताहारौ पीतकौशेयवाससौ ।
अवरुह्य गिरेः शृङ्गात् करवीरपुरं गतौ ॥ २० ॥
तत्र तौ चतुरो मासानुपित्वा भरतर्षभ ।
महत्या सेनया सार्धं जग्मतुर्मधुरां पुरीम् ॥ २१ ॥
शृगालं निहतं श्रुत्वा मागधः क्रोधविह्वलः ।
आजगाम कुरुश्रेष्ठ महत्या सेनया वृतः ॥ २२ ॥
तेन सार्धमभूद् युद्धं सप्ताहं रामकृष्णयोः ।
तदा पराजितो युद्धे मागधो बहुसैनिकः ॥ २३ ॥
जगाम मागधानेव बहुभिः क्षत्रियैः सह ।
रामकृष्णौ च धर्मज्ञौ सूतमागधबन्दिभिः ॥ २४ ॥
स्तूयमानौ विविशतुः सानुगौ मधुरां पुरीम् ।
एवं सप्तदशकृत्वस्तावदक्षौहिणीबलः ॥ २५ ॥
युयुधे मागधो राजा यदुभिः कृष्णपालितैः ।
अक्षिण्वत बलं सर्वं वृष्णिभिः कृष्णतेजसा ॥ २६ ॥
हतेषु तेष्वनीकेषु त्यक्तोऽयादरिभिर्नृप ।
अष्टादशमसङ्ग्रामे आगामिनि तदन्तरा ॥ २७ ॥
नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ।
रुरोध मधुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ २८ ॥
नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसम्मितान् ।
तं दृष्ट्वाऽचिन्तयत् कृष्णः सङ्कर्षणसहायवान् ॥ २९ ॥
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ।
यवनोऽयं रुणद्ध्यस्मानद्य श्वो वा महाबलः ॥ ३० ॥
मागधोऽप्येति दुष्टात्मा परश्वो नैव संशयः ।
आवयोर्युद्ध्यतोरस्य यद्यागच्छेज्जरासुतः ॥ ३१ ॥
बन्धून् वधिष्यत्यथवा नेष्यते स्वपुरीं बली ।
तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ ३२ ॥
तत्र ज्ञातीन्समाधाय यवनं घातयामहे ।
इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ॥ ३३ ॥
अन्तः समुद्रे नगरं कृष्णोऽद्भुतमचीकरत् ।
दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ ३४ ॥
रथ्याचत्वरवीथीभिर्यथाव(वा)स्तु विनिर्मितम् ।
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ ३५ ॥
हेमशृङ्गैर्दिवस्पृग्भिः स्फाटिकाट्टालगोपुरैः ।
राजतारकुटैः कोष्ठैर्जुष्टं हेमस्वलङ्कृतैः ॥ ३६ ॥
रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ।
वास्तोष्पतीनां च गृहैर्वलभिभिश्च निर्मितम् ॥ ३७ ॥
चातुर्वर्ण्यजनाकीर्णं यदूनां च गृहैर्लसत् ।
सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ॥ ३८ ॥
यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्वियुज्यते ।
यत् प्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः ॥ ३९ ॥
श्यामैककर्णान् वरुणो हयान् शुक्लान् मनोजवान् ।
ददौ सहस्रसङ्ख्यातान् देवदेवाय तोयराट् ॥ ४० ॥

अष्टौ निधिपतिः कोशान् रत्नपूर्णानविक्षयान् ।
तथाऽन्ये लोकपालाश्च ददुः स्वाधिकृतं धनम् ॥ ४१ ॥

यद् यद् भगवता दत्तमाधिपत्यं स्वसिद्धये ।
सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ४२ ॥

तत्र योगप्रभावेण नीत्वा स्वान् भगवान् हरिः ।
मधुरायाश्च रामेण कृष्णः समनुमन्त्रितः ।
निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ॥ ४३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे त्रिपञ्चाशोऽध्यायः ॥

# अथ चतुःपञ्चाशोऽध्यायः

श्रीशुक उवाच –
तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ।
दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥

श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥

नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ।
मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥

वासुदेवो ह्ययमिति पुमान् श्रीवत्सलाञ्छनः ।
चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥

लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ।
निरायुधश्चलन् पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥

इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ।
अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥

हस्तप्राप्तमिवात्मानं हरिणा स पदे पदे ।
नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥

पलायनं यदुकुले जातस्य तव नोचितम् ।
इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥

एवं क्षिप्तोऽपि भगवान् प्राविशद् गिरिकन्दरम् ।
सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥

नन्वसौ दूरमानीय शेते मामिह साधुवत् ।
इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥ १० ॥

स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ।
दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥ ११ ॥

स तावत् तस्य रुष्टस्य दृष्टिपातेन भारत ।
देहजेनाग्निना दग्धो भस्मसादभवत् क्षणात् ॥ १२ ॥

राजोवाच –
को नाम स पुमान् ब्रह्मन् कस्य किं वीर्य एव वा ।
कस्माद् गुहाङ्गतः शिश्ये किंतेजा यवनार्दनः ॥ १३ ॥

श्रीशुक उवाच –
स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् ।
मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥ १४ ॥

स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे ।
असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोचिरम् ॥ १५ ॥

लब्ध्वा गुहांस्ते स्वःपालं मुचकुन्दमथाब्रुवन् ।
राजन् विरमतां कृच्छ्राद् भवान् नः परिपालनात् ॥ १६ ॥

नरलोकं परित्यज्य राज्यं निहतकण्टकम् ।
अस्मान् पालयतो वीर कामास्ते सर्व उज्झिताः ॥ १७ ॥

सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः ।
प्रजाश्च तुल्यकालीना नाधुना सन्ति कालिताः ॥ १८ ॥

कालो बलीयान् बलिनां भगवानीश्वरोऽव्ययः ।
प्रजाः कालयते क्रीडन् पशुपालो यथा पशून् ॥ १९ ॥

वरं वृणीष्व भद्रं ते ऋते कैवल्यमात्मनः ।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥ २० ॥

एवमुक्तः स वै देवानभिवाद्य महायशाः ।
अयाचत गुहाविष्टो निद्रां तु बहुकालिकीम् ॥ २१ ॥

तथेत्युक्तस्तु तैर्देवैर्मुचुकुन्दो महामनाः ।
अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २२ ॥

यवने भस्मसान्नीते भगवान् सात्वतर्षभः ।
आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २३ ॥

तमालोक्य घनश्यामं पीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २४ ॥

चतुर्भुजं रोचमानं वैजयन्त्या च मालया ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २५ ॥

प्रेक्षणीयं त्रिलोकस्य सानुरागस्मितेक्षणम् ।
आपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥ २६ ॥

पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य विस्मितः ।
शङ्कितः शनकै राजा दुर्धर्षमिवतेजसा ॥ २७ ॥

मुचुकुन्द उवाच –
को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे ।
पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥ २८ ॥

किंस्वित्तेजस्विनां तेजो भगवान्वा विभावसुः ।
सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा ॥ २९ ॥

मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ।
यद् बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा ॥ ३० ॥

शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव ।
स्वजन्मकर्मगोत्रं वा कथ्यतां यदि रोचते ॥ ३१ ॥

वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः ।
मुचुकुन्द इति ख्यातो यौवनाश्वात्मजः प्रभो ॥ ३२ ॥

चिरप्रजागरश्रान्तो निद्रयोपहतेन्द्रियः ।
शयेऽस्मिन् विपिने कामं केनाप्युत्थापितोऽधुना ॥ ३३ ॥

सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना ।
अनन्तरं भवान् श्रीमान् लक्षितोऽमित्रशासनः ॥ ३४ ॥

तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः ।
हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥ ३५ ॥

एवं सुभा (सम्भा)षितो राज्ञा भगवान् भूतभावनः ।
प्रत्याह प्रहसन् वाण्या मेघनादगभीरया ॥ ३६ ॥

श्रीकृष्ण उवाच –
जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः ।
न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्ममापि हि ॥ ३७ ॥

क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः ।
गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥ ३८ ॥

कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ।
अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥ ३९ ॥

तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम ।
प्रार्थितस्तु विरिञ्चेन पुराऽहं धर्मगुप्तये ॥ ४० ॥

भूमेर्भारायमाणानामसुराणां क्षयाय च ।
अवतीर्णो यदुकुले गृह आनकदुन्दुभेः ॥ ४१ ॥

वदन्ति वासुदेवेति वसुदेवसुतेति माम् ।
कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः ॥ ४२ ॥

अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ।
सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ॥ ४३ ॥

प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः ।
वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते ॥ ४४ ॥

मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥ ४५ ॥

श्रीशुक उवाच –
इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः ।
ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥ ४६ ॥

मुचुकुन्द उवाच –
विमोहितोऽयं जन ईश मायया
त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते
गृहेषु योषित् पुरुषश्च वञ्चितः ॥ ४७ ॥

लब्ध्वा जनो दुर्लभमत्र मानुषं
कथञ्चिदव्यङ्गमयत्नतोऽनघ ।
पादाम्बुजं ते न भजत्यसन्मति-
र्गृहान्धकूपे पतितो यथा पशुः ॥ ४८ ॥

ममैष कालोऽजित निष्फलो गतो
राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोशभू-
ष्वासज्जमानस्य दुरन्तचिन्तया ॥ ४९ ॥

कलेवरेऽस्मिन् घटकुड्यसन्निभे
निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपै-
र्गां पर्यटंस्त्वामगणय्य दुर्मदः ॥ ५० ॥

प्रमत्तमुच्चैरितिकृत्यचिन्तया
प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमन्तकृत् ॥ ५१ ॥

पुरा रथैर्हेमपरिष्कृतैश्चरन्
मतङ्गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन
कलेवरो विट्कृमिभस्मसञ्ज्ञितः ॥ ५२ ॥

निर्जित्य दिक्चक्रमभूतविग्रहो
परासनस्थः समराजवन्दितः ।
गृहेषु मैथुन्यसुखेषु योषितां
क्रीडामृगः पूरुष ईश गीयते ॥ ५३ ॥

करोति कर्माणि तपः सुनिष्ठितो
निवृत्तभोगस्तदपेक्षया ददत् ।
पुनश्च भूयाय महीश राधसे
प्रवृद्धतर्षो न सुखाय कल्पते ॥ ५४ ॥

भवापवर्गो भ्रमतो यदा भवेत्
जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव त(स)द्गतौ
परावरेशे त्वयि जायते मतिः ॥ ५५ ॥

मन्ये ममानुग्रह ईश ते कृतो
राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया
वनं विविक्षुद्भिरखण्डभूमिपैः ॥ ५६ ॥

न कामयेऽन्यं तव पादसेवनात्-
किञ्चनप्रार्थ्यतमाद् वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्यो वरमात्मबन्धनम् ॥ ५७ ॥

तस्माद् विसृज्याशिष ईश सर्वशो
रजस्तमःसत्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं
त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ ५८ ॥

चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैः
अवितृप उरुकृच्छ्रेऽलब्धशान्तिः कथञ्चित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्
अभयमृतमशोकं पाहि मापन्नमीश ॥ ५९ ॥

श्री भगवानुवाच–
सार्वभौम महाराज मतिस्ते विमलोर्जिता ।
वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥ ६० ॥

प्रलोभितो वरैर्यत् त्वमप्रमादाय विद्धि तत् ।
न धीर्मय्येकभक्तानामाशीभिर्भियते क्वचित् ॥ ६१ ॥

ज्ञानिनामेकभक्तानां प्राणायामादिभिर्मनः ।
न क्षीणवासनं राजन् दृश्यते कचिदुत्थितम् ॥ ६२ ॥

विचरस्व यथाकामं मय्यावेशितमानसः ।
अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ६३ ॥

क्षत्रजन्मस्थितो जन्तूनवधीर्मृगयादिभिः ।
समाहितस्तत् तपसा जह्यघं मामुपाश्रितः ॥ ६४ ॥

जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः ।
भूत्वा द्विजवरस्त्वं वै मामुपेष्यसि केवलम् ॥ ६५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे चतुःपञ्चाशोऽध्यायः ॥

## अथ पञ्चपञ्चाशोऽध्यायः

इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः ।
तं परिक्रम्य सन्नम्य निश्चक्राम गुहामुखात् ॥ १ ॥

स वीक्ष्य क्षुल्लकान् मर्त्यान् पशून् वीरुद्वनस्पतीन् ।
मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥

तपःश्रद्धायुतो वीरो निःसङ्गो मुक्तसंशयः ।
समाधाय मनः कृष्णे प्राविशद् गन्धमादनम् ॥ ३ ॥

बदर्याश्रममासाद्य नरनारायणालयम् ।
सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥ ४ ॥

भगवान् पुनराव्रज्य मथुरां यवनाहृतम् ।
हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥ ५ ॥

नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ।
आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥

ततो राजा जरासन्धः कल्पान्तानलसन्निभः ।
निधाय मकरव्यूहं रथनागाश्वपत्तिमत् ।
अन्तश्चकार गोविन्दं व्यूहस्य निमिषान्तरे ॥ ७ ॥

ततो विलोक्य गोविन्दो वृक्षमुत्पाट्य रंहसा ।
गजान् रथान् हयान् युद्धे पोथयामास दुर्मदः ॥ ८ ॥

कृष्णेन हन्यमानास्ते वृक्षेण रिपुकुञ्जराः ।
पेतुर्गतासवो भूमौ वज्रनुन्ना इवाद्रयः ॥ ९ ॥

रथाश्च रथिभिर्युक्ताः सतुरङ्गाः सचोदकाः ।
निष्पिष्टा इव न क्वापि दृश्यन्ते कुरुसत्तम ॥ १० ॥

रामस्तु मुष्टिभिवाजौ कुञ्जरान् मदशालिनः ।
जघान कुपितः शैलान् वज्रेणेव सुरेश्वरः ॥ ११ ॥

राममुष्टिप्रहारेण विशीर्णाः स्यन्दना नृप ।
न व्यदृश्यन्त भूपृष्ठे चूर्णिताः शीर्णपर्णवत् ॥ १२ ॥

यवनस्य धनं विश्वं गच्छन्तं द्वारकामनु ।
निहत्य यादवान् विश्वांस्तद् गृहीत्वा जरासुतः ॥ १३ ॥

अभ्यवर्तत सङ्ग्रामे रामकृष्णौ कुरूद्वह ।
विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ॥ १४ ॥

तं चापतन्तमालोक्य सहितं सबलैर्नृपैः ।
कीर्यमाणौ शरौघेण वृष्ट्येव करिपोतकौ ॥ १५ ॥

विरथौ विप्रहरणौ विवर्माणौ विसैनिकौ ।
मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतुर्द्रुतम् ॥ १६ ॥

विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् ।
पद्भ्यां पद्मपलाशाभ्यां चेरतुर्बहुयोजनम् ॥ १७ ॥

पलायमानौ तौ दृष्ट्वा मागधः प्रहसन् बली ।
अन्वधावद् रथानीकैरीशयोरप्रमाणवित् ॥ १८ ॥

प्रद्रुत्य दूरं विश्रान्तौ करवीरपुरे निशि ।
तावरुरुहतुर्वीरौ गोमन्तमुदिते रवौ ॥ १९ ॥

सिद्धचारणगन्धर्वविद्याधरनिषेवितम् ।
आरुह्य शैलं गोमन्तं कृष्णरामौ त्वरान्वितौ ॥ २० ॥

प्रवर्षणाख्यं तच्छृङ्गं यत्राब्दा नित्यवर्षिणः ।
तत्र तावासतू राजन् फलमूलाशनौ सुखम् ॥ २१ ॥

जरासन्धस्तु दुष्टात्मा तावनुद्रुत्य माधवौ ।
रुरोध शैलं गोमन्तं महत्या सेनया वृतः ॥ २२ ॥

स भूपालान् समाहूय स्वानुगान् युद्धदुर्मदान् ।
कलिङ्गं कुञ्जरपतिं सुराष्ट्राधिपतिं तथा ॥ २३ ॥

जयद्रथं सिन्धुपतिं सोमदत्तं च कौरवम् ।
गान्धारराजं शकुनिं वैदर्भं रुक्मिमेव च ॥ २४ ॥

सुदक्षिणं च काम्बोजं विराटं मत्स्यभूपतिम् ।
एतानाज्ञापयामास पूर्वस्यां दिशि भूपतीन् ॥ २५ ॥

पाञ्चालराजं द्रुपदं दमघोषं च चेदिपम् ।
ब्रह्मदत्तं च साल्वेशमेकलव्यं निषादपम् ॥ २६ ॥

वाह्लीकं च कुरुश्रेष्ठं युधामन्युं च दुर्जयान् ।
विन्दानुविन्दावावन्त्यौ काशिराजं च पौण्ड्रकम् ॥ २७ ॥

आज्ञापयामास नृपानेतान् वीरान् जरासुतः ।
गिरिं गोमन्तमारोढुं दक्षिणस्यां दिशि प्रभो ॥ २८ ॥

द्रुमं किम्पुरुषाधीशं दन्तवक्रं सहानुजम् ।
वीरं विदेहराजानं भूरिश्रवसमेव च ॥ २९ ॥

करुशेषं बृहचापं दशार्णं च शतध्वजम् ।
शैव्यं सुवीरराजानं दरदं च महारथम् ॥ ३० ॥

एतान् महीपतीन् राजा जरासन्धोऽमितद्युतिः ।
प्राह गोमन्तमारोढुं पश्चिमस्यां दिशि द्रुतम् ॥ ३१ ॥

त्रिगर्तं च सुशर्माणं बलिनं वेणुदारिणम् ।
कुलिन्दं च महासत्वं केकयानपि भूपतीन् ॥ ३२ ॥

शिशुपालं च भूपालं भीष्मकं चापि दुर्जयम् ।
पुरस्कृत्यारुरोहाशु कौबेर्यां मागधो दिशि ॥ ३३ ॥

एवं गोमन्तमारुह्य सर्वर्तुफलपादपम् ।
विचिन्त्य तत्र सर्वत्राप्यधः शृङ्गात् प्रवर्षणात् ॥ ३४ ॥

चिच्छिदुः सकलान् वृक्षान् नापश्यत् राममाधवौ ।
गिरौ विलीनावाज्ञाय नाधिगम्य पदं नृप ॥ ३५ ॥

ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ।
तत उत्पत्य तरसा दह्यमानात्तु तावुभौ ॥ ३६ ॥

दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ।
अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ॥ ३७ ॥

स्वपुरं पुनरायातौ समुद्रपरिखां नृप ।
सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ॥ ३८ ॥

बलमाकृष्य सुमहन्मगधान् मागधो ययौ ।
अष्टादशे तु सङ्ग्रामे जित्वा यादवसत्तमौ ॥ ३९ ॥

दत्तः स्वराष्ट्रे न्यवसज्जितदिङ्मण्डलो नृप ।
माधवौ तु महात्मानौ प्रविश्य द्वारकां पुरीम् ॥ ४० ॥

स्तूयमानौ दिवारात्रं सूतमागधवन्दिभिः ।
वृतावानन्दबहुलैर्बन्धुभिः सुखमूषतुः ॥ ४१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे पञ्चपञ्चाशोऽध्यायः ॥

# अथ षट्पञ्चाशोऽध्यायः

श्रीशुक उवाच –

कदाचिद् देवकीपुत्रौ रामशैनेयसंयुतः ।
सेव्यमानः सभायां वै नानादेशेश्वरैर्नृपैः ॥ १ ॥

पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतैर्मृधे ।
वद्धं शुश्राव कौरव्य ब्राह्मणैः सत्रयाजिभिः ॥ २ ॥

तच्छुत्वा हृष्टहृदयः कृतवर्माणमच्युतः ।
नगरं हस्तिनपुरं प्रेषयामास वेदितुम् ॥ ३ ॥

स गत्वा हस्तिनपुरं वृद्धं कुरुपितामहम् ।
ददर्श द्रोणविदुरधृतराष्ट्रकृपैर्युतम् ॥ ४ ॥

युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम् ।
सभाजयमास भृशं कुन्तीं च हृदिकात्मजः ॥ ५ ॥

युधिष्ठिरोऽपि पप्रच्छ सानुगं कंसमर्दनम् ।
हतं च कालयवनं जरासन्धं च निर्जितम् ॥ ६ ॥

वासुदेवं च निहतं करवीरपुरेश्वरम् ।
द्वारवत्याश्च करणं नगर्या वरुणालये ॥ ७ ॥

हतौ च हंसडिभिकौ ब्रह्मदत्तं च दुर्जयम् ।
श्रुत्वा हार्दिक्यवचनाद् याथार्थ्येन युधिष्ठिरः ॥ ८ ॥

मेने त्रैलोक्यसाम्राज्यं स्वहस्तगतमक्षयम् ।
सभाजितश्च हार्दिक्यः सुखसम्भाषणादिभिः ॥ ९ ॥

पाण्डुपुत्रैस्तथा कुन्त्या सौहार्दस्रुतबाष्पया ।
हार्दिक्यस्तानन्नुज्ञाप्य बान्धवान् पृथया सह ॥ १० ॥

मातृष्वसेयान् धर्मज्ञानभिवन्द्य यथावयः ।
गाङ्गेयेनाभ्यनुज्ञातो धृतराष्ट्रेण चानघ ॥ ११ ॥

विदुरेणाङ्गराजेन द्रोणेन च कृपेण च ।
प्राज्ञेनाचार्यपुत्रेण तथा दुर्योधनेन च ॥ १२ ॥

कृतवर्माऽभ्यनुज्ञातो निर्गत्य गजसाह्वयात् ।
द्वारकां वृष्णिनिलयामाजगाम दिनात्यये ॥ १३ ॥

स प्रविश्य सभां दिव्यामनेकनृपसेविताम् ।
दृष्ट्वा गोविन्दमासीनं काञ्चने परमासने ॥ १४ ॥

वीजचामरसङ्घातसहितं वनमालिनम् ।
आचचष्टेऽखिलं तस्य यथादृष्टं यथाश्रुतम् ।
वृत्तान्तं कौरवेयाणां नगरे गजसाह्वये ॥ १५ ॥

तदाकर्ण्य हरिः सर्वं वृत्तान्तं जगदीश्वरः ।
पौरुषं पाण्डुपुत्राणां बभूवानन्दनिर्भरः ॥ १६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे षट्पञ्चाशोऽध्यायः ॥

# अथ सप्तपञ्चाशोऽध्यायः

श्रीशुक उवाच–

आनर्ताधिपतिः श्रीमान् रेवतो रेवतीं सुताम् ।
ब्रह्मणा चोदितः प्रादाद् बलायेति पुरोदितम् ॥ १ ॥

राजोवाच–

रेवतो नाम राजाऽसौ ब्रह्मणा चोदितः कथम् ।
तदहं श्रोतुमिच्छामि विस्तरेण महामुने ॥ २ ॥

श्रीशुक उवाच–
रेवतो नाम राजाऽऽसीत् पुरा धर्मार्थतत्त्ववित् ।
रेवती नाम तस्यैका जज्ञे कन्या यशस्विनी ॥ ३ ॥

स ब्रह्माणं ययौ प्रष्टुं कस्मै दास्यामि तामिति ।
अदत्वा याच्यमानोऽपि नानाजनपदेश्वरैः ॥ ४ ॥

सभायां ब्रह्मणस्तत्र गन्धर्वौ द्वौ हहाहूहू ।
तस्मिन्नगायतां काले ग्राममूर्च्छाविचक्षणौ ॥ ५ ॥

राजाऽतिष्ठद् बहिः किञ्चित् तद्विरामप्रतीक्षया ।
गीतावासने पप्रच्छ प्रणिपत्य पितामहम् ॥ ६ ॥

एषा मे भगवन् कन्या कस्मै दास्य इमामिति ।
तं प्राह पद्मभूः कस्ते राजपुत्रो विरोचते ॥ ७ ॥

तं चान्यांश्च महीपालानाचक्ष्वेति कुरूद्वह ।
ततस्तान् रेवतः प्राह भूपालान् विषयेश्वरान् ॥ ८ ॥

स तानाकर्ण्य नृपतीन् प्रहस्योवाच रेवतम् ।
युगानि सुबहून्यत्र गतानि तव भूपते ॥ ९ ॥

क्षणमात्रमिवाश्राव्यं शृण्वतो गीतमेतयोः ।
केदानीं तव ते भूपाः सुतायाः सदृशा वराः ॥ १० ॥

इदानीं राजशार्दूल यदुवंशविवर्द्धनौ ।
वसुदेवगृहे जातौ रामकृष्णाह्वयौ प्रभू ॥ ११ ॥

तत्र सङ्कर्षणायेमां कन्यां यच्छस्व भूपते ।
इत्युक्तस्तेन भूपालस्तं प्रणम्य पुरं गतः ।
रामाय प्रददौ कन्यां रूपिणीं बाहुशालिने ॥ १२ ॥

तामादियुगसम्भूतां दीर्घदेहां महाभुजः ।
आकृष्य लाङ्गलेनांसे समां चक्रे हलायुधः ॥ १३ ॥

भगवानपि गोविन्द उपयेमे कुरूद्वह ।
वैदर्भीं भीष्मकसुतामिन्दिरांशां स्वयंवरे ॥ १४ ॥

प्रमथ्य तरसा राज्ञः साल्वादींश्चैद्यपक्षगान् ।
पश्यतां सर्वभूतानां तार्क्ष्यपुत्रः सुधामिव ॥ १५ ॥

राजोवाच–
भगवान् भीष्मकसुतां रुग्मिणीं रुचिराननाम् ।
राक्षसेन विवाहेन उपयेम इति श्रुतम् ॥ १६ ॥

भगवन् श्रोतुमिच्छामि कृष्णस्यामिततेजसः ।
यथा मागधसाल्वादीन् जित्वा तत्पारमागमत् ॥ १७ ॥

ब्रह्मन् विष्णुकथाः पुण्या माध्वीर्लोकमलापहाः ।
को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥ १८ ॥

श्रीशुक उवाच–
राजाऽऽसीद् भीष्मको नाम विदर्भाधिपतिर्महान् ।
तस्य पञ्चाभवन् पुत्राः कन्यैका च वरानना ॥ १९ ॥

रुग्म्यग्रजो रुग्मरथो रुग्मबाहुरनन्तरः ।
रुग्मकेशो रुग्ममाली रुग्मिण्येषां स्वसा सती ॥ २० ॥

सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः ।
गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥ २१ ॥

तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ।
कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ २२ ॥

बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ।
रुग्मी निवार्य कृष्णद्विट् चैद्याय समकल्पयत् ॥ २३ ॥

तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम् ।
विचिन्त्याप्तं द्विजं कञ्चित् कृष्णाय प्राहिणोद् द्रुतम् ॥२४॥

द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः ।
अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ २५ ॥

दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासने ।
उपवेश्यार्हयाञ्चक्रे यथाऽऽत्मानं दिवौकसः ॥ २६ ॥

तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः ।
पाणिनाऽभिमृशन् पाणावव्यग्रस्तमपृच्छत ॥ २७ ॥

कच्चिद् द्विजकुलश्रेष्ठ धर्मस्ते वृद्धसम्मतः ।
वर्तते नातिकृच्छ्रेण सन्तुष्टमनसः सदा ॥ २८ ॥

सन्तुष्टो यदि वर्तेत ब्राह्मणो येन केनचित् ।
अहीयमानः स्वाद् धर्मात् स ह्यस्याखिलकामधुक् ॥ २९ ॥

असन्तुष्टः सुखं विप्र नाप्नोत्यपि सुरेश्वरः ।
अकिञ्चनोऽपि सन्तुष्टः शेते सर्वाङ्गविज्वरः ॥ ३० ॥

विप्रान् स्वलाभसन्तुष्टान् साधून् भूतसुहृत्तमान् ।
निरहङ्कारिणः शान्तान् नमस्ये शिरसाऽसकृत् ॥ ३१ ॥

कच्चिद् वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः ।
सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः ॥ ३२ ॥

यतस्त्वमागतो दुर्गं निस्तीर्येह यदृच्छया ।
सर्वं नो ब्रूह्यगुह्यं चेत् किं कार्यं करवाम ते ॥ ३३ ॥

एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना ।
विधाय लिखितं पत्रं पादयोः प्रणनाम तम् ॥ ३४ ॥

तदादाय जगन्नाथः स्मितसुन्दरलोचनः ।
वाचयामास धर्मात्मा सादरं स्पृहयन्निव ॥ ३५ ॥

रुग्मिण्युवाच–
श्रुत्वा गुणान् भुवनसुन्दर सङ्गतांस्ते
निर्विश्य कर्णविवरं हरतोऽङ्ग तापम् ।
रूपं परं भुवनमङ्गल मङ्गलं ते
त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ ३६ ॥

का त्वा मुकुन्द महती गुणशीलरूप
विद्यावयोद्रविणधामभिरात्मतुल्यम् ।
व्रीडावती कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोभिरामम् ॥ ३७ ॥

स त्वं मयाऽप्यभिवृतः पतिरिन्दिराया
भक्तप्रियः कृपणलोकशरण्य ईशः ।
मत्यैतदङ्ग तव पादसरोजदास्याः
कामं कुरु प्रियतम प्रणताऽस्मि तेऽङ्घ्रिम् ॥ ३८ ॥

तन्मे भवान् खलु वृतः पतिरङ्ग जाया
आत्माऽर्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आराद्
गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥ ३९ ॥

पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥ ४० ॥

श्वोभाविनि त्वमजितोद्वहने विदर्भान्
गुप्तान् समेत्य पृतनापतिभिः समेतैः ।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ ४१ ॥

अन्तःपुरान्तरचरामनिहत्य बन्धून्
त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां
बहिर्नववधूर्गिरिजामुपेयात् ॥ ४२ ॥

तत्रैत्य मां रथपदातिगजाश्वयुक्तः
सम्मथ्य साल्वमगधान् सहचेदिभूपान् ।
आदाय मां सहचरीभिरथो रमेशो
गृह्णातु पाणिमुपनीय पुरीं स्वकीयाम् ॥ ४३ ॥

यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून् व्रतकृशा शतजन्मभिः स्याम् ॥ ४४ ॥

श्रीशुक उवाच –
इति पत्रगतं विश्वं विमृश्य मधुसूदनः ।
सन्देशं राजकन्यायास्तं ब्राह्मणमवैक्षत ॥ ४५ ॥

ब्राह्मण उवाच–
इत्येते गुह्यसन्देशा यदुदेव मयाऽऽहृताः ।
विमृश्य युक्तं यच्चात्र क्रियतां तदनन्तरम् ॥ ४६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे सप्तपञ्चाशोऽध्यायः ॥

## अथ अष्टपञ्चाशोऽध्यायः

श्रीशुक उवाच–
वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना पाणिं प्रहसन् द्विजमब्रवीत् ॥ १ ॥

तथाऽहमपि तच्चित्तो निद्रां नाध्यगमं निशि ।
वेदाहं रुग्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ २ ॥

तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे ।
मत्परामनवद्याङ्गीमेधसोऽग्नेः शिखामिव ॥ ३ ॥

उद्वाहर्क्षं च विज्ञाय रुग्मिण्या मधुसूदनः ।
रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ ४ ॥

स चाश्वैः शैब्यसुग्रीवमेघपुष्पवलाहकैः ।
युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ ५ ॥

आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ।
आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥

राजा स कुण्डिनपतिः पुत्रस्नेहवशंगतः ।
शिशुपालाय स्वां कन्यां दास्यन् कार्याण्यकारयत् ॥ ७ ॥

पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ।
चित्रध्वजपताकाभिस्तोरणैः समलङ्कृतम् ॥ ८ ॥

स्रग्गन्धमाल्याभरणैर्विरजाम्बरभूषणैः ।
जुष्टं स्त्रीपुरुषैः श्रीमद् गृहैरगरुधूपितैः ॥ ९ ॥

पितृन् देवान् समभ्यर्च्य विप्रांश्च विधिवन्नृपः ।
भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥ १० ॥

सुस्नाता सुदती कन्या कृतकौतुकमङ्गला ।
अहतांशुकयुग्मेन भूषिता भूषणोत्तमैः ॥ ११ ॥

चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ।
पुरोहितोऽथर्वमन्त्रैर्जुहाव ग्रहशान्तये ॥ १२ ॥

हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ।
प्रादाद् धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥ १३ ॥

एवं चेदिपती राजा दमघोषः सुताय वै ।
कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ १४ ॥

मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः ।
पत्त्यश्वसङ्कुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ १५ ॥

तं वै विदर्भाधिपतिः समेत्याभिप्रपूज्य च ।
निवेशयामास मुदा कल्पितान्यनिवेशने ॥ १६ ॥

तत्र साल्वो जरासन्धो दन्तवक्रो विदूरथः ।
आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥ १७ ॥

कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ।
यद्यागत्य हरेत् कृष्णो रामाद्यैर्यदुभिर्वृतः ॥ १८ ॥

योत्स्यामः सहिताः सर्वे इति निश्चितमानसाः ।
आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥ १९ ॥

श्रुत्वैतद् भगवान् रामो विपक्षीयनृपोद्यमम् ।
कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ २० ॥

बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ।
त्वरितः कुण्डिनं प्रायाद् गजाश्वरथपत्तिभिः ॥ २१ ॥

भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ।
प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत् तदा ॥ २२ ॥

अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ।
नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ॥ २३ ॥

सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः ।
अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् ॥ २४ ॥

मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ।
दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥ २५ ॥

देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ।
एवं चिन्तयती बाला गोविन्दहृतमानसा ।
न्यमीलयत कालज्ञा नेत्रे अश्रुकलाकुले ॥ २६ ॥

एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप ।
वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ॥ २७ ॥

अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ।
अन्तःपुरचरां देवीं राजपुत्रीं ददर्श ह ॥ २८ ॥

सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ।
आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥ २९ ॥

आवेदयामास तस्यै सम्प्राप्तं यदुनन्दनम् ।
उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥ ३० ॥

तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ।
न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥ ३१ ॥

प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ।
अभ्ययात् तूर्यघोषेण रामकृष्णौ समर्हणैः ॥ ३२ ॥

मधुपर्कमुपानीय वासांसि विरजांसि सः ।
उपायनान्यभीष्टानि विधिवत् समपूजयत् ॥ ३३ ॥

तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ।
ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥ ३४ ॥

एवं राज्ञां समेतानां यथावीर्यं यथावयः ।
यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ॥ ३६ ॥

कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ।
आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥ ३७ ॥

अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ।
असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ ३८ ॥

किञ्चित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥ ३९ ॥

एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः ।
कन्या चान्तःपुरात् प्रागाद् भटैर्गुप्ताऽम्बिकालयम् ॥ ४० ॥

पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपङ्कजम् ।
परिवारैः कतिपयैर्युक्तो यादवनन्दनः ।
सा चानुध्यायती सम्यङ् मुकुन्दचरणाम्बुजम् ॥ ४१ ॥

यतवाङ् मातृभिः सार्धं सखिभिः परिवारिता ।
गुप्ता राजभटैः शूरैः सन्नद्धैरुयतायुधैः ॥ ४२ ॥

वेत्रझर्झरहस्तैश्च वृद्धैः कञ्चुकिभिस्तथा ।
मृदङ्गशङ्खपणवास्तूर्यभेरीश्च जघ्निरे ॥ ४३ ॥

नानोपहारबलिभिर्वारमुख्याः सहस्रशः ।
स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलङ्कृताः ॥ ४४ ॥

गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ।
परिवार्य वधूं जग्मुः सूतमागधवन्दिभिः ॥ ४५ ॥

आसाद्य देवसदनं धौतपादकराम्बुजा ।
उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥ ४६ ॥

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ।
भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥ ४७ ॥

नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥ ४८ ॥

अद्भिर्गन्धाक्षतैर्धूपैर्वस्त्रस्त्रङ्माल्यविभूषणैः ।
नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ४९ ॥

विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ।
लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ५० ॥

तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ।
ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥ ५१ ॥

मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् ।
उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम् ॥ ५२ ॥

तौ विदर्भप्रसूतानां नृपाणां कुलदेवते ।
तदन्तिकमुपागम्य शचीं सुरपतिप्रियाम् ॥ ५३ ॥

चिराराधितापादाब्जां सा प्रणम्य विनिर्ययौ ।
प्रगृह्य पाणिना धात्रीं रत्नमुद्रोपशोभिना ।
धृतानेकातपत्राढ्या वीजचामरसङ्कुला ॥ ५४ ॥

तां देवमायामिव वीरमोहिनीं
सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां
व्यञ्जस्तनां कुन्तलशङ्कितेक्षणाम् ॥ ५५ ॥

शुचिस्मितां बिम्बफलाधरद्युति
शोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चलन्तीं कलहंसगामिनीं
सिञ्जत्कलनूपुरपादशोभिताम् ॥ ५६ ॥

विलोक्य वीरा मुमुहुः समागता
यशस्विनस्तत्कृतहृच्छयार्दिताः ।
यां वीक्ष्य ते नृपतयस्तदुदारहास
व्रीडावलोकहृतचेतस उज्झितास्त्राः ॥ ५७ ॥

पेतुः क्षितौ गजरथाश्वगता विमूढा
यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ।
सैवं शनैश्चलयती पदपद्मकोशौः
प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥ ५८ ॥

उत्सार्य वामकरजैरलकानपाङ्गैः
प्राप्तह्रियैक्षत नृपान् ददृशेऽच्युतं सा ।
तां राजकन्यां रथमारुरुक्षतीं
जहार कृष्णो द्विषतां समीक्षताम् ॥ ५९ ॥

रथं समारोप्य सुपर्णलक्षणं
राजन्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः
सृगालमध्यादिव नागहृद्धरिः ॥ ६० ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे अष्टपञ्चाशोऽध्यायः ॥

# अथ एकोनषष्ठिरध्यायः

तं मानिनः स्वाभिभवं यशःक्षयं परे जरासन्धवशा न सेहिरे ।
अहो धिगस्मद्यश आत्तधन्विनां गोपैर्हृतं केसरिणां मृगैरिव ॥

इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ।
स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥ २ ॥

तानापतत आलोक्य यादवानीकयूथपाः ।
तस्थुर्वे सम्मुखा राजन् विस्फूर्य स्वधनूंषि ते ॥ ३ ॥

अश्वपृष्ठे गजस्कन्धे , रथोपस्थे च कोविदाः ।
मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ४ ॥

पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ।
सव्रीलमैक्षत् तद्वक्त्रं भयविह्वललोचना ॥ ५ ॥

प्रहस्य भगवानाह मा भैस्त्वं वामलोचने ।
विनङ्क्ष्यत्यधुनैवैतत् तावकैः शात्रवं बलम् ॥ ६ ॥

तेषां तद्विक्रमं वीरा गदसङ्कर्षणादयः ।
अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान् रथान् ॥ ७ ॥

पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ।
सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥ ८ ॥

हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ।
अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ९ ॥

हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः ।
राजानो विमुखा जग्मुर्जरासन्धपुरःसराः ॥ १० ॥

शिशुपालं समेत्याथ हृतदारमिवातुरम् ।
नष्टत्विषं हतोत्साहं शुष्यद्वदनमब्रुवन् ॥ ११ ॥

राजान ऊचुः–

भोभो पुरुषशार्दूल दौर्मनस्यमिदं त्यज ।
न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते ॥ १२ ॥

यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ।
एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १३ ॥

शौरेः सप्तदशाहं वै संयुगानि पराजितः ।
त्रयोविंशतिभिः सैन्यैर्जिग्ये एकमहं परम् ॥ १४ ॥

तथाऽप्यहं न शोचामि न हृष्यामि च कर्हिचित् ।
कालेन दैवयोगेन जानन् विद्रावितं जगत् ॥ १५ ॥

अधुनाऽपि वयं सर्वे वीरयूथपयूथपाः ।
पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥ १६ ॥

रिपवो जिग्युरधुना काल आत्मानुसारिणि ।
तदा वयं तु जेष्यामो यदा कालः प्रदक्षिणः ॥ १७ ॥

श्रीशुक उवाच–

एवं प्रबोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् ।
हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥ १८ ॥

रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः ।
पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्या वृतो बली ॥ १९ ॥

रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ।
प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥ २० ॥

अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ।
कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमि वः ॥ २१ ॥

इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ।
चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥ २२ ॥

अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ।
नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥ २३ ॥

विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ।
रथैनैकेन गोविन्दमन्वधावत रंहसा ॥ २४ ॥

स गत्वा नर्मदां देवीं तरन्तं मधुसूदनम् ।
आसाद्य युद्धसन्नद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ २५ ॥

धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ।
आह चारे क्षणं तिष्ठ यदूनां कुलपांसन ॥ २६ ॥

कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः ।
हरिष्येऽस्य मदं मन्द मायिनः कूटयोधिनः ॥ २७ ॥

यावन्न मे हतो बाणैः शयीथा मुञ्च दारिकाम् ।
धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ॥ २८ ॥

स्मयन् कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ।
अष्टाभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः ॥ २९ ॥

स चान्यद् धनुरादाय कृष्णं विव्याध पञ्चभिः ।
तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ॥ ३० ॥

पुनरन्यदुपादत्त तदप्यच्छिनदच्युतः ।
परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ॥ ३१ ॥

यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद् विभुः ।
ततो रथादवप्लुत्य गृहीत्वा खड्गचर्मणी ॥ ३२ ॥

कृष्णमभ्यद्रवत् क्रुद्धः पतङ्ग इव पावकम् ।
तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ॥ ३३ ॥

छित्त्वाऽसिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः ।
दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ।
पतित्वा पादयोः पत्युरुवाच करुणं सती ॥ ३४ ॥

रुक्मिण्युवाच–
योगेश्वराप्रमेयात्मन् देवदेव जगत्पते ।
हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥ ३५ ॥

श्रीशुक उवाच–
इत्युक्त्वा जगृहे पादौ कृष्णा दीनभाषिणी ।
भ्रातरं त्रातुकामा सा कृष्णस्य जगतीपतेः ॥ ३६ ॥

तया परित्रासविकम्पिताङ्गया
शुचाऽवशुष्यन्मुखरुद्धकण्ठया ।
कातर्यविस्रंसितहेममालया
गृहीतपादः करुणो न्यवर्तत ॥ ३७ ॥

चैलेन बध्वा तमसाधुकारिणं
सश्मश्रुकेशान् प्रवपन् व्यरूपयत् ।
तावत् समीयुर्जितशत्रुसैन्या
यदुप्रवीरा नलिनीं यथा गजाः ॥ ३८ ॥

कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ।
तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ॥ ३९ ॥

विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ॥ ४० ॥

बलभद्र उवाच–
असाध्विदं त्वया कृष्ण कृतमस्मिन् जुगुप्सितम् ।
वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधम् ॥ ४१ ॥

मैवास्मान् साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया ।
सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥४२॥

बन्धुर्वधार्हदोषोऽपि न बन्धुर्वधमर्हति ।
त्याज्यस्तेनैव दोषेण हतः किं हन्यते पुनः ॥ ४३ ॥

क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ।
भ्राताऽपि भ्रातरं हन्याद् येन घोरतरस्ततः ॥ ४४ ॥

राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ।
मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ॥ ४५॥

आत्ममोहो नृणामेष कल्प्यते देवमायया ।
सुहृद्दुरुदासीन इति देहात्ममानिनाम् ॥ ४६ ॥

एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ।
नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥ ४७ ॥

देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः ।
आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥ ४८ ॥

यथा शयान आत्मानं विषयान् फलमेव च ।
अनुभुङ्क्तेऽप्यसत्यर्थे तथाऽऽप्नोऽपि ध्रुवोऽध्रुवान् ॥ ४९ ॥

तस्मादज्ञानजं शोकमात्मशोषविमोहनम् ।
तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥ ५० ॥

एवं भगवता तन्वी रामेण प्रतिबोधिता ।
वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥ ५१ ॥

प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ।
स्मरन् विरूपकरणं वितथात्ममनोरथः ।
चक्रे भोजकटं नाम निवासाय महत्पुरम् ॥ ५२ ॥

अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ।
कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा ॥ ५३ ॥

भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् ।
पुरमानीय विधिवदुपयेमे कुरूद्वह ॥ ५४ ॥

तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ।
अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥ ५५ ॥

नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः ।
पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥ ५६ ॥

सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिः
विचित्रमाल्याम्बररत्नतोरणैः ।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैः
आपूर्णकुम्भैरगुरुधूपदीपकैः ॥ ५७ ॥

सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ।
गजैर्द्वास्सु परामृष्टा रम्भापूगोपशोभिता ॥ ५८ ॥

कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः ।
मिथो मुमुदिरे तस्मिन् सम्भ्रमात् परिधावतः ॥ ५९ ॥

रुक्मिण्याहरणं श्रुत्वा गीयमानं ततस्ततः ।
राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥ ६० ॥

द्वारकायामभूद् राजन् महान् मोदः पुरौकसाम् ।
रुक्मिणीं रमणोपेतां दृष्ट्वा कृष्णं श्रियः पतिम् ॥ ६१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे एकोनषष्टिरध्यायः ॥

# अथ षष्टितमोऽध्यायः

श्रीशुक उवाच–
सत्राजित्तनयां तन्वीं कृष्णाय कृतकिल्विषः ।
स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १ ॥

राजोवाच–
सत्राजितः किमकरोद् ब्रह्मन् कृष्णस्य किल्विषम् ।
स्यमन्तकः कुतस्तस्य कस्माद् दत्ता सुता हरेः ॥ २ ॥

श्रीशुक उवाच–
आसीत् सत्राजितः सूर्यभक्तस्य परमः सखा ।
प्रीतस्तस्मै मणिं प्रादात् सूर्यस्तुष्टः स्यमन्तकम् ॥ ३ ॥

स तं बिभ्रन् मणिं कण्ठे भ्राजमानो यथा रविः ।
प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥

तं विलोक्य जना दूरात् तेजसा मुष्टदृष्टयः ।
दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यमागतम् ॥ ५ ॥

नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ।
दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ६ ॥

एष आयाति सविता त्वां दिदृक्षुर्जगत्पते ।
मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मरुक् ॥ ७ ॥

नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः ।
ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभुः ॥ ८ ॥

निशम्य बालवचनं प्रहस्याम्बुजलोचनः ।
प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ९ ॥

सत्राजित् स्वगृहं श्रीमत् कृतकौतुकमङ्गलम् ।
प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ १० ॥

दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो ।
दुर्भिक्षमार्यरिष्टानि सर्वेऽपि व्याधयोऽशुभाः ॥ ११ ॥

न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ।
स याचितो मणिं क्वापि यदुराजाय शौरिणा ॥ १२ ॥

नैवार्थकामुकः प्रादाद् याच्ञाभङ्गमतर्कयन् ।
तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ॥ १३ ॥

प्रसेनो हयमारुह्य मृगयां व्यचरद् वने ।
प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ॥ १४ ॥

गिरिं विशन् जाम्बवता निहतो मणिमिच्छता ।
सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ॥ १५ ॥

अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत ।
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ॥ १६ ॥

भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपन् जनाः ।
भगवान् तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ॥ १७ ॥

मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ।
हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ॥ १८ ॥

तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ।
ऋक्षराजबिलं भीममन्धेन तमसा वृतम् ।
एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १९ ॥

तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ।
हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ २० ॥

तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ।
तच्छ्रुत्वाऽभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां वरः ॥ २१ ॥

स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः ।
पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २२ ॥

द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ।
आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३ ॥

आसीत् तदष्टविंशाहमितरेतरमुष्टिभिः ।
वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥

कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः ।
क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीवविस्मितः ॥ २५ ॥

जाने त्वां सर्वभूतानां प्राणओजः सहोबलम् ।
विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥

त्वं हि विश्वसृजां स्रष्टा सृष्टानामधिपो वसन् ।
कालः कलयतामीशः पर आत्मा तथाऽऽत्मनाम् ॥ २७ ॥

यस्येषदुत्कलितरोषकटाक्षमोक्षै-
र्वर्त्मादिशत् क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।
सेतुः कृतः स्वयश उज्ज्वलिता च लङ्का
रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥

इति विज्ञातविज्ञानमृक्षराजानमच्युतः ।
व्याजहार महाराज भगवान् देवकीसुतः ॥ २९ ॥

अभिमृश्यारविन्दाक्षः पाणिना शङ्करेण तम् ।
कृपया परया भक्तं मेघगम्भीरया गिरा ॥ ३० ॥

मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ।
मिथ्याभिशापं प्रमृजन्नात्मनो मणिनाऽमुना ॥ ३१ ॥

इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा ।
अर्हणार्थं सहमणिं कृष्णायोपजहार सः ॥ ३२ ॥

अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः ।
प्रतीक्ष्य द्वादशाहानि दुःखितास्ते पुरं ययुः ॥ ३३ ॥

निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः ।
सुहृदो ज्ञातयोऽशोचन् बिलात् कृष्णमनिर्गतम् ॥ ३४ ॥

सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः ।
उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥

तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषोऽभवन् ।
प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन् हरिः ॥ ३६ ॥

उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ।
सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३७ ॥

सत्राजितं समाहूय सभायां राजसन्निधौ ।
प्राप्तिं चाख्याय भगवान् मणिं तस्मै न्यवेदयत् ॥ ३८ ॥

सचातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः ।
अनुतप्यन् स्वभवनमगमत् स्वेन पाप्मना ॥ ३९ ॥

सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ।
कथं मृजाम्यात्मरजः प्रसीदेद् वाऽच्युतः कथम् ॥ ४० ॥

किं कृत्वा साधु मह्यं स्यान्न शपेद् वा जनो यथा ।
अदीर्घदर्शनं धिङ्मां मूढं द्रविणलोलुपम् ॥ ४१ ॥

दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ।
उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ४२ ॥

एवं व्यवसितो बुद्ध्या सत्राजित् स्वसुतां शुभाम् ।
मणिं च स्वयमुद्यम्य कृष्णायोपजहार ताम् ॥ ४३ ॥

स सत्यभामां भगवानुपयेमे यथाविधि ।
बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥ ४४ ॥

भगवानाह न मणिं प्रतीच्छामो वयं नृप ।
तवास्तु देवभक्तस्य वयं हि फलभागिनः ॥ ४५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे षष्टितमोऽध्यायः ॥

# अथ एकषष्टिरध्यायः

श्रीशुक उवाच –
विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् ।
कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून् ॥ १ ॥
भीष्मं नृपं सविदुरं गान्धारीं द्रोणमेव च ।
तुल्यदुःखौ समागम्य हा कष्टमिति होचतुः ॥ २ ॥
लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः ।
अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ ३ ॥
योऽस्मभ्यं सम्प्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः ।
कृष्णायादात् स सत्राजित् तस्माद् भ्रातरमन्वियात् ॥ ४ ॥
एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः ।
शयानमवधील्लोभात् स पापः क्षीणजीवितः ॥ ५ ॥
स्त्रीणां विक्रोशमानानां क्रन्दतीनामनाथवत् ।
हत्वा पशुं सौनिकवन्मणिमादाय जग्मिवान् ॥ ६ ॥
सत्यभामा च पितरं हतं वीक्ष्य शुचार्पिता ।
व्यलपत् तात तातेति हा हताऽस्मीति मुह्यती ॥ ७ ॥
तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् ।
कृष्णाय विदितार्थाय तप्ताऽऽचख्यौ पितुर्वधम् ॥ ८ ॥
तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् ।
अहो नः परमं कष्टमित्यास्राक्षौ विलेपतुः ॥ ९ ॥
आगम्य भगवांस्तस्मात् सभार्यः साग्रजः पुरम् ।
शतधन्वानमारेभे हन्तुं हर्तुं च तं मणिम् ॥ १० ॥
ततः पाञ्चालनगराद् याज्ञसेन्याः स्वयंवरम् ।
घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ॥ ११ ॥
आहूतस्तेन गोविन्दो गत्वा पाञ्चालके पुरे ।
ददर्श साग्रजस्तत्र किशोरान् पाण्डुनन्दनान् ॥ १२ ॥
अदृष्टपूर्वान् सुव्यक्तं ब्रह्मरूपधरान् नृपान् ।
तैर्विद्धलक्ष्यैः पौरुष्यप्रतिलब्धमनोरथैः ॥ १३ ॥
कुम्भकारस्य शालायां समागम्याभिवन्द्य च ।
पितृष्वसामनुज्ञाप्य राजानं च युधिष्ठिरम् ॥ १४ ॥
निहन्तुं शतधन्वानं तूर्णं द्वारावतीमियात् ।
सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया ॥ १५ ॥
साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ।
नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ॥ १६ ॥
को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ।
कंसः सहानुगो वीरो यद्द्वेषात्त्याजितः श्रिया ॥ १७ ॥
जरासन्धः सप्तदशसंयुगाद् विरथो गतः ।
प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ॥ १८ ॥
सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् ।
यं कैलासाश्रयः शम्भुर्ननाम शिरसा हरिम् ॥ १९ ॥
यो हंसडिभिकौ युद्धे जितवान् वरदुर्मदौ ।
आशीविषो महानागो येन निर्वासितो ह्रदात् ॥ २० ॥
य इदं लीलया विश्वं सृजत्यवति हन्ति च ।
चेष्टां विश्वसृजो यस्य न विदुर्मोहिता यया ॥ २१ ॥
यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना ।
दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥ २२ ॥
नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे ।
अनन्तायादिभूताय कूटस्थायात्मने नमः ॥ २३ ॥
प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् ।
तस्मिन् न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥ २४ ॥
गरुडध्वजमारुह्य रथं रामजनार्दनौ ।
अन्वयातां महावेगैरश्वै राजन् गुरुद्रुहम् ॥ २५ ॥
मिथिलाया उपवने विसृज्य पतितं हयम् ।
पद्भ्यामधावत् सन्त्रस्तः कृष्णोऽन्वभ्यद्रवद् रुषा ॥ २६ ॥
पदातेर्धावतस्तस्य पदातिस्तिग्मनेमिना ।
चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ॥ २७ ॥
अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् ।
वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥ २८ ॥
तत आह बलो नूनं स मणिः शतधन्वना ।
कस्मिंश्चित् पुरुषे न्यस्तस्तमन्वेषं पुरं व्रज ॥ २९ ॥

अहं वैदेहमिच्छामि द्रष्टुं प्रियतरं मम ।
इत्युक्त्वा स ययौ राजन् मिथिलां यदुनन्दनः ॥ ३० ॥

तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः ।
अर्हयामास विधिवदर्हणीयं (दर्हण्यं वै) समर्हणैः ॥ ३१ ॥

उवास तस्यां कतिचिन्मिथिलायां समा विभुः ।
ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः ।
मानितः प्रीतियुक्तेन जनकेन महात्मना ॥ ३२ ॥

केशवो द्वारकामेत्य निधनं शतधन्वनः
अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद् विभुः ॥ ३३ ॥

ततः स कारयामास क्रिया बन्धोर्हतस्य वै ।
साकं सुहृद्भिर्भगवान् यायाः स्युः साम्परायिकाः ॥ ३४ ॥

अक्रूरकृतवर्माणौ श्रुत्वा शतधनोर्वधम् ।
व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥ ३५ ॥

अक्रूरे प्रेषितेऽरिष्टान्यासन् वै द्वारकौकसाम् ।
शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ॥ ३६ ॥

ततोऽपृच्छद्धरिर्वृद्धानुग्रसेनपुरोगमान् ।
कस्मादिहारिष्टान्यासन् महतां सुचिरेण वः ॥ ३७ ॥

इत्यङ्गोपदिशन्त्येके विस्मिता वै गदाभृतः ।
निवासनिकटे किं वा घटेतारिष्टदर्शनम् ॥ ३८ ॥

देवेऽवर्षति काशीशः श्वफल्कायागताय गाम् ।
स्वसुतां गान्दिनीं प्रादात् ततोऽवर्षत् स काशिपु ॥ ३९ ॥

तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र तत्र सः ।
देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥ ४० ॥

इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् ।
इति दूतैः समानीय रामाक्रूरौ जनार्दनः ॥ ४१ ॥

अक्रूरं मानयन् कृष्णः कथयित्वा प्रियाः कथाः ।
विदिताखिलतत्त्वज्ञो स्मयमान उवाच ह ॥ ४२ ॥

ननु दानपते न्यस्तस्त्वय्यसौ शतधन्वना ।
स्यमन्तकमणिः श्रीमान् विदितः पूर्वमेव नः ॥ ४३ ॥

सत्राजितोऽनपत्यत्वाद् गृह्णीयुर्दुहितुः सुताः ।
दायं निनीयापः पिण्डान् विमुच्यर्णमशेषतः ।
तथापि दुर्धरो ह्यन्यैस्त्वय्यास्तां प्रापितो मणिः ॥ ४४ ॥

किन्तु मामग्रजः सम्यङ् न प्रत्येति मणिं प्रति ।
दर्शयस्व महाभाग बन्धूनां शान्तिमावह ॥ ४५ ॥

अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ।
एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ॥ ४६ ॥

आदाय वाससा च्छन्नं ददौ सूर्यसमप्रभम् ।
स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः ॥ ४७ ॥

मार्जयामास लोकेश अभिभाष्य हलायुधम् ।
दृष्ट्वा मणिं हलधरस्तदर्थं प्रोष्य आगतः ॥ ४८ ॥

योग्योऽहमिति मन्वानश्चक्रमे कुरुपुङ्गव ।
सत्यभामा पितृधनं मन्वाना स्वात्मनोचितम् ॥ ४९ ॥

गृहीतुमैच्छद् विस्रब्धं हरेश्चित्तमजानती ।
जाम्बवत्यपि शुल्कार्थं पित्रा दत्तो ममेति ह ॥ ५० ॥

स्पृहां चक्रे मणौ तस्मिन् सर्वं विज्ञाय माधवः ।
अक्रूरस्य करे भूयो मणिं प्रत्यर्पयद् विभुः ॥ ५१ ॥

यस्त्वेतद् भगवत ईश्वरस्य विष्णो-
र्वीर्याढ्यं व्रजिनहरं सुमङ्गलं च ।
आख्यानं पठति शृणोत्यनुस्मरेद् वा
दुष्कीर्तिं दुरितमपोह्य याति शान्तिम् ॥ ५२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे एकषष्टितमोऽध्यायः ॥

## अथ द्विषष्टितमोऽध्यायः

श्रीशुक उवाच–
एकदा पाण्डवान् द्रष्टुं प्रतीतान् पुरुषोत्तमः ।
इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभिर्वृतः ॥ १ ॥

दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम् ।
उत्तस्थुर्युगपद् प्राणाः प्राणं मुख्यमिवागतम् ॥ २ ॥

परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः ।
सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥ ३ ॥

युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् ।
फाल्गुनं परिरभ्याथ यमाभ्यामभिवन्दितः ॥ ४ ॥

परमासन आसीनं कृष्णा कृष्णमनिन्दिता ।
नवोढा व्रीडिता किञ्चिच्छनैरेत्याभ्यवन्दत ॥ ५ ॥

तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः ।
निषसादासनेऽन्ये च पूजिताः पर्युपासते ॥ ६ ॥

पृथां समागम्य–
कृताभिवन्दनस्तयाऽतिहार्दार्द्रदृशाऽभिरम्भितः ।
आपृष्टवांस्तत्कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ॥

तमाह प्रेमवैक्लव्यरुद्धकण्ठाश्रुलोचना ।
स्मरन्ती तान् बहून् क्लेशान् क्लेशापायात्मदर्शनम् ॥ ८ ॥

तदैव कुशलं नोऽभूत् यत् सनाथाः कृता वयम् ।
ज्ञातुं नः स्मरतां कृष्ण भ्राता मे प्रेपितस्त्वया ॥ ९ ॥

पाञ्चालेषु स्थितानस्मान् स्वयंवरकृते यदा ।
अनुस्मृत्यागतो यस्त्वं तेन स्मासं सुखोषिता ॥ १० ॥

इत्युक्तायां तदा कुन्त्यां प्राह योगेश्वरः स्वयम् ।
पाञ्चालेषु स्थितानेत्य सुतांस्ते छद्मरूपिणः ॥ ११ ॥

कुम्भकारस्य शालायामुषितान् सह भार्यया ।
दृष्ट्वाऽगतोऽहं दिवसे तस्मिन्नेवाविलम्बितः ॥ १२ ॥

निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम् ।
शतधन्वनि दुर्बुद्धौ हते सीरधरोऽग्रजः ॥ १३ ॥

कुपितो मामनादृत्य विदेहान् विमना ययौ ।
एतावन्तमहं कालं तदागमनकाङ्क्षया ॥ १४ ॥

पुर एवावसं क्वापि नागच्छं कार्ययन्त्रितः ।
इत्येवं वादिनं कुन्ती प्राह स्नेहपरिप्लुता ॥ १५ ॥

न तेऽस्ति स्वः पर इति विश्वस्य सुहृदात्मनः ।
तथापि स्मरतां सर्वान् क्लेशान् हंसि हृदि स्थितः ॥ १६ ॥

इति वै वार्षिकान् मासान् राज्ञा सोऽभ्यर्चितः सुखम् ।
जनयन् नयनानन्दमिन्द्रप्रस्थौकसां विभुः ॥ १७ ॥

एकदा रथमारुह्य विजयो वानरध्वजम् ।
गाण्डीवं धनुरादाय तूणी चाक्षयसायकौ ॥ १८ ॥

साकं कृष्णेन सन्नद्धो विहर्तुं विपिनं बनम् ।
बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥ १९ ॥

तत्राविध्यच्छरैर्व्याघ्रान् सूकरान् महिषान् रुरून् ।
शरभान् गवयान् खड्गान् हरिणान् शशशल्यकान् ॥ २० ॥

तान् निन्युः किङ्करा राज्ञे मेध्यान् पर्वण्युपागते ।
तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात् ॥ २१ ॥

तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ।
कृष्णौ ददर्शतुः कन्यां चरन्तीं चारुदर्शनाम् ॥ २२ ॥

तामासाद्य वरारोहां सुदतीं रुचिराननाम् ।
पप्रच्छ प्रेषितः सख्या फल्गुनः प्रमदोत्तमाम् ॥ २३ ॥

का त्वं कस्यासि सुश्रोणि कुतो वा किं चिकीर्षसि ।
मन्ये त्वां पतिमिच्छन्तीं कन्यां कथय शोभने ॥ २४ ॥

कालिन्द्युवाच–
अहं देवस्य सवितुर्दुहिता पतिमिच्छती ।
विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥ २५ ॥

नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ।
तुष्यतां मे स भगवान् मुकुन्दोऽनाथवत्सलः ॥ २६ ॥

कालिन्दीति समाख्याता वसामि यमुनाजले ।
निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २७ ॥

तथाऽवदद् गुडाकेशो वासुदेवाय सोऽपि ताम् ।
रथमारोप्य तद्विद्वान् धर्मराजमुपागमत् ॥ २८ ॥

वसंस्तत्र हृषीकेशः शक्रप्रस्थे यथासुखम् ।
विश्वकर्माणमाहूय शिल्पविद्याविशारदम् ॥ २९ ॥

अद्भुतं कारयामास नगरं धर्मसूनवे ।
सप्रासादपुरद्वारगोपुराट्टालतोरणम् ॥ ३० ॥

पुरन्दरपुरप्रख्यं स्वानां प्रियचिकीर्षया ।
अथ पार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः ॥ ३१ ॥

आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ।
अथोपयेमे कालिन्दीं पुण्ये नक्षत्र ऊर्जिते ॥ ३२ ॥

रूपयौवनसम्पन्नां मनोनयननन्दिनीम् ।
वितन्वन् परमानन्दं स्वानां परममङ्गलम् ॥ ३३ ॥

विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ ।
स्वयंवरे स्वभगिनीं कृष्णकामां न्यषेधताम् ॥ ३४ ॥

राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः ।
प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ॥ ३१ ॥

नग्नजिन्नाम कौसल्य आसीद् राजाऽतिधार्मिकः ।
तस्य सत्याऽभवत् कन्या राजन् नीलेति चाह्वया ॥ ३२ ॥

तां न शेकुर्नृपा वोढुमजित्वा सप्तगोवृषान् ।
तीक्ष्णशृङ्गान् सुदुर्धर्षान् वीरगन्धान् महाघनान् ॥ ३३ ॥

तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः ।
जगाम कौसल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥

स कौसलपतिः प्रीतः प्रत्युत्थानासनादिभिः ।
अर्हणेनापि गुरुणा पूजयन् प्रत्यनन्दत ॥ ३५ ॥

वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम् ।
भूयादयं मे पतिराशिषां पतिः करोतु सत्या यदि मे धृतव्रतः ॥ ४० ॥

अर्चितं पुनरित्याह नारायण जगत्पते ।
आत्मना देव पूर्णस्य करवाणि किमल्पकः ॥ ४१ ॥

यत्पादपङ्कजरजः शिरसा बिभर्ति
श्रीरब्जजश्च गिरिशः सहलोकपालैः ।
लीलातनुः स्वकृतसेतुपरीप्सया यः
काले दधत् स भगवान् स्वकृतेन तुष्येत् ॥ ४२ ॥

श्रीशुक उवाच–
तमाह भगवान् कृष्णः कृतासनपरिग्रहः ।
मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ॥ ४३ ॥

श्री भगवानुवाच–
अन्यत्र काले विदुषः स्वयंवरात्
ध्याचितारं वरमाहुरुत्तमम् ।
स हि प्रभूणां पुरुषार्थभागिनां
वेलां विनाऽह्वाययति क्षितीश्वर ॥ ४४ ॥

नरेन्द्र याश्चा कविभिर्विगर्हिता
राजन्यबन्धोर्निजधर्मवर्तिनः ।
तथापि याचे तव सौहृदेच्छया
कन्यां त्वदीयां न हि शुल्कदा वयम् ॥ ४५ ॥

राजोवाच–
कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ।
गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी ॥ ४६ ॥

किन्त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ।
पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥ ४७ ॥

सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः ।
एतैर्भग्नाः सुबहुशो भिन्नगात्रा नृपात्मजाः ॥ ४८ ॥

यदीमे निगृहीताः स्युस्त्वयैव यदुनन्दन ।
वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥ ४९ ॥

श्रीशुक उवाच–
एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ।
आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥ ५० ॥

बद्ध्वा तान् दामभिः शौरिर्भग्नदर्पान् हतौजसः ।
व्यकर्षल्लीलया बद्धान् बालो दारुमयान् यथा ॥ ५१ ॥

ततः प्रीतः सुतां राजन् ददौ कृष्णाय विस्मितः ।
तां प्रत्यगृह्णात् भगवान् विधिवत् सदृशीं प्रभुः ॥ ५२ ॥

राजपत्न्यः स्वदुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ।
लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ५३ ॥

शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः ।
नरा नार्यः प्रमुदिताः सुवासः स्रगलङ्कृताः ॥ ५४ ॥

दशधेनुसहस्राणि पारिबर्हमदाद् विभुः ।
युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५५ ॥

नवनागसहस्राणि नागाच्छतगुणान् रथान् ।
रथाच्छतगुणानश्वानश्वाच्छतगुणान् नरान् ॥ ५६ ॥

दम्पती रथमारोप्य महत्या सेनया वृती ।
स्नेहप्रक्लिन्नहृदयो यापयामास कौसलः ॥ ५७ ॥

पारिबर्हं च सङ्गृह्य द्वारकामेत्य सत्यया ।
रेमे यदूनामृषभो भगवान् देवकीसुतः ॥ ५८ ॥

श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ।
कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ॥ ५९ ॥

सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ।
स्वयंवरे जहारैकः ससुपर्णः सुधामिव ॥ ६० ॥

अन्याश्चैवंविधा भार्याः कृष्णस्यासन् सहस्रशः ।
भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ ६१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे द्विपष्टितमोऽध्यायः ॥

परमासन आसीनं कृष्णा कृष्णमनिन्दिता ।
नवोढा व्रीडिता किञ्चिच्छनैरेत्याभ्यवन्दत ॥ ५ ॥

तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः ।
निषसादासनेऽन्ये च पूजिताः पर्युपासते ॥ ६ ॥

पृथां समागम्य–
कृताभिवन्दनस्तयाऽतिहार्दार्द्रदृशाऽभिरम्भितः ।
आपृष्टवांस्तत्कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ॥

तमाह प्रेमवैक्लव्यरुद्धकण्ठाश्रुलोचना ।
स्मरन्ती तान् बहून् क्लेशान् क्लेशापायात्मदर्शनम् ॥ ८ ॥

तदैव कुशलं नोऽभूत् यत् सनाथाः कृता वयम् ।
ज्ञातुं नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ॥ ९ ॥

पाञ्चालेषु स्थितानस्मान् स्वयंवरकृते यदा ।
अनुस्मृत्यागतो यस्त्वं तेन स्मासं सुखोषिता ॥ १० ॥

इत्युक्तायां तदा कुन्त्यां प्राह योगेश्वरः स्वयम् ।
पाञ्चालेषु स्थितानेत्य सुतांस्ते छद्मरूपिणः ॥ ११ ॥

कुम्भकारस्य शालायामुषितान् सह भार्यया ।
दृष्ट्वाऽगतोऽहं दिवसे तस्मिन्नेवाविलम्बितः ॥ १२ ॥

निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम् ।
शतधन्वनि दुर्बुद्धौ हते सीरधरोऽग्रजः ॥ १३ ॥

कुपितो मामनादृत्य विदेहान् विमना ययौ ।
एतावन्तमहं कालं तदागमनकाङ्क्षया ॥ १४ ॥

पुर एवावसं क्वापि नागच्छं कार्ययन्त्रितः ।
इत्येवं वादिनं कुन्ती प्राह स्नेहपरिप्लुता ॥ १५ ॥

न तेऽस्ति स्वः पर इति विश्वस्य सुहृदात्मनः ।
तथापि स्मरतां सर्वान् क्लेशान् हंसि हृदि स्थितः ॥ १६ ॥

इति वै वार्षिकान् मासान् राज्ञा सोऽभ्यर्चितः सुखम् ।
जनयन् नयनानन्दमिन्द्रप्रस्थौकसां विभुः ॥ १७ ॥

एकदा रथमारुह्य विजयो वानरध्वजम् ।
गाण्डीवं धनुरादाय तूणी चाक्षयसायकौ ॥ १८ ॥

साकं कृष्णेन सन्नद्धो विहर्तुं विपिनं वनम् ।
बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥ १९ ॥

तत्राविध्यच्छरैर्व्याघ्रान् सूकरान् महिषान् रुरून् ।
शरभान् गवयान् खड्गान् हरिणान् शशशल्यकान् ॥ २० ॥

तान् निन्युः किङ्करा राज्ञे मेध्यान् पर्वण्युपागते ।
तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात् ॥ २१ ॥

तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ।
कृष्णौ ददृशतुः कन्यां चरन्तीं चारुदर्शनाम् ॥ २२ ॥

तामासाद्य वरारोहां सुदतीं रुचिराननाम् ।
पप्रच्छ प्रेषितः सख्या फल्गुनः प्रमदोत्तमाम् ॥ २३ ॥

का त्वं कस्यासि सुश्रोणि कुतो वा किं चिकीर्षसि ।
मन्ये त्वां पतिमिच्छन्तीं कन्यां कथय शोभने ॥ २४ ॥

कालिन्द्युवाच–
अहं देवस्य सवितुर्दुहिता पतिमिच्छती ।
विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥ २५ ॥

नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ।
तुष्यतां मे स भगवान् मुकुन्दोऽनाथवत्सलः ॥ २६ ॥

कालिन्दीति समाख्याता वसामि यमुनाजले ।
निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २७ ॥

तथाऽवदद् गुडाकेशो वासुदेवाय सोऽपि ताम् ।
रथमारोप्य तद्विद्वान् धर्मराजमुपागमत् ॥ २८ ॥

वसंस्तत्र हृषीकेशः शक्रप्रस्थे यथासुखम् ।
विश्वकर्माणमाहूय शिल्पविद्याविशारदम् ॥ २९ ॥

अद्भुतं कारयामास नगरं धर्मसूनवे ।
सप्रासादपुरद्वारगोपुराट्टालतोरणम् ॥ ३० ॥

पुरन्दरपुरप्रख्यं स्वानां प्रियचिकीर्षया ।
अथ पार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः ॥ ३१ ॥

आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ।
अथोपयेमे कालिन्दीं पुण्ये नक्षत्र ऊर्जिते ॥ ३२ ॥

रूपयौवनसम्पन्नां मनोनयननन्दिनीम् ।
वितन्वन् परमानन्दं स्वानां परममङ्गलम् ॥ ३३ ॥

बिन्दानुबिन्दावावन्त्यौ दुर्योधनवशानुगौ ।
स्वयंवरे स्वभगिनीं कृष्णकामां न्यषेधताम् ॥ ३४ ॥

राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः ।
प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ॥ ३५ ॥

नग्नजिन्नाम कौसल्य आसीद् राजाऽतिधार्मिकः ।
तस्य सत्याऽभवत् कन्या राजन् नीलेति चाह्वया ॥ ३६ ॥

तां न शेकुर्नृपा वोढुमजित्वा सप्तगोवृषान् ।
तीक्ष्णशृङ्गान् सुदुर्धर्षान् वीरगन्धान् महाघनान् ॥ ३७ ॥

तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः ।
जगाम कौसल्यपुरं सैन्येन महता वृतः ॥ ३८ ॥

स कौसलपतिः प्रीतः प्रत्युत्थानासनादिभिः ।
अर्हणेनापि गुरुणा पूजयन् प्रत्यनन्दत ॥ ३९ ॥

वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम् ।
भूयादयं मे पतिराशिषां पतिः करोतु सत्यो यदि मे धृतव्रतः ॥

अर्चितं पुनरित्याह नारायण जगत्पते ।
आत्मना देव पूर्णस्य करवाणि किमल्पकः ॥ ४१ ॥

यत्पादपङ्कजरजः शिरसा बिभर्ति
श्रीरब्जजश्च गिरिशः सहलोकपालैः ।
लीलातनुः स्वकृतसेतुपरीप्सया यः
काले दधत् स भगवान् स्वकृतेन तुष्येत् ॥ ४२ ॥

श्रीशुक उवाच–
तमाह भगवान् कृष्णः कृतासनपरिग्रहः ।
मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ॥ ४३ ॥

श्री भगवानुवाच–
अन्यत्र काले विदुषः स्वयंवरात्
ध्याचितारं वरमाहुरुत्तमम् ।
स हि प्रभूणां पुरुषार्थभागिनां
वेलां विनाऽह्वायति क्षितीश्वर ॥ ४४ ॥

नरेन्द्र याच्ञा कविभिर्विगर्हिता
राजन्यबन्धोर्निजधर्मवर्तिनः ।
तथापि याचे तव सौहृदेच्छया
कन्यां त्वदीयां न हि शुल्कदा वयम् ॥ ४५ ॥

राजोवाच–
कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ।
गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी ॥ ४६ ॥

किन्त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ।
पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥ ४७ ॥

सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः ।
एतैर्भग्नाः सुबहुशो भिन्नगात्रा नृपात्मजाः ॥ ४८ ॥

यदीमे निगृहीताः स्युस्त्वयैव यदुनन्दन ।
वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥ ४९ ॥

श्रीशुक उवाच–
एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ।
आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥ ५० ॥

बद्ध्वा तान् दामभिः शौरिर्भग्नवीर्यान् हतौजसः ।
व्यकर्षल्लीलया बद्धान् बालो दारुमयान् यथा ॥ ५१ ॥

ततः प्रीतः सुतां राजन् ददौ कृष्णाय विस्मितः ।
तां प्रत्यगृह्णात् भगवान् विधिवत् सदृशीं प्रभुः ॥ ५२ ॥

राजपत्न्यः स्वदुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ।
लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ५३ ॥

शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः ।
नरा नार्यः प्रमुदिताः सुवासः स्रगलङ्कृताः ॥ ५४ ॥

दशधेनुसहस्राणि पारिबर्हमदाद् विभुः ।
युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५५ ॥

नवनागसहस्राणि नागाच्छतगुणान् रथान् ।
रथाच्छतगुणानश्वानश्वाच्छतगुणान् नरान् ॥ ५६ ॥

दम्पती रथमारोप्य महत्या सेनया वृतौ ।
स्नेहप्रक्लिन्नहृदयो यापयामास कौसलः ॥ ५७ ॥

पारिबर्हं च सङ्गृह्य द्वारकामेत्य सत्यया ।
रेमे यदूनामृषभो भगवान् देवकीसुतः ॥ ५८ ॥

श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ।
कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ॥ ५९ ॥

सुतां च मद्राधिपतेर्लक्षणां लक्षणैर्युताम् ।
स्वयंवरे जहारैकः ससुपर्णः सुधामिव ॥ ६० ॥

अन्याश्चैवंविधा भार्याः कृष्णस्यासन् सहस्रशः ।
भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ ६१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे द्विपञ्चाशत्तमोऽध्यायः ॥

# अथ त्रिषष्टिरध्यायः

राजोवाच–

यथा हतो भगवता भौमो नीता यथा स्त्रियः ।
निरुद्धा यास्तदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥

श्रीशुक उवाच–

द्वारवत्यां महाभागे निवसत्यच्युते नृप ।
दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपात् ॥ २ ॥

हृतच्छत्रेण शक्रेण हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥ ३ ॥

इन्द्रमाश्वास्य गोविन्दः सुसम्पूज्य विसृज्य च ।
सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥ ४ ॥

हिमाद्रौ तुङ्गशिखरे जलाग्न्यनिलदुर्गमम् ।
गिरिदुर्गं शस्त्रदुर्गैर्मुरपाशायुतैर्वृतम् ॥ ५ ॥

स सम्प्राप्य भटैर्गुप्तं दानवेन्द्रपुरं महत् ।
गदया निर्बिभेदाद्रिं प्राकाराकारसंस्थितम् ॥ ६ ॥

तन्निर्भिद्य प्रविश्यान्तः शस्त्रदुर्गाणि सायकैः ।
चकर्त मौरवं पाशं चक्रेणामन्दमच्छिनत् ॥ ७ ॥

क्षुरमालां तथा घोरां निचकर्तासिना हरिः ।
वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम् ॥ ८ ॥

हरिर्निमिषमात्रेण नाशयामास भारत ।
शङ्खनादेन तीव्रेण मनांसि च मनस्विनाम् ॥ ९ ॥

पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् ।
मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात् ॥ १० ॥

त्रिशूलमुद्यम्य सुदुर्निरीक्ष्यो
युगान्तसूर्यानलरोचिरुज्ज्वलः ।
ग्रसंस्त्रिलोकानिव पञ्चभिर्मुखैः
अभ्यद्रवत् तार्क्ष्यसुतं यथोरगः ॥ ११ ॥

आविध्य शूलं तरसा गरुत्मते
निरस्य वक्त्रैर्व्यनदन् स पञ्चभिः ।
खं रोदसी सर्वदिशोऽन्तरं महान्
अपूरयन्नण्डकटाहमावृणोत् ॥ १२ ॥

तमापतन्तं त्रिशिखं गरुत्मते
चकर्त वाणत्रितयेन केशवः ।
मुखेषु तस्यापि शरान् समर्पयत्
पुनर्गदां सोऽप्यमुचन्मधुद्विषे ॥ १३ ॥

तामापतन्तीं गदया गदाग्रजो
गदां मृधे निर्बिभिदे सहस्रधा ।
उद्यम्य बाहूनभिधावतो रिपोः
शिरांसि चक्रेण जहार लीलया ॥ १४ ॥

व्यसुः पपाताम्भसि कृत्तकन्धरो
निकृत्तशृङ्गोऽद्रिरिवेन्द्रतेजसा ।
पपात विष्णोः शिरसि प्रमोदिनी
प्रसूनवृष्टिर्निहते मुरेऽसुरे ॥ १५ ॥

तस्यात्मजाः सप्त पितुर्वधातुराः
आश्विकीर्षवस्तस्य रणे प्रतिक्रियाम् ।
ध्रुवश्चरिष्णुः श्रवणो विभावसु-
र्नभो वसुस्वानरुणश्च सप्तः ॥ १६ ॥

रथान् समारुह्य वृषप्रयुक्तान्
भौमप्रयुक्ता भवनान्निराक्रमन् ।
प्रयुञ्जतासज्य शरासनान् भटाः
शक्त्यृष्टिशूलानमिते रुषोल्वणान् ॥ १७ ॥

तच्छस्त्रकूटं भगवान् स्वमार्गणै-
रमोघवीर्यस्तिलशश्चकर्त ।
तान् योद्धुमिच्छूननयद् यमक्षयं
निकृत्तशीर्षोरुभुजाङ्घ्रिकार्मुकान् ॥ १८ ॥

ततो द्रुततरं गत्वा भटा राजपुरं महत् ।
हतान् मुरसुतान् सर्वान् नरकाय न्यवेदयन् ॥ १९ ॥

स्वानीकपानच्युतचक्रसायकैर्हतान्
निशम्याशु चुकोप भूमिजः ।
निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः
पयोधिप्रभवैर्निराक्रमत् ॥ २० ॥

रथैरनेकसाहस्रैर्गजैश्च बहुभिर्वृतः ।
महत्या सेनया युक्तश्चायादायोधनं बली ॥ २१ ॥

दृष्ट्वा सभार्यं गरुडोपरिस्थितं
सूर्योपरिष्टात् सतडिद्घनं यथा ।
गृहीतकोदण्डमुदारशङ्ख-
कौमोदकीचक्रधरं चतुर्भुजम् ॥ २२ ॥

नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहनम् ।
शङ्खमाध्माय गोविन्दः सिंहनादं व्यनीनदत् ॥ २३ ॥

वरुथिनी दैत्यपतेः सुघोरान्
शरान् ववर्षाच्युतमूर्ध्नि दुर्जया ।
कृष्णे स भौमो व्यसृजच्छतघ्नीं
लोहायसीं तेन भृशं स विव्यथे ॥ २४ ॥

अनेकबाणान् निर्मुक्तान् नरकेण स्मयन्निव ।
चकर्त बाणैर्युगपत् तदद्भुतमिवाभवत् ॥ २५ ॥

ततोऽनु सैन्यं भगवान् गदाग्रजो विचित्रपत्रैर्निशितैः शरौघैः ।
निकृत्तबाहूरुशिरोङ्घ्रिविग्रहं चकार तूर्णं नृप साश्वकुञ्जरम् ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे त्रिषष्टिरध्यायः ॥

## अथ चतुःषष्टिरध्यायः

श्रीशुक उवाच–

यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ।
अच्छिनत् केशवस्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥ १ ॥

उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नतान् गजान् ।
गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः ॥ २ ॥

तुरङ्गमाश्च दुर्धर्षाः पेतुरुर्व्यां गतासवः ।
दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥ ३ ॥

तं भौमः प्राहरच्छक्त्या वज्रेणेव हरिगिरिम् ।
तयाऽतिविद्धो गरुडो मालाविद्ध इव द्विपः ॥ ४ ॥

न किञ्चिदपि राजेन्द्र चचाल नरकाहवे ।
ततः कार्मुकमादाय नरकः शरसञ्चयान् ॥ ५ ॥

मुमोच कृष्णे तान् सर्वानच्छिनत् केशवः शरैः ।
ततोऽर्धचन्द्रं नरकं सुसंधाय शरासने ॥ ६ ॥

आक्रष्टुकामं विज्ञाय तच्चापं केशवोऽच्छिनत् ।
ततः कालायसमयीं गदां गुर्वीं धरासुतः ॥ ७ ॥

आददे तां क्षुरप्रेण चकर्त मधुसूदनः ।
ततो निशातं परशुं भौमः परबलार्दनः ॥ ८ ॥

प्राहिणोद् विष्णवे तं च चिच्छेद श्रीधरोऽसिना ।
ततः कृष्णाय चिक्षेप तोमरान् पञ्चसप्तति ॥ ९ ॥

चकार सिंहनादं च नरकः परवीरहा ।
तांस्तोमरान् कुरुश्रेष्ठ शरेणैकेन केशवः
चिच्छेद यौगपद्येन तदद्भुतमिवाभवत् ॥ १० ॥

शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः ।
तद्विसर्गात् पूर्वमेव नरकस्य शिरो हरिः ।
अपाहरद् गजस्थस्य चक्रेण क्षुरनेमिना ॥ ११ ॥

सकुण्डलं चारुकिरीटभूषितं बभौ पृथिव्यां पतितं समुज्ज्वलत् ।
हाहेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥

हत्वा हरिर्नरकं दैत्यवर्यं मरुद्गणैः सहितो लोकपालैः ।
समाहूतः पौरमुख्यैः सभार्यः प्राग्ज्योतिषं प्राविशद् द्रष्टुकामः ॥

तत्रापश्यद् यदुश्रेष्ठो विचित्रं मणिपर्वतम् ।
छत्रं च वारुणं हृद्यं सलिलस्त्रावि भारत ॥ १४ ॥

शक्राय प्राहिणोद् भूयः केशवो मणिपर्वतम् ।
वरुणाय तथा च्छत्रं प्राहिणोद् दैत्यकिङ्करैः ॥ १५ ॥

तान् विसृज्य हरिर्देवान् स्वयमेव जगत्पतिः ।
प्राविशद् भौमसदनं पुरन्दरपुरोपमम् ॥ १६ ॥

ततो धरा कृष्णमुपेत्य कुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे ।
पौत्रं च वीरं भगदत्तसञ्ज्ञितं निवेद्य मालामपि वैजयन्तीम् ॥

अस्तौषीदथ विश्वेशं देवी देववरार्चितम् ।
प्राञ्जलिः प्रणता राजन् भक्तिप्रवणया धिया ॥ १८ ॥

पृथिव्युवाच–
नमस्ते देवदेवेश शङ्खचक्रगदाधर ।
भक्तेच्छोपात्तरूपाय परमात्मन् नमोऽस्तु ते ॥ १९ ॥

नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २० ॥
नमो भगवते तुभ्यं वासुदेवाय विष्णवे ।
पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥ २१ ॥
अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये ।
चराचरात्मन् लोकेश परमात्मन् नमोऽस्तु ते ॥ २२ ॥
त्वं वै सिसृक्षू रज उत्कटं प्रभो
तमो निरोधाय बिभर्षि संवृतम् ।
स्थानाय सत्त्वं जगतो जगत्प्रभो
कालः प्रधानः पुरुषोऽस्यपारः ॥ २३ ॥
अहं पयो ज्योतिरथोऽनिलो नभो
मात्राणि देवा मन इन्द्रियाणि ।
कर्ताऽभिमानीत्यखिलं तु कारणं
त्वय्यद्वितीये भगवन्नयं भ्रमः ॥ २४ ॥
तस्यात्मजोऽयं तव पादपङ्कजं भीतः प्रपन्नार्तिहरं प्रसादितुम् ।
तत्पालयैनं कुरु हस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम् ॥

श्रीशुक उवाच–
इति भूम्याऽर्चितो वाग्भिर्भगवान् भक्तिनम्रया ।
प्रसन्नः प्रददौ तस्मै भगदत्ताय चाभयम् ॥ २६ ॥
राज्ये नियोज्य तं वंश्ये तदमात्यांश्च तत्पदे ।
भौमावरोधकान्तानां श्रेणीः स प्राविशद्धरिः ॥ २७ ॥
तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् ।
भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥ २८ ॥
तं प्रविष्टं स्त्रियो वीक्ष्य ताः सर्वा नवयौवनाः ।
स्वलङ्कृता विचित्राङ्ग्यो नरवर्यं विमोहिताः ॥ २९ ॥
मनसा वव्रिरेऽभीष्टं पतिं दैवोपपादितम् ।
भूयात् पतिरयं मह्यं धाता तदनुमोदताम् ॥ ३० ॥
इति सर्वेश्वरे कृष्णे ता नार्यो हृदयं दधुः ।
ताः प्राहिणोद् द्वारवतीं सुमृष्टविरजाम्बराः ॥ ३१ ॥
खरैरुष्ट्रैर्महाकोशान् रथांश्च द्रविणं महत् ।
ऐरावतकुलेभांश्च चतुर्दन्तान् मदोत्कटान् ॥ ३२ ॥
भगदत्ताय दत्त्वैकं सुप्रतीकं ततोऽपरान् ।
पाण्डुरांश्च चतुःषष्टिं प्रेषयामास केशवः ॥ ३३ ॥
॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे चतुःषष्टिरध्यायः ॥

# अथ पञ्चषष्टिरध्यायः

श्रीशुक उवाच–
हत्वा नरकमत्युग्रं दानवं दानवान्तकः ।
आरुह्य गरुडं प्रायात् प्राग्ज्योतिषपुरान्नृप ॥ १ ॥
स गच्छन् गगने विष्णुर्वन्दितुं देवमातरम् ।
जगाम त्रिदशावासं सहितः सत्यभामया ॥ २ ॥
स्वर्गद्वारं गतो विष्णुर्दध्मौ शङ्खं महास्वनम् ।
उपाजग्मुस्तदाकर्ण्य साघ्यपाद्या दिवौकसः ॥ ३ ॥
पूजितस्तैः सुरैः कृष्णो भक्तिनम्रैर्गतज्वरैः ।
सुरेन्द्रभवनं दिव्यं प्रविवेश मनोरमम् ॥ ४ ॥
तत्र शक्रः समं शच्या पूजयामास केशवम् ।
रत्नैराभरणैर्दिव्यैर्गन्धमाल्यैश्च शोभनैः ॥ ५ ॥

ततः प्रायात् पुरीं मातुरदित्याः सह भार्यया ।
दृष्ट्वोपतस्थे तं देवी पुत्रमायान्तमच्युतम् ॥ ६ ॥
ववन्दे तां हरिस्तं सा पूजयामास भामिनी ।
आशीर्भिः परमप्रीता चिरदृष्टं यदूत्तमम् ॥ ७ ॥
सत्यभामाऽपि कौरव्य श्वश्र्वाः कृष्णेन चोदिता ।
पादयोः कुण्डले तस्या निधाय प्रणनाम वै ॥ ८ ॥
स्नुषामाश्लिष्य सन्तुष्टा सा पुनर्लब्धकुण्डला ।
आनन्दवाष्पप्रचुरा प्राहेदं कश्यपप्रिया ॥ ९ ॥
न ते जरा न वैरूप्यं कान्तेन सह विप्रियम् ।
भूयात् कल्याणि सुव्यक्तं मत्प्रसादात् कदाचन ॥ १० ॥
ततोऽनुज्ञाप्य तां देवीं त्रिदशानपि केशवः ।
आरुह्य प्रययौ तार्क्ष्यं सहितः सत्यभामया ॥ ११ ॥

महात्मना गगने देवदेव्यौ
गरुत्मता नीयमाने विचित्रम् ।
अपश्यतां नन्दनं चारगुप्तं
शचीभर्तुर्दयितं हृद्यगन्धम् ॥ १२ ॥

वनं दृष्ट्वा दिव्यगन्धं सुपुष्पं
कृष्णं सत्या प्राह पाणौ गृहीत्वा ।
प्रविश्यास्मिन् साधुचित्तं विहर्तुं
मुहूर्तं मे कामयते केशवेति ॥ १३ ॥

अथावरुह्य गरुडात् तस्या वचनगौरवात् ।
प्रविवेश वनं कृष्णः पालितं शक्रकिङ्करैः ॥ १४ ॥

तत्रापश्यत् तरून् दिव्यान् मत्तसारङ्गनादितान् ।
फलभारनतान् भूरिप्रसूनरजसाऽऽवृतान् ॥ १५ ॥

चलत्किसलयोपेतान् विहङ्गध्वनिशोभितान् ।
विचरन्ती तथा तत्र पारिजातं महाद्रुमम् ॥ १६ ॥

दृष्ट्वा पप्रच्छ गोविन्दं विस्मयाकुललोचना ।
किन्नामाऽयं तरुर्देव विचित्रो भुवनत्रये ॥ १७ ॥

सत्यमेतस्य वृक्षस्य कृतार्थाः फलभागिनः ।
प्रवालमूलो विपुलो जातरूपमहातनुः ॥ १८ ॥

इन्द्रनीलच्छदच्छन्नो लसद्वैडूर्यवेदिकः ।
माणिक्यपुष्पो विविधमुक्ताफलफलान्वितः ॥ १९ ॥

गोमेदपक्वप्रकरो वज्रकिञ्जल्करञ्जितः ।
स्फुरन्मरकतस्थूलशाखाशतविराजितः ॥ २० ॥

तरुरेष जगन्नाथ मनो मे हरते भृशम् ।
नेतव्योऽयं पुरीं वृक्षो यद्यहं ते प्रिया प्रभो ॥ २१ ॥

छायायामुपविष्टां मामन्यपत्न्यस्तवानघ ।
दृष्ट्वा मंस्यन्ति दयितां सर्वाभ्यो मां तवाच्युत ॥ २२ ॥

इत्युक्तो देवकीपुत्रः सत्यया प्रियकान्तया ।
प्राह नायं तरुर्भद्रे नेतव्यो नन्दनाद् वनात् ॥ २३ ॥

पुरा क्षीराम्बुधेर्जातो मथ्यमानात् सुरासुरैः ।
शक्राय दत्तः सकलैस्तदा तत्फलभोक्तृभिः ॥ २४ ॥

तन्नाहार्यमनादृत्य मया मित्रं शतक्रतुम् ।
तरुरत्नं सरोजाक्षि धर्ममेवानुतिष्ठता ॥ २५ ॥

नीयमाने च वृक्षेऽस्मिन् पारिजाते शुचिस्मिते ।
सङ्ग्रामो जायते घोरस्त्रिदशैर्जयकाङ्क्षिभिः ॥ २६ ॥

इत्युक्तो देवदेवेन सत्यभामा पुनर्हरिम् ।
प्राह भीषयसे किं मां व्यलीकैः कंसमर्दन ॥ २७ ॥

नाभ्यनन्दद् दुराचारा शची मां गृहमागताम् ।
हेतुर्हि वृक्षस्तस्यायं भर्तृपौरुषगर्विता ॥ २८ ॥

नेतव्यः सर्वथा वृक्षः पारिजातोऽयमच्युत ।
प्रियाऽहं तव चेन्नाथ नोचेद् विरम साम्प्रतम् ॥ २९ ॥

इत्युक्तः सत्यया कृष्णस्ताननादृत्य रक्षकान् ।
उत्पाट्यारोपयामास पारिजातं गरुत्मति ॥ ३० ॥

ततो निवारयामासुर्गोविन्दं वनपालकाः ।
केचिद् द्रुततरं जग्मुर्देवेन्द्राय निवेदितुम् ॥ ३१ ॥

कृष्णकृष्ण न हर्तव्यस्तरुरेषोऽमरार्चितः ।
हरसे यदि तस्य त्वं फलं सद्योऽनुभोक्ष्यसि ॥ ३२ ॥

प्राप्नोषि न पुरीं कृष्ण सहानेन महीरुहा ।
सद्यः पश्यसि देवेन्द्रं पृष्ठतोऽभ्युद्यतायुधम् ॥ ३३ ॥

सुरेन्द्रान्तिकमासाद्य द्रुतं ते वनरक्षकाः ।
उपविष्टं समं शच्या शक्रं दृष्ट्वाब्रुवन् नृप ॥ ३४ ॥

वनरक्षका ऊचुः–
अवज्ञायाखिलान् देवानिन्द्राणीं च त्वया सह ।
जहार कृष्णदयिता पारिजातं महाद्रुमम् ॥ ३५ ॥

उक्ताऽस्माभिर्भृशं देव वारयद्भिर्हरिप्रिया ।
उपालभ्याहरद् वृक्षं भर्तृपौरुषगर्विता ॥ ३६ ॥

श्रीशुक उवाच–
इत्याकर्ण्याप्रियं शक्रो दण्डाहत इवोरगः ।
शचीं विलोक्य पार्श्वस्थां नामृष्यत् तत्पराभवम् ॥ ३७ ॥

सन्नाहीयोगमाघोष्य सन्निपात्य च सैनिकान् ।
लोकपालान् समाहूय निश्चक्राम सुरेश्वरः ॥ ३८ ॥

ऐरावतं चतुर्दन्तमारुह्य वरवारणम् ।
गृहीतवज्रं गच्छन्तमनुजग्मुर्दिवौकसः ॥ ३९ ॥

वैश्वानरस्तु तुरगमारुह्य दृढदंशितः ।
घोरां शतघ्नीमादाय सुवपुच्छां ययौ रणम् ॥ ४० ॥

यमस्त्वारुह्य महिषं दण्डमादाय वीर्यवान् ।
मृत्युकालादिभिर्युक्तो युद्धार्थी शक्रमन्वगात् ॥ ४१ ॥

निर्ऋतिश्च महातेजा घोरमारुह्य पौरुषम् ।
असिहस्तो महाबाहुर्युद्धाय प्रययौ नृप ॥ ४२ ॥

मकरं भीषणाकारमारुह्य वरुणस्त्वरन् ।
पाशोद्यतकरः प्रायाद् युद्धायानुशचीपतिम् ॥ ४३ ॥

वायुः कृष्णमृगारूढो दंशितस्तोमरायुधः ।
सुरेश्वरमनुप्रायाद् योद्धुं चक्रभृता सह ॥ ४४ ॥

ऊढां चतुर्भिः पुरुषैः शिविकां नरवाहनः ।
योद्धुकामस्त्वरन् प्रायाद् विष्णुना मुद्गरायुधः ॥ ४५ ॥

ईशानो वृषभं तुङ्गमारुह्य शितशूलभृत् ।
वासवेन समं प्रायात् भूतकोटिसमन्वितः ॥ ४६ ॥

भेरीशङ्खमृदङ्गैश्च पणवानकगोमुखैः ।
सुवर्णसुषिरैर्दिव्यैः कांस्यतालैश्च भूरिभिः ॥ ४७ ॥

रथनेमिनिनादैश्च हयानां खुरनिःस्वनैः ।
क्ष्वेलितास्फोटितैर्घोरैः सङ्ग्रामाह्वानगर्जनैः ॥ ४८ ॥

तिष्ठतिष्ठेति मा याहि क्व यासीति पुनः पुनः ।
प्रवदद्भिः सुरगणैः शतशोऽथ सहस्रशः ॥ ४९ ॥

कम्पयद्भिश्च शस्त्रौघैः प्रेषयद्भिश्च वाहनम् ।
पुरोऽहमिति गच्छद्भिः शतशोऽथ सहस्रशः ॥ ५० ॥

घोरैर्ज्याघातनिर्घोषैः सिंहनादैश्च भूरिभिः ।
अभिदुद्रुवुरुद्वृत्ताः सिंहं गोमायवो यथा ॥ ५१ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे पञ्चषष्टितमोऽध्यायः ॥

## अथ षट्षष्टितमोऽध्यायः

श्रीशुक उवाच–
सुरानभिद्रुतान् दृष्ट्वा सत्यामाह जगत्पतिः ।
इमे प्राघुणिकाः प्राप्तास्तव वृन्दारका इति ॥ १ ॥

तथा ब्रुवाणे देवेशे प्रेषिता देवसैनिकाः ।
नदन्तो मुमुचुः कृष्णे शरवृष्टिं कुरूद्वह ॥ २ ॥

ततः शार्ङ्गं समादाय सत्या व्यसनविक्लवा ।
मुक्तांश्चिच्छेद बाणौघैस्तांश्छरान् देवसैनिकैः ॥ ३ ॥

ततो वैश्रवणः श्रीमान् बहुभिर्गुह्यकैर्वृतः ।
विस्फारयंस्तालमात्रं कार्मुकं कनकाटवि ॥ ४ ॥

स्वर्णपुङ्खान् शरान् मुञ्चन् सिंहवच्च नदन् मुहुः ।
अभिदुद्राव समरे तिष्ठ तिष्ठेति चाब्रवीत् ॥ ५ ॥

तं पञ्चभिः शरैः सत्या निशितैर्मर्मभेदिभिः ।
अर्पयामास वेगेन विशाले जठरे नृप ॥ ६ ॥

सोऽतिविद्धो रणे बाणैस्त्रिभिः भल्लैर्हरिप्रियाम् ।
अयोधयद् धनपतिः सिंहनादं व्यनीनदत् ॥ ७ ॥

तानप्राप्तानर्धचन्द्रैस्त्रिभिश्चिच्छेद सा शरैः ।
भूयोऽष्टभिः शरैर्देवी वत्सदन्तैर्मनोजवैः ॥ ८ ॥

विव्याध गुह्यकपतेर्ललाटे कुरुपुङ्गव ।
पीडितस्तैर्भृशं बाणैः पौलस्त्यः क्रोधमूर्च्छितः ॥ ९ ॥

सन्दधे निशितान् बाणानेकविंशति संयुगे ।
तानन्तरे सत्यभामा सायकैः सप्तभिर्नृप ॥ १० ॥

चिच्छेद निमिषार्धेन त्रिधैकैकं हरिप्रिया ।
सत्यभामा ततः क्रुद्धा पौलस्त्यस्य महद्धनुः ॥ ११ ॥

अर्धचन्द्रेण चिच्छेद मुष्टिदेशे द्विधा नृप ।
ततोऽन्यचापमादाय सज्जं कृत्वा धनेश्वरः ॥ १२ ॥

ववर्ष शरजालानि क्रोधात् सर्प इव श्वसन् ।
सर्वांस्तान् सायकान् सङ्ख्ये शरैः सन्नतपर्वभिः ॥ १३ ॥

चिच्छेद लीलया देवी तदद्भुतमिवाभवत् ।
ततः क्रुद्धो वैश्रवणः सत्यभामां विलोक्य च ॥ १४ ॥

प्राह पश्य हनिष्यामि त्वामद्य मम पौरुषम् ।
इत्युक्त्वा तालमात्रे तु चापे गुह्यकसत्तमः ॥ १५ ॥

पश्यतां सर्वदेवानां मार्धकामः पराभवम् ।
सन्दधे सूदितुं देवीमर्धचन्द्रं शरोत्तमम् ॥ १६ ॥

तदवेत्य मनस्तस्य क्षुरप्रेण हरिप्रिया ।
चिच्छेद कार्मुकं तस्य मुष्टिदेशे कुरूद्वह ॥ १७ ॥

ततो मुद्गरमादाय घोरं दानवभीषणम् ।
भ्रामयित्वा शतगुणं देव्यै चिक्षेप वित्तपः ॥ १८ ॥

तं मुद्गरं महाघोरमायान्तं कुरुपुङ्गव ।
वामेन पाणिना कृष्णो जग्राहोच्चैर्जहास च ॥ १९ ॥

ततो निवृत्तसङ्ग्रामो विदुद्राव धनेश्वरः ।
शशंस देवीं कृष्णश्च समाश्लिष्याभिपूजयन् ॥ २० ॥

पलायिते धनपतौ सङ्ग्रामे कंसवैरिणा ।
वरुणोऽभ्यद्रवत् कृष्णं पाशमुद्यम्य संयुगे ॥ २१ ॥

तमायान्तमभिप्रेक्ष्य तार्क्ष्यो मकरवाहनम् ।
अभ्यद्रवन्महासत्वः शार्दूल इव गोवृषम् ॥ २२ ॥

तयोः समभवद् युद्धं घोरं तार्क्ष्यजलेशयोः ।
यथा देवासुरे युद्धे बलिवासवयोरिव ॥ २३ ॥

तत्र काश्यपपुत्रस्य कण्ठे पाशं जलेश्वरः ।
क्रुद्धश्चकर्ष विन्यस्य सिंहः सिंहमिवौजसा ॥ २४ ॥

तं पक्षकोट्या गरुडः समुद्धृत्य जलेश्वरम् ।
पद्भ्यां गृहीत्वा मकरं चिक्षेप वरुणालये ॥ २५ ॥

कृच्छ्राद् गृहीतपाशस्तु वरुणो गतवाहनः ।
पदातिरेव सङ्ग्रामाद् विदुद्राव यथागतम् ॥ २६ ॥

तथा गते वार्धिपतौ सङ्ग्रामे वायुपावकौ ।
सममेवाभ्यवर्तेतां गोविन्दं कुरुसत्तम ॥ २७ ॥

पावकः पञ्चभिर्बाणैर्मारुतश्च तथा त्रिभिः ।
अयोधयद् हृषीकेशं तदद्भुतमिवाभवत् ॥ २८ ॥

ततः प्रहस्य गोविन्दो बाणेनैकेन पावकम् ।
विव्याध सप्तभिश्चैव समीरणमरिन्दमः ॥ २९ ॥

एकेनाग्निः क्षुरप्रेण गाढं वक्षसि ताडितः ।
तमसाधारणं मत्वा विदुद्राव रणाद् द्रुतम् ॥ ३० ॥

दृष्ट्वा समीरणो युद्धादपयातं हुताशनम् ।
सायकाचितसर्वाङ्गमात्मानं चातिविह्वलः ॥ ३१ ॥

विदित्वा पुण्डरीकाक्षं सङ्ग्रामे प्रत्युपस्थितम् ।
न्यवर्तत कुरुश्रेष्ठ प्राणत्राणपरायणः ॥ ३२ ॥

ततो महिषमारुह्य दण्डमुद्यम्य भास्वरम् ।
कृष्णमभ्यद्रवद् युद्धे यमः क्रोधारुणेक्षणः ॥ ३३ ॥

तमुद्यतमहादण्डं दृष्ट्वा कमललोचनः ।
गदां विसृज्य तद्धस्तात् पातयामास भूतले ॥ ३४ ॥

गदया ताडिते दण्डे त्रस्तहस्तः परेतराट् ।
विदुद्राव परावृत्य महिषेण कुरूद्वह ॥ ३५ ॥

वैवस्वतं गतं दृष्ट्वा निर्ऋतिर्भयविह्वलः ।
नाभ्यवर्तत गोविन्दं योद्धुं विदिततद्बलः ॥ ३६ ॥

शङ्करस्तु महातेजास्त्रिशूली वृषवाहनः ।
अनेकभूतसङ्घातैः कृष्णमभ्यद्रवद् रणे ॥ ३७ ॥

तावुभौ लोकविख्यातौ बलिनौ वीर्यशालिनौ ।
चक्राते कदनं घोरं परस्परजयैषिणौ ॥ ३८ ॥

ईशानो दशभिर्बाणैः कृष्णं तार्क्ष्यं च पञ्चभिः ।
विव्याध समरे राजन् तिष्ठतिष्ठेति चाब्रवीत् ॥ ३९ ॥

ततः शार्ङ्गं समादाय कृष्णः परपुरञ्जयः ।
त्रिंशद्भिर्युगपद् बाणैर्विव्याध वृषवाहनम् ॥ ४० ॥

गरुडः पन्नगरिपुः पद्भ्यां द्वाभ्यां च संयुगे ।
पक्षाभ्यां चञ्चुकोट्या च मर्दयामास तं वृषम् ॥ ४१ ॥

भूयोऽपि कृष्णो नाराचैः पञ्चाशत्प्रमितैर्नृप ।
योधयामास समरे शङ्करं लोकशङ्करम् ॥ ४२ ॥

ततः त्रिशूलमाविध्य निशितं घोरदर्शनम् ।
प्राहिणोद् वासुदेवाय कुपितो धूर्जटिर्नृप ॥ ४३ ॥

दृष्ट्वा त्रिशूलमायान्तं केशवस्तं निवारितुम् ।
गदां कौमोदकीं गुर्वीं प्राहिणोद् दैत्यमर्दनीम् ॥ ४४ ॥

ते वै कौमोदकीशूले कृत्वा नभसि सङ्गरम् ।
ज्वलमाने महाघोरे पेततुः सममम्बुधौ ॥ ४५ ॥

निपात्याब्धौ त्रिशूलं तद्गदाकौमोदकी पुनः ।
आससाद करं विष्णोस्त्रिशूलमपि शूलिनः ॥ ४६ ॥

तत उद्यम्य निशितं खड्गं पन्नगभूषणः ।
कृष्णमभ्यद्रवत् सङ्ख्ये पाण्भ्यिां चोदयन् वृषम् ॥ ४७ ॥

तूर्णं गृहीत्वा पाणिभ्यां विषाणे तस्य नन्दिनः ।
सशूलपाणिं चिक्षेप वैनतेयो धनुश्शतम् ॥ ४८ ॥

ततो विसृज्य सङ्ग्रामं त्रिशूली वृषवाहनः ।
प्रमथैः सहितः प्रायात् कुरुश्रेष्ठ यथागतम् ॥ ४९ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे षट्षष्टिरध्यायः ॥

# अथ सप्तषष्टिरध्यायः

श्रीशुक उवाच–
ततः स्वयं देवपतिस्तुङ्गमारुह्य वारणम् ।
किरीटी बद्धतूणीरः प्रगृहीतशरासनः ॥ १ ॥

अभ्यद्रवद् रणे कृष्णं गजः केसरिणं यथा ।
पारिजातकृते राजन् पौलोम्या वचनं स्मरन् ॥ २ ॥

तमायान्तमभिप्रेक्ष्य हरिः पुरुपुरञ्जयः ।
शङ्खं दध्मौ महानादं दिशः समभिपूरयन् ॥ ३ ॥

तमभिद्रुत्य देवेन्द्रो महद् विष्फारयन् धनुः ।
क्षुरप्रेण सुतीक्ष्णेन कृष्णं विव्याध सङ्गरे ॥ ४ ॥

हरिर्विद्धः क्षुरप्रेण देवराजेन वक्षसि ।
प्रहस्य साधु शक्रोऽसि युक्त त इति चाब्रवीत् ॥ ५ ॥

भूयोऽपि बाणान् दश देवराजः सन्धाय चापे भुजगेन्द्रकल्पे ।
आकर्णपूर्णं विनिकृष्य कृष्णे मुमोच चक्रेऽसहसिंहनादम् ॥

तानन्तरे कंसरिपुर्महात्मा छित्त्वा त्रिधैकेन शरेण बाणान् ।
विव्याध बाणैर्दशभिः सुधौतैः पुरन्दरं भारत लीलयैव ॥७॥

ते शरा देवराजस्य गात्रं निर्भिद्य सावृति ।
शोणिताक्ताः प्रदृश्यन्ते भूयो वेगेन निर्गताः ॥ ८ ॥

पुनश्च शक्रः कोदण्डे शरान् सन्धाय षोडश ।
मुमोचाकृष्य गोविन्दस्तांश्चकर्त शरैस्त्रिभिः ॥ ९ ॥

भूयोऽपि बाणैस्त्रिंशद्भिः सुरराजानमाहवे ।
अयोधयद्धरिस्ते च ममज्जुः शक्रवक्षसि ॥ १० ॥

ततश्चुकोप देवेन्द्रो दण्डाहत इवोरगः ।
प्रेषयामास तोत्रेण तार्क्ष्यं प्रति महागजम् ॥ ११ ॥

स राजः प्राप्य गरुडं पाकशासनचोदितः ।
चतुर्भिर्घट्टयामास दन्तैर्बाहुयुगान्तरे ॥ १२ ॥

ततस्तुण्डेन गरुडः पक्षाभ्यां च तथा नखैः ।
मर्दयामास कौरव्य गजमैरावताह्वयम् ॥ १३ ॥

शक्रस्तु वज्रमुद्यम्य घोरं दानवभीषणम् ।
पश्यतां सर्वभूतानां प्रजहार वृषाकपिम् ॥ १४ ॥

तमागतं मधुरिपुर्वज्रं दुश्च्यवनायुधम् ।
वामेन पाणिना विष्णुर्जग्राह प्रजहास च ॥ १५ ॥

निरायुधः सुरपतिर्गरुडार्दितवाहनः ।
व्यावर्तत रणाद् राजन् व्रीडावनतकन्धरः ॥ १६ ॥

तं दृष्ट्वा भ्रष्टसङ्कल्पं पलायनपरायणम् ।
सत्यभामा सुरपतिं प्रहसन्तीदमब्रवीत् ॥ १७ ॥

सत्यभामोवाच–
एहि शक्र निवर्तस्व मा याहि कुलिशायुध ।
पलायनमयुक्तं हि पौलोम्या वल्लभस्य ते ॥ १८ ॥

ऐश्वर्यमत्ता पौलोमी भर्तृपौरुषगर्विता ।
अवमंस्यति सद्यस्त्वां भार्या रणपराजितम् ॥ १९ ॥

श्रीशुक उवाच–
इत्थं देव्या गिरं शक्रः सोपालम्भमुदीरिताम् ।
निशम्याभिमुखो भूत्वा प्राह देवीं शुचिस्मिताम् ॥ २० ॥

इन्द्र उवाच–
येनामरासुरमहोरगयक्षसिद्ध-
गन्धर्वकिन्नरपिशाचनिशाचराद्याः ।
सृष्टाखिलोकगुरुणा रणमूर्ध्नि तेन
को वा न याति परिभूतिमलं विरुद्ध्य ॥ २१ ॥

वत्सो यथा तनुबलः सकृदेत्य मात-
र्यूधस्यपानसमये कुरुते विरोधम् ।
तद्वद् वयं च निजशैशवमप्रमेये
नाथे विरुद्ध्य पिशिताशनिदर्शयामः ॥ २२ ॥

इति सत्राजितः पुत्रीमुक्त्वा भारतसत्तम ।
कृताञ्जलिः प्रणम्याह वासुदेवं पुरन्दरः ॥ २३ ॥

इन्द्र उवाच–
नमस्ते देवदेवेश पुण्डरीकाक्ष माधव ।
क्षमस्व मत्कृतं विश्वनपराधं जगत्पते ॥ २४ ॥

न मां त्वदेकशरणं शरणागतवत्सलः ।
भूरिवालिशमक्षान्तं परित्यक्तुं त्वमर्हसि ॥ २५ ॥

ऐरावतश्च कुलिशं पारिजातश्च पादपः ।
देवराज्यं च भगवन्नियं चाप्यमरावती ॥ २६ ॥

त्वदधीनमिदं विश्वमहमाज्ञाकरस्तव ।
अत्र यद् रोचते नेतुं नीयतां तद् यथेच्छया ॥ २७ ॥

किन्तु वक्ष्यामि गोविन्द मूलं त्वयि विरुद्धतः ।
रमसे मानुषे लोके भगवंस्त्वमनन्यधीः ॥ २८ ॥

तत्र नीते पारिजाते भवता कल्पपादपे ।
तेन सा जायते स्वर्गान्निर्विशेषा वसुन्धरा ॥ २९ ॥

तेनाहं यदुशार्दूल विरोधं कृतवांस्त्वयि ।
तत् क्षन्तव्यं त्वया देव कार्याकार्यं विजानता ॥ ३० ॥

श्रीशुक उवाच–
इत्युक्तो देवराजेन देवदेवो जनार्दनः ।
पुरन्दरं कुरुश्रेष्ठ प्राह प्रहसिताननः ॥ ३१ ॥

श्रीभगवानुवाच–
अपराधस्त्वया शक्र न कश्चिदपि चेष्टितः ।
यत् कृतं तन्ममैवागस्त्वभेदादावयोः परम् ॥ ३२ ॥

यत् त्वयाऽद्य सहस्राक्ष चेष्टितं साध्वसाधु वा ।
मयैव तत् कृतं सर्वं नात्र कार्या विचारणा ॥ ३३ ॥

पारिजातस्तरुश्रेष्ठो मय्यारूढे तरुर्दिवम् ।
मन्निर्देशात् सहस्राक्ष स्वयमेष्यति नन्दनम् ॥ ३४ ॥

इत्युक्त्वा वासुदेवेन देवराजः कुरूद्वह ।
गोविन्दं सत्यभामां च प्रसाद्य गरुडं तथा ॥ ३५ ॥

पुत्रो मे रक्षितव्यस्ते स्यालो वीभत्सुरित्यपि ।
भूयोभूयः प्रार्थयित्वा कृतानुज्ञः पुरन्दरः ॥ ३६ ॥

सार्धं सकलदिक्पालैर्लब्धवज्रः पुरं ययौ ।
पुरन्दरं सदिक्पालं विसृज्य यदुनन्दनः ॥ ३७ ॥

गरुडं प्राह कौरव्य यास्यामो द्वारकामिति ।
गोविन्दं सत्यभामां च पारिजातं च पादपम् ॥ ३८ ॥

गरुडः पन्नगरिपुर्लीलयैव वहन् ययौ ।
सम्प्रविश्य पुरीं रम्यां द्वारतोरणभूषिताम् ॥ ३९ ॥

पताकामालिनीं दिव्यां सिक्तसंमृष्टभूतलाम् ।
ऊढोपायनताम्बूलस्रग्गन्धकलशाक्षतैः ॥ ४० ॥

उपस्थितैर्यदुश्रेष्ठैः पूजितश्चाभिवन्दितः ।
तूर्यमङ्गलनिर्घोषैर्वेदस्वाध्यायनिःस्वनैः ॥ ४१ ॥

प्रविवेश सभां दिव्यां सुधर्मां वृद्धसेविताम् ।
आहुकं वसुदेवं च बलभद्रं तथाऽग्रजम् ॥ ४२ ॥

अभिवाद्य यथान्यायं पूजितस्तैर्यथोचितम् ।
उपविष्टः सभामध्ये काञ्चने परमासने ॥ ४३ ॥

रराज राजशार्दूल बृहस्पतिपुरोगमैः ।
लोकपालैरुपासीनैर्दिवि वज्रधरो यथा ॥ ४४ ॥

प्राङ्गणे सत्यभामायाः पारिजातं महाद्रुमम् ।
स्थापयामास गोविन्दः सर्वतो मणिकुट्टिमे ॥ ४५ ॥

आयान्तं देवकीपुत्रं योषित्सार्थेन भूरिणा ।
श्रुत्वा द्रष्टुमुपाजग्मुः सकला यादवस्त्रियः ॥ ४६ ॥

वसुदेवस्तु कौरव्य रोहिण्याद्याः स्त्रियोऽखिलाः ।
आजग्मुः केशवं द्रष्टुं जितशत्रुमनामयम् ॥ ४७ ॥

स दृष्ट्वा मातरो विष्णुर्देवक्या सह सङ्गताः ।
चक्रे प्रणाममाशीर्भिस्ताश्च तं प्रत्यपूजयन् ॥ ४८ ॥

रुग्मिण्याद्यास्तथा सप्त महिष्यः कृष्णवल्लभाः ।
प्रणेमुर्देवमभ्येत्य दिव्यरूपाः स्वलङ्कृताः ॥ ४९ ॥

रेवती रामदयिता त्रिवक्रा च यशस्विनी ।
एकाङ्गना च तन्वङ्गी चित्रा च वरवर्णिनी ॥ ५० ॥

अन्याश्च कुरुशार्दूल भोजवृष्ण्यन्धकस्त्रियः ।
आनीतप्रमदासार्थं जिशत्रुमनामयम् ॥ ५१ ॥

गोविन्दं सत्यभामां चाप्यानीतममरद्रुमम् ।
प्रीत्युत्फुल्लमुखाः सर्वे कौतुकाद् द्रुममाययुः ॥ ५२ ॥

ताः समेता यथाजोषं लाजप्रसवतण्डुलैः ।
स्पृष्ट्वा मूर्ध्नि मुकुन्दस्य जग्मुः स्वं स्वं निवेशनम् ॥ ५३॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे सप्तषष्टिरध्यायः ॥

# अथ अष्टषष्टिरध्यायः

श्री शुक उवाच–
आराध्य देवदेवेशं शङ्करं लोकशङ्करम् ।
तपसा तोषयित्वा तं कैलासगिरिवासिनम् ॥ १ ॥

रुग्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः ।
वीरं प्रद्युम्ननामानं रूपौदार्यगुणान्वितम् ॥ २ ॥

पुत्रार्थमीश्वरं दृष्ट्वा स्वयं लब्धवरो हरिः ।
अवापकीदृशं पुत्रं किं नामानं वदस्वमे ॥ ३ ॥

कामस्तु वासुदेवांशो दग्धः प्राग् रुद्रमन्युना ।
देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ ४ ॥

स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः ।
प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ ४ ॥

तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम् ।
स विदित्वाऽऽत्मनः शत्रुं पास्योदन्वत्यगाद् गृहम् ॥ ५ ॥

तं निर्जगार बलवान् मीनः सोऽप्यपरैः सह ।
वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥ ६ ॥

तं शम्बराय कैवर्ता उपाजहुरुपायनम् ।
सूदा महानसं नीत्वाऽवद्यन् स्वधितिनाऽद्भुतम् ॥ ७ ॥

दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयत् ।
नारदोऽकथयत् सर्वं तस्याः शङ्कितचेतसः ॥ ८ ॥

बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ।
सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ॥ ९ ॥

पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ १० ॥

निरूपिता शम्बरेण सा सूपौदनसाधने ।
कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं सदाऽर्भके ॥ ११ ॥

नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ।
जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥ १२ ॥

सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम् ।
सव्रीडहासोत्तमविभ्रमेक्षितैः प्रीत्योपतस्थे रतिरात्मनो धनैः ॥

तामाह भगवान् कार्ष्णिर्मातस्ते मतिरन्यथा ।
मातृभावमतिक्रम्य वर्तसे कामिनीव मे ॥ १४ ॥

रतिरुवाच–
भवान् नारायणसुतः शम्बरेणाहृतो गृहात् ।
अहं तेऽधिकृता पत्नी रतिः कामो भवान् प्रभो ॥ १५ ॥

एष त्वां निर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः ।
मत्स्योऽग्रसीत् तदुदरादिह प्राप्तो भवान् प्रभो ॥ १६ ॥

तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः ।
मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥ १७ ॥

परिशोचति ते माता कुररीव गतप्रजा ।
पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥ १८ ॥

प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने ।
मायावती महामाया सर्वमायाविनाशिनीम् ॥ १९ ॥

स च शम्बरमभ्येत्य संयुगाय समाह्वयत् ।
अविषह्यैस्तमाक्षेपैः क्षिपन् सञ्जनयन् कलिम् ॥ २० ॥

सोऽधिक्षिप्तो दुर्वचोभिः पदाहत इवोरगः ।
निश्चक्राम गदापाणिरमर्षात् ताम्रलोचनः ॥ २१ ॥

गदामाविध्य तरसा प्रद्युम्नाय महात्मने ।
प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥ २२ ॥

तामापतन्तीं भगवान् प्रद्युम्नो गदया गदाम् ।
अपास्य शत्रवे क्रुद्धः प्राहिणोत् स्वगदां नदन् ॥ २३ ॥

स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् ।
निर्ममेऽश्ममयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २४ ॥

बाध्यमानोऽस्त्रवर्षेण रौग्मिणेयो महारथः ।
सत्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥ २५ ॥

ततो गौह्यकगान्धर्वपैशाचोरगराक्षसीः ।
प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत् स ताः ॥ २६ ॥

निशातमसिमुद्यम्य सकीरीटं सकुण्डलम् ।
शम्बरस्य शिरः कायात् ताम्रश्मश्रोजसाऽहरत् ॥ २७ ॥

आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः ।
भार्ययाऽम्बरचारिण्या पुरं नीतो विहायसा ॥ २८ ॥

अन्तःपुरवरं राजन् ललनाशतसङ्कुलम् ।
विवेश पत्न्या गगनाद् विद्युतेव बलाहकः ॥ २९ ॥

तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् ।
प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ ३० ॥

अलङ्कृतमुखाम्भोजं नीलवक्रालकालिभिः ।
कृष्णं मत्वा स्त्रियो भीता निलिल्युस्तत्र तत्र ह ॥ ३१ ॥

उपधार्य शनैरीषद्वैलक्षण्येन योषितः ।
उपजग्मुः प्रमुदिताः सस्त्रीरत्नं शुचिस्मिताः ॥ ३२ ॥

अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी ।
अस्मरत् स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३३ ॥

कोन्वयं नरवैदूर्यः कस्य वा कमलेक्षणः ।
धृतः कया वा जठरे केयं लब्धाऽथ केन वा ॥ ३४ ॥

मम चाप्यात्मजो नष्टो नीतो वा सूतिकागृहात् ।
एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥ ३५ ॥

कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः ।
आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥ ३६ ॥

स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः ।
अमुष्मिन् प्रीतिरधिका वामः स्फुरति मे भुजः ॥ ३७ ॥

एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः ।
देवकीवसुदेवाभ्यां नारदेन महात्मना ॥ ३८ ॥

अन्यैश्च यादवश्रेष्ठैरुत्तमश्लोक आविशत् ।
विदितार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ॥ ३९ ॥

नारदोऽकथयत् सर्वं शम्बराहरणादिकम् ।
तच्छुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ॥ ४० ॥

देवकीवासुदेवौ च कृष्णरामौ तथा स्त्रियः ।
दम्पती तौ परिष्वज्य रुग्मिणी च ययुर्मुदम् ॥ ४१ ॥

नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ।
अहो मृत इवायातो बालो दिष्ट्येति चाब्रुवन् ॥ ४२ ॥

यं वै मुहुः पितृसरूपनिजेशभावा
तन्मातरो मनसिजार्द्दहृदोरुभावाः ।
चित्रं न तत् खलु रमास्पदबिम्बभूते
कामे स्मरेतेऽक्षविषये किमुतान्यनार्यः ॥ ४३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे अष्टषष्टिरध्यायः ॥

## अथ एकोनसप्ततितमोऽध्यायः

श्रीशुक उवाच–
पौण्ड्रको नाम राजा वै तस्मिन् काले कुरूद्वह ।
द्वारकां वृष्णिनिलयां निरुध्य बहुसैनिकः ॥ १ ॥

मर्दयामास कृष्णेन विदित्वा रहितां निशि ।
तं कामपालः शैनेयो वसुदेवोद्धवादयः ॥ २ ॥

उग्रसेनश्च कौरव्य ये चान्ये यदुपुङ्गवाः ।
तर्पयामासुरायान्तं काल्योग्यमिवातिथिम् ॥ ३ ॥

राजोवाच–
कश्चासौ पौण्ड्रको नाम कस्मिन् देशे महीमतिः ।
कस्य वा तनयो ब्रह्मन् सर्वमेतद् वदस्व मे ॥ ४ ॥

श्रीशुक उवाच–
अपुत्रः काशिराजो वै कन्यां सुतनुसञ्ज्ञिताम् ।
प्रायच्छद् वसुदेवाय राज्यशुल्कां कुरूद्वह ॥ ५ ॥

तत्र जज्ञे महाबाहुर्दिवाकरसमद्युतिः ।
कुमारः पौण्ड्रको नाम बलवीर्यमदान्वितः ॥ ६ ॥

वसुदेवसुतत्वाच वासुदेवेति शब्दितः ।
जाते तस्मिन् महाराजो वसुदेवो महाद्युतिः ॥ ७ ॥

राज्यं तस्मिन् समारोप्य सकोशबलवाहनम् ।
उवाह कंसावरजां देवकीं देवतोपमाम् ॥ ८ ॥

निरुद्धो भोजराजेन कंसेनानकदुन्दुभिः ।
कदाचिदपि न प्रायात् करवीरपुरीमपि ॥ ९ ॥

असह्यं मातृसापत्न्यमभ्रातृत्वं तथाऽऽत्मनः ।
स्मरमाणः स काशीशो यदूनुद्विजतेऽनिशम् ॥ १० ॥

स कृष्णरहितां श्रुत्वा समेत्य द्वारकां निशि ।
विमृद्य बलभद्रेण शैनेयेनापि निर्जितः ॥ ११ ॥

निहतानेकसाहस्रहयकुञ्जरसैनिकः ।
जगाम परशर्वर्यां पुरीं वाराणसीं नृप ॥ १२ ॥

प्रभातायां तु शर्वर्यां हरिर्बदरिकाश्रमात् ।
आययौ तार्क्ष्यमारुह्य द्वारकां रामपालिताम् ॥ १३ ॥

सपताकैः सार्ध्यपाद्यैर्यदुवृष्ण्यन्धकादिभिः ।
अभिवर्णितवृत्तान्तः प्राविशत् केशवः सभाम् ॥ १४ ॥

कदाचित् पौण्ड्रको नाम काशिराजः प्रतापवान् ।
वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ १५ ॥

त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ।
इति प्रस्तोभितो बालैर्मेने स्वात्मानमच्युतम् ॥ १६ ॥

दूतस्तु द्वारकामेत्य सभायामास्थितं हरिम् ।
कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत् ॥ १७ ॥

वासुदेवोऽवतीर्णोऽहमेक एव न चापरः ।
भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज ॥ १८ ॥

यानि त्वमस्मच्चिह्नानि मौढ्याद् बिभर्ष्यभीतवत् ।
त्यक्त्वैहि मा त्वं शरणं नो चेद् देहि ममाहवम् ॥ १९ ॥

कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः ।
उग्रसेनादयः सभ्याः उच्चकैर्जहसुस्तदा ॥ २० ॥

उवाच दूतं भगवान् परिहासकथामनु ।
उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ २१ ॥

मुखं तव विधायाङ्ग कङ्कगृध्रवलैर्वृतम् ।
शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥ २२ ॥

इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरन् ।
कृष्णोऽपि रथमारुह्य प्रायात् काशीं ससैनिकः ॥ २३ ॥

पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः ।
अक्षौहिणीभिः सहितो निश्चक्राम पुराद् द्रुतम् ॥ २४ ॥

तमायान्तं रथोपस्थे सुवर्णगरुडे स्थितम् ।
सुवर्णबाहुयुगलमपश्यत् पौण्ड्रकं हरिः ॥ २५ ॥

शङ्खार्यसिगदाशार्ङ्गं श्रीवत्साद्युपलक्षितम् ।
बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ २६ ॥

कौशेयवाससी पीते वसानं गरुडध्वजम् ।
आमुक्तमाल्याभरणं स्फुरन्मकरकुण्डलम् ॥ २७ ॥

दृष्ट्वा तमात्मनाऽऽसाम्यं कृत्रिमाकारमास्थितम् ।
यथा नटं रङ्गगतं विजहास भृशं हरिः ॥ २८ ॥

क्षणेन तं काशिपतेः सैनिका दृढधन्विनः ।
शरैराच्छादयामासुर्मेघाः शैलमिवाम्भसा ॥ २९ ॥

केचिद् राजन् रथानश्वानास्थाय रणमूर्धनि ।
शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ।
असिभिः पट्टिसैर्बाणैः प्रहरन्तरयो हरिम् ॥ ३० ॥

तस्य काशिपतेर्मित्रं पार्ष्णिग्राहोऽपरो नृपः ।
अक्षौहिणीभिस्तिसृभिरुपायान्नृप सङ्गरम् ॥ ३१ ॥

कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं
गजस्यन्दनवाजिपत्तिमत् ।
गदासिचक्रेषुभिरार्दयद् भृशं यथा
युगान्ते हुतभुक् प्रभाज्वलन् ॥ ३२ ॥

आयोधनं तद् रथवाजिकुञ्जर-
द्विपत्खरोष्ट्रैररिणाऽवखण्डितैः ।
बभौ च तन्मानवहं मनस्विनां
आक्रीडनं भूतपतेरिवोल्बणम् ॥ ३३ ॥

अथाह पौण्ड्रकं शौरिर्भो भो पौण्ड्रक यद् भवान् ।
दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥ ३४ ॥

त्याजयिष्येऽभिधानं मे यत् त्वयाऽद्य मृषा कृतम् ।
व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥ ३५ ॥

इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम् ।
शिरोऽहरद् रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ ३६ ॥

तथा काशिपतेः कायाच्छिर उत्कृत्य पत्त्रिभिः ।
न्यपातयत् काशिपुर्यां पद्मकोशमिवानिलः ॥ ३७ ॥

एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः ।
द्वारकामाविशत् सिद्धैर्गीयमानकथामृतः ॥ ३८ ॥

शिरः पतितमालोक्य राजद्वारि सकुण्डलम् ।
किमिदं कस्य वा वक्त्रमिति संशयिरे जनाः ॥ ३९ ॥

राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः ।
पौराः शोकहता राजन् नाथनाथेत्युपाद्रवन् ॥ ४० ॥

सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः ।
निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ ४१ ॥

इत्यात्मनाऽभिसन्धाय सोपाध्यायो महेश्वरम् ।
सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ ४२ ॥

प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद् भवः ।
पितृहन्तुर्वधोपायं स वव्रे वरमीप्सितम् ॥ ४३ ॥

दक्षिणाग्निं परिचर ब्राह्मणैः सह ऋत्विजः ।
अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ४४ ॥

साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः ।
इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन् नृप ॥ ४५ ॥

ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः ।
तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ४६ ॥

दंष्ट्रोग्रभ्रुकुटीदन्तकठोरास्यः स्वजिह्वया ।
आलिहन् सृक्किणी रक्ते विधुन्वन् त्रिशिखं ज्वलत् ॥ ४७ ॥

पद्भ्यां तालप्रमाणाभ्यां कम्पयन् धरणीतलम् ।
सोऽभ्यधावद् वृतो भूतैर्द्वारकां प्रदहन् दिशः ॥ ४८ ॥

तमाभिचारदहनमायान्तं द्वारकौकसः ।
विलोक्य तत्रसुः सर्वे वनदाहे यथा मृगाः ॥ ४९ ॥

अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः ।
त्राहि त्राहीति लोकेशं वह्नेः प्रदहतः पुरम् ॥ ५० ॥

श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च सङ्कटम् ।
शरण्येशः प्रहस्याह मा भैष्टेत्यवितास्म्यहम् ॥ ५१ ॥

सर्वस्यान्तर्बहिः साक्षी कृत्यां माहेश्वरीं विभुः ।
विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ५२ ॥

तत् सूर्यकोटिप्रतिमं सुदर्शनं
जाज्वल्यमानं प्रभयानलप्रभम् ।
स्वतेजसा खं ककुभोऽथ रोदसी चक्रं
मुकुन्दस्य झटित्यपूरयत् ॥ ५३ ॥

कृत्यानलः प्रतिहतः स रथाङ्गपाणेः
स्त्रौजसा नृप विभग्नमुखो निवृत्तः ।
वाराणसीं प्रतिसमेत्य सुदक्षिणं तं
सत्त्विर्जितं समदहत् स्वकृतोभिचारः ॥ ५४ ॥

चक्रं च विष्णोस्तदनु प्रविष्टं
वाराणसीं साट्टसभालयापणाम् ।
सगोपुराट्टालककोष्ठतोरणां
सकोशहस्त्यश्वरथान्नशालिनीम् ॥ ५५ ॥

दग्ध्वा वाराणसीं सर्वां विष्णुचक्रं सुदर्शनम् ।
भूयः पार्श्वमुपातिष्ठत् कृष्णस्याक्लिष्टकर्मणः ॥ ५६ ॥

य एतत् श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् ।
समाहितो वा शृणुयात् सर्वपापैः प्रमुच्यते ॥ ५७ ॥

तावुभौ सर्वपापेभ्यो ब्रह्महत्यादिभिर्नृप ।
विमुच्य देहावसाने विष्णुलोकं प्रयास्यतः ॥ ५८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे
एकोनसप्ततितमोऽध्यायः ॥

## अथ सप्ततितमोऽध्यायः

श्रीशुक उवाच–
अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ।
सूर्योपरागः सुमहानासीत् कल्पक्षये यथा ॥ १ ॥

तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वशः ।
स्यमन्तपञ्चकं क्षेत्रं जग्मुः श्रेयोविधित्सया ॥ २ ॥

निःक्षत्रियां महीं कुर्वन् रामः शस्त्रभृतां वरः ।
नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥

ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा ।
लोकस्य सङ्ग्रहायेशो यथान्योऽघापनुत्तये ॥ ४ ॥

महत्यां तीर्थयात्रायां तत्रागुर्भारतीः प्रजाः ।
कृष्णः षोडशसाहस्रमहिषीशिबिकान्वितः ॥ ५ ॥

पुत्रपौत्रजनानीकैर्वारकान्ताकरेणुभिः ।
नगरस्त्रीकदम्बैश्च प्रियसार्थैश्च संयुतः ॥ ६ ॥

वृष्णयश्च तथाऽक्रूरवसुदेवगदादयः ।
ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ ७ ॥

शठप्रद्युम्नसाम्बाश्च सुचन्द्रोद्धवसारणाः ।
आहुकं कृतवर्माणं संस्थाप्य पुररक्षणे ॥ ८ ॥

ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्रभैः ।
गजैर्बृहद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ ९ ॥

व्यरोचन्त महाभागाः पथि काञ्चनमालिनः ।
वेदवादित्रनिर्घोषैः शङ्खदुन्दुभिनिस्वनैः ॥ १० ॥

गायन्तः कृष्ण कृष्णेति गोविन्देति च सन्ततम् ।
ककुभः पूरयन् नादैर्जग्मुः सर्वे कुरूद्वह ॥ ११ ॥

समन्तपञ्चकं प्राप्य क्षेत्रं त्रैलोक्यविश्रुतम् ।
तृणैः पर्णैस्तथा काष्ठैश्चक्रिरे भवनानि च ॥ १२ ॥

कम्बलाजिनवस्त्राणां शिबिराणि महीभृताम् ।
आसन् विचित्ररूपाणि शतशोऽथ सहस्रशः ॥ १३ ॥

तत्राजग्मुर्नृपानेके ब्राह्मणाश्च सहस्रशः ।
वैश्याः शूद्राश्च निःसङ्ख्या ये चान्ये वर्णनिन्दिताः ॥ १४ ॥

ऋषयश्च महात्मानो विख्याताः संशितव्रताः ।
सोपाध्यायाः साग्निहोत्राः स्नातका गृहमेधिनः ॥ १५ ॥

अन्धाश्च बधिराश्चैव कुब्जवामनपण्डकाः ।
व्यङ्गा जडाश्च मूकाश्च कर्मक्षयमभीप्सवः ॥ १६ ॥

गोविन्दचरणाम्भोजरेणुरञ्जितमस्तकाः ।
कटकाङ्गदकेयूरहारकुण्डलभूषणाः ॥ १७ ॥

स्रग्गन्धदिव्यवसनाः कलत्रैः खेचरा इव ।
तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ १८ ॥

ब्राह्मणेभ्यो ददुर्धेनूर्वासः स्रग्रुक्ममालिनीः ।
रामह्रदेषु विधिवत् पुनराप्लुत्य वृष्णयः ॥ १९ ॥

ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ।
स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ २० ॥

भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ।
तत्रागतांस्ते ददृशुः सुहृत्सम्बन्धिनो नृपान् ॥ २१ ॥

मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् ।
काम्बोजकेकयान् मद्रान् कुन्तिगान्धारकेरलान् ॥ २२ ॥

अन्यांश्चैवात्मपक्षीयान् परांश्च शतशो नृपान् ।
नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ॥ २३ ॥

अन्योन्यसन्दर्शनहर्षरंहसा
प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ।
आश्लिष्य गाढं नयनैः स्रवज्जला
हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ २४ ॥

स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदाः
सचापलापाङ्गदृशोऽभिरेभिरे ।
स्तनैः स्तनान् कुङ्कुमपङ्करूषितान्
निहत्य दोर्भ्यां प्रणयाश्रुलोचनाः ॥ २५ ॥

ततोऽभिवाद्य ते वृद्धान् यवीयोभिरभिवादिताः ।
स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथां मिथः ॥ २६ ॥

पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्रान् पितरावपि ।
भ्रातृपत्नीर्मुकुन्दं च जहौ सङ्कथया शुचः ॥ २७ ॥

कुन्त्युवाच–
आर्यभ्रातरहं मन्ये आत्मानमकृताशिषम् ।
यत आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ २८ ॥

सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ।
नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥ २९ ॥

वसुदेव उवाच–
अम्ब मास्मानसूयेथा दैवक्रीडनकान् नरान् ।
ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥ ३० ॥

कंसप्रतापिताः सर्वे वयं याता दिशो दश ।
एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ ३१ ॥

श्रीशुक उवाच–
वसुदेवोग्रसेनाद्यैर्यदुभिः सेविता नृपाः ।
आसन्नच्युतसन्दर्शपरमानन्दनिर्वृताः ॥ ३२ ॥

तत्र षोडशभिः सद्मसहस्रैः समलङ्कृतम् ।
विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ११ ॥

विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः ।
इन्द्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा ॥ १२ ॥

वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः ।
दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १३ ॥

दासीभिर्निष्ककण्ठीभिः सुवासोभिरलङ्कृतम् ।
पुम्भिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥ १४ ॥

रत्नप्रदीपनिकरद्युतिभिर्निरस्त-
ध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग ।
नृत्यन्ति यत्र विहितागरुधूपमक्षै-
र्निर्यान्तमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १५ ॥

तस्मिन् समानगुणरूपवयःसुवेष-
दासीसहस्रयुतयाऽनुसवं गृहिण्या ।
विप्रो ददर्श चमरव्यजनेन रुक्म-
दण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १६ ॥

तं सन्निरीक्ष्य भगवान् सहसोत्थितः श्री-
पर्यङ्कतः सकलधर्मभृतां वरिष्ठः ।
आनम्य पादयुगलं शिरसा किरीट-
जुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १७ ॥

तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना
बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ।
ब्रह्मण्यदेव इति यद् गुणनाम युक्तं
तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १८ ॥

सम्पूज्य देवऋषिमादिऋषिः पुराणो
नारायणो नरसखो विधिनोदितेन ।
वाण्याऽभिभाष्य मितयाऽमृतकल्पया च
प्राह प्रभो भगवतः करवाम किं ते ॥ १९ ॥

नारद उवाच—
नैवाद्भुतं त्वयि विभोऽखिललोकनाथे
मैत्री जनेषु दधतश्च दमं खलानाम् ।
निःश्रेयसाय जगतः स्थितिरक्षणाभ्यां
स्वैरावतार उरुगाय विदाम सुष्ठु ॥ २० ॥

दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं
ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं
ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ २१ ॥

ततोऽन्यदाविशद् गेहं कृष्णपत्न्याः स्म नारदः ।
योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ २२ ॥

दीव्यन्तमक्षैस्तत्र प्रियया चोद्धवेन च ।
पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २३ ॥

पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ।
क्रियते किन्नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २४ ॥

अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ।
स तु विस्मित उत्थाय तूर्णी(ष्णी)मन्यदगाद् गृहम् ॥ २५ ॥

तत्राप्यचष्ट गोविन्दं लालयन्तं शिशून् सुतान् ।
ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥ २६ ॥

जुह्वन्तं च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः ।
भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम् ॥ २७ ॥

क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम् ।
एकत्र चासिचर्मभ्यां चरन्तं शिष्यवर्त्मसु ॥ २८ ॥

अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम् ।
कचिच्छयानं पर्यङ्के स्तूयमानं च बन्दिभिः ॥ २९ ॥

मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः ।
जलक्रीडारतं क्वापि वारमुख्याबलावृतम् ॥ ३० ॥

कुत्रचिद् द्विजमुख्येभ्यो ददतं गाः स्वलङ्कृताः ।
इतिहासपुराणानि शृण्वन्तं मङ्गलानि च ॥ ३१ ॥

हसन्तं हास्यकथया कदाचित् प्रियया गृहे ।
क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥ ३२ ॥

ध्यायन्तमेकमात्मानं पुरुषं प्रकृतेः परम् ।
शुश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया ॥ ३३ ॥

कुर्वन्तं विग्रहं कैश्चित् सन्धिं चान्यत्र केशवम् ।
कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् ॥ ३४ ॥

पुत्राणां दुहितॄणां च काले विध्युपनायनम् ।
दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३५ ॥

प्रस्थापनोपनयनैरपत्यानां महोत्सवान् ।
वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३६ ॥

यजन्तं सकलान् देवान् क्वचित् क्रतुभिरूर्जितैः ।
पूर्तयन्तं क्वचिद् धर्मं कूपारामालयादिभिः ॥ ३७ ॥

चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् ।
घ्नन्तं तीर्थे पशून् मेध्यान् परीतं यदुपुङ्गवैः ॥ ३८ ॥

अव्यक्तलिङ्गप्रकृतिमन्तःपुरचरादिषु ।
क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया ॥ ३९ ॥

अथोवाच हृषीकेशं नारदः प्रहसन्निव ।
योगमायाबलं वीक्ष्य मानुषीमीयुषो रतिम् ॥ ४० ॥

नारद उवाच—
विदाम योगमायास्ते दुर्दर्शामपि योगिनाम् ।
योगेश्वरात्मन् निर्भातभवत्पादनिषेवया ॥ ४१ ॥

अनुजानीहि मां देव लोकांस्ते यशसा प्लुतान् ।
पर्यटामि तवोद्गायन् लीलां भुवनपावनीम् ॥ ४२ ॥

श्रीभगवानुवाच—
ब्रह्मन् धर्मस्य वक्ताहं कर्तारमनुमोदकः ।
शिक्षयंस्तं लोकमिममास्थितः पुत्र मा खिदः ॥ ४३ ॥

श्रीशुक उवाच—
इत्याचरन्तं सद्धर्मान् प्राक् सुष्ठान् गृहमेधिनाम् ।
तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥ ४४ ॥

कृष्णस्याचिन्त्यवीर्यस्य योगमायामहोदयम् ।
मुहुर्दृष्ट्वा ऋषिरभूद् विस्मितो जातकौतुकः ॥ ४५ ॥

इत्यर्थधर्मकामेषु कृष्णेनावहितात्मना ।
सम्यक् सभाजितः प्रीतस्तमेवानुस्मरन् ययौ ॥ ४६ ॥

एवं मनुष्यपदवीमनुवर्तमानो
नारायणोऽखिलभवाय गृहीतशक्तिः ।
रेमे च षोडशसहस्रवराङ्गनानां
सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४७ ॥

यानीह विश्वविलयोद्भववृत्तिहेतुः
कर्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा
भक्तिर्भवेद् भगवति ह्यपवर्गमार्गे ॥ ४८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनाशीतितमोऽध्यायः ॥

# अथ अशीतितमोऽध्यायः

श्रीशुक उवाच—
अथोषस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन् ।
गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥ १ ॥

वयांस्यरूरुवन् कृष्णं बोधयन्तीव वन्दिनः ।
गायत्स्वलिष्वदभ्रेषु मन्दारवनवायुभिः ॥ २ ॥

मुहूर्तं तं तु वैदर्भी नामृष्यदपि शोभनम् ।
परिरम्भणविश्लेषात् प्रियबाह्वन्तरं गता ॥ ३ ॥

ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ।
दध्यौ प्रसन्नकरणः स्वात्मानं तमसः परम् ॥ ४ ॥

एकं परं ज्योतिरनन्यमव्ययं
स्वसंस्थया नित्यनिरस्तकल्मषम् ।
ब्रह्माख्यमस्योद्भवनाशहेतुभिः
स्वलक्षणैर्लक्षितभावनिर्वृतिम् ॥ ५ ॥

अथाप्लुतोऽम्भस्यमले यथाविधि
क्रियाकलापं परिधाय वाससी ।
चकार सन्ध्योपगमादि सत्तमो
हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६ ॥

उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः ।
देवान् ऋषीन् पितॄन् वृद्धान् विप्रानभ्यर्च्य चात्मवान् ॥ ७ ॥

धेनूनां रुक्मशृङ्गीणां साध्वीनां मौक्तिकस्रजाम् ।
पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥ ८ ॥

ददौ रौप्यखुराग्राणां क्षौमाजिनतिलैः सह ।
अलङ्कृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिनेदिने ॥ ९ ॥

गोविप्रदेवतावृद्धान् गुरून्भूतानि सर्वशः ।
नमस्कृत्याऽऽत्मसम्भूतिं मङ्गलानि समस्पृशत् ॥ १० ॥

आत्मानं भूषयामास नरलोकविभूषणम् ।
वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥ ११ ॥

अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः ।
कामिनां सर्ववर्णानां पौरान्तःपुरचारिणाम् ।
प्रादात् कामान् पृथक् कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥

संविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः ।
सुहृदः प्रकृतीर्दारान् प्रायुङ्क्त च ततः स्वयम् ॥ १३ ॥

तावत् सूत उपानीय स्यन्दनं परमाद्भुतम् ।
सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥

गृहीत्वा पाणिना पाणिं सारथे रथमारुहत् ।
सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥

ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः ।
कृच्छ्राद् विसृष्टो निरगाज्जातहासो हरन् मनः ॥ १६ ॥

सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ।
प्राविशद् यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ॥ १७ ॥

तत्रोपविष्टः परमासने विभु-
र्बभौ स्वभासा ककुभोऽवभासयन् ।
वृतो नृसिंहैर्यदुभिर्यदूत्तमो
यथोडुराजो दिवि तारकागणैः ॥ १८ ॥

तत्राथ मन्त्रिणो राजन् नानाहास्यरसैर्विभुम् ।
उपतस्थुर्नटाचार्या नर्तक्यस्ताण्डवैः समम् ॥ १९ ॥

मृदङ्गवीणामुरजवेणुतालतल(दर)स्वनैः ।
ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवन्दिनः ॥ २० ॥

तत्रस्था ब्राह्मणाः केचिदासीना ब्रह्मवादिनः ।
पूर्वेषां पुण्ययशसां राज्ञां चाकथयन् कथाः ॥ २१ ॥

तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः ।
विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥

स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः ।
राज्ञामावेदयद् दुःखं जरासन्धोपरोधजम् ॥ २३ ॥

ये तु दिग्विजये तस्य सन्नतिं नाययुर्नृपाः ।
प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥

राजान ऊचुः—
कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन ।
वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥ २५ ॥

लोको विकर्मनिरतः कुशले प्रमत्तः
कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।
यस्तावदस्य बलवानिह जीविताशां
सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २६ ॥

कालो भवान् जगदिदं कलयाऽवतीर्णः
सद्रक्षणाय खलनिग्रहणाय चान्यत् ।
कश्चित् त्वदीयमतियाति निदेशमीश
किं वा जनः सुकृतमृच्छति तन्न विद्मः ॥ २७ ॥

स्वप्नायितं नृपसुखं परतन्त्रमीश
शश्वद्भयेन मृतकेन धुरं वहामः ।
हित्वा यदात्मनि सुखं तदनीहलभ्यं
क्लिश्यामहेऽतिकृपणास्तव माययेति ॥ २८ ॥

तन्नो भवान् प्रणतशोकहराङ्घ्रियुग्मो
रुद्धान् वियुङ्क्ष्व मगधाधिपकर्मपाशात् ।
यो भूभुजोऽयुतमतङ्गजवीर्यमेको
बिभ्रद् रुरोध भवने मृगराडिवावीः ॥ २९ ॥

यो वै त्वया द्विनवकृत्व उदात्तचक्रो
भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ।
जित्वा नृलोकनिरतं स तु रूढदर्पो
युष्मत्प्रजाः क्षिपति चाशु च तद्विधेहि ॥ ३० ॥

इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः ।
प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥

श्रीशुक उवाच—
राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ।
बिभ्रत् पिङ्गजटाभारं प्रादुरासीद् यथा रविः ॥ ३२ ॥

गायन् गिरा मधुरया प्रियकर्माणि जन्म च ।
द्रावयन्नघसङ्घांश्च लोकान्निरमयन् भृशम् ॥ ३३ ॥

तं दृष्ट्वा भगवान् कृष्णः सर्वलोकेश्वरेश्वरः ।
ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥ ३४ ॥

सभाजयित्वा विधिवत् कृतासनपरिग्रहम् ।
बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन् मुनिम् ॥ ३५ ॥

अपिस्विद्य लोकानां त्रयाणामकुतोभयम् ।
ननु भूयान् भगवतो लोकान् पर्यटतो गुणः ॥ ३६ ॥

न हि तेऽविदितं किञ्चित् लोकेष्वीश्वरकर्तृषु ।
अथ पृच्छामहे युष्मान् पाण्डवानां चिकीर्षितम् ॥ ३७ ॥

नारद उवाच—
दृष्टा मया ते बहुशो दुरत्यया
माया विभो विश्वसृजश्च मायिनः ।
भूतेषु भूमन् चरतः स्वशक्तिभि-
र्वह्नेरिव च्छन्नरुचो रुचोऽद्भुताः ॥ ३८ ॥

तवेहितं कोऽर्हति साधु वेदितुं
स्वमाययेदं सृजतो नियच्छतः ।
योऽविद्ययाऽनात्मतयाऽवसीयते
तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३९ ॥

जीवस्य यत् संसरतो विमोक्षणं
न जायतेऽनर्थवहाच्छरीरतः ।

लीलावतारैः स्वयशःप्रदीपकं
प्रज्वालयेस्त्वं तमहं प्रपद्ये ॥ ४० ॥

अथाप्याश्रावये ब्रह्मन् नरदेवविडम्बितम् ।
राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ॥ ४१ ॥

यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः ।
नृपतिः पारमेष्ठ्येन तद् भवाननुमोदताम् ॥ ४२ ॥

तस्मिन् देव क्रतुवरे भवन्तं वै सुरादयः ।
दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ॥ ४३ ॥

श्रवणात् कीर्तनाद् ध्यानात् पूयन्तेऽन्त्यावसायिनः ।
तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ॥ ४४ ॥

यस्यामलं दिवि यशः प्रथितं रसायां
भूमौ च ते भुवनमङ्गल दिग्वितानम् ।
मन्दाकिनी च दिवि भोगवतीति चाधो-
गङ्गेति चेह चरणाम्बु पुनाति विश्वम् ॥ ४५ ॥

यस्यामलं दिवि यशः प्रथितं रसायां
भूमौ च तेऽमलयशोऽथ दिशां वितानम् ।
मन्दाकिनी च तव पादरजोवहोर्मिः
श्रीमत्पदास्पदगताऽथ पुनाति विश्वम् ॥ ४५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अशीतितमोऽध्यायः ॥

# अथ एकाशीतितमोऽध्यायः

श्रीशुक उवाच—
इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ।
सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥

उद्धव उवाच—
यदुक्तं ऋषिणा देव साचिव्यं यक्ष्यतस्त्वया ।
कार्यं पितृष्वसेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥

यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ।
अतो जरासुतवध उभयार्थो मतो हि मे ॥ ३ ॥

अस्माकं च महानर्थो ह्येतेनैव भविष्यति ।
यशश्च तव गोविन्द राज्ञो वन्धाद् विमुच्यतः ॥ ४ ॥

सर्वैर्दुर्विषहो राजा नागायुतसमो बले ।
बलिनामपि चान्येषां भीमं समबलं विना ॥ ५ ॥

द्वैरथे स तु जेतव्यो न शताक्षौहिणीयुतः ।
ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ६ ॥

ब्रह्मवेषधरो भूत्वा तं भिक्षेत वृकोदरः ।
हनिष्यति न सन्देहो द्वैरथे तव सन्निधौ ॥ ७ ॥

निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ॥ ८ ॥

गायन्ति ते विशदकर्म गृहेषु देव्यो
राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः
पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ९ ॥

जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते ।
प्रायः कालविपाकेन तव चाभिमतः क्रतुः ॥ १० ॥

श्रीशुक उवाच—
इत्युद्धववचो राजन् सर्वतोभद्रमच्युतः ।
देवर्षिर्यदुवृद्धाश्च रामश्च प्रत्यपूजयन् ॥ ११ ॥

अथादिशत् प्रयाणाय भगवान् देवकीसुतः
भृत्यान् दारुकजैत्रादीननुज्ञाप्य गुरून् विभुः ॥ १२ ॥

स निर्गत्यावरोधान् स्वान् ससुतान् सपरिच्छदान् ।
सङ्कर्षणमनुज्ञाप्य यदुराजं च शत्रुहा ।
सूतोपनीतं स्वरथमारुहद् गरुडध्वजम् ॥ १३ ॥

ततो रथद्विपभटसादिनायकैः
करालया परिवृत आत्मसेनया ।
मृदङ्गभेर्यानकशङ्खगोमुखैः
सङ्घुष्या वै ककुभो निराक्रमत् ॥ १४ ॥

प्रियाश्च काश्चन शिविकाभिरच्युतं
सहात्मजाः पतिमनु सुव्रता ययुः ।
वराम्बराभरणविलेपनस्रजः
सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥

नरोष्ट्रगोमहिषखराश्वतर्यनः-
करेणुभिः परिजनवारयोषितः ।
स्वलङ्कृताः पटकुटिकम्बलाम्बरा-
द्युपस्करा ययुरधियुज्य सर्वशः ॥ १६ ॥

बलं बृहद्ध्वजपटछत्रचामरै-
र्वरायुधाभरणकिरीटवर्मभिः ।
दिवांऽशुभिस्तुमुलरवं बभौ रवे-
र्यथाऽर्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १७ ॥

अथो मुनिर्यदुपतिना सभाजितः
प्रणम्य तं हृदि निदधद् विहायसा ।
निशम्यागाद् व्यवसितमाहृतार्हणो
मुकुन्दसन्दर्शननिर्वृतेन्द्रियः ॥ १८ ॥

राज्ञां दूतमुवाचेदं भगवान् प्रीणयन् गिरा ।
मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥ १९ ॥

इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ।
तेऽपि सन्दर्शनं शौरेः प्रत्यैक्षन्त मुमुक्षवः ॥ २० ॥

आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ।
नदीर्गिरीननतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥

ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ।
पाञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥ २२ ॥

तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ।
अजातशत्रुर्निरगात् सोपाध्यायः सुहृद्वृतः ॥ २३ ॥

गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ।
अभ्ययात् स हृषीकेशं प्राणाः प्राणमिवागतम् ॥ २४ ॥

दृष्ट्वा विक्लिन्नहृदयः कृष्णस्नेहेन पाण्डवः ।
चिराद् दृष्टं प्रियतमं सस्वजे स्म पुनः पुनः ॥ २५ ॥

दोर्भ्यां परिष्वज्य रमालयालयं
मुकुन्दगात्रं नृपतिर्हताशुभः ।
लेभे परां निर्वृतिमश्रुलोचनो
हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥

तं मातुलेयं परिरभ्य निर्वृतो
भीमः स्मयन् प्रेमजलाकुलेन्द्रियः ।
यमौ किरीटी च सुहृत्तमं मुदा
प्रवृद्धवाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥

अर्जुनेन परिष्वक्तो यमाभ्यामभिवन्दितः ।
ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥ २८ ॥

मानि(तो)नो मानयामास कुरुसृञ्जयकेकयान् ।
सूतमागधगन्धर्वा वन्दिनश्चोपमन्त्रिणः ॥ २९ ॥

मृदङ्गशङ्खपटहवीणापणवगोमुखैः ।
ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥

एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ।
संस्तूयमानो भगवान् विवेशालङ्कृतं पुरम् ॥ ३१ ॥

संसिक्तवर्त्म करिणां मदगन्धतोयै-
श्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ।
मृष्टात्मभिर्नवदुकूलविभूषणस्र-
ग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥

उद्दीप्तदीपावलिभिः प्रतिसद्मजाल-
नियतिधूपरुचिरं विलसत्पताकम् ।
मूर्धन्यहेमकलशै रजतोरुशृङ्गै-
र्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥

प्राप्तं निशम्य नरलोचनपानपात्र-
मौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म पतीन् स्वतल्पे
द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥

तस्मिन् सुसङ्कुल इभाश्वरथद्विपद्भिः
कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ।
नार्यो विकीर्य कुसुमैर्मनसोपगुह्य
सुस्वागतं विदधुरुत्स्मितवीक्षितेन ॥ ३५ ॥

ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नी-
स्तारा यथोडुपसहाः किमकार्यमूभिः ।
यच्चक्षुषां पुरुषमौलिरुदारहास-
लीलावलोककलयोत्सवमातनोति ॥ ३६ ॥

तत्र तत्रोपसङ्गम्य पौरा मङ्गलपाणयः ।
चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३७ ॥
अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ।
ससम्भ्रमैरभ्युपेतः प्राविशद् राजमन्दिरम् ॥ ३८ ॥

पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ।
प्रीतात्मोत्थाय पर्यङ्कात् सस्नुषा परिषस्वजे ॥ ३९ ॥
गोविन्दं गृहमानीय देवदेवेशमादृतः ।
पूजायां नाविदत् कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥
पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ।
स्वयं च कृष्णया राजन् भगिन्या चाभिवादितः ॥ ४१ ॥
श्वश्र्वा सञ्चोदिता कृष्णा कृष्णपत्नीः सुवर्चसः ।
आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥ ४२ ॥
कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् ।
अन्याश्चाभ्यागता यास्ता वासःस्रङ्मण्डनादिभिः ॥ ४३ ॥
सुखं निवासयामास धर्मराजो जनार्दनम् ।
ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४४ ॥
तर्पयित्वा खाण्डवेन वह्निं पाण्डवसंयुतः ।
मोचयित्वा मयं येन राज्ञो दिव्या सभाऽऽहृता ॥ ४५ ॥
उवास कतिचिन्मासान् राज्ञः प्रियचिकीर्षया ।
विहरन् रथमारुह्य फल्गुनेन भटैर्वृतः ॥ ४६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकाशीतितमोऽध्यायः ॥

# अथ द्व्यशीतितमोऽध्यायः

श्रीशुक उवाच—
एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १ ॥
आचार्यैः कुलवृद्धैश्च ज्ञातिसम्बन्धिबान्धवैः ।
सर्वेषामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥
युधिष्ठिर उवाच—
क्रतुराजेन गोविन्द राजसूयेन पावनीः ।
यक्ष्ये विभूतीर्भवतस्तत् सम्पादय नः प्रभो ॥ ३ ॥

त्वत्पादुके अविरतं परि ये चरन्ति
ध्यायन्त्यभद्रनशने सुधियो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्ग-
माशासते यदि त आशिष ईश नान्ये ॥ ४ ॥

तद् देवदेव भवतश्चरणारविन्द-
सेवानुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति न भजन्त्युत वोभयेषां
निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥ ५ ॥

न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्
सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूप उदयो न विपर्ययोऽत्र ॥ ६ ॥

श्रीभगवानुवाच—
सम्यग् व्यवसितं राजन् भवता शत्रुकर्शन ।
कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥ ७ ॥

ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ।
सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥

विजित्य नृपतीन् सर्वान् कृत्वा च जगतीं वशे ।
सम्भृत्य सर्वसम्भारानाहरस्व महाक्रतुम् ॥ ९ ॥

एते तु भ्रातरो राजन् लोकपालांशसम्भवाः ।
वशेऽस्मि तव ताताहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥

न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ।
विभूतिभिर्नाभिभवेद् देवोऽपि किमु पार्थिवाः ॥ ११ ॥

श्रीशुक उवाच—
निशम्य भगवद्गीतं प्रीत्युत्फुल्लमुखाम्बुजः ।
भ्रातॄन् दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् ॥ १२ ॥

सहदेवं दक्षिणस्यामादिशत् सह सृञ्जयैः ।
दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ।
प्राच्यां वृकोदरं राजन् केकयैः सह मद्रकैः ॥ १३ ॥

ते विजित्य नृपान् वीरानाजह्रुर्दिग्भ्य ओजसा ।
अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥

श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ।
आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥

भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्ततः ।
जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥

तं गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनाम् ।
ब्रह्मण्यं समयाचन्त राजन्या ब्रह्मलिङ्गिनः ॥ १७ ॥

राजन् विध्यतिथीनस्मानर्थिनो गृहमागतान् ।
तन्नः प्रयच्छ भद्रं ते यद् वयं कामयामहे ॥ १८ ॥

किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ।
किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १९ ॥

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ।
नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥ २० ॥

हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः ।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥

श्रीशुक उवाच—
स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ।
राजन्यबन्धून् विज्ञाय दृष्टपूर्वानचिन्तयत् ॥ २२ ॥

राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति ।
ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥

बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ।
ऐश्वर्याद् भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥

श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ।
जानन्नपि महीं प्रादाद् वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥

जीवता ब्राह्मणार्थाय कोऽन्वर्थः क्षत्रबन्धुना ।
देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥

इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ।
हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ २७ ॥

श्रीकृष्ण उवाच—
युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे ।
युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः ॥ २८ ॥

असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ।
अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥ २९ ॥

एवमावेदितो राजा जहासोच्चैः स मागधः ।
आह चामर्षितो मन्दो युद्धं तर्हि ददामि वः ॥ ३० ॥

न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ।
मथुरां स्वां पुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥

अयं तु वयसाऽतुल्यो नातिसत्त्वो न मे समः ।
अर्जुनो नो भवेद् योद्धा भीमस्तुल्यबलो मम ॥ ३२ ॥

इत्युक्त्वा भीमसेनाय दत्वा स महतीं गदाम् ।
द्वितीयां स्वयमादाय निर्जगाम पुराद् बहिः ॥ ३३ ॥

ततः समबलौ(समरबले) वीरौ संसक्ताावितरेतरम् (रौ) ।
जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥

मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ।
चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥ ३५ ॥

ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ।
गदयोः क्षिप्तयो राजन् दन्तयोरिव दन्तिनोः ॥ ३६ ॥

ते वै गदे भुजजवेन निपात्यमाने
अन्योन्यतोंऽसकटिपादकरोरुजत्रून् ।
चूर्णीबभूवतुरुपेत्य यथार्कशाखे
संयुध्यतोर्द्विरदयोरिव दीप्तमन्योः ॥ ३७ ॥

इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ
क्रुद्धौ स्वमुष्टिभिरयः स्पर्शैर्व्यपिष्टाम् ।
शब्दस्तयोः प्रहरतोर्धनयोरिवासी-
न्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥

तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ।
निर्विशेषमभूद् युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥

शत्रोर्जन्ममृती विद्वान् जीवितं च जराकृतम् ।
पार्थमाप्याययन् स्वेन तेजसाऽचिन्तयद् हरिः ॥ ४० ॥

सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः ।
दर्शयामास विटपं पाटयन्निव सञ्ज्ञया ॥ ४१ ॥

तद् विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ।
गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ ४२ ॥

एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ।
गुदतः पाटयामास शाखामिव मतङ्गजः ॥ ४३ ॥

एकपादोरुवृषणकटिपृष्ठस्तनांसके ।
एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४४ ॥

हाहाकारो महानासीन्निहते मागधेश्वरे ।
पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४५ ॥

सहदेवं तत्तनयं भगवान् भूतभावनः ।
अभ्यषिञ्चदमेयात्मा मागधानां पतिं प्रभुः ।
मोचयामास राजन्यान् संरुद्धा मागधेन ये ॥ ४६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे द्व्यशीतितमोऽध्यायः ॥

# अथ त्र्यशीतितमोऽध्यायः

श्रीशुक उवाच—
अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ।
विनिर्गता गिरिद्रोण्या मलिना मलवाससः ॥ १ ॥

क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ।
ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥

श्रीवत्साङ्कं चतुर्बाहुं पद्मपत्रनिभेक्षणम् ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥

पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ।
किरीटहारकटककटिसूत्राङ्गदाञ्चितम् ॥ ४ ॥

भ्राजद्वरमणिग्रीवं निवीतं वनमालया ।
पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ ५ ॥

जिघ्रन्त इव नासाभ्यामीहन्त इव चेतसा ।
प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥

कृष्णसन्दर्शनाह्लादध्वस्तसंरोधनक्लमाः ।
प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ ७ ॥

राजान ऊचुः—
नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ।
प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥ ८ ॥

नैव नाथाभ्यसूयामो मागधं मधुसूदन ।
अनुग्रहो यद् भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥

राज्यैश्वर्यमदोन्नध्दा न श्रेयो विन्दते नृपः ।
त्वन्मायामोहिता नित्या मन्यन्ते सम्पदश्चलाः ॥ १० ॥

मृगतृष्णां यथा बाला मन्यन्ते उदकाशयम् ।
एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥

वयं पुरा श्रीमदनष्टबुद्धयो
जिहीर्षयाऽस्या इतरेतरस्पृधः ।
घ्नन्तः प्रजाः स्वा अपि निर्घृणाः प्रभो
मृत्युं परं त्वामगणय्य दुर्मदाः ॥ १२ ॥

त एव कृष्णाद्य गभीररंहसा
अनन्तवीर्येण विचालिताः श्रियः ।
कालेन तद् वै भवतोऽनुकम्पया
विनष्टदर्पाश्चरणौ स्मरामहे ॥ १३ ॥

अथो न राज्यं मृगतृष्णरूपितं
देहेन शश्वत्पतता रजोभुवा ।
उपासितव्यं स्पृहयामहे विभो
क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥

तन्नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ १६ ॥

श्रीशुक उवाच—
संस्तूयमानो भगवान् राजभिर्मुक्तबन्धनैः ।
तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७ ॥

श्रीभगवानुवाच—
अद्य प्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ।
सुदृढा जायते भक्तिर्बाढमाशासितं तथा ॥ १८ ॥

दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ।
श्रियैश्वर्यमदोन्नाहं पश्य उन्मादनं नृणाम् ॥ १९ ॥

हैहयो नहुषो वेनो रावणो नरकोऽपरे ।
श्रीमदाद् ध्वंसिताः स्थानाद् देवदैत्यनरेश्वराः ॥ २० ॥

सञ्चिन्तयत विज्ञाय देहाद्युत्पाद्यमन्तवत् ।
मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षत ॥ २१ ॥

सन्तन्वन्तः प्रजातन्तून् सुखदुःखे भवाभवौ ।
प्राप्तप्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥ २२ ॥

उदासीनाश्च देहादावात्मारामा धृतव्रताः ।
मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ॥ २३ ॥

श्रीशुक उवाच—
इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः ।
तेषां न्ययुङ्क्त पुरुषान् स्त्रियो मज्जनकर्मणि ॥ २४ ॥

सपर्यां कारयामास सहदेवेन भारत ।
नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥

भोजयित्वा वरान्नेन सुस्नातान् समलङ्कृतान् ।
भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ॥ २६ ॥

ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ।
विरेजुर्मोचिताः क्लेशात् प्रावृडन्ते यथा ग्रहाः ॥ २७ ॥

रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् ।
प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान् प्रत्ययापयत् ॥ २८ ॥

त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना ।
ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥ २९ ॥

जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ।
यथान्वशासद् भगवान् तथा चक्रुरतन्द्रिताः ॥ ३० ॥

जरासन्धं घातयित्वा भीमसेनेन केशवः ।
पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः ॥ ३१ ॥

ते गत्वा खाण्डवप्रस्थं शङ्खान् दध्मुर्जितारयः ।
हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥

तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ।
मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥ ३३ ॥

अभिवाद्याथ राजानं भीमार्जुनजनार्दनाः ।
सर्वमाश्रावयाञ्चक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥

निशम्य धर्मराजस्तु केशवेनानुकम्पितम् ।
आनन्दाश्रुकलां मुञ्चन् प्रेम्णा नोवाच किञ्चन ॥ ३५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे त्र्यशीतितमोऽध्यायः ॥

## अथ चतुरशीतितमोऽध्यायः

श्रीशुक उवाच—
एवं युधिष्ठिरो राजा जरासन्धवधं प्रभोः ।
कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥

युधिष्ठिर उवाच—
यस्य त्रिलोकगुरवः सर्वलोकमहेश्वराः ।
वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥

स भवानरविन्दाक्ष दीनानामीशमानिनाम् ।
धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम् ॥ ३ ॥

न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते ते यथा रवेः ॥ ४ ॥

न च तेऽजित भक्तानां ममाहमिति माधव ।
त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥

इत्युक्त्वा यज्ञिये काले वव्रे युक्तान् स ऋत्विजः ।
कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः ॥ ६ ॥

द्वैपायनो भरद्वाजः सुमन्तुर्गोतमोऽसितः ।
वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥

विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ।
पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥

अथर्वा काश्यपो धौम्यो रामो भार्गव आसुरिः ।
वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥ ९ ॥

उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ।
धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ।
तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥ ११ ॥

ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः ।
कृष्ट्वा तत्र यथाम्नायं दीक्षयाञ्चक्रिरे नृपम् ॥ १२ ॥

हैमाः किलोपकरणा वरुणस्य यथा पुरा ।
इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ॥ १३ ॥

सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
मुनयो यक्षरक्षांसि खगाः किन्नरचारणाः ॥ १४ ॥

राजानश्च समाहूता राजपत्न्यश्च सर्वशः ।
राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ १५ ॥

मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ।
अयाजयन् महाराज याजका देववर्चसः ॥ १६ ॥

राजसूयेन विधिवत् प्रचेतसमिवामराः ।
सूत्येऽहन्यवनीपालो याजकान् सदसस्पतीन् ॥ १७ ॥

अपूजयन् महाभागान् यथावत् सुसमाहितः ।
सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ॥ १८ ॥

नाध्यगच्छन्ननैकान्त्यात् सहदेवस्तदाऽब्रवीत् ।
अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः ॥ १९ ॥

एष वै देवताः सर्वा देशकालधनादयः ।
यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ २० ॥

अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः ।
एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥ २१ ॥

आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ।
विविधानीह कर्माणि जनयन् ह्यनपेक्षया ॥ २२ ॥

ईहते यदयं सर्वं श्रेयो धर्मादिलक्षणम् ।
तस्मात् कृष्णाय महते दीयतां परमार्हणम् ॥ २३ ॥

एवं चेत् सर्वभूतानामात्मनश्चार्हणं भवेत् ।
सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ २४ ॥

देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २५ ॥

श्रीशुक उवाच—

इत्युक्त्वा सहदेवोऽभूत् तूष्णीं कृष्णानुभाववित् ।
तत् श्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥ २६ ॥

श्रुत्वाऽनुजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ।
समर्हयद् हृषीकेशं प्रीतः प्रणयविह्वलः ॥ २७ ॥

तत्पादाववनिज्यापः शिरसा लोकपावनीः ।
सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ २८ ॥

वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ।
अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत् समवेक्षितुम् ॥ २९ ॥

इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ।
नमो जयेति नेमुस्तं खात् पेतुः पुष्पवृष्टयः ॥ ३० ॥

इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षात्
संश्रावयन् भगवते परुषाण्यभीतः ॥ ३१ ॥

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद् बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३२ ॥

यूयं पात्रविदां श्रेष्ठा मा मङ्ध्वं बालभाषितम् ।
सदसस्पतयः सर्वे कृष्णो यत् सम्मतोऽर्हणे ॥ ३३ ॥

तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ।
परमर्षीन् ब्रह्मनिष्ठान् लोकपालांश्च पूजितान् ॥ ३४ ॥

सदसस्पतीनतिव्रज्य गोपोऽयं कुलपांसनः ।
यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३५ ॥

वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ।
स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३६ ॥

ययातिनैषां हि कुलं शप्तं सद्भिर्विगर्हितम् ।
वृथा पानरतं मत्तं सपर्यां कथमर्हति ॥ ३७ ॥

ब्रह्मर्षिसेवितान् देशान् हित्वैतेऽब्रह्मवर्चसः ।
समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३८ ॥

एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।
नोवाच किञ्चिद् भगवान् यथा सिंहः शिवारुतम् ॥ ३९ ॥

भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ।
कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥ ४० ॥

निन्दां भगवतः शृण्वन् तत्परस्य जनस्य च ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ ४१ ॥

ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकेयसृञ्जयाः ।
उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४२ ॥

ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी ।
भर्त्सयन् कृष्णपक्षीयान् राज्ञः सदसि भारत ॥ ४३ ॥

तावदुत्थाय भगवांस्तान् निवार्य स्वयं रुषा ।
शिरः क्षुरान्तचक्रेण जहारापततो रिपोः ॥ ४४ ॥

शब्दः कोलाहलोऽथासीच्छिशुपाले हते महान् ।
तत्राततायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४५ ॥

चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ।
पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४६ ॥

जन्मत्रयानुगुणितवैरसंरब्धया धिया ।
ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥ ४७ ॥

वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ।
वैकुण्ठवासिनोर्जन्म विप्रशापात् पुनः पुनः ॥ ४८ ॥

ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ।
सर्वान् सम्पूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४९ ॥

साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ।
हत्वा च चेदिपं तत्र विजहार यथासुखम् ॥ ५० ॥

राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ।
ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥

राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ।
कृष्णं क्रतुं च शंसन्तः स्वधामानि मुदा ययुः ॥ ५२ ॥

य इदं कीर्तयेद् विष्णोः कर्म चैद्यवधादिकम् ।
राज्ञां मोक्षविधानं च सर्वपापैः प्रमुच्यते ॥ ५३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुरशीतितमोऽध्यायः ॥

# अथ पञ्चाशीतितमोऽध्यायः

राजोवाच—
अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ।
सर्वे मुमुदिरे ब्रह्मन् देवा ये च समागताः ॥ १ ॥

दुर्योधनं वर्जयित्वा राजान ऋषयः सुराः ।
इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥

श्रीशुक उवाच—
पितामहस्य ते यज्ञे राजसूये महात्मनः ।
बान्धवाः परिचर्यायां तस्यासन् प्रेमबन्धनाः ॥ ३ ॥

भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ।
सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४ ॥

सतां शुश्रूषणे जिष्णुः कृष्णः पादावनेजने ।
परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥

युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ।
बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः ॥ ६ ॥

निरूपिता महायज्ञे नानाकर्मसु ते तदा ।
प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षया ॥ ७ ॥

ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु
स्वेष्टेषु सूनृतमहार्हणदक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे
चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥

मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः ।
वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥

नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ।
वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥

चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ।
स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥

यदुसृञ्जयकाम्बोजाः कुरुकेकयकोसलाः ।
कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥

सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ।
देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥

स्वलङ्कृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ।
विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥ १४ ॥

तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ।
पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥

गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्
देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।
ता मातुलेयसखिभिः परिषिच्यमानाः
सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥

ता देवरानुत सखीन् सिषिचुर्दृतीभिः
क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।
औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः
क्षोभं दधुर्मलधियां रुचिरैः समेताः ॥ १७ ॥

स सम्राड् रथमारूढः सदश्वं रुक्ममालिनम् ।
व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥

पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ।
आचान्तं स्नापयाञ्चक्रुर्गङ्गायां सह कृष्णया ॥ १९ ॥

दिवि दुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ।
मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥

सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता जनाः ।
अथ राजाऽहते क्षौमे परिधाय स्वलङ्कृतः ॥ २१ ॥

ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः ।
बन्धून् ज्ञातीन् नृपान् मित्रसुहृदोऽन्यांश्च सर्वशः ॥ २२ ॥

अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥

सर्वे जनाः सुररुचो मणिकुण्डलस्र-
गुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ।
नार्यश्च कुण्डलयुगालकवृन्दजुष्ट-
वक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥

अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ।
विप्रक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥

देवर्षिपितृभूतानि लोकपालाः सहानुगाः ।
पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्मुदा ॥ २६ ॥

हरिदासस्य राजर्षे राजसूयमहोदयम् ।
नैवातृप्यन् प्रशंसन्तः पिबन् मर्त्यो यथाऽमृतम् ॥ २७ ॥

ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् ।
प्रेम्णा निवारयामास कृष्णं च त्यागकातरः ॥ २८ ॥

भगवानपि तत्राङ्ग न्यवात्सीत् तत्प्रियङ्करः ।
प्रस्थाप्य यदुवीरान् स्वान् साम्बादींस्तु कुशस्थलीम्॥ २९ ॥

इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ।
सुसमृद्धं समुत्तीर्य कृष्णेनासीद् गतज्वरः ॥ ३० ॥

एकदाऽन्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ।
अतप्यद् राजसूयस्य महित्वं चाच्युतात्मनः ॥ ३१ ॥

यस्मिन् नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मी-
र्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।
ताभिः पतिं द्रुपदराजसुतोपतस्थे
यस्यां विषक्तहृदयः कुरुराज एषः ॥ ३२ ॥

यस्मिंस्तदा मधुरिपोर्महिषीसहस्रं
श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
वक्षःसुचारुकुचकुङ्कुमशोणहारं
श्रीमन्मुखं च चलकुण्डलकुन्तलाढ्यम् ॥ ३३ ॥

सभायां मयकॢप्तायां क्वापि धर्मसुतो विराट् ।
वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥

आसीनः काञ्चने साक्षादासने मघवानिव
पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ॥ ३५ ॥

उपास्यमानो विप्रेन्द्रैर्नानादेशसमागतैः ।
दोधूयमानो धवलैर्वालव्यजनसङ्कुलैः ।
रराज राजशार्दूलो दिवि देवपतिर्यथा ॥ ३६ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चाशीतितमोऽध्यायः ॥

## अथ षडशीतितमोऽध्यायः

श्रीशुक उवाच—
तत्र दुर्योधनो मानी परीतो भ्रातृभिः प्रियैः ।
किरीटमाली न्यविशदसिहस्तः क्षिपन् रुषा ॥ १ ॥

स्थलेऽप्यगृह्णाद् वस्त्रान्तं हरिनीलोपलाचिते ।
स्थलं पुष्करिणीं मत्वा सर्वे तं जहसुर्जनाः ॥ २ ॥

आगच्छन्नेवमुर्वीशः पुरः पुष्करिणीं क्वचित् ।
विलोक्य स्फाटिकां भूमिं मन्वानो न्यपतज्जले ॥ ३ ॥

जहास भीमस्तं दृष्ट्वा स्त्रियो भूपाश्च केचन ।
निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ४ ॥

अजातशत्रुराकर्ण्य वस्त्रसम्भूषणादिकम् ।
सम्प्रेष्याह्वापयामास दूतैर्योगेश्वरेण च ॥ ५ ॥

तदनादृत्य सत्कारं व्रीडावनतकन्धरः ।
जाज्वल्यमानहृदयो न जगाम तदन्तिकम् ॥ ६ ॥

स व्रीडितोऽवाग्वदनो रुषा ज्वलन्
निष्क्रम्य तूर्ष्णीं प्रययौ गजाह्वयम् ।
हाहेति शब्दः सुमहानभूत् सता-
मजातशत्रुर्विमना इवाभवत् ॥ ७ ॥

बभूव तूर्ष्णीं भगवान् भुवो भरं
जिहीर्षुरात्मेहितमात्मनि स्मरन् ।
तदाऽऽविरासीज्जगदीशसन्निधौ
मुनिः सुराराधितपादपङ्कजः ॥ ८ ॥

उपेत्य नारदः सर्वैः सदस्यैः परिपूजितः ।
कृष्णेनाभ्यर्चितः सम्यगुपविष्टो नृपान्तिके ॥ ९ ॥

उवाच धर्मराजस्तं प्रणिपत्य यथाविधि ।
भवान् सर्वत्रगो ब्रह्मन् सर्वकालेष्वसङ्गतः ॥ १० ॥

नृपाणां शौर्ययुक्तानां सर्वमण्डलवासिनाम् ।
इदानीं कतमः शूरो नित्योद्योगेन वर्तते ॥ ११ ॥

इति तेनोदितां वाणीमाकर्ण्य मुनिरब्रवत् ॥ १२ ॥

नारद उवाच—
भग्नदर्पा नृपाः सर्वे कृष्णेनाप्रतिमौजसा ।
वसन्ति विषये स्वे स्वे नष्टचेष्टा गतश्रियः ॥ १३ ॥

एक एव महोत्साहः क्षत्रियाणां दुराग्रही ।
जातः साल्वेषु नृपतिर्बहुपादातिवाहनः ॥ १४ ॥

भ्रातर्युपरते युद्धे विष्णुना लोकजिष्णुना ।
ब्रह्मदत्तसुते हंसे यमुनायां महात्मना ॥ १५ ॥

कृष्णद्विडेत्य राज्ञोऽसौ रुक्म्यादीन् कुण्डिने पुरे ।
समाजं कारयामास भ्रातुरानृण्यकाङ्क्षया ॥ १६ ॥

शिशुपालद्रुमसुखैर्दन्तवक्रपुरःसरैः ।
पराजितेषु सङ्ग्रामे जरासन्धादिषु प्रभो ॥ १७ ॥

साल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ।
अयादवीं क्ष्मां करिष्ये पश्यन्तु मम पौरुषम् ॥ १८ ॥

इति मूढः प्रतिज्ञाय तपसे प्राविशद् वनम् ।
गते तस्मिन् बहून् वर्षान् प्रतीक्ष्य तदुपागमम् ॥ १९ ॥

तदनन्तरजोऽमात्यैरभिषिक्तो नृपार्थिभिः ।
तपस्तस्य स नृपतिर्देवं पशुपतिं प्रभुम् ॥ २० ॥

आराधयामास वने पांसुमुष्टिं सकृद् ग्रसन् ।
संवत्सरान्ते भगवान् सन्तुष्टः स उमापतिः ॥ २१ ॥

वरेण च्छन्दयामास साल्वं शरणमागतम् ।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥ २२ ॥

अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ।
तथेति गिरिशादिष्टो मयः परपुरञ्जयः ॥ २३ ॥

पुरं निर्माय साल्वाय प्रादात् सौभमयस्मयम् ।
स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥ २४ ॥

आययौ स्वं जनपदं समग्रबलवाहनम् ।
इदानीं राजपुत्राणां स एवोद्योगवान् नृप ॥ २५ ॥

इति धर्मसुतः श्रीमान् श्रुत्वा तन्नारदोदितम् ।
पार्श्वे भगवतः शौरेः शनैर्मुखमवेक्षत ॥ २६ ॥

निशम्य तद् वासुदेवो धैर्यसारो निराकुलः ।
किञ्चित् प्रहस्यास्तु नामेत्याह सा हि महात्मता ॥२७॥

पूजयित्वा ऋषिं सम्यक् सूनृतैर्गीर्भिरच्युतः ।
चिराभिलषितः सोऽपि प्राप्तः साध्वित्यचिन्तयत् ॥२८॥

उग्रसेनं यदुपतिं युयुधानं च माधवः ।
अक्रूरं कृतवर्माणमन्यांश्च यदुपुङ्गवान् ॥ २९ ॥

प्रेषयामास रक्षायै द्वारवत्याः स्वसैनिकान् ॥ ३० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षडशीतितमोऽध्यायः ॥

# अथ सप्ताशीतितमोऽध्यायः

श्रीशुक उवाच—
तथा वसति गोविन्दे शक्रप्रस्थे महात्मनि ।
महानुजे चैव नृपे कृतकृत्ये युधिष्ठिरे ॥ १ ॥

आकर्ण्य साल्वः संक्रुद्धो दमघोषसुतं हतम् ।
जरासन्धं च सुहृदं राजसूयं क्रतुं कृतम् ॥ २ ॥

ययौ द्वारावतीं साल्वो वैरं वृष्णिकृतं स्मरन् ।
समावसन्नन्तरिक्षे युयुधे भरतर्षभ ॥ ३ ॥

पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ।
सगोपुराणि द्वाराणि प्राकाराट्टालतोलिकाः ॥ ४ ॥

विहायसो विमानाग्रान्निपेतुः शस्त्रवृष्टयः ।
शैला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ।
प्रचण्डश्चक्रवातोऽभूद् रजसा च्छादिता दिशः ॥ ५ ॥

इत्यर्घमाना सौभेन कृष्णस्य नगरी भृशम् ।
नाभ्यपद्यत शं राजन् त्रिपुरेण यथा मही ॥ ६ ॥

प्रद्युम्नो भगवान् वीक्ष्य मथ्यमाना निजाः प्रजाः ।
मा भैष्टेत्यभ्यधाद् धीरो वाचः पित्रोरनुस्मरन् ॥ ७ ॥

सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजैः ।
हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ ८ ॥

अपरे च महेष्वासा रथयूथपयूथपाः ।
निर्ययुर्दंशिता गुप्ता रथनागाश्वपत्तिभिः ॥ ९ ॥

ततः प्रववृते युद्धं साल्वानां यदुभिः सह ।
यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १० ॥

तां च सौभपतेर्मायां दिव्यास्त्रै रुग्मिणीसुतः ।
क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ ११ ॥

विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ।
साल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १२ ॥

शतेनाताडयत् साल्वमेकैकेनास्य सैनिकान् ।
विव्याध दशभिर्नेतॄन् वाहनानि त्रिभिस्त्रिभिः ॥ १३ ॥

तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ।
दृष्ट्वा तं पूजयामासुः सर्वेऽस्य पुरवासिनः ॥ १४ ॥

बहुरूपैकरूपं तद् दृश्यते न च दृश्यते ।
मयमायाकृतं यानं दुर्विभाव्यं जनैरभूत् ॥ १५ ॥

क्वचिद् भूमौ क्वचिद् व्योम्नि क्वचित् सिन्धौ क्वचिद् गिरौ ।
अलातचक्रवद् भ्राम्यत् सौभं तद् दुरवस्थितम् ॥ १६ ॥

यत्र यत्रोपलक्ष्येत तस्य सौभस्य सैनिकः ।
साल्वस्ततस्ततोऽमुञ्चन् शरान् सात्वतयूथपाः ॥ १७ ॥

शरैरग्न्यर्कसङ्काशैराशीविषदुरासदैः ।
पीड्यमानः पुरानीकः साल्वोऽमुह्यत् परैरिति ॥ १८ ॥

साल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ।
न तत्यजू रणं स्वंस्वं लोकद्वयजिगीषवः ॥ १९ ॥

साल्वामात्यो द्युमान्नाम प्रद्युम्नात् प्राक् प्रपीडितः ।
आसाद्य गदया गुर्व्या व्याहत्य व्यनदद् बली ॥ २० ॥

प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिन्दमम् ।
अपोवाह रणात् सूतो धर्मविद् दारुकात्मजः ॥ २१ ॥

लब्धसञ्ज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ।
असाध्विदमहो सूत यद्रणान्मेऽपसर्पणम् ॥ २२ ॥

न यदूनां कुले जातः दृश्यते रणविच्युतः ।
विना मत् क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २३ ॥

किं नु वक्ष्येऽभिसङ्गस्य पितरौ रामकेशवौ ।
युद्धाद् धर्म्यादपक्रान्तः पृष्टस्तत्रात्मनाऽक्षमम् ॥ २४ ॥

व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ।
क्लैव्यं कथं गतो वीर सहान्यैः कथ्यतां मृधे ॥ २५ ॥

सूत उवाच—
धर्मं विजानताऽऽयुष्मन् कृतमेतन्मया विभो ।
सूतः कृच्छ्रगतं रक्षेद् रथिनं सारथिं रथी ॥ २६ ॥

एतद् विदित्वाऽनुभवान्मयाऽऽपोहितो रणात् ।
उपसृष्टः परेणेति मूर्च्छितो गदया हतः ॥ २७ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे सप्ताशीतितमोऽध्यायः ॥

# अथ अष्टाशीतितमोऽध्यायः

श्रीशुक उवाच—
इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः ।
पुनरात्तप्रहरणः सूतमाह रणाङ्गणे ॥ १ ॥

पश्य सूत द्युमानेष दं(शि)सितो धृतकार्मुकः ।
नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ २ ॥

आद्रवन्तं स्वसैन्यानि द्युमन्तं रुग्मिणीसुतः ।
प्रतिहत्य रुपाऽविध्यन्नाराचैरष्टभिः स्मर(य)न् ॥ ३ ॥

चतुर्भिश्चतुरो वाहान् सूतमेकेन चाहनत् ।
द्वाभ्यां च केतुधनुषी द्युमतोऽन्येन वै शिरः ॥ ४ ॥

गदः सात्यकिरक्रूरः साम्बश्च शुकसारणौ ।
वसुदेवोग्रसेनौ च जघ्नुः सौभपतेर्बलम् ॥ ५ ॥

पेतुः समुद्रे बहवः साल्वेया भिन्नकन्धराः ।
एवं यदूनां साल्वानां निघ्नतामितरेतरम् ॥ ६ ॥

रणं त्रिनवरात्रं तु तुमुलं रोमहर्षणम् ।
इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ ७ ॥

राजसूये निवृत्ते च शिशुपाले रणे हते ।
अलक्षयद् दुःशकुनान् घोरान् सङ्ग्रामशंसिनः ॥ ८ ॥

कुरुवृद्धाननुज्ञाप्य मुनींश्च ब्राह्मणैः सह ।
अन्वीयमानः सामात्यैः पाण्डवैर्निर्ययौ पुरात् ॥ ९ ॥

स गत्वा किञ्चिदध्वानं स्थापयित्वा पुरौकसः ।
पृथासुताननुज्ञाप्य प्रणतानश्रुलोचनान् ॥ १० ॥

सुवर्णशिविकारूढैरवरोधवधूजनैः ।
गजाश्वरथपादातिसहस्रैरपि संवृतः ॥ ११ ॥

अन्वीतराजकटकः प्रतस्थे पश्चिमामुखः ।
साल्वोऽपि कुरुशार्दूल विमानेन खचारिणा ।
अपावृत्य रणाद् राष्ट्रं स्वमेवाभ्यर्दितो ययौ ॥ १२ ॥

गच्छमानस्य साल्वस्य साम्बोऽभिद्रुत्य पृष्ठतः ।
साल्वामात्यं क्षेमधूर्तिं बाणैर्निन्ये यमक्षयम् ॥ १३ ॥

सेनापतिं विविन्दाख्यं साल्वस्याखिलवल्लभम् ।
निरुद्ध्य पथि गच्छन्तं प्रद्युम्नः प्राहरच्छरैः ॥ १४ ॥

प्रद्युम्नेनातिविद्धोऽसौ गृहीत्वा खड्गचर्मणी ।
ससज्ज रौग्मिणेयेन तदभूद् रणमद्भुतम् ॥ १५ ॥

मण्डलानि विचित्राणि चरतस्तस्य सङ्गरे ।
कृपाणेन यदुश्रेष्ठः शिरः कायादपाहरत् ॥ १६ ॥

विभ्रष्टमार्गा सा सेना हतप्रवरयूथपा ।
विदुद्राव यथाकामं प्राणत्राणपरायणा ॥ १७ ॥

देवोऽपि द्वारकामेत्य वेगेन गरुडध्वजः ।
ददर्श नगरीं भग्नप्रासादाट्टालगोपुराम् ॥ १८ ॥

विशीर्णतोरणां रुग्णतुङ्गसालप्रतोलिकाम् ।
विध्वस्तोपवनोद्यानां प्रस्तरापूर्णदीर्घिकाम् ॥ १९ ॥

निःस्वाध्यायवषट्कारामालोक्य द्वारकापुरीम् ।
अपृच्छत् कृतवर्माणं किमेतदिति दुर्मनाः ॥ २० ॥

तेनोक्तं सर्वमाकर्ण्य साल्वराजविचेष्टितम् ।
प्रतिजज्ञे यदुपतिः शृण्वतां सर्वसात्वताम् ॥ २१ ॥

अनुद्रुत्य तमद्यैव सौभं हत्वा दुरात्मकम् ।
सौभं निपात्य जलधौ प्रवेक्ष्ये द्वारकामिति ॥ २२ ॥

स रथं सैन्यसुग्रीवमेघपुष्पवलाहकैः ।
युक्तं बहुप्रहरणमग्रावस्थितदारुकम् ॥ २३ ॥

आरुह्य भगवान् विष्णुर्गरुडध्वजमुत्तमम् ।
प्रययौ सौभपदवीं मनोमारुतरंहसा ॥ २४ ॥

तथा गत्वा सुदूरं तमम्भोधेः कुक्षिमाश्रितम् ।
ददर्श सौभं तन्मध्ये साल्वं च समलङ्कृतम् ॥ २५ ॥

साल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ।
प्राहरत् कृष्णसूताय शक्तिं भीमां हढां मृधे ॥ २६ ॥

तामापतन्तीं नभसि महोल्कामिव रंहसा ।
भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥२७॥

तं च षोडशभिर्बाणैर्विद्ध्वा सौभं च खेचरम् ।
आविद्धच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥ २८ ॥

साल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ।
बिभेद न्यपतद् हस्ताच्छार्ङ्गमासीत् तदद्भुतम् ॥ २९ ॥

हाहाकारो महानासीद् यदूनां तत्र पश्यताम् ।
विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ ३० ॥

यत् त्वया युधि दुर्बुद्धे भ्रातरौ मे महाबलौ ।
निहतौ हंसडिभकौ यमुनायां दुरात्मना ।
यद् भूयो मूढ नः सख्युर्भार्याऽप्यपहृता त्वया ॥ ३१ ॥

यच्च मन्द सभामध्ये दमघोषसुतः सखा ।
व्यापादितः क्षत्रियाणां पश्यतां हतचेतसाम् ॥ ३२ ॥

तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् ।
नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ ३३ ॥

इति तेनोदितां वाणीमाकर्ण्य मधुसूदनः ।
प्राहार्दितो बाणगणैः पुनरात्तशरासनः ॥ ३४ ॥

वृथा त्वं कत्थसे मन्द न यस्यास्त्यतिकौतुकम् ।
पौरुषं दर्शय त्वं नः शूराणां फल्गु भाषणम् ॥ ३५ ॥

इत्युक्त्वा भगवान् साल्वं गदया भीमवेगया ।
तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥ ३६ ॥

ततः साल्वः समुत्पत्य खड्गेनानकदुन्दुभेः ।
उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ ३७ ॥

ततो मुहूर्तात् प्रकृतावुपस्थित-
स्तत्रानुतिष्ठत् स्वजनानुसङ्गतः ।
महानुभावस्तदबुद्ध्यतासुरीं
मायां स साल्वप्रकृतां मयोदिताम् ॥ ३८ ॥

न तत्र दैत्यं न पितुः कलेवरं
प्रबुद्ध आत्मा तदपश्यदच्युतः ।
स्वप्ने यथा चाम्बरचारिणं रिपुं
सौभस्थमालोक्य निहन्तुमुद्यतः ॥ ३९ ॥

एवं वदन्ति राजर्षे ऋषयः खेचरान्विताः ।
यत् स्ववाचो विरुद्ध्यन्ते तन्नूनं ते स्मरन्ति नु ॥ ४० ॥

क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ।
क्व चाखण्डितविज्ञानज्ञानैश्वर्यश्वरोऽजितः ॥ ४१ ॥

यत्पादसेवार्जितयाऽऽत्मविद्यया
हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्त आत्मीयमनन्तमैश्वरं
कुतो नु मोहः परमस्य सद्गतेः ॥ ४२ ॥

इति तैरुदितां वाणीमाकर्ण्य कमलेक्षणः ।
ससौभं हन्तुमारेभे साल्वं कुरुकुलोद्वह ॥ ४३ ॥

ततो निशातमादाय चक्रं कृष्णः सुदर्शनम् ।
आग्नेयास्त्रेणाभिमन्त्र्य प्राहिणोत् सौभनाशनम् ॥ ४४ ॥

तन्नारायणहस्ताग्रान्मुक्तमाग्नेयमन्त्रितम् ।
जज्वालाब्रह्मसदनं ज्वालामालातिभीषणम् ॥ ४५ ॥

ततो वैमानिकाः सर्वे ते विहाय विहायसम् ।
सुदर्शनोष्मणा तप्ता दुद्रुवुः सर्वतो दिशम् ॥ ४६ ॥

तदर्कशतसङ्काशं सौभं भित्त्वा द्विधा पुरम् ।
भूयो नारायणकरं प्राप भूप सुदर्शनम् ॥ ४७ ॥

ततः समुद्रे न्यपतत् पुरं विच्छिन्नबन्धनम् ।
गदापाणिर्दुराधर्षः साल्वोऽपि प्रत्यदृश्यत ।
तां प्रेषयामास गदां कृष्णमुद्दिश्य दुर्मतिः ॥ ४८ ॥

ततो रथं दैत्यबलोपनीतं
संस्थाय साल्वो बहुशस्त्रसञ्चयम् ।

अवाकिरत् कृष्णाशिरस्यनन्तै-
र्महायुधैश्च व्यनदद् हरिर्यथा ॥ ४९ ॥
तां गदां प्रेषितां तेन छित्त्वा बाणैस्त्रिधा हरिः ।
पाञ्चजन्यमुपाध्माय सिंहनादं व्यनीनदत् ॥ ५० ॥
तं शस्त्रपूगैः प्रहरन्तमोजसा
साल्वं शरैः शौरिरमोघविक्रमः ।
विद्ध्वाऽच्छिनद् वर्म धनुः शिरोमणिं
रथं च शत्रोर्गदया रुरोज ह ॥ ५१ ॥
तत्कृष्णहस्तेरितया विचूर्णितं-
पपात तोये गदया सहस्रधा ।
विसृज्य तं भूतलमास्थितो गदा-
मुद्यम्य साल्वोऽच्युतमभ्यगाद् द्रुतम् ॥ ५२ ॥
आधावतो भीमगदस्य बाहुं
भल्लेन छित्त्वाऽथ रथाङ्गमद्भुतम् ।
वधाय साल्वस्य लयार्कसन्निभं
बिभ्रद् बभौ सार्क इवोदयाचलः ॥ ५३ ॥
जहार तेनैव शिरः सकुण्डलं
किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो
बभूव हाहेति वचस्तदा नृणाम् ॥ ५४ ॥
तस्मिन् निपतिते पापे सौभे चाब्धौ निपातिते ।
देवदुन्दुभयो नेदुर्ववृषुः पुष्पवृष्टयः ॥ ५५ ॥
स्तूयमानो मुनिगणैः सूतमागधवन्दिभिः ।
आजगाम वृतः सैन्यैः पुरीं द्वारावतीं हरिः ॥ ५६ ॥
सम्प्रविश्य पुरीं रम्यां पताकाखण्डमण्डिताम् ।
अलङ्कृतामलङ्कारैः सिक्तसम्मृष्टचत्वराम् ॥ ५७ ॥
पूजितो यदुभिर्वृद्धैः पौरजानपदैस्तथा ।
रमयन् व्यष्टसाहस्रमहिषीः प्रेमविह्वलाः ।
उवास देवकीपुत्रः सानन्दं कुरुनन्दन ॥ ५८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टाशीतितमोऽध्यायः ॥

## अथ एकोननवतितमोऽध्यायः

श्रीशुक उवाच—
उपविष्टे सुधर्मायां कदाचित् क्षत्रियैर्वृतम् ।
विज्ञापयद् वेत्रपाणिर्द्वाःस्थोऽभ्येत्य जनार्दनम् ॥ १ ॥
शक्रप्रस्थाद् द्विजः कश्चिदागत्य द्वारि तिष्ठति ।
प्रवेशितव्यो वा देव न वेति यदुसत्तम ॥ २ ॥
प्रवेशयेति कृष्णेन द्वाःस्थेनोक्तेन सत्वरम् ।
प्रवेशितः प्रणम्याह ब्राह्मणः पुरुषोत्तमम् ॥ ३ ॥
धर्मजो धार्तराष्ट्रेण मूढेनाधर्मचारिणा ।
अक्षैः पराजितो यातः सभार्यः सानुजो वनम् ॥ ४ ॥
ब्राह्मणेनोदितां वाणीमित्याकर्ण्य सुदुःश्रवाम् ।
क्रोधोद्विग्नमनास्तूर्णमुत्तस्थे हरिरासनात् ॥ ५ ॥
स रथं दारुकानीतमारुह्य सह सत्यया ।
महत्या सेनया सार्धं ययौ यत्र पृथासुताः ॥ ६ ॥
वने वसन्तं राजानं ब्राह्मणैः परिवारितम् ।
दृष्ट्वाऽनुशोचत् सुभृशं सानुजं यदुनन्दनः ॥ ७ ॥
व्यसनान्यनुभुक्तानि वर्णयित्वा परस्परम् ।
उषित्वा तत्र तां रात्रिं पाण्डवैः सह केशवः ॥ ८ ॥
हेतुवाक्यैः समाश्वास्य धर्मराजं युधिष्ठिरम् ।
भीमसेनार्जुनौ चैव यमौ च यदुनन्दनः ॥ ९ ॥
पाञ्चालीं द्रौपदीं साध्वीं सत्यभामासमन्वितः ।
आश्वास्य तामनुज्ञाप्य ब्राह्मणांश्च सहस्रशः ॥ १० ॥
सुभद्रामभिमन्युं च रथमारोप्य केशवः ।
आजगाम वनाद् राजन् पुरीं द्वारवतीं प्रभुः ॥ ११ ॥
स प्रविश्य पुरीं दिव्यां पार्थविश्लेषदुर्मनाः ।
उवास पालयन् पृथ्वीं धर्मेणान्यांश्च कालयन् ॥ १२ ॥
एकदोपवनं राजन् जग्मुर्यदुकुमारकाः ।
विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥ १३ ॥

क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः ।
जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ १४ ॥

कृकलासं गिरिनिभं वीक्ष्य विस्मितचेतसः ।
तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयाऽन्विताः ॥ १५ ॥

चर्मभिस्तं तथा पाशैर्बद्ध्वा पतितमर्भकाः ।
नाशक्नुवन् समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ १६ ॥

तत्र गत्वाऽरविन्दाक्षो भगवान् विश्वभावनः ।
वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ १७ ॥

स उत्तमश्लोककराभिमृष्टो
विहाय सद्यः कृकलासरूपम् ।
सन्तप्तचामीकरचारुवर्णः
स्वर्ग्यद्भुतालङ्करणाम्बरस्रक् ॥ १८॥

भूत्वा मुकुन्दस्य पदारविन्दं
ननाम मूर्ध्ना पतितो धरण्याम् ।
पप्रच्छ विद्वानपि तस्य कर्म
जनेषु विख्यापयितुं मुकुन्दः ॥ १९ ॥

श्रीभगवानुवाच—
कस्त्वं महाभाग वरेण्यरूपो
देवोत्तमं त्वां गणयामि नूनम् ।
दशामिमां त्वं कतमेन कर्मणा
सम्प्रापितो ह्यतदर्हः सुभद्र ॥ २० ॥

आत्मानमाख्याहि विवित्सतां नो
यन्मन्यसेऽङ्ग क्षममत्र वक्तुम् ॥ २१ ॥

इति राजन् सुसम्पृष्टः कृष्णेनानन्तमूर्तिना ।
प्रतीतः प्रणिपत्याह किरीटेनार्कवर्चसा ॥ २२ ॥

नृग उवाच—
नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ।
दानिषु ख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ २३ ॥

किन्नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः ।
कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥ २४ ॥

यावन्त्यः सिकता भूमेर्यावन्त्यो दिवि तारकाः ।
यावन्त्यो वर्षधाराश्च तावतीरददं स्म गाः ॥ २५ ॥

पयस्विनीस्तरुणीः शीलरूप-
गुणोपपन्नाः कपिला हेमशृङ्गीः ।
न्यायार्जिता रूप्यखुराः सवत्सा
दुकूलमालाभरणा ददावहम् ॥ २६ ॥

स्वलङ्कृतेभ्यो गुणशीलवद्भ्यः
सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः ।
तपःश्रुतब्रह्मवदान्यसद्भ्यः
प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥ २७ ॥

गोभूहिरण्यायतनाश्वहस्तिनः
कन्याः सदासीस्तिलरूप्यशय्याः ।
वासांसि रत्नानि परिच्छदान् रथा-
निष्टं च यज्ञैश्चरितं च पूर्तैः ॥ २८ ॥

कस्यचिद् द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने ।
संपृक्ताऽविदुषा सा च मया दत्ता द्विजातये ॥ २९ ॥

तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् ।
ममेति प्रतिग्राह नृगो मे दत्तवानिति ॥ ३० ॥

विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ ।
भवान् दाताऽपहर्तेति तच्छ्रुत्वा मेऽभवद् भ्रमः ॥ ३१ ॥

अनुनीतावुभौ विप्रौ धर्मकृच्छ्रं गतेन मे ।
गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥ ३२ ॥

भवन्तावनुगृह्णीतां किङ्करस्याविजानतः ।
समुद्धरत मां कृच्छ्रात् पतन्तं निरयेऽशुचौ ॥ ३३ ॥

नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् ।
नान्यं गवामप्ययुतमिच्छामीत्यपरो ययौ ॥ ३४ ॥

ततोऽहं कालयोगेन मृतः परममायया ।
एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमक्षयम् ॥ ३५ ॥

यमेन पृष्टस्तत्राहं देवदेव जगत्पते ।
त्वं पूर्वमशुभं भुङ्क्ष उताहो नृपते शुभम् ॥ ३६ ॥

नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः ।
पूर्वमेवाशुभं भुञ्जे इति प्राह पतेति सः ॥ ३७ ॥

तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो ।
ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ॥ ३८ ॥

स्मृतिर्नाद्यापि विध्वस्ता तव सन्दर्शनार्थिनः ।
देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ॥ ३९ ॥

नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय
अनुजानीहि मां कृष्ण यातुं देवगतिं प्रभो ॥ ४० ॥

यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ ४१ ॥

नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये ।
कृष्णाय वासुदेवाय योगानां पतये नमः ॥ ४२ ॥

इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ।
अनुज्ञातो विमानाग्र्यमारुहत् पश्यतां नृणाम् ॥ ४३ ॥

कृष्णः परिजनं प्राह भगवान् देवकीसुतः ।
ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ४४ ॥

दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ।
तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ४५ ॥

नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ।
ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ ४६ ॥

हिनस्ति विषमत्तारमग्निरद्भिः प्रशाम्यति ।
कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ४७ ॥

ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् ।
प्रसह्य तु बलाद् भुक्तं दशपूर्वान् दशावरान् ॥ ४८ ॥

राजानो राजलक्ष्म्याश्च नात्मपातं प्रचक्षते ।
निरये येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः ॥ ४९ ॥

गृह्णन्ति यावतः पांसून् रुदतामश्रुबिन्दवः ।
विप्राणां हृतवित्तानां वदान्यानां कुटुम्बिनाम् ॥ ५० ॥

राजानो राजकुल्याश्च तावतोऽब्दान् निरङ्कुशाः ।
नरके तु विपच्यन्ते ब्रह्मदायापहारिणः ॥ ५१ ॥

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत यः ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ५२ ॥

न मे ब्रह्मधनं भूयाद् यद्गृध्वाऽल्पायुषो नृपाः ।
पराजिताश्च्युताः स्थानाद् भवन्त्युद्वेजिता नृपाः ॥ ५३ ॥

विप्रं कृतागसमपि नैव द्रुह्यत मामकाः ।
घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ॥ ५४ ॥

यथाऽहं प्रणमे विप्रान् सर्वकालं समाहितः ।
तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥ ५५ ॥

ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः ।
अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ॥ ५६ ॥

एवं विश्राव्य भगवान् मुकुन्दो द्वारकौकसः ।
पावनः सर्वलोकानां विवेश निजमन्दिरम् ॥ ५७ ॥

श्रीशुक उवाच—
सद्भिः समागमो राजन् कदाचिन्नाफलो भवेत् ।
विमुक्तो नरकाद् राजा नृगः साधुसमागमात् ॥ ५८ ॥

साधूनां दर्शनं स्पर्शः कीर्तनं स्मरणं तथा ।
तीर्थानामिव पुण्यानां सर्वमेव हि पावनम् ॥ ५९ ॥

एतत् श्रुत्वा त्वया सन्तः सदोपास्याः परन्तप ।
ब्रह्मस्वं नैव हर्तव्यं यदीच्छसि परां गतिम् ॥ ६० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकोननवतितमोऽध्यायः ॥

# अथ नवतितमोऽध्यायः

श्रीशुक उवाच—
बलभद्रः कुरुश्रेष्ठ भगवान् रथमास्थितः ।
सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥ १ ॥

परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च ।
रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥ २ ॥

चिरं नः पाहि दाशार्ह सानुगो जगदीश्वर ।
इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलैः ॥ ३ ॥

गोपवृद्धांश्च विधिवद् यविष्ठैरभिवादितः ।
यथावयो यथासख्यं यथासम्बन्धमात्मनः ॥ ४ ॥

समुपेत्याथ गोपाला हास्यहस्तग्रहादिभिः ।
विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपासिताः ॥ ५ ॥

पृष्टाश्चाकथयत् स्वेपु प्रेमगद्गदया गिरा ।
कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः ॥ ६ ॥

कच्चिन्नो बान्धवा राम सर्वे कुशलमासते ।
कच्चित् स्मरथ नो राम यूयं दारसुतान्विताः ॥ ७ ॥

दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ।
निहत्य निर्जित्य रिपून् दिष्ट्या दुर्गं समाश्रिताः ॥ ८ ॥

गोप्यो हसन्त्यः पप्रच्छू रामसन्दर्शनादृताः ।
कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥

कच्चित् स्मरति वा बन्धून् पितरं मातरं च सः ।
अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥ १० ॥

मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि ।
यदर्थेऽहिन्म दाशार्ह दुस्त्यजान् स्वजनान् प्रभो ॥ ११ ॥

ता नः सद्यः परित्यज्य गतः सञ्छिन्नसौहृदः ।
कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥ १२ ॥

कथं नु गृह्णन्त्यनवस्थितात्मनो
वचः कृतघ्नस्य मुधाऽपरस्त्रियः ।
कृष्णस्य वैचित्र्यकथस्य सुन्दर-
स्मितावलोकोच्छ्वसितस्मरातुराः ॥ १३ ॥

किं नस्तत्कथया गोप्यः कथाः कथयतापराः ।
यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥ १४ ॥

श्रीशुक उवाच—
इति प्रहसितं शौरेर्जल्पितं चारुवीक्षितम् ।
गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः ॥ १५ ॥

सङ्कर्षणस्ताः कृष्णस्य सन्देशैर्हृदयङ्गमैः ।
सान्त्वयामास भगवान् नानानुनयकोविदः ॥ १६ ॥

द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ।
रामः क्षपासु भगवान् गोपीनां रतिमावहन् ॥ १७ ॥

पूर्णचन्द्रकरामृष्टे कौमुदीगन्धवायुना ।
यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥ १८ ॥

वरुणप्रेषिता देवी वारुणी वृक्षकोटरात् ।
पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत् ॥ १९ ॥

तं गन्धं मधुधाराया वायुनोपहृतं बलः ।
आघ्रायोपगतस्तत्र ललनाभिः पपौ समम् ॥ २० ॥

नेदुर्दुन्दुभयो व्योम्नि ववृषुः कुसुमैर्मुदा ।
गन्धर्वा मुनयो रामं तद्वीर्यैरीडिरे मुदा ॥ २१ ॥

उपगीयमानचरितो वनिताभिर्हलायुधः ।
वनेषु व्यचरत् क्षीवो माहेन्द्र इव वारणः ॥ २२ ॥

स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया ।
बिभ्रत् स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥ २३ ॥

स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ।
निजवाक्यमनादृत्य मत्त इत्यापगां बलः ॥ २४ ॥

अनागतां हलाग्रेण कुपितो विचकर्ष ह ।
पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता ॥ २५ ॥

नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ।
एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् ॥ २६ ॥

उवाच चकिता वाचं पतित्वा पादयोर्नृप ॥ २७ ॥

यमुनोवाच—
रामराम महाबाहो न जाने तव विक्रमम् ।
यस्यैकांशेन विधृता जगती जगतां पते ॥ २८ ॥

परं भावं भगवतो भगवन् मामजानतीम् ।
मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तवत्सल ॥ २९ ॥

ततो व्यमुञ्चत् यमुनां याचितो भगवान् बलः ।
विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥ ३० ॥

कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे ।
भूषणानि विचित्राणि ददौ कान्तिमती स्रजम् ॥ ३१ ॥

वसित्वा वाससी नीले मालामामुच्य काञ्चनीम् ।
रेजे स्वलङ्कृतस्ताभिर्माहेन्द्र इव वारणः ॥ ३२ ॥

अद्यापि दृश्यते राजन् यमुनाऽऽकृष्टवर्त्मना ।
बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥ ३३ ॥

एवं सर्वा निशा याता एकेव रमतो व्रजे ।
रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ ३४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे नवतितमोऽध्यायः ॥

# अथ एकनवतितमोऽध्यायः

राजोवाच—

भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः ।
अनन्तस्याप्रमेयस्य यदन्यत् कृतवान् प्रभुः ॥ १ ॥

श्रीशुक उवाच—

नरकस्य सखा कश्चिद् द्विविदो नाम वानरः ।
सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥ २ ॥

सख्युः सोऽपचितिं कुर्वन् वानरो राष्ट्रविप्लवम् ।
पुरग्रामाकरान् घोषानदहद् वह्निमुत्सृजन् ॥ ३ ॥

क्वचित् स शैलानुत्पाट्य तैर्देशान् समचूर्णयत् ।
आनर्तान् सुतरामेत्य यत्रास्ते शत्रुहा हरिः ॥ ४ ॥

क्वचित् समुद्रमध्यस्थो दोर्भ्यामुद्धृत्य तज्जलम् ।
देशान् नागायुतप्राणो वेलाकूलानमज्जयत् ॥ ५ ॥

आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ।
अदूषयच्छकृन्मूत्रैरग्नीन् वैतानिकान् खलः ॥ ६ ॥

पुरुषान् योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ।
निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकम् ॥ ७ ॥

तं देशं विप्रकुर्वन् वै धर्षयंश्च कुलस्त्रियः ।
श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥

तत्रापश्यद् यदुपतिं रामं पुष्करमालिनम् ।
सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम् ॥ ९ ॥

गायन्तं वारुणीं पीत्वा मदविह्वललोचनम् ।
विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥ १० ॥

दुष्टः शाखामृगः शाखामारूढः कम्पयन् द्रुमान् ।
चक्रे किलिकिलाशब्दमात्मानं सम्प्रदर्शयन् ॥ ११ ॥

तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलम् ।
हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥ १२ ॥

ता हेलयामास कपिर्भ्रूक्षेपैः सम्मुखादिभिः ।
सन्दर्शयन् गुदं तासां रामस्य च निरीक्षतः ॥ १३ ॥

तं ग्राव्णा प्राहरत् क्रुद्धो बलः प्रहरतां वरः ।
स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः ॥ १४ ॥

गृहीत्वा हेलयामास धूर्तस्तं कोपयन् भृशम् ।
भृशं निर्भिद्य कलशं वासांस्यास्फालयद् बलात् ॥ १५ ॥

कदर्थीकृत्य बलवान् विप्रचक्रे बलोद्धतः ।
तस्याप्यविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ १६ ॥

क्रुद्धो मुसलमादत्त हलं चारिजिघांसया ।
द्विविदोऽपि महावीर्यः शैलमुत्पाट्य पाणिना ॥ १७ ॥

अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ।
तं तु सङ्कर्षणो मूर्ध्नि पतन्तमचलं रुषा ॥ १८ ॥

प्रतिजग्राह भगवान् मुसलेनाहनच्च तम् ।
मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ १९ ॥

गिरिर्यथाऽऽगैरिकया प्रहारं नान्वचिन्तयत् ।
पुनरन्यं समुत्पाट्य कृत्वा निष्पत्रमोजसा ॥ २० ॥

तेनाहनत् सुसंक्रुद्धस्तं बलः शतधाऽरुजत् ।
ततोऽन्यमुत्पाट्य जघ्ने तं चापि शतधाऽच्छिनत् ॥ २१ ॥

एवं युद्ध्यन् भगवता भग्ने भग्ने पुनः पुनः ।
आकृष्य सर्वतो वृक्षान् निर्वृक्षमकरोद् वनम् ॥ २२ ॥

ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः ।
तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २३ ॥

स बाहू तालसङ्काशौ मुष्टीकृत्य कपीश्वरः ।
आसाद्य रोहिणीपुत्रं दोर्भ्यां वक्षस्यरूरुजत् ॥ २४ ॥

यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गले ।
जत्रावताडयत् क्रुद्धः सोऽपतद् रुधिरं वमन् ॥ २५ ॥

चकम्पे तेन पतता सकण्टकवनस्पतिः ।
पर्वतो नृपशार्दूल वायुना नौरिवाम्भसि ॥ २६ ॥

जयशब्दो नमःशब्दः साधु साध्विति चाम्बरे ।
सुरसिद्धमुनीन्द्राणामासीत् कुसुमवर्षिणाम् ॥ २७ ॥

एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ।
संस्तूयमानो भगवान् जनैः स्वपुरमाविशत् ॥ २८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकनवतितमोऽध्यायः ॥

# अथ द्विनवतितमोऽध्यायः

श्रीशुक उवाच—
दुर्योधनसुतां राजन् लक्षणां समितिञ्जयः ।
स्वयंवरस्थामहरत् साम्बो जाम्बवतीसुतः ॥ १ ॥

कुरवः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः ।
कदर्थीकृत्य नः कन्यामकामामहरद् बलात् ॥ २ ॥

बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः ।
येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥ ३ ॥

निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः ।
भग्नदर्पाः शमं यान्ति शीर्णदन्ता इवाहयः ॥ ४ ॥

इति कर्णं समालोक्य भूरिश्रवसुयोधनौ ।
सदुःशासनगान्धारी दुर्मन्त्रैकान्तशीलिनौ ॥ ५ ॥

एतेऽतिक्रम्य विदुरं गान्धारीं च यशस्विनीम् ।
साम्बमारेभिरे बद्धुं कुरुवृद्धैरसङ्गताः ॥ ६ ॥

दृष्ट्वाऽनुधावतः साम्बो धार्तराष्ट्रान् महारथः ।
प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ७ ॥

ते तं जिघृक्षवः क्रुद्धं तिष्ठ तिष्ठेति वादिनः ।
आसाद्य धन्विनो बाणैः कर्णमुख्याः समाकिरन् ॥ ८ ॥

सोऽतिविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः ।
नामृष्यत् तत्परिभवं दण्डाहत इवोरगः ॥ ९ ॥

विष्फार्य सुमहच्चापं सर्वान् विव्याध सायकैः ।
कर्णादीन् सहयाग्रण्यांस्ताविद्भिर्युगपत् पृथक् ॥ १० ॥

चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् ।
रथिनश्च महेष्वासास्तस्य तत् तेऽभ्यपूजयन् ॥ ११ ॥

तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ।
एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥ १२ ॥

ते तथा विरथं कृत्वा कृच्छ्रेण कुरवो युधि ।
कुमारं गृह्य कन्यां च स्वपुरं जयिनोऽविशन् ॥ १३ ॥

तच्छ्रुत्वा नारदोक्तेन राजन् सञ्जातमन्यवः ।
कुरून् प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ १४ ॥

सान्त्वयित्वा तु तान् रामः सन्नद्धान् वृष्णिपुङ्गवान् ।
नैच्छत् कुरूणां वृष्णीनां कलिं कलहशङ्कितः ॥ १५ ॥

जगाम हास्तिनपुरं रथेनादित्यवर्चसा ।
ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥ १६ ॥

गत्वा गजाह्वयं रामो बाह्योपवनमाश्रितः ।
उद्धवं प्रेषयामास धृतराष्ट्राय शान्तये ॥ १७ ॥

सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् ।
दुर्योधनं च विधिवद्ब्रवीद् राममागतम् ॥ १८ ॥

तेऽतिप्रीताः समाकर्ण्य प्राप्तं रामं सुहृत्तमम् ।
तमर्चयित्वाऽभिययुः सर्वे मङ्गलपाणयः ॥ १९ ॥

तं सङ्गम्य यथान्यायं गामर्घ्यं च न्यवेदयन् ।
तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ २० ॥

बन्धून् कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् ।
परस्परमथो रामो बभाषेऽविक्लवं वचः ॥ २१ ॥

उग्रसेनः क्षितीशेशो यद् व आज्ञापयत् प्रभुः ।
तदव्यग्रधियः श्रुत्वा कुरुध्वं मा विलम्बितम् ॥ २२ ॥

यद् यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् ।
अबध्नीताथ तन्मृष्ये बन्धूनामिष्टकाम्यया ॥ २३ ॥

वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः ।
कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥ २४ ॥

अहो महच्चित्रमिदं कालगत्या दुरत्ययम् ।
आरुरुक्षत्युपानद् वै शिरो मकुटसेवितम् ॥ २५ ॥

एते यौनेयसम्बन्धाः सहशय्यासनाशनाः ।
वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥ २६ ॥

चामरव्यजने शङ्खमातपत्रं च पाण्डुरम् ।
किरीटमासनं महां भुञ्जन्त्यस्मदुपेक्षया ॥ २७ ॥

अलं यदूनां नरदेवलाञ्छनै-
र्दातृप्रतीपैः फणिनामिवामृतैः ।
येऽस्मत्प्रसादोपचिता हि यादवा
आज्ञापयन्त्यद्य गतत्रपा बत ॥ २८ ॥

कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः ।
अदत्तमवरुन्धीत सिंहग्रस्त इवोरणः ॥ २९ ॥

श्रीशुक उवाच—
जन्मबन्धुश्रियोन्नद्धमदास्ते भरतर्षभ ।
आश्राव्य रामं दुर्वाक्यैरसभ्याः पुरमाविशन् ॥ ३० ॥

दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि चाच्युतः ।
अवोचत् कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन् मुहुः ॥ ३१ ॥

नूनं नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः ।
तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा ॥ ३२ ॥

अहो यदून् सुसंरब्धान् कृष्णं च कुपितं शनैः ।
सान्त्वयित्वाहमेतेषां शममिच्छन्निहागतः ॥ ३३ ॥

त इमे मन्दमतयः कलहाभिरताः खलाः ।
तस्मात् तं मामवज्ञाय दुर्भाषान् मानिनोऽब्रुवन् ॥ ३४ ॥

नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः ।
शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥ ३५ ॥

सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्घ्रिपः ।
आनीय भुज्यते सोऽसौ न किलाध्यासनार्हकः ॥ ३६ ॥

यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ।
स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥ ३७ ॥

यस्याङ्घ्रिपङ्कजरजोऽखिललोकपाल-
मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।
ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः
श्रद्धामहे सुचिरमस्य नृपासनं क्व ॥ ३८ ॥

भुज्यते कुरुभिर्दत्तं भूखण्डं वृष्णिभिः किल ।
उपानहः किल वयं स्वयं तु कुरवः शिरः ॥ ३९ ॥

अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ।
असम्बद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥ ४० ॥

अद्य निष्कौरवां पृथ्वीं करिष्यामीत्यमर्षितः ।
गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥ ४१ ॥

लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् ।
विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥ ४२ ॥

जलयानमिवाघूर्णं गङ्गायां नगरं पतत् ।
आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ॥ ४३ ॥

तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः ।
सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयोऽब्रुवन् ॥ ४४ ॥

राम रामाखिलाधार प्रभावं न विदाम ते ।
मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यधीश्वर ॥ ४५ ॥

स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ।
लोकान् क्रीडनकानीश क्रीडतस्ते वदन्ति हि ॥ ४६ ॥

त्वमेव मूर्ध्नीदमनन्त लीलया
भूमण्डलं बिभर्षि सहस्रमूर्धन् ।
अन्ते च यः स्वात्मनि रुद्धविश्वः
शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४७ ॥

कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् ।
बिभ्रतो भगवन् सत्त्वं स्थितिपालनतत्परः ॥ ४८ ॥

नमस्ते सर्वभूतात्मन् सर्वशक्तिधराव्यय ।
विश्वकर्मन् नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ४९ ॥

एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ।
प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ ॥ ५० ॥

दुर्योधनः पारिबर्हं कुञ्जरान् षष्टिहायनान् ।
ददौ च द्वादशशतान्ययुतानि तुरङ्गमान् ॥ ५१ ॥

रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ।
दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ ५२ ॥

प्रतिगृह्य तु तत्सर्वं भगवान् सात्वतर्षभः ।
ससुतः सस्नुषः प्रायात् सुहृद्भिरभिनन्दितः ॥ ५३ ॥

ततः प्रविष्टः स्वपुरं हलायुधः
समेत्य बन्धूननुरक्तचेतसः ।
शशंस सर्वं यदुपुङ्गवानां
मध्ये सभायां कुरुषु स्वचेष्टितम् ॥ ५४ ॥

अद्यापि च पुरं ह्येतत् सूचयद् रामविक्रमम् ।
समुन्नतं दक्षिणतो गङ्गायामनुदृश्यते ॥ ५५ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टषष्टितमोऽध्यायः ॥

# अथ त्रिनवतितमोऽध्यायः

श्रीशुक उवाच—

वृष्णिष्वासीद् यदुश्रेष्ठः श्रुतदेव इति श्रुतः ।
कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ॥ १ ॥

स उवास विदेहेषु मिथिलायां गृहाश्रमी ।
अनीहयाऽऽगताहार्यो निर्वर्तितजपक्रियः ॥ २ ॥

यावन्मात्रं त्वहरहर्दैवादुपनमत्ययम् ।
नाधिकं तपसा तुष्टः क्रियाश्चक्रे यथोचिताः ॥ ३ ॥

तथा तद्राष्ट्रपालोऽभूद् बहुलाश्व इति श्रुतः ।
मैथिलो निरहम्मान उभावप्यच्युतप्रियौ ॥ ४ ॥

तयोः प्रसन्नो भगवान् दारुकेणाहृतं रथम् ।
आरुह्य सहितो विप्रैर्मिथिलां प्रययौ प्रभुः ॥ ५ ॥

सहितः सात्वतश्रेष्ठो मुनिभिस्तत्त्वदर्शिभिः ।
कदाचित् कौरवश्रेष्ठ विदेहाय ययौ प्रभुः ॥ ६ ॥

नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ।
अहं बृहस्पतिः कण्वो मैत्रेयश्च पराशरः ।
वसिष्ठः काश्यपश्चैव भरद्वाजोऽथ गौतमः ॥ ७ ॥

तत्र तत्र समायान्तं पौरा जानपदान्विताः ।
उपतस्थुः सार्घ्यहस्ता लोकाः सूर्यमिवोदितम् ॥ ८ ॥

आनर्तधन्वकुरुजाङ्गलटङ्कमत्स्य-
पाञ्चालकुन्तिमधुकैकयकोसलार्णाः ।
अन्ये च तन्मुखसरोजमुदारहास-
स्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ ९ ॥

तेभ्यः स्ववीक्षणनिरस्ततमिस्रदृग्भ्यः
क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ।
शृण्वन् दिगन्तधवलं स्वयशोऽशुभघ्नं
गीतं सुरैर्नृभिरयाच्छनकैर्विदेहान् ॥ १० ॥

तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ।
अभ्ययुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ ११ ॥

दृष्ट्वा तमुत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ।
कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वं तथा मुनीन् ॥ १२ ॥

स्वानुग्रहाय सम्प्राप्तं सत्यभूतं जगद्गुरुम् ।
मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ १३ ॥

न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः ।
मैथिलः श्रुतदेवश्च युगपत् संहताञ्जली ॥ १४ ॥

भगवांस्तदभिप्रेत्य तयोः प्रियचिकीर्षया ।
उभयोराविशद् गेहं रूपाभ्यां तदलक्षितः ॥ १५ ॥

श्रोतुमप्यसतां दूरान् जनकः स्वगृहागतान् ।
आनीतेष्वासनाग्र्येषु सुखासीनान् महामनाः ॥ १६ ॥

प्रवृद्धभक्त्युरुत्कर्षहृदयास्राविलेक्षणः ।
नत्वा तदङ्घ्रीन् प्रक्षाल्य तदपो लोकपावनीः ॥ १७ ॥

सकुटुम्बो वहन् मूर्ध्नि पूजयाञ्चक्र ईश्वरम् ।
गन्धमाल्याम्बराकल्पधूपदीपार्घ्यगोवृषैः ॥ १८ ॥

वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ।
पादावङ्कगतौ विष्णोः संस्पृशञ्छनकैर्मुदा ॥ १९ ॥

राजोवाच—

भवान् वै सर्वजीवानामात्मा साक्षी सुहृद् विभुः ।
अयं नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥ २० ॥

स्ववचस्तद् ऋतं कर्तुमस्मद्दृग्गोचरो भवान् ।
यदा त्वेकान्तभक्तानामात्माऽनन्तोऽरजाः प्रियः ॥ २१ ॥

को नु त्वच्चरणाम्भोजमेवंविद् विसृजेत् प्रभो ।
निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥ २२ ॥

योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ।
यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥ २३ ॥

नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे ।
नारायणाय ऋषये सुशान्तं तप ईयुषे ॥ २४ ॥

दिनानि कतिचिद् भूमन् गृहे नो निवसन् द्विजैः ।
समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥ २५ ॥

इत्युपामन्त्रितो राज्ञा भगवान् लोकभावनः ।
उवास कुर्वन् कल्याणं मिथिलानरयोषिताम् ॥ २६ ॥

श्रुतदेवोऽच्युतं प्राप्तं स्वगृहं जनको यथा ।
मत्वा मुनींश्च सन्तुष्टो धुन्वन् वासो ननर्त ह ॥ २७ ॥

तृणपीठे सशिष्यांस्तानास्तृतेषूपवेश्य सः ।
स्वागतेनाभिनन्द्याङ्घ्रिं सभार्योऽवनिजे मुदा ॥ २८ ॥

तदम्भसा महाभाग आत्मानं स्वगृहान्वयम् ।
स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥ २९ ॥

सिद्धार्हणोशीरशिवामृताम्भसा
मृदा सुरभ्या तुलसीकुशाम्बुजैः ।
आराधयामास यथोपपन्नया
सपर्यया सत्वविवर्धमानया ॥ ३० ॥

स तर्कयामास कुतो ममापतत्
गृहान्धकूपे पतितस्य सङ्गमः ।
यः सर्वतीर्थास्पदपादरेणुभिः
कृष्णेन चाध्यात्मनिकेतभूसुरैः ॥ ३१ ॥

सूपविष्टान् कृतातिथ्यान् श्रुतदेव उपस्थितः ।
सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ॥ ३२ ॥

श्रुतदेव उवाच—
अद्य नो दर्शनं प्राप्तः परः परमपूरुषः ।
य इदं शक्तिभिः सृष्ट्वा विभजत्यात्मसत्तया ॥ ३३ ॥

यथा शयानः पुरुषो मनसा चात्ममायया ।
सृष्ट्वा लोकं परं स्वाप्नमवरुद्ध्यावभासते ॥ ३४ ॥

शृण्वतां गदतां शश्वद् दर्शिनामभिनन्दताम् ।
नृणां संवसतां नित्यं हृदिस्थो योऽमलात्मनाम् ॥ ३५ ॥

हृदिस्थोऽप्यथ दूरस्थः कर्मविक्षिप्तचेतसाम् ।
आत्मशक्तिभिरग्राह्यो ह्यर्थाकारोऽगुणात्मकः ॥ ३६ ॥

नमोऽस्तु तेऽध्यात्मविदां परात्मने
सर्वात्मने स्वात्मविभक्तमूर्तये ।
सकारणाकारणलिङ्गमीयुषे
स्वमाययाऽसंवृतदृष्टये नमः ॥ ३७ ॥

स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ।
एतदन्तो नृणां क्लेशो यद् भवानक्षिगोचरः ॥ ३८ ॥

श्रीशुक उवाच—
तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्तिहा ।
गृहीत्वा पाणिना पाणिं प्रहसन् तमुवाच ह ॥ ३९ ॥

श्रीभगवानुवाच—
ब्रह्मंस्तेऽनुग्रहार्थाय सम्प्राप्तान् विद्ध्यमून् मुनीन् ।
सञ्चरन्ति मया लोकान् पुनन्तः पादरेणुभिः ॥ ४० ॥

देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ।
लोकान् पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥ ४१ ॥

ब्राह्मणो जन्मना श्रेयान् सर्वेषां प्राणिनामिह ।
तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ४२ ॥

न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ४३ ॥

दुष्प्रज्ञा अविदित्वैनमवजानन्त्यसूयवः ।
गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ४४ ॥

चराचरमिदं विश्वं भावये चास्य हैतवम् ।
मद्रूपाण्येभिरेतस्यां धत्ते विप्रो मदीक्षया ॥ ४५ ॥

तस्माद् ब्रह्म ऋषीनेतान् ब्रह्मन् मच्छ्रद्धयार्चय ।
एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ४६ ॥

श्रीशुक उवाच—
स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान् द्विजोत्तमान् ।
आराध्यैकान्तभावेन मैथिलश्चाप सद्गतिम् ॥ ४७ ॥

एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् ।
उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ४८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षडशीतितमोऽध्यायः ॥

# अथ चतुर्नवतितमोऽध्यायः

राजोवाच—
देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।
प्रायस्ते धनिनो ब्रह्मन् न तु लक्ष्मीपतिं हरिम् ॥ १ ॥

एतद् वेदितुमिच्छामि सन्देहोऽत्र महान् हि नः ।
विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिम् ॥ २ ॥

श्रीशुक उवाच—
शिवः शक्तियुतः शश्वत् त्रिलिङ्गो गुणसंवृतः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥

ततो विकारा अभवन् षोडशामीषु पञ्चसु ।
उपाधावन् विभूतीनां सर्वासामश्नुते फलम् ॥ ४ ॥

हरिस्तु निर्गुणः साक्षात् पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत् ॥ ५ ॥

निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ।
शृण्वन् भगवतो धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥

स चाह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ।
नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥ ७ ॥

श्रीभगवानुवाच—
यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ।
ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखिनम् ॥ ८ ॥

स यदा वितथोद्योगो निर्विण्णः स्याद् धनेहया ।
मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥

तद् ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ।
अतो मां सुदुराराध्यं हित्वाऽन्यान् भजते पुनः ॥ १० ॥

ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ।
प्रमत्ता वरदान् देवान् विस्मरन्त्यवजानते ॥ ११ ॥

श्रीशुक उवाच—
शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ।
सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा च नाच्युतः ॥ १२ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
वृकासुराय गिरिशो वरं दत्त्वाऽऽप सङ्कटम् ॥ १३ ॥

वृको नामासुरः पुत्रः शकुनेः पथि नारदम् ।
दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥

स आदिदेश गिरिशमुपाधावस्व सिद्धये ।
सोऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५ ॥

दशास्यबाणयोस्तुष्टः स्तुवतोर्बन्दिनोरिव ।
ऐश्वर्यमतुलं दत्त्वा तत आप सुसङ्कटम् ॥ १६ ॥

इत्यादिष्टस्तमसुर उपाधावत् स्वगात्रतः ।
केदार आत्मक्रव्येण जुह्वन्नग्निमुखं हरम् ॥ १७ ॥

देवोपलब्धिमप्राप्य निर्वेदात् सप्तमेऽहनि ।
शिरोऽवृश्चत् सुधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥ १८ ॥

तदा महाकारुणिकः स धूर्जटि-
र्यथा वयं चाग्निरिवोत्थितोऽनलात् ।
निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्
तत्स्पर्शनाद् भूय उपाकृताकृतिः ॥ १९ ॥

तमाह चाङ्गालमलं वृणीष्व मे
यथाभिकामं वितरामि ते वरम् ।
प्रीयेय तोयेन नृणां प्रपद्यता-
महो त्वयाऽऽत्मा भृशमर्द्यते वृथा ॥ २० ॥

देवात् स वव्रे पापीयान् वरं भूतभयावहम् ।
यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥ २१ ॥

तच्छ्रुत्वा भगवान् रुद्रो दुर्मना इव भारत ।
ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥ २२ ॥

स तद्वरपरीक्षार्थं शम्भोः मूर्ध्नि किलासुरः ।
स्वहस्तं धातुमारेभे सोऽबिभेत् स्वकृताच्छिवः ॥ २३ ॥

तेनोपसृष्टः सन्त्रस्तः पराधावत् सवेपथुः ।
यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् ॥ २४ ॥

अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः ।
ततो वैकुण्ठमगमद् भास्वरं तमसः परम् ॥ २५ ॥

यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ।
शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥ २६ ॥

तं तथाव्यसनं दृष्ट्वा भगवान् वृजिनार्दनः ।
दूरात् प्रत्युदितो भूप दारको योगमायया ॥ २७ ॥
मेखलाजिनदण्डाक्षैस्तेजसाऽग्निरिव ज्वलन् ।
अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ २८ ॥

श्रीभगवानुवाच—
शाकुनेय भवान् व्यक्तं श्रान्तः किं दूरमागतः ।
क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥ २९ ॥
यदि नः श्रवणायालं युष्मद्व्यवसितं विभो ।
भण्यतां पुरुषः साधो पुम्भिः स्वार्थः समीहते ॥ ३० ॥

श्रीशुक उवाच—
एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ।
गतक्लमोऽब्रवीत् तस्मै यथापूर्वमनुष्ठितम् ॥ ३१ ॥

श्रीभगवानुवाच—
एवं चेत् तर्हि तद्वाक्यं वयं न श्रद्दधीमहि ।
यो दक्षशापात् पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥ ३२ ॥
रुषाक्रान्तशरीरोऽसौ न सत्यं वदते हरः ।
क्रोधयुक्ते कुतः सत्यं मूढोऽसि त्वं महासुर ॥ ३३ ॥
यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ ।
तर्ह्यङ्गापि स्वशिरसि हस्तन्यासः प्रदीयताम् ॥ ३४ ॥
यद्यसत्यं वचः शम्भोः कथञ्चिद् दानवर्षभ ।
तदैनं जह्यसद्वाचं न च वक्ताऽनृतं पुनः ॥ ३५ ॥
इत्थं भगवतश्चित्रैर्वचोभिश्च सुपेशलैः ।
भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्व्यधात् ॥ ३६ ॥
अथापतद् भिन्नशिरा वज्राहत इव क्षणात् ।
जयशब्दो नमःशब्दः साधुशब्दोऽभवद् दिवि ॥ ३७ ॥
मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ।
देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः ॥ ३८ ॥
मुक्तं गिरिशमप्याह भगवान् पुरुषोत्तमः ।
अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ ३९ ॥
हतः को नु कुतश्चापि जन्तुर्वै कृतकिल्बिषः ।
क्षेमी स्यात् किमु विश्वेशे कृतपापो जगद्गुरौ ॥ ४० ॥
य एवमव्याकृतशक्त्युदन्वतः
परस्य साक्षात् परमात्मनो हरेः ।
गिरिशमोक्षं कथयेत् शृणोति वा
विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुर्नवतितमोऽध्यायः ॥

## अथ पञ्चनवतितमोऽध्यायः

श्रीशुक उवाच—
सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत ।
वितर्कः समभूत् तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥
तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ।
तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद् ब्रह्मणः सभाम् ॥ २ ॥
न तस्मै ब्रह्मणे स्तोत्रं चक्रे सत्वपरीक्षया ।
तस्मै चुक्रोध भगवान् प्रज्वलन् स्वेन तेजसा ॥ ३ ॥
स आत्मन्युत्थितं मन्युमात्मजायात्मनः प्रभुः ।
अशीशमद् यथा वह्निं शमयेद् वारिणा प्रभुः ॥ ४ ॥
ततः कैलासमगमत् स तं देवो महेश्वरः ।
परिरब्धुं समारेभे उत्थाय भ्रातरं मुदा ॥ ५ ॥
नैच्छत् तमशुभाचार इति देवश्चुकोप ह ।
शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ ६ ॥
पतित्वा पादयोर्देवी शमयामास तं गिरा ।
इति कृच्छ्रात् ततो मुक्तः कैलासाद् रजताचलात् ॥ ७ ॥
मुनिर्जगाम वैकुण्ठं यत्र देवो जनार्दनः ।
शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ॥ ८ ॥
तत उत्थाय भगवान् सह लक्ष्म्या सतां गतिः ।
स्वतल्पादवरुह्याशु ननाम शिरसा मुनिम् ॥ ९ ॥
आह ते स्वागतं ब्रह्मन् निषीदात्रासने क्षणम् ।
अजानतामागसं नः क्षन्तुमर्हसि मानद ॥ १० ॥

पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् ।
पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥ ११ ॥

अथाहं भगवन् लक्ष्म्या आसमेकान्तभाजनम् ।
वत्स्यत्युरसि नो भूतिर्भवत्पादहतांहसि ॥ १२ ॥

श्रीशुक उवाच—
एवं ब्रुवाणे वैकुण्ठे भृगुस्तत्सार्द्रया गिरा ।
निर्वृतस्तर्पितस्तूर्ष्णी भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १४ ॥

पुनः स्वसत्रमासाद्य मुनीनां ब्रह्मवादिनाम् ।
स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥ १५ ॥

तं निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।
भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १६ ॥

धर्मः साक्षाद् यतो ज्ञानं वैराग्यं च चतुर्विधम् ।
ऐश्वर्यं चाष्टधा यस्माद् यशश्चात्ममलापहम् ॥ १७ ॥

मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ।
अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥ १८ ॥

सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ।
भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १९ ॥

त्रिविधा मूर्तयस्तस्य राक्षसा असुराः सुराः ।
गुणास्तन्मायया सृष्टाः सत्त्वं तत्रार्यदर्शनम् ॥ २० ॥

श्रीशुक उवाच—
इत्थं सारस्वता विप्रा नृणां संशयनुत्तये ।
पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ २१ ॥

इत्येतन्मुनितनयस्य पद्मगर्भ-
पीयूषं भवभयभित् परस्य पुंसः ।
सुश्लोकैः श्रवणपुटैः पिबन्नभीक्ष्णं
पान्थोऽध्व भ्रमणपरिश्रमं जहाति ॥ २२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चनवतितमोऽध्यायः ॥

# अथ षण्णवतितमोऽध्यायः

राजोवाच—
ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे ॥ १ ॥

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः ।
मात्रार्थं च भवार्थं च आत्मने कल्पनाय च ॥ २ ॥

सैषा ह्युपनिषद् ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद् यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३ ॥

अत्र ते वर्णयिष्यामि गाथां नारायणोदिताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥

एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥

योऽसौ भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।
धर्मज्ञानशमोपेतः साकल्पादास्थितस्तपः ॥ ६ ॥

तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।
परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥

तस्मा अवोचद् भगवान् ऋषीणां शृण्वतामिमाम् ।
यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥

श्रीभगवानुवाच—
स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत् पुरा ।
तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तमीश्वरम् ।
ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ १० ॥

तत्राप्ययमभूत् प्रश्नस्त्वं मां यदनुपृच्छसि ।
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ ११ ॥

अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ १२ ॥

सनन्दन उवाच—
स्वसृष्टमिदमापीय शयानं सहशक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १३ ॥

यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १४ ॥

श्रुतय ऊचुः—
जयजय जह्यजामजित दोषगृहीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अज जगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः ॥ १५ ॥

बृहदुपलब्धमेतदवशेषतया
यत उदगास्तमस्यविकृतेऽविकृतः ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १६ ॥

इति सूरयस्त्वधिपतेऽखिललोकमल
क्षपणं तव कथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ १७ ॥

दृतय इवोच्छ्वसन्त्यसुहृदो यदि ते
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधानवयोऽत्र चरमोत्तममध्यमादिषु य-
स्तव सदसतः परं प्रथयेदविशेषमृतम् ॥ १८ ॥

उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगाच्च नन्दनपथाऽथ शिरः परमं
पुनरिह यत् समेत्य न पतन्ति कृतान्तमुखे ॥ १९ ॥

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
भरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ।
अपि वितथास्वमूष्वविवितथोरुविधं मनसि
निकटधियो नयन्त्यभिविपत्य तव ॥ २० ॥

प्रक्रमवत् स्वसत्कृतं पुरुषेषु धीषु तु वहिरन्तरसचरणे ।
तव पुरुष वदन्त्यखिलशक्तिधृतः स्वकृतम् ॥ २१ ॥

इति विमृशन्ति कवयो निगमावपनं
य(भ)जन्त उपासते भवमध्यविनिश्वसिताः ।
दुरवगमात्मतत्त्वनिगमायतवाङ्गनस-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ २२ ॥

न परिलपन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ।
त्वदनुपथं कुलायमिदमात्मसुहृत् प्रियव-
चरन्ति तथोन्मुखास्त्वयि हिते प्रिय आत्मनि च ॥ २३ ॥

न च रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्यभवाः कुशरीरभृतः ।
निभृतमोक्षहृदययोगयुजो हृदयं
मुनय उपासते तदरयोऽपि ययुः ॥ २४ ॥

स्मरणात्स्वनुराग तद् भवान्
उरगेन्द्रभोगदण्डविषक्तधियो
वयमपि ते समासमदृशोऽङ्घ्रिसरोजसुधाम् ।
क इह नु वेद वक्तुमपेतजन्मलयो
यत उदगाद् ऋषिरनु देवगणा उभये ॥ २५ ॥

तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमपकृष्य शयीत यदा ।
जनिमसतः सतो मृतिमजात्मनि ये च भिदां
विपणमृते स्मरन्त्युपविश ध्वनिमारुवतः ॥ २६ ॥

त्रिगुणमयः पुमानिति यदवोधकृता
त्वयि न भवेत् तदववोधरसे ।
सदिव मनस्त्रिवृत् त्वयि भवत्यसतां मनुजा-
दयो विमृशन्त्यशेषमिदमार्ततयाऽऽत्मविदः ॥ २७ ॥

न हि विकृतं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्ट इदमात्मतया रसितम् ।
तव ये परिचरन्त्यखिलतत्त्वनिकेततया
ननु ते पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥ २८ ॥

परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि दृढसौहृदा ननु पुनन्ति न ते विमुखाः ।
त्वमेकः स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहन्ति समदन्ति च येऽनिमिषाः ॥ २९ ॥

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ।
स्थिरचरजातयः स्युरज ये त्वनिमित्तयुजो
विरह उदीक्षयेत् यदि परस्य विमुक्ततसतः ॥ ३० ॥

न हि परमस्य कश्चिदपरोऽनपरस्य भवेत्
व्ययत इवात्र यस्य च शून्यतुल सन्दधतः ।
अपरिमिता ध्रुवास्तनुभृतो यदि सर्व ततो
न हि न शास्यतेति नियमो ब्रुवते च तथा ॥ ३१ ॥

अजन परिमुच्यतेऽत्र भवात् सततात्
सममनुजानता ततमनन्तमदुष्टतया ।
न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजोर्भवन्त्यसुभृतो जलबुद्बुदवत् ॥ ३२ ॥

त्वयि त इमे ततो विबुधनामगुणाः परमे
अमृत इवार्णवे मधु निलिल्युरशेषरसाः ।
नृपु तव मायया स्वगतया कुशलं
त्वयि सुधियोऽङ्ग भेदमनुविधातुमनु प्रभवः ।
कथमनुवर्तिनां भवभयं तव भ्रुकुटी सृजति मुहुर्नृणाम् ॥३३॥

इह भवचरणेषु सुजातभुवो
जितहृषीकवायुभिरुदात्तमहत्तुरगैः ।
य इह यतन्त्यमतिलोलमुपायविदो
व्यसनशताब्धितारमपहाय गुरोश्चरणम् ॥ ३४ ॥

वणिज इवोच्छ्वसन्त्यकृतकर्णधरा जलधौ
स्वजनसुतात्मदारधनधामधराः ।
सुखशान्तिमिति त्वयि हि सन्ति न तानि नृणां
विभव उयति श्रयत आत्मनि सर्वरसे ॥ ३५ ॥

इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विहाय विजने स्वनिरस्तभगे ।
भुवि पुण्यतीर्थसदना ह्यषयो
निविशन्त्यतस्तु भवतः पदाम्बुजं हृदाऽघभिदम् ।
दधति सकृन्मनस्त्वयि चिदात्मनि नित्यसुखे
न पुनरुपासते पुरुषसार हरावसथम् ॥ ३६ ॥

इदमप्यथो वदन्ति चे-
न्नु तर्का व्यभिचरन्ति कचित् कचिन्मृपा च ।
ततो भयद्व्यवहितये विकल्प उपितोऽन्वहमन्धपरम्परया
भ्रमति भारती च तवोरुवृत्तिभिरूढजवा ॥ ३७ ॥

न यदिदमग्र आस न भविष्यदतो निधना-
दनिमित्तकमन्तरा त्वयि विभाति मृषैकरसे ।
अत उपगीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमिदमित्यवयन्ति बुधाः ॥ ३८ ॥

उदगात् पुमाननुगीतगुणांश्च जुषन्
भजति सरूपतां तदनु जहासि जिहासि ताम् ।
अहिरिव त्वचं परमात्मभगां
महसि महीयसेऽष्टगुणोऽपरिमेयभगः ॥ ३९ ॥

यदि न समु(त्स)चरन्ति यतयोऽपि हृदि कामजडाः
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
अनुतृप्तयोगिनामभयो भगवन्
अनवगतान्तकादनधिरूढपदाद् भवतः ॥ ४० ॥

तदवगमार्थसितासितयो-
र्गुणविगुणयोर्न हि देहभृतां सगिरः ।
अनुययुरत्र हंसकुलगीतपरम्परया ।
न तुषावरणा इव रजांसि
वान्ति वयसा सह यच्छुतय-
स्त्वयि सफलं पतन्ति न पतन्ति बन्धनाः ॥ ४१ ॥

श्रीभगवानुवाच–
इत्येतद् ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् ।
सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४२ ॥

इत्यशेषसमाम्नायपुराणोपनिषद्रसः ।
समुद्धृतः पूर्वजैस्तैर्व्योमायनमहात्मभिः ॥ ४३ ॥

त्वं चैतद् ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम् ।
धारयन् भज मे कामं कामानां निधनं नृणाम् ॥ ४४ ॥

एवं स गुरुणाऽऽदिष्टो गृहीत्वा श्रद्धयाऽऽत्मवान् ।
पूर्णः सद्यस्ततो राजन् प्राह वीरव्रतो गुरुम् ॥ ४५ ॥

नारद उवाच—
नमस्तस्मै भगवते कृष्णायामलमूर्तये ।
यो धाता सर्वभूतानामभयो यस्य ते कलाः ॥ ४६ ॥

श्रीशुक उवाच—
इत्याद्यमृषिमामन्त्र्य तच्छिष्यांश्चामलात्मकान् ।
ततोऽगादाश्रमं साक्षात् पितुर्द्वैपायनस्य मे ॥ ४७ ॥

सभाजितो भगवता कृतासनपरिग्रहः ।
तस्मै तद् वर्णयामास नारायणमुखाच्छुतम् ॥ ४८ ॥

तदेतद् वर्णितं राजन् यथ प्रश्नः कृतस्त्वया ।
येन ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥ ४९ ॥

यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनः संहिताम् ।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे षण्णवतितमोऽध्यायः ॥

# अथ सप्तनवतितमोऽध्यायः

राजोवाच—
सभाजयित्वा बहुधा श्रुतदेवं श्रियः पतिः ।
आगतो द्वारकां भूयः किं चकार महामुने ॥ १ ॥

श्रीशुक उवाच—
उपप्लाव्यं गतान् पार्थान् गोग्रहे जितकौरवान् ।
शुश्राव तीर्णसमयान् बलेन महता वृतान् ॥ २ ॥

सम्प्रहृष्टमनाः कृष्णो महत्या सेनया वृतः ।
सात्यकिं कृतवर्माणमुद्धवं शठसारणौ ॥ ३ ॥

अभिमन्युं च सौभद्रं पुरस्कृत्य महामतिः ।
अक्षौहिण्या पृतनया सहितः सत्यसङ्गरः ।
शङ्खदुन्दुभिनिर्घोषैर्दृष्टं प्रायाद् युधिष्ठिरम् ॥ ४ ॥

सन्धिमिच्छन् कौरवाणां कुर्वाणं दौत्यमच्युतम् ।
मूढो ग्रहीतुमारेभे विनशिष्णुः सुयोधनः ॥ ५ ॥

स तत्रानन्तरूपत्वं दर्शयित्वा महाभुजः ।
कृत्वा विभीषिकां घोरां पाण्डवान् पुनराययौ ॥ ६ ॥

विवृद्धमत्सराः सर्वे राजानो जातमन्यवः ।
युद्धायैवानुयुज्यन्ते न सन्धिमनुकाङ्क्षिणः ॥ ७ ॥

युधिष्ठिरस्तु धर्मात्मा पुरस्कृत्य जनार्दनम् ।
कुरुक्षेत्रं ययौ राजन् युद्धाय भ्रातृभिः सह ॥ ८ ॥

अक्षौहिण्या विराटोऽपि मत्स्यराजो महामनाः ।
युधिष्ठिरमनु प्रायात् सपुत्रः कुरुसत्तम ॥ ९ ॥

द्रुपदश्च शिखण्डी च धृष्टद्युम्नश्च दुर्जयः ।
अक्षौहिणीभिस्तिसृभिरनुजग्मुर्युधिष्ठिरम् ॥ १० ॥

अक्षौहिण्या परिवृतः सात्यकिर्युद्धलालसः ।
नियोगाद् वासुदेवस्य प्रायादनु युधिष्ठिरम् ॥ ११ ॥

अक्षौहिण्या परिवृताः कैकेयाः पञ्च भूभृतः ।
अनुजग्मुर्धर्मपुत्रं राजानं मातृसोदराः ॥ १२ ॥

धृष्टकेतुस्तदा राजा शैव्यश्च नरपुङ्गवः ॥ १३ ॥

अन्वयातां नृपश्रेष्ठावक्षौहिण्या युधिष्ठिरम् ।
ते गत्वा पाण्डवाः सर्वे नारायणपुरोगमाः ॥ १४ ॥

स्वैरमूषुः कुरुक्षेत्रे प्रतीक्षन्तः सुयोधनम् ।
सुयोधनोऽपि कौरव्य मानी भ्रातृशतैर्वृतः ।
द्रोणभीष्मकृपद्रौणिकर्णबाह्लीकसौबलैः ॥ १५ ॥

हार्दिक्यसाल्वमद्रेशभगदत्तजयद्रथैः ।
अन्यैश्च राजशार्दूलैर्नानादेशसमुद्भवैः ॥ १६ ॥

शङ्खदुन्दुभिनिर्घोषैर्भेरीपणवनिःस्वनैः ।
पूरयन् ककुभो वीरः प्रययौ कम्पयन् महीम् ॥ १७ ॥

ते समेत्य कुरुक्षेत्रे राजानो कुरुपाण्डवाः ।
समन्तपञ्चके चक्रुर्व्यूहमुद्यति भास्करे ॥ १८ ॥

अक्षौहिण्यः कौरवाणामेकादश दुरात्मनाम् ।
सप्त पाण्डुसुतानां च कर्शितानां वने भृशम् ॥ १९ ॥

तथा व्यूढेष्वनीकेषु तावकेष्वितरेषु च ।
गाण्डीवधन्वा कवची बद्धतूणतलत्रवान् ।
आरूढस्यन्दनः पार्थो ददर्श रिपुवाहिनीम् ॥ २० ॥

उपाध्यायान् पितॄन् भ्रातॄन् मातुलान् स्वस्रियान् सुतान् ।
शिष्यान् सपौत्रान् दौहित्रान् स्यालान् सम्बन्धिबान्धवान् ।
दृष्ट्वा निर्वेदमापन्नो हन्तुं नैवाकरोन्मनः ॥ २१ ॥

तं विषण्णमनश्चित्तं कृपालुमविघातिनम् ।
प्रबोध्य प्रेरयामास केशवो योगमायया ॥ २२ ॥

त्यक्तशस्त्राय शान्ताय बन्धून् प्रति कृपालवे ।
दर्शयामास पार्थाय विश्वरूपं जनार्दनः ॥ २३ ॥

सम्बोधितः कंसभिदा तथा वासवनन्दनः ।
भूयो जग्राह कोदण्डं युद्धायाच्युतसारथिः ॥ २४ ॥

प्रारब्धं भारतं युद्धं श्रुत्वा सङ्कर्षणो बली ।
अशक्नुवन् वारयितुं किं करोमीत्यचिन्तयत् ॥ २५ ॥

प्रवृत्तं भारतं युद्धमवेक्ष्योद्योगविह्वलः ।
तीर्थव्याजेन तत्याज रामः परिचितां भुवम् ॥ २६ ॥

सेनापतिः पाण्डवानां धृष्टद्युम्नो महारथः ।
गाङ्गेयो धार्तराष्ट्राणां वृद्धः कुरुपितामहः ।
स कुर्वन्नाहवं घोरं निहतो दशमेऽहनि ॥ २७ ॥

भारद्वाजं ततो द्रोणं सैनापत्ये सुयोधनः ।
न्ययोजयत् स युयुजे दिवसान् पञ्च भूपते ॥ २८ ॥

तस्मिन् युध्यति दुर्धर्षे सैन्धवेन दुरात्मना ।
अभिमन्युस्तव पिता निहतो रणमूर्द्धनि ॥ २९ ॥

पुत्रशोकाभिसन्तप्तः प्रतिजज्ञे धनञ्जयः ।
जयद्रथं हनिष्यामि श्वोभूत इति भारत ॥ ३० ॥

तस्यां निशायां गोविन्दस्त्वारुह्य गरुडं हरिः ।
सुप्तमर्जुनमादाय कैलासमभिजग्मिवान् ॥ ३१ ॥

तत्र गत्वा विरूपाक्षं दृष्ट्वा सम्भाष्य वाञ्छितम् ।
साधयित्वाऽर्जुनस्याशु स्वायोधनमुपाययौ ॥ ३२ ॥

ततोऽपरदिने युद्धमासीद् घोरं जनक्षयम् ।
मम्रुर्महीभुजस्तत्र बहवो बाहुशालिनः ॥ ३३ ॥

हतेषु रणदक्षेषु राजपुत्रेष्वनेकशः ।
जयद्रथोऽपि पार्थेन निहतो दिवसात्यये ॥ ३४ ॥

दिनानि पञ्च द्रोणोऽपि कृत्वा युद्धमतन्द्रितः ।
पञ्चमेऽहनि सन्ध्यायां धृष्टद्युम्नेन पातितः ॥ ३५ ॥

ततः सेनापतिः कर्णो भूत्वा चक्रे महारणम् ।
दिनद्वयान्ते पार्थेन स च सङ्ख्ये निपातितः ॥ ३६ ॥

शल्योऽप्यर्धदिनं कृत्वा सेनापत्यमरिन्दम ।
मध्यन्दिनगते सूर्ये धर्मराजेन पातितः ॥ ३७ ॥

युयुधाते ततो वीरौ गदया दीर्घवैरिणौ
भीमदुर्योधनौ कोपात् परस्परवधैषिणौ ॥ ३८ ॥

अष्टादशाक्षौहिणीनां तत्पतीनां च भूभृताम् ।
अष्टादशैर्दिनैरासीदर्धैः सङ्ख्यो महान् ॥ ३९ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे सप्तनवतितमोऽध्यायः ॥

## अथ अष्टनवतितमोऽध्यायः

राजोवाच—
अष्टादशाक्षौहिणीनां तावद्भिर्मायया दिनैः ।
व्यापादनं येन कृतं तस्मै विश्वात्मने नमः ॥ १ ॥

शृण्वतो मे कथास्तस्य चरितानि च सङ्घशः ।
वैक्लव्यं विस्मयो भीतिर्वर्धते मे पुनःपुनः ॥ २ ॥

मन्ये प्रायेण पाप्मानं जीर्णं मम दुरत्ययम् ।
इन्द्रियाणि प्रवृद्धानि प्रसन्नं च मनो भृशम् ॥ ३ ॥

क्षुत्तृष्णे च प्रशान्ते मे आत्मा चानन्दनिर्भरः ।
प्रसादात् तव धर्मज्ञ कृतार्थोऽहमिहाभवम् ॥ ४ ॥

अपि च श्रोतुमिच्छामि किञ्चिदर्थं तपोधन ।
युध्यतः सुहृदो दृष्ट्वा निवारितुमशक्नुवन् ॥ ५ ॥

तीर्थं स्नातुं गतो रामः किं चकार तपोधन ॥ ६ ॥

श्रीशुक उवाच—
तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ।
स्नात्वा प्रभासं सन्तर्प्य देवर्षिपितृमानवान् ॥ ७ ॥

सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ।
पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ॥ ८ ॥

विशालं ब्रह्मतीर्थं च चक्रं प्राचीसरस्वतीम् ।
यमुनामनु यात्येष गङ्गामनु च भारत ॥ ९ ॥

जगाम नैमिषं यत्र ऋषयः सत्रमासते ।
तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ।
अभिवन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ १० ॥

सोऽर्चितः सपरीवारः कृतासनपरिग्रहः ।
रोमहर्षणमासीनं शिष्यमैक्षन्महामुनेः ॥ ११ ॥

प्रत्यवस्थायिनं सूतमकृतप्रह्वणाञ्जलिम् ।
अध्यासीनं च तान् विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ १२ ॥

कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः ।
धर्मपालांस्तथैवास्मान् वधमर्हति दुर्मदः ॥ १३ ॥

ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ।
सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ १४ ॥

अदान्तस्याविनीतस्य वृथा पण्डितमानिनः ।
न गुणाय भवन्त्यस्य नटस्येवाजितात्मनः ॥ १५ ॥

एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ।
बध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ १६ ॥

एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि ।
भावित्वात् तं कुशाग्रेण करस्थेनाहनत् प्रभुः ॥ १७ ॥

हाहेति वादिनः सर्वे ऋषयः खिन्नमानसाः ।
ऊचुः सङ्कर्षणं देवमधर्मस्ते कृतः प्रभो ॥ १८ ॥

अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन ।
आयुश्चास्याक्षयं तावद् यावत् सत्रं समाप्यते ॥ १९ ॥

अजानतेवाचरितं त्वया ब्रह्मवधो यथा ।
योगेश्वरस्य भवतो नाम्नायो विनियामकः ॥ २० ॥

यद्येतद् ब्रह्महत्याया पावनं लोकपावन ।
चरिष्यति भवान् लोकसङ्ग्रहं नान्यचोदितः ॥ २१ ॥

बलभद्र उवाच—
चरिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ।
नियमः प्रथमे कल्पे यावान् स तु विधीयताम् ॥ २२ ॥

दीर्घमायुर्बतं तस्य सत्वमिन्द्रियमेव च ।
आशासितं यद्युत साधये योगमायया ॥ २३ ॥

ऋषय ऊचुः—
अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ।
यथा भवेद् वचः सत्यं तथा राम विधीयताम् ॥ २४ ॥

बलभद्र उवाच—
आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ।
तस्मादस्य भवेद् वक्ता आयुरिन्द्रियवीर्यवान् ॥ २५ ॥

किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाणि तत् ।
अजानतश्चापचितिं यथा मे बुध्यतां बुधाः ॥ २६ ॥

ऋषय उचुः—
इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ।
स दूषयति नः सर्वान् सत्रमेत्य च पर्वणि ॥ २७ ॥

तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ।
पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ २८ ॥

ततश्च भारतं वर्षं परीत्य सुसमाहितः ।
चरित्वा द्वादशान् मासान् तीर्थस्नायी विशुध्यसे ॥ २९ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे अष्टनवतितमोऽध्यायः ॥

## अथ एकोनशततमोऽध्यायः

श्रीशुक उवाच—
ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः ।
भीमो वायुरभूद् राजन् पूयगन्धश्च सर्वशः ॥ १ ॥

ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ।
अभवद् यज्ञशालायां सोऽप्यदृश्यत शूलधृक् ॥ २ ॥

तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ।
तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥

सस्मार मुसलं रामः परसैन्यविमर्दनम् ।
हलं च दैत्यदमनं तौ तूर्णमुपतस्थतुः ॥ ४ ॥

तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ।
मुसलेनाहनत् क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥

सोऽपतद् बलनिर्भिण्णललाटोऽसृक् समुत्सृजन् ।
मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽसुरः ॥ ६ ॥

संस्तुत्य मुनयो रामं प्रयुज्यापि तथाऽऽशिषः ।
अभिषिञ्चन् महार्हाभिर्वृत्रघ्नं विबुधा यथा ॥ ७ ॥

वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् ।
रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥

अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ।
स्नात्वा सरोवरमगाद् यतः सरयुरास्रवत् ॥ ९ ॥

स्रोतेन सरयूं प्रायाद् प्रयागमुपगम्य सः ।
स्नात्वा सन्तर्प्य देवादीन् जगाम पुलहाश्रमम् ॥ १० ॥

गोमतीं गण्डकीं स्नात्वा विपाशां शोणमाप्लुतः ।
गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसङ्गमम् ॥ ११ ॥

उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाऽभिवाद्य तम् ।
सप्तगोदावरीं वेणीं पम्पां भीमरथीं तथा ॥ १२ ॥

स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ।
द्रुमिलेपु महापुण्यं दृष्ट्वाऽद्रिं वेङ्कटं प्रभुः ॥ १३ ॥

कामकोष्ठीं पुरीं काञ्चीं कावेरीं च सरिद्वराम् ।
श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः ॥ १४ ॥

ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ।
समुद्रसेतुमगमन्महापातकनाशनम् ॥ १५ ॥

तत्रायुतमदाद् धेनूर्ब्राह्मणेभ्यो हलायुधः ।
कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥ १६ ॥

तत्राऽगस्त्यं समासीनं नमस्कृत्याभिवाद्य च ।
योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥ १७ ॥

दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ।
ततः फल्गुनमासाद्य पञ्चाप्सरसमनुत्तमम् ॥ १८ ॥

विष्णुः सन्निहितो यत्र स्नात्वाऽस्पर्शद् गवायुतम् ।
स्यानन्दूरं हरेः स्थानं यत्र सन्निहितो हरिः ॥ १९ ॥

ततोऽभिव्रज्य भगवान् केरलांस्त्रिगर्तकान् ।
गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ २० ॥

तत्र द्वैपायनं दृष्ट्वा शूर्पारकमगाद् बलः ।
तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ॥ २१ ॥

प्रविश्य रेवामगमद् यत्र माहिष्मती पुरी ।
अनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २२ ॥

श्रुत्वा द्विजैस्तु कथितं कुरुपाण्डवसंयुगम् ।
सर्वराजन्यनिधनं भारमेनद् हतं भुवः ॥ २३ ॥

स भीमदुर्योधनयोर्गदाभ्यां युध्यतो रणम् ।
वारयिष्यन् विशसनं जगाम यदुनन्दनः ॥ २४ ॥

युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ।
अभिवन्द्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २५ ॥

गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ।
मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ २६ ॥

युवां तुल्यबलौ वीरौ हे राजन् हे वृकोदर ।
एकं प्राणाधिकं मन्य उतैकं शिक्षयाऽधिकम् ॥ २७ ॥

तस्मादेकतरस्येह युवयोः समवीर्ययोः ।
न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ २८ ॥

न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ।
अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥ २९ ॥

दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ।
उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ ३० ॥

ईदृग्विधान्यसङ्ख्यानि बलस्य बलशालिनः ।
अनन्तस्याप्रमेयस्य कर्माण्यद्भुतकर्मणः ।
शृण्वन् गृणंश्च तद्भक्त्या विष्णोः स दयितो भवेत् ॥३१॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकोनशततमोऽध्यायः ॥

# अथ शततमोऽध्यायः

श्रीशुक उवाच—
भगवानपि गोविन्दः साधयित्वा स्ववाञ्छितम् ।
सुयोधने महाबाहौ निहते गदया रणे ॥ १ ॥

विसृज्यायोधनं शून्यं प्रयातुमुपचक्रमे ।
कृपश्च कृतवर्मा च द्रौणिश्च रथिनां वरः ॥ २ ॥

अवशिष्टा महात्मानः सुयोधनबले त्रयः ।
पञ्च पाण्डुसुता वीराः सात्यकिश्च महाबलः ॥ ३ ॥

वैश्यापुत्रो युयुत्सुश्च शिष्टाः कृष्णपुरोगमाः ।
तान् पुरस्कृत्य गोविन्दो मुनिवृद्धसमन्वितः ॥ ४ ॥

जगाम हास्तिनपुरं धृतराष्ट्रं प्रसादितुम् ।
गान्धारीं धृतराष्ट्रं च विदुरं च महामतिम् ॥ ५ ॥

प्रसाद्य पाण्डवान् स्वे स्वे राज्ये संस्थाप्य यत्नतः ।
स्तूयमानो मुनिगणैः सूतमागधवन्दिभिः ॥ ६ ॥

अनुयातः पाण्डुपुत्रैः प्रेमबाष्पाविलेक्षणैः ।
ताननुज्ञाप्य सोत्कण्ठान् रथेनादित्यवर्चसा ॥ ७ ॥

शङ्खदुन्दुभिनिर्घोषैर्वेदमङ्गलनिस्वनैः ।
पुण्याहमन्त्रघोषैश्च द्वारकां प्रययौ हरिः ॥ ८ ॥

विचित्रतोरणां रम्यां चलत्कदलिकाकुलाम् ।
अलङ्कृतां पौरजनैः सिक्तसंसृष्टभूतलाम् ॥ ९ ॥

उपस्थितः पौरजनैः पालिकाङ्कुरधारिभिः ।
योषिद्भिर्वारमुख्याभिर्भूपिताभिश्च भूषणैः ॥ १० ॥

वहद्भिर्दीपमुकुरकलशस्रक्फलाक्षतान् ।
उपस्थितो ब्राह्मणैश्च पुत्रैः पौत्रैः सहानुजैः ॥ ११ ॥

प्रविवेश पुरीं दिव्यां दिवसे पूजितो हरिः ।
स प्रविश्य सभां दिव्यां सुधर्मां लोकविश्रुताम् ॥ १२ ॥

आहुकं वसुदेवं च रामं चैवाभ्यवादयत् ।
प्रणम्य मातरो विश्वाः काञ्चने परमासने ॥ १३ ॥

उपविश्य यथाजोपं पूजितो यदुपुङ्गवैः ।
रराज रजनीनाथो यथा ग्रहगणैर्दिवि ॥ १४ ॥

हतावशिष्टैर्भूपालैस्तत्पुत्रैश्च महाबलैः ।
अभिषिक्तैर्यथास्थानं सेव्यमानो दिवानिशम् ॥ १५ ॥

अवतीर्णमहाभारां विश्वां विश्रान्तरो हरिः ।
धर्मराजं पुरस्कृत्य धर्मेणैवान्वशासत ॥ १६ ॥

राजोवाच—
भगवन् यानि चान्यानि मुकुन्दस्य महात्मनः ।
वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥ १७ ॥

को नु श्रुत्वा सकृद् ब्रह्मन्नुत्तमश्लोकसत्कथाम् ।
विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ १८ ॥

सा वागनन्तस्य गुणान् गृणीते
करौ च तत्कर्मकरौ मनश्च ।
स्मरेद् वसन्तं स्थिरजङ्गमेषु
शृणोति तत्पुण्यकथाः स कर्णः ॥ १९ ॥

शिरस्तु तस्योभयलिङ्गमानमेत्
तदेव यत् पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां
पादोदकं यानि भजन्ति नित्यम् ॥ २० ॥

सूत उवाच—
विष्णुरातेन सम्पृष्टो भगवान् बादरायणिः ।
वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ २१ ॥

श्रीशुक उवाच—
कृष्णस्यासीत् सखा कश्चिद् ब्राह्मणो ब्रह्मवित्तमः ।
विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ २२ ॥

यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ।
तस्य भार्या कुचेलस्य क्षुत्क्षामा च तथाविधा ॥ २३ ॥

पतिव्रता पतिं प्राह म्लायतावदनेन सा ।
दरिद्रं साध्व्यशनया वेपमानाऽभिगम्य च ॥ २४ ॥

ननु ब्रह्मन् भगवतः सखा साक्षाच्छ्रियः पतिः ।
ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्षभः ॥ २५ ॥

तमुपैहि महाभाग साधूनां च परायणम् ।
दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ २६ ॥

आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ।
स्मरतः पादयुगलमात्मानमपि यच्छति ॥ २७ ॥

किम्वर्थकामान् भजतो नात्यभिष्टं जगद्गुरुः ।
स एवं भार्यया विप्रो बहुशः प्रार्थितो विभुः ॥ २८ ॥

अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ।
इति सञ्चिन्त्य मनसा गमनाय मनो दधे ॥ २९ ॥

अप्यस्त्युपायनं किञ्चिद् गृहे कल्याणि दीयताम् ।
याचित्वा चतुरो मुष्टीन् विप्रान् पृथुकतण्डुलान् ॥ ३० ॥
चैलखण्डेन तान् बद्ध्वा भर्त्रे प्रादादुपायनम् ।
स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ॥ ३१ ॥

कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन्
त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च स द्विजः ॥ ३२ ॥

विप्रो गम्यान्धवृष्णीनां गेहेष्वच्युतधर्मिणाम्
गृहाणि व्यष्टसाहस्रमहिषीणां हरेर्द्विजः ॥ ३३ ॥

विवेशैकतमं श्रीमद् ब्रह्मानन्दं गतो यथा
तं विलोक्याच्युतो दूरात् प्रियापर्यङ्क आश्रितः ॥ ३४ ॥

सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा
सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ॥ ३५ ॥

प्रीतो ह्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ॥ ३६ ॥

उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ।
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः ॥ ३७ ॥

व्यलिम्पद् दिव्यगन्धेन चन्दनागरुकुङ्कुमैः ।
धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ॥ ३८ ॥

अर्चित्वाऽऽवेद्य ताम्बूलं गां च स्वागतमब्रवीत्
कुचेलं मलिनं क्षामं द्विजं धमनिसन्ततम् ॥ ३९ ॥

देवी पर्यचरच्छैब्या चामरव्यजनेन वै ॥ ४० ॥

अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ।
विस्मितोऽभूत् स विप्राग्र्यमवधूतं सभाजितम् ॥ ४१ ॥

किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ।
श्रिया हीनेन लोकेऽस्मिन् गर्हितेनावमेन च
योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः ॥ ४२ ॥

पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा
कथयाञ्चक्रतुर्गाथां पूर्वां गुरुकुले सताम् ॥ ४३ ॥

आत्मनोऽल्लसितौ राजन् करौ गृह्य परस्परम्
अपि ब्रह्मन् गुरुकुलाद् भवता लब्धदक्षिणात् ॥ ४४ ॥

समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा
प्रायो गृहेषु ते चित्तमकामविहितं तथा ॥ ४५ ॥

नैवातिप्रीयते तद्वद् धनेषु विदितं हि मे ॥ ४६ ॥

केचित् कुर्वन्ति कर्माणि कामैरहतचेतसः ।
त्यजन्तः प्रकृतिं दैवीं यथाऽहं लोकसङ्ग्रहः ॥ ४७ ॥

कच्चिद् गुरुकुलावासं ब्रह्मन् स्मरसि नौ यतः ।
द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥ ४८ ॥

स वै सत्कर्मणां साक्षाद् द्विजातेरिह सम्भवः ।
आद्यो गुरुर्ह्याश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥ ४९ ॥

ते त्वर्थकोविदा ब्रह्मन् वर्णाश्रमवतामिह ।
ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥ ५० ॥

नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा ।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ५१ ॥

अपि नः स्मर्यतां ब्रह्मन् वृत्तं निवसतां गुरौ ।
गुरुदारैश्चोदितानामिन्धनायने क्वचित् ॥ ५२ ॥

प्रविष्टानां महारण्यमपर्तौ सुमहद् द्विज ।
वातवर्षमभूत् तीव्रं निष्ठुराः स्तनयित्नवः ॥ ५३ ॥

सूर्यश्चास्तं गतस्तावत् तमसा संवृता दिशः ।
निम्नं कूलं जलौघेन न प्राज्ञायत किञ्चन ॥ ५४ ॥

वयं भृशं तत्र महानिलाम्बुभि-
र्निहन्यमाना मुहुरम्बुसम्प्लवे ।
दिशोऽविदन्तोऽथ परस्परं वने
गृहीतहस्ता परिबभ्रिमातुराः ॥ ५५ ॥

एतद् विदित्वा उदिते रवौ सान्दीपनिर्गुरुः ।
अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ ५६ ॥

अहो मे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ।
आत्मा हि प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ५७ ॥

इयदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ।
यद् वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ५८ ॥

सन्तुष्टोऽहं द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः ।
छन्दांस्ययातयामानि भवन्तीह परत्र च ॥ ५९ ॥

इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ।
गुरोरनुग्रहेणैव पुमान् पूर्णः प्रशान्तये ॥ ६० ॥

ब्राह्मण उवाच—
किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ।
भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ६१ ॥

यस्य छन्दोमयं ब्रह्म देह आवपनं विभो ।
योऽयं स तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ६२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे शततमोऽध्यायः ॥

# अथ एकाधिकशततमोऽध्यायः

श्रीशुक उवाच—
स इत्थं द्विजमुख्येन सह सङ्कथयन् हरिः ।
सर्वभूतमनोभिज्ञः स्मयमान उवाच तम् ॥ १ ॥

ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान् प्रहसन्निव ।
प्रेम्णा निरीक्षणेनैव प्रेक्षन् खलु सतां पतिः ॥ २ ॥

श्रीभगवानुवाच—
किमुपायमानीतं ब्रह्मन् मे भवता गृहात् ।
अल्पमप्याहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ ३ ॥

भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥

इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ।
पृथुकप्रसृतिं राजन् प्रायच्छदवाङ्मुखः ॥ ५ ॥

सर्वभूतात्मदृक् साक्षात् तस्यागमनकारणम् ।
विज्ञाय चिन्तयन् नायं श्रीकामो माऽभजत् पुरा ॥ ६ ॥

पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ।
प्राप्तो मामस्य दास्यामि सम्पदो मर्त्यदुर्लभाः ॥ ७ ॥

इत्थं विचिन्त्य वसनाचीरवद्धान् द्विजन्मनः ।
स्वयं जहार किमिदमिति पृथुकतण्डुलान् ॥ ८ ॥

एकमुष्टिं सकृज्जग्ध्वा द्वितीयं जग्धुमाददे ।
तावच्छ्रीर्जगृहे हस्तं सत्वरा परमेष्ठिनः ॥ ९ ॥

एतावताऽलं सर्वात्मन् सर्वसम्पत्समृद्धये ।
अस्मिन् लोके तथाऽमुष्मिन् पुंसस्त्वत्तोषकारणम् ॥ १० ॥

ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमन्दिरे ।
भुक्त्वा पीत्वा सुखं सुप्त्वा मेन आत्मानमिन्द्रवत् ॥ ११ ॥

श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः ।
जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥ १२ ॥

स चालब्ध्वा धनं सख्युर्न च याचितवान् स्वयम् ।
स्वगृहान् व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥ १२ ॥

अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ।
यद् दरिद्रतमो लक्ष्मीमाश्लिष्टो विभ्रतोरसि ॥ १४ ॥

क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः ।
ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ १५ ॥

निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ।
महिष्या वीजितः श्रान्तो बालव्यजनहस्तया ॥ १६ ॥

शुश्रूषया परमया पादसंवहनादिभिः ।
पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १७ ॥

स्वर्गापवर्गयोः पुंसां रसायां दिवि सम्पदाम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १८ ॥

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मे भूरि नाददात् ॥ १९ ॥

इति तच्चित्तगत्याऽन्तः प्राप्तो निजगृहान्तिकम् ।
सूर्यानलेन्दुसङ्काशैर्विमानैः सर्वतो वृतम् ॥ २० ॥

विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ।
प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥ २१ ॥

जुष्टं स्वलङ्कृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः ।
किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २२ ॥

एवं मीमांसमानं तं नरनार्योऽमरप्रभाः ।
प्रत्यगृह्णन् महाभागं गीतवाद्येन भूयसा ॥ २३ ॥

पतिमागतमाकर्ण्य पत्न्युद्धर्षाच सम्भ्रमात् ।
निश्चक्राम गृहात् तूर्णं रूपिणी श्रीरिवालयात् ॥ २४ ॥

पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाऽश्रुलोचना ।
मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २५ ॥

पत्नीं वीक्ष्य प्रस्फुरन्तीं देवीं वैमानिकीमिव ।
दासीनां निष्ककण्ठीनां मध्ये भान्तीं सुविस्मितः ॥ २६ ॥

प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् ।
मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २७ ॥

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २८ ॥

आसनानि च हैमानि स्रग्वस्त्राभरणानि च ।
मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ २९ ॥

स्वच्छस्फटिककुड्येषु महामारकतेषु च ।
रत्नदीपान् भ्राजमानान् ललनारत्नसंयुतान् ॥ ३० ॥

विलोक्य ब्राह्मणस्तत्र समृद्धिं सर्वसम्पदाम् ।
तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३१ ॥

नूनं बतैतन्मम दुर्भगस्य शश्वद् दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यन्नैवोपपद्येत यदूत्तमस्य ॥ ३२ ॥

नन्वब्रुवाणो दिशते शमक्षयं
याचिष्णवे भूर्यपि भूरितेजाः ।
पर्जन्यवन्नः स्वयमीक्षमाणो
दाशार्हकाणामृषभः सखा मे ॥ ३३ ॥

किञ्चित्करोत्युर्वपि यत् स्वदत्तं
सुहृत्कृतं फल्ग्वपि भूरिकारि ।
मयोपनीतं पृथुकैकमुष्टिं
प्रत्यग्रहीत् प्रीतियुतो महात्मा ॥ ३४ ॥

तस्यैव मे सौहृदसख्यमैत्री-
दास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन
विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३५ ॥

भक्ताय चित्रा भगवान् हि सम्पदो
राज्यं विभूतीर्न समर्पयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं
पश्यन् निपातं धनिनां मदोद्भवम् ॥ ३६ ॥

इत्थं व्यवसितो बुद्ध्या भक्त्याऽतीव जनार्दने ।
विषयान् जायया त्यक्त्वा बुभुजे नातिलम्पटः ॥ ३७ ॥

तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ।
ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३८ ॥

एवं स विप्रो भगवत्सुहृत् तदा
दृष्ट्वा स्वभक्तैरजितं पराजितम् ।
तद्ध्यानवेगोद्ग्रथितात्मबन्धन-
स्तद्धाम लेभेऽचिरतः सतां पतेः ॥ ३९ ॥

एवं ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ।
लब्धभावो भगवति कर्मबन्धात् प्रमुच्यते ॥ ४० ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे एकाधिकशततमोऽध्यायः ॥

## अथ द्व्यधिकशततमोऽध्यायः

श्रीशुक उवाच—
कदाचिद् वाजिमेधेन यष्टुमुद्यम्य केशवः ।
महीं प्रदक्षिणीकर्तुं प्राहिणोत् प्रोक्षितं हयम् ॥ १ ॥

हार्दिक्यं कृतवर्माणं युयुधानं च सात्यकिम् ।
चारुदेष्णं सुदेष्णं च प्रद्युम्नं साम्बमेव च ॥ २ ॥

अंशुमन्तं सुभानुं च बहुसैन्यांश्च यादवान् ।
रक्षणार्थं तुरङ्गस्य प्राहिणोद् यदुनन्दनः ॥ ३ ॥

ते वै प्रदक्षिणं कृत्वा वसुधां प्रोक्षितं हयम् ।
उपानिन्युरदीर्घेण कालेन भरतर्षभ ॥ ४ ॥

यष्टुकामं हरिं श्रुत्वा हयमेधेन भारत ।
आजग्मुर्दीर्घतपसो मुनयः संशितव्रताः ॥ ५ ॥

होतारं च तथाऽध्वर्युमुद्गातारं च केशवः ।
कल्पयित्वा यथान्यायं तथाऽन्यानपि ऋत्विजः ॥ ६ ॥

ऋषिभिर्ब्राह्मणश्रेष्ठैर्वेदविद्याविचक्षणैः ।
दीक्षां प्रपेदे भगवान् कृतपुण्याहमङ्गलः ॥ ७ ॥

तमुपास्तुं महीपाला नानाजनपदेश्वराः ।
आजग्मुर्देवसङ्काशाः किरीटमुकुटोज्ज्वलाः ॥ ८ ॥

पाण्डवाश्च महीपाला यज्ञदर्शनमिच्छवः ।
आहूता वासुदेवेन द्वारकामाययुर्नृप ॥ ९ ॥

तस्मिंस्तथा वर्तमाने हयमेधे महोत्सवे ।
आसंस्तृप्ता द्विजा भोज्यवस्त्रगोभूमिकाञ्चनैः ॥ १० ॥

दीक्षां प्रविश्य गोविन्दः कामैस्तर्पयति द्विजान् ।
भुञ्जानेषु द्विजाग्र्येषु प्रत्यगृह्णात् सुवाञ्छितम् ॥ ११ ॥

आसीनेषु यथायोगं भूपालेषु समन्ततः ।
वदत्सु मा शब्द इति वेत्रझर्झरपाणिषु ॥ १२ ॥

तृणपूलधरः कश्चिद् ब्राह्मणोऽभ्येत्य सत्वरः ।
चुक्रोश आर्त उद्बाहुर्यज्ञवाटमुखे स्थितः ॥ १३ ॥

क्षुत्क्षामकण्ठः शुष्कास्यो गलद्बाष्पाकुलेक्षणः ।
इदं चोवाच विलपन्नातुरो दीनमानसः ॥ १४ ॥

ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः ।
क्षत्रबन्धोः कर्मदोषात् पञ्चत्वं मे गताः सुताः ॥ १५ ॥

हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम् ।
प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ १६ ॥

एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ।
इत्युक्त्वा स पुनश्चैव चुक्रोश भृशदुःखितः ॥ १७ ॥

तदाकर्ण्यार्जुनो मानी समुत्थाय वरासनात् ।
अपृच्छत् स्वयमासाद्य ब्राह्मणं केशवान्तिकात् ॥ १८ ॥

किमासन्नर्भका ब्रह्मंस्तव केनासि दुःखितः ।
ब्रूहि तत्वमशेषेण त्वामद्य सुखयाम्यहम् ॥ १९ ॥

इत्युक्तो ब्राह्मणः प्राह जातो जातोऽर्भको मम ।
नीयते तात केनापि तत्क्षणे सूतिकागृहात् ॥ २० ॥

तदाकर्ण्यार्जुनः प्राह स्मयमान इव द्विजम् ।
किं ब्राह्मण त्वन्निवासे इह नास्ति धनुर्धरः ॥ २१ ॥

राजन्यबन्धोरेते वै ब्राह्मणाः सत्रमासते ॥ २२ ॥

धनदारात्मजैर्भृत्या यत्र शोचन्ति ब्राह्मणाः ।
ते वै राजन्यवेषेण नटा जीवन्त्यसुम्भराः ॥ २३ ॥

अहं प्रजा वै रक्षिष्ये भगवन् दीनयोरिह ।
अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्येऽहतकल्मषः ॥ २४ ॥

ब्राह्मण उवाच—
सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।
अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ २५ ॥

तत् कथं नु भवान् कर्म दुष्करं जगदीश्वरैः ।
चिकीर्षतीह बालिश्यात् तन्न श्रद्दध्महे वयम् ॥ २६ ॥

अर्जुन उवाच—
नाहं सङ्कर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च ।
अहं धनञ्जयो नाम गाण्डीवं यस्य कार्मुकम् ॥ २७ ॥

मा वमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम् ।
मृत्युं विजित्य प्रधनेऽप्यानयिष्ये तव प्रजाः ॥ २८ ॥

इति विस्रम्भयित्वा तं कृष्णमाहार्जुनो नृप ।
अनुज्ञां देहि भगवन् ब्राह्मणार्थे प्रयास्यतः ॥ २९ ॥

यजतां वाजिमेधेन भवानेभिर्महात्मभिः ।
इति ब्रुवन्तं बीभत्सुमनुज्ञां प्रेप्सुमच्युतः ।
बद्धतूणं सगाण्डीवं स्मयमानोऽब्रवीद् वचः ॥ ३० ॥

श्रीभगवानुवाच—
अहमेवागमिष्यामि न त्वया शक्यतेऽर्जुन ।
तमसाधारणं भूतं मन्ये येन हतोऽर्भकः ॥ ३१ ॥

अर्जुन उवाच—
सलोकपालो देवेन्द्रः खाण्डवे विजितो मया ।
किरातरूपी युद्धेन तोषितश्च त्रियम्बकः ॥ ३२ ॥

निवातकवचाश्चैव वासवेनापि दुर्जयाः ।
मयैव निहताः सङ्ख्ये हिरण्यपुरवासिनः ॥ ३३ ॥

तेभ्योऽधिकतरं भूतं किं नु दानवसूदन ।
बिभीषयसि मां कस्मादनुज्ञां देहि साम्प्रतम् ॥ ३४ ॥

श्रीशुक उवाच—
इत्युक्तः प्रददौ कृष्णस्त्वनुज्ञां सव्यसाचिने ।
निर्ययौ यज्ञशालायाः स गृहीतशरासनः ॥ ३५ ॥

रथमास्थाय विपुलं समुच्छ्रितकपिध्वजम् ।
अग्रे ब्राह्मणमारोप्य तद्ग्राममभितो ययौ ॥ ३६ ॥

तत्र गत्वा प्रविष्टायां तत्पत्न्यां सूतिकागृहम् ।
ब्राह्मणं प्राह बीभत्सुरवरोप्य रथान्नृप ॥ ३७ ॥

अर्जुन उवाच—
याहि स्वभवनं ब्रह्मन्नभयं तव सर्वतः ।
दत्तं मयाऽद्य तद् भीतां पत्नीमाश्वासयाशु ते ॥ ३८ ॥

इति विस्रम्भितो विप्रः फल्गुनेन परन्तप ।
जगाम स्वगृहे प्रीत्या पार्थवीर्यं निशम्य तत् ॥ ३९ ॥

प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ।
प्रोवाच द्रुतमभ्येत्य पार्थं शस्त्रभृतां वरम् ॥ ४० ॥

ब्राह्मण उवाच—
एहि पार्थ महाबाहो यत्तो भव युधां वर ।
अत्र पूर्वकृतानां हि पौरुषाणां निदर्शनम् ॥ ४१ ॥

श्रीशुक उवाच—
इत्युक्तो रथमारुह्य सज्यं कृत्वा तु गाण्डिवम् ।
त्वरन् जगाम बीभत्सुः सूतिकाभवनान्तिकम् ॥ ४२ ॥

ब्राह्मणोऽपि प्रविश्याह मुहूर्ते सूतिकागृहे ।
गते तु पाहि पाहीति मृत्योरर्जुनमातुरः ॥ ४३ ॥

स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् ।
दिव्यास्त्राणि च संस्मृत्य सज्यं गाण्डीवमाददे ॥ ४४ ॥

न्यरुणत् सूतिकागारं शरैर्नानास्त्रयोजितैः ।
तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ४५ ॥

ततः कुमारः सञ्जातो विप्रपत्न्या रुदन् मुहुः ।
सद्योदर्शनमापेदे सशरीरो विहायसा ॥ ४६ ॥

तदाऽऽह विप्रो विजयं विनिन्दन् कृष्णसन्निधौ ।
मौढ्याद् यस्य तवाहं वै श्रद्दधे क्लीबकत्थनम् ॥ ४७ ॥

न प्रद्युम्नोऽनिरुद्धो वा न रामो न च केशवः ।
यस्य शेकुः परित्रातुं कोऽन्यस्तदविकेश्वरः ॥ ४८ ॥

धिगर्जुनं वृथावाचं धिगात्मश्लाघिनो धनुः ।
दैवोपसृष्टयोर्मौढ्यादानिनीषति दुर्मतिः ॥ ४९ ॥

एवं शपति विप्रर्षौ विद्यामास्थाय फल्गुनः ।
ययौ संयमनीमाशु यत्रास्ते भगवान् यमः ॥ ५० ॥

विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात् पुरम् ।
आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥ ५१ ॥

रसातलं नागपुरं धिष्ण्यान्यन्यान्युदायुधः ।
ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ ५२ ॥

अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ।
दर्शये द्विजसूनूंस्ते मा वध्यात्मानमात्मना ।
एतेन कीर्तिं विमलां मानुष्ये स्थापयिष्यसि ॥ ५३ ॥

इति सम्भाष्य भगवानर्जुनं स महेश्वरः ।
सहैव रथमास्थाय प्राचीं दिशमवीविशत् ॥ ५४ ॥

सप्तद्वीपान् सप्तसिन्धून् सप्तसप्तगिरीनथ ।
लोकालोकं तथाऽतीत्य विवेश सुमहत् तमः ॥ ५५ ॥

तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ।
तमसा भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ५६ ॥

तद् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः ।
सहस्रादित्यसङ्काशं स्वचक्रं प्राहिणोत् पुरः ॥ ५७ ॥

तमः सुघोरं गहनं कृतं महद्
विदारयद् भूरितरेण रोचिषा ।
मनोजवं निर्विविशे सुदर्शनं
गुणच्युतो रामशरो यथा चमूः ॥ ५८ ॥

द्वारेण चक्रानुपथे यद्तत्तमं
परात्परं ज्योतिरनन्तपारम् ।
समश्नुवानं प्रसमीक्ष्य फल्गुनः
प्रदीपिताक्षः पिदधेऽक्षिणी उभे ॥ ५९ ॥

ततः प्रविष्टः सलिलं नभस्वता
बलीयसैजद्बृहदूर्मिभीषणम् ।
तत्राद्भुतं वै भवनं द्युमत्तमं
भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥ ६० ॥

तस्मिन् महाभीममनन्तमद्भुतं
सहस्रमूर्धन्यफणामणिद्युतिम् ।
विभ्राजमानं द्विगुणेक्षणोल्बणं
सिताचलाभं शितिकण्ठजिह्वगम् ॥ ६१ ॥

ददर्श तद्भोगसुखासनं विभुं
महानुभावं पुरुषोत्तमोत्तमम् ।
सान्द्राम्बुदाभं सुपिशङ्गवाससं
प्रसन्नवक्त्रं रुचिरस्मितेक्षणम् ॥ ६२ ॥

महामणिव्रातकिरीटकुण्डल-
त्विषा परिष्वक्तसहस्रकुन्तलम् ।
प्रलम्बचार्वष्टभुजं सकौस्तुभं
श्रीवत्सलक्ष्मं वनमालयाऽऽवृतम् ॥ ६३ ॥

सुनन्दनन्दप्रमुखैश्च पार्षदै-
श्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।
पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभि-
र्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ६४ ॥

ववन्द आत्मानमनन्तमच्युतो
जिष्णुश्च तद्दर्शनजातसाध्वसः ।
स चाह भूमा परमेष्ठिनां प्रभु-
र्बद्धाञ्जलिं सस्मितपूर्वया गिरा ॥ ६५ ॥

द्विजात्मजा मे युवयोर्दिदृक्षया
मयोपनीता भुवि धर्मगुप्तये ।
कलावतीर्णावस्यवनेर्भरासुरान्
हत्वेह भूयस्त्वरयैतं मेऽन्तिकम् ॥ ६६ ॥

पूर्णकामावपि युवां नरनारायणावृषी ।
धर्ममाचरतां स्थित्यै ऋषभौ लोकसङ्ग्रहम् ॥ ६७ ॥

इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ।
ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६८ ॥

न्यवर्ततां स्वकं धाम सम्प्रहृष्टौ यथागतम् ।
विप्राय ददतुः पुत्रान् यथारूपं प्रसूयताम् ॥ ६९ ॥

निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ।
यत् किञ्चित् पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ ७० ॥

तदा प्रविश्य गोविन्दो यज्ञवाटं पुनः स्वयम् ।
पूर्णं पुरोहितैर्विप्रैर्ऋत्विग्भिः क्षत्रियर्षभैः ॥ ७१ ॥

प्रायश्चित्तं तु चलने दीक्षायां य उदाहृतः ।
तं चकार यथान्यायं ब्राह्मणैरनुमोदितः ॥ ७२ ॥

समाप्य यज्ञं विधिवत् तर्पयित्वाऽर्थिनो द्विजान् ।
ऋत्विग्भ्यः पूजयित्वाऽन्यान् ऋषींश्च कुरुसत्तम ॥ ७३ ॥

यमुनायां महानद्यां कृत्वाऽवभृथमज्जनम् ।
विजहार यथाकामं महर्षिभिर्यदूत्तमः ॥ ७४ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे द्व्यधिकशततमोऽध्यायः ॥

# अथ त्र्यधिकशततमोऽध्यायः

श्रीशुक उवाच—
उद्वापनस्नानहेतोर्यमुनातीरमागतम् ।
श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्त्रः सहानुजः ॥ १ ॥

महत्या सेनया युक्तो गजानीकसमन्वितः ।
गच्छन्तं द्वारकां कृष्णं पथि रोद्धुं समाययौ ॥ २ ॥

सोऽभ्येत्य पथि गच्छन्तं वृतं यदुकुमारकैः ।
कान्तापोडशसाहस्रशिबिकापरिवारितम् ॥ ३ ॥

राजन्यसार्थानुगतं महर्षिगणसेवितम् ।
ऋत्विक्पुरोहिताचार्यब्राह्मणैश्च समन्वितम् ॥ ४ ॥

दन्तवक्त्रोरुणन्मूढो मृगेन्द्रं जम्बुको यथा ।
रुग्मिणः शिशुपालस्य पौण्ड्रकस्य च दुर्मतेः ।
परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् ॥ ५ ॥

पदातिः पथि संरोद्धुं गदापाणिः प्रकम्पयन् ।
पद्भ्यां महीं महाराज महासत्त्वो व्यदृश्यत ॥ ६ ॥

तं तथाऽऽयान्तमालोक्य गदामादाय सत्वरः ।
अवप्लुत्य रथात् कृष्णः सिन्धुं वेलेव प्रत्यगात् ॥ ७ ॥

गदामुद्यम्य कालिङ्गो मुकुन्दं प्राह दुर्मदः ।
दिष्ट्या कृष्ण भवानद्य मम दृष्टिपथं गतः ॥ ८ ॥

त्वामद्य द्वन्द्वयुद्धेन हनिष्याम्यविलम्बितम् ।
त्वं मातुलेयो नः कृष्ण मित्रध्रुक् पारदारिकः ।
विश्वासघाती बन्धुघ्नः सततं कलहप्रियः ॥ ९ ॥

पौण्ड्रकं मातुलेयं मे सङ्ख्ये सूदितवानसि ।
रुग्मी च शिशुपालश्च भ्रातरौ मे त्वया हतौ ॥ १० ॥

अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ।
तेनानृण्यमुपैम्यद्य मित्राणां मित्रवत्सलः ॥ ११ ॥

बन्धुरूपमरिं हत्वाद् व्याधिं देहचरं यथा ।
इति लोकप्रवादोऽस्ति तेन दोषोऽपि नास्ति मे ॥ १२ ॥

एवं रूक्षैश्च वचनैः कृष्णं तोत्रैरिव द्विपम् ।
गदयाऽताडयत् कृष्णं सिंहवद् व्यनदच्च सः ॥ १३ ॥

गदयाऽभिहतोऽप्याजौ न चचाल यदूत्तमः ।
गदया व्यहनद् गुर्व्या कौमोदक्या स्तनान्तरे ॥ १४ ॥

गाढनिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् ।
प्रसार्य केशबाह्वङ्घ्रीं गतासुर्व्यपतद् भुवि ॥ १५ ॥

ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदुद्भुतम् ।
पश्यतां सर्वभूतानां यथा चैद्यस्य सङ्गरे ॥ १६ ॥

भ्रातरं निहतं दृष्ट्वा दन्तवक्त्रं विदूरथः ।
मूर्छितो भ्रातृशोकेनाप्यसिचर्म समाददे ॥ १७ ॥

सोऽवप्लुत्य रथात् तूर्णं विधुन्वन् खड्गमुत्तमम् ।
अभिदुद्राव गोविन्दं पद्भ्यामुर्वीं प्रकम्पयन् ॥ १८ ॥

तस्य बाणेन चिच्छेद खड्गं यादवनन्दनः ।
ततो जग्राह निशितां शक्तिं घोरां विदूरथः ॥ १९ ॥

तया प्रहर्तुं गोविन्दमभिनिश्चित्य सङ्गरे ।
क्षणेनाभिससाराङ्गश्रापमुक्तो यथा शरः ॥ २० ॥

तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ।
शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ २१ ॥

एवं निहत्य समरे दन्तवक्त्रविदूरथौ ।
कालयामास तत्सैन्यं जगृहे वारणादिकम् ॥ २२ ॥

भूयः पुष्परथं दिव्यमारुह्य समलङ्कृतम् ।
सहितः सात्वतगणैरीडितः सुरमानुषैः ॥ २३ ॥

मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः ।
अप्सरोभिः पितृगणैर्यक्षकिन्नरचारणैः ॥ २४ ॥

उपगीयमानविजयः कुसुमैरभिवर्षितः ।
वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतं पुरम् ॥ २५ ॥

एवं योगेश्वरः कृष्णो भगवान् देवकीसुतः ।
ईयते पशुदृष्टीनां जीयते जयतीति सः ॥ २६ ॥

तस्य कर्माण्युदाराणि पुण्यश्लोकस्य भारत ।
शक्यन्ते कथितुं नैव वर्षाणामयुतैरपि ॥ २७ ॥

एवमारभ्य राक्षस्याः पूतनायाः परन्तप ।
भूभारभूतानसुरान् जघान मधुसूदनः ॥ २८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे त्र्यधिकशततमोऽध्यायः ॥

## अथ चतुराधिकशततमोऽध्यायः

श्रीशुक उवाच—
सुखं स्वपुर्यां न्यवसद् द्वारकायां श्रियः पतिः ।
सर्वसम्पत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥

स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ।
कन्दुकैर्हर्म्यसौधेषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ २ ॥

नित्यं सङ्कुलमार्गायां मदच्युद्भिर्मतङ्गजैः ।
स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥

उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ।
निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥

रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ।
तावन्ति विभ्रद् रूपाणि तद्गेहेषु महर्द्धिषु ॥ ५ ॥

प्रोत्फुल्लोत्पलकल्हारकुमुदाम्भोजरेणुभिः ।
वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥

विजहार विगाह्याम्भो ह्रदिनीषु महोदयः ।
कुचकुङ्कुमलिप्ताङ्गः परिरब्धः स्वयोषिताम् ॥ ७ ॥

उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् ।
वादयद्भिर्मुदा वीणाः सूतमागधवन्दिभिः ॥ ८ ॥

सेव्यमानोऽच्युतस्ताभिर्हसन्तीभिश्च रेचकैः ।
प्रतिषिञ्चन् विचिक्रीडे मुखरः शक्तिभिः स्वयम् ॥ ९ ॥

ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः
सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तस्य रेचकजिहीर्षतयोपगूह्य
जातस्मरोत्स्मयलसद्वदना विरेजुः ॥ १० ॥

कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्
क्रीडाभिसङ्गधुतकुन्तलवृन्दगन्धः ।
सिञ्चन् मुहुर्युवतिभिः परिषिच्यमानो
रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥

गृहेषु तासामनिवार्य ईश्वरो
निरस्तसाम्यातिशयो व्यवस्थितः ।
रेमे रमाभिर्निजसौख्यसम्भुतो
यथेतरो गार्हकमेधिकांश्चरन् ॥ १२ ॥

इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
ब्रह्मादयोऽपि पदवीं न विदुर्यदीयाम् ।
भेजुर्मुदाऽविरतमेधितयाऽनुराग-
हासावलोकनवसङ्गमलज्जयैव ॥ १३ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे चतुरधिकशततमोऽध्यायः ॥

# अथ पञ्चाधिकशततमोऽध्यायः

श्रीशुक उवाच—
एवं वेदोदितं धर्ममनुतिष्ठन् सतां गतिः ।
गृहं धर्मार्थकामानां मुहुः सन्दर्शयन् पदम् ॥ १ ॥
एवं शासति भूचक्रं चक्रपाणौ जनार्दने ।
द्वारका वृष्णिनिलया योजनद्वादशायुता ॥ २ ॥
मुनिभिर्ब्राह्मणैश्चैव क्षत्रियैश्चापि वन्दिभिः ।
आसीत् पूर्णा कुरुश्रेष्ठ सततं समलङ्कृता ॥ ३ ॥
पिण्डारकात् कुरुक्षेत्रात् सालग्रामाच पुष्करात् ।
वाराणस्याः प्रयागाच वेङ्कटाच्छ्रीगिरेरपि ॥ ४ ॥
स्यानन्दूराच गोकर्णाचन्द्रतीर्थाच शोभनात् ।
सह्याद्रेश्च भृगुक्षेत्रात् कुमारनिलयादपि ॥ ५ ॥
गोदावरीतटात् पुण्यान्नर्मदानिकटादपि ।
शूर्पाकारात् प्रभासाच पुण्याद् बदरिकाश्रमात् ॥ ६ ॥
पावनान्नैमिषारण्याद् ब्रह्मदुर्गाच दुर्गमात् ।
आययुर्मुनयः शान्ता नित्यव्रतपरायणाः ॥ ७ ॥
अब्भक्षा वायुभक्षाश्च निराहारा दृढव्रताः ।
वल्कलाजिनसंवीता जटिनश्चापि मुण्डिनः ॥ ८ ॥
त्रिकालस्नायिनश्चैव मौनव्रतपरायणाः ।
वेदस्वाध्यायनिरताः स्तुतिस्तोत्रपरायणाः ॥ ९ ॥
ध्यानैकतानमनसः समाधौ कृतनिश्चयाः ।
त्वगस्थिमात्रावयवाः शिराधमनिसन्तताः ॥ १० ॥
आगत्य मुनयो राजन् सर्वतः शान्तचेतसः ।
उपासत महाराज नित्यं तत्त्वैकचिन्तकाः ॥ ११ ॥
क्षत्रियैश्च महावीर्यैर्ब्राह्मणैश्च तपोधनैः ।
सूतैश्च मागधैश्चैव श्लोकस्तुतिपरायणैः ॥ १२ ॥
पूर्णमङ्गलघोषैश्च वादित्राणां च निःस्वनैः ।
निर्घुष्टा ब्रह्मघोषैश्च द्वारका कुरुनन्दन ॥ १३ ॥
क्षेत्राणामपि सर्वेषां तीर्थानां चाघहारिणाम् ।
देवदेवस्य सान्निध्यादग्रण्या च बभूव सा ॥ १४ ॥
आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनः ।
आसन् षोडशसाहस्रमहिष्यस्तु शताधिकाः ॥ १५ ॥
तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ।
रुग्मिणिप्रमुखा राजन् तत्पुत्राश्चानुपूर्वशः ॥ १६ ॥
एकैकस्यां दशदश कृष्णोऽजीजनदात्मजान् ।
यावत्य आत्मनो भार्यास्त्वमोघगतिरीश्वरः ॥ १७ ॥
तेषामुद्दामवीर्याणामष्टादश महारथाः ।
आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ १८ ॥
प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान् भानुरेव च ।
साम्बो मित्रवृहद्भा(नृ)नुर्भानुर्विन्दो वृकोऽरुणः ॥ १९ ॥
पुष्करो देवभानुश्च श्रुतदेवः सुनन्दनः ।
चित्रभानुर्वरूथश्च कविर्न्यग्रोध एव च ॥ २० ॥
त्रिवक्राया विशोकश्च पुत्रः कृष्णमनुव्रतः ।
आसीच्छिष्यो नारदस्य ददौ चित्तमखण्डितम् ॥ २१ ॥
येनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मूर्तिमान् भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥ २२ ॥
एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ।
प्रद्युम्न आसीत् प्रथमः पितृवद् रुग्मिणीसुतः ॥ २३ ॥
स रुग्मिणो दुहितरमुपयेमे महारथः ।
तस्यां ततोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ २४ ॥
स चापि रुग्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्यामभूद् यस्तु मौसलादवशेषितः ॥ २५ ॥
प्रतिबाहुरभूत् तस्मात् सुबाहुस्तस्य चात्मजः ।
सुबाहोरुग्रसेनोऽभूच्छतसेनस्तु तत्सुतः ॥ २६ ॥
न ह्येतस्मिन् कुले जाता अधना अबहुप्रजाः ।
अल्पायुषोऽल्पवीर्या वा अब्रह्मण्याश्च जज्ञिरे ॥ २७ ॥
यदुवंशे प्रसूतानां पुंसां विख्यातकर्मणाम् ।
सङ्ख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ २८ ॥
तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च ।
आसन् यदुकुमाराणामाचार्या इति नः श्रुतम् ॥ २९ ॥

सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम् ।
यत्रायुतानामयुतं लक्षेणास्ते स आहुकः ॥ ३० ॥

देवासुराहवहता ये दैतेयाः सुदारुणाः ।
ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ३१ ॥

तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतं येषामेकाधिकं नृप ॥ ३२ ॥

तेषां प्रमाणं भगवान् प्रभुत्वे चाभवद् हरिः ।
ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ३३ ॥

शय्यासनाटनालापक्रीडास्नानाशनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ३४ ॥

ईजे क्रतुभिरात्मानं सर्ववेदार्थसङ्ग्रहम् ।
स्वयोगमायारचितैः कुरुक्षेत्रे द्विषट्समाः ॥ ३५ ॥

कृष्णगाध्यसितावन्तिरामाचार्योद्धवेश्वरः ।
दीक्षितोऽग्रण्यपत्नीभिः पुण्यश्लोकः सहाग्रणीः ॥ ३६ ॥

तीर्थं चक्रे नृणां यो यदजनि यदुषु स्वःसरित् पादशौचं
षड्भिश्चाप्तं स्वरूपं पर उरसि रमा सर्वदा यस्य चास्ते ।
यच्छास्त्रं तत्प्रमाणं यदनु च सदसव्द्यक्तयो यत्र धर्माः
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ३७ ॥

जयति जननिवासो देवकीजन्मवादो
नियमकृतपदाब्जैर्दस्युपीडां स्वदोर्भिः ।
मुदमुभयदृशीनां श्रीनिकेतात्ममूर्त्या
स्मरवपुरवलानां स्निग्धहासेक्षया च ॥ ३८ ॥

यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनः संहिताम् ।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ३९ ॥

इत्थं परस्य निजधर्मरिरक्षयाऽत्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य
गायेदमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४० ॥

मर्त्यस्तयाऽनुसवमेधितयाऽनुवृत्त्या
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुष्करकृतं जनतापवर्गं
ग्रामाद् वनं क्षितिभुजोऽपि ययुर्यदर्थे ॥ ४१ ॥

सूत उवाच—
य इदमनुशृणोति श्रावयेद्वा मुरारे-
श्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तकर्णावतंसं
भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ४२ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे पञ्चाधिकशततमोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां
पारमहंस्यां संहितायां दशमस्कन्ध उत्तरार्धः ॥

# एकादशस्कन्धः

## अथ प्रथमोऽध्यायः

श्रीशुक उवाच–
कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः
भुवोऽवतारयन् भारं जविष्ठं जनयन् कलिम् ॥ १ ॥
ये कोपिताः सुबहु पाण्डुसुताः
सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ।
कृत्वा निमित्तमितरेतरतः समेतान् हत्वा
परान् निरहरत् क्षितिभारमीशः ॥ २ ॥
भूभारराजपृतना यदुभिर्निरस्य
गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ।
मन्येऽवनेर्ननु गतोऽप्यगतोऽपि भारो
यद् यादवं कुलमहोऽविषह्यमास्ते ॥ ३ ॥
नैवान्यतः परिभवोऽस्य भवेत् कथञ्चित्
मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ।
अन्तःकलिं यदुकुलस्य विधाय वेणु-
स्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥
एवं व्यवसितो राजन् सत्यसङ्कल्प ईश्वरः ।
शापव्याजेन विप्राणां सञ्जह्रे स्वकुलं विभुः ॥ ५ ॥
स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ।
गीर्भिस्तां स्मरतां चित्तं पदैस्तामीक्षतां क्रियाः ॥ ६ ॥
आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ ।
तमोऽनया तरिष्यन्तीत्यगात् स्वं पदमीश्वरः ॥ ७ ॥
राजोवाच–
ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ।
विप्रशापः कथमभूद् वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥
यन्निमित्तो यदोः शापो यादृशो द्विजसत्तम ।
कथमेकात्मनां भेद एतत् सर्वं वदस्व मे ॥ ९ ॥
बादरायणिरुवाच–
बिभ्रद् वपुः सकलसुन्दरसन्निवेशं
कर्माचरन् भुवि सुमङ्गलमाप्तकामः ।
आस्थाय धाम रममाण उदारकीर्तिः
संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥
कर्माणि पुण्यनिवहानि सुमङ्गलानि
गायज्जगत्कलिमलापहराणि कृत्वा ।
कालात्मना निवसता यदुदेवगेहे
पिण्डारकं समगमन् मुनयो निसृष्टाः ॥ ११ ॥
विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ।
कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥
क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ।
उपसङ्गृह्य पप्रच्छुरविनीता विनीतवत् ॥ १३ ॥
ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ।
एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ॥ १४ ॥
प्रष्टुं विलज्जती युष्मान् प्रब्रूतामोघदर्शनाः ।
प्रसोष्यन्ती पुत्रकामा किंस्वित् सञ्जनयिष्यति ॥ १५ ॥
एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ।
जनयिष्यति वो मन्दा मुसलं कुलनाशनम् ॥ १६ ॥
तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम् ।
साम्बस्य ददृशुस्तस्मिन् मुसलं खल्वयस्मयम् ॥ १७ ॥
किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः ।
इति विह्वलिता गेहानादाय मुसलं ययुः ॥ १८ ॥
तं चोपनीय सदसि परिम्लानमुखश्रियः ।
राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥ १९ ॥
श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ।
विस्मिता भयसन्त्रस्ता बभूवुर्द्वारकौकसः ॥ २० ॥
तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ।
समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥ २१ ॥
कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ।
उह्यमानानि वेलायां लग्नान्यासन् किलैरकाः ॥ २२ ॥

मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ।
तस्योदरगतं लोहं शल्येषु लुब्धकोऽकरोत् ॥ २३ ॥

भगवांस्तात सर्वार्थ ईश्वरोऽपि तदन्यथा ।
कर्तुं नैच्छद् विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

श्रीशुक उवाच–
गोविन्दभुजगुप्तायां द्वारकायां कुरूद्वह ।
अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत् सर्वतो मृत्युरुपास्यममरोत्तमैः ॥ २ ॥

तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ।
अर्चितं सुखमासीनमभिवन्द्येदमब्रवीत् ॥ ३ ॥

वसुदेव उवाच–
भगवन् भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनः ॥ ४ ॥

भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥

भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥

ब्रह्मंस्तथापि पृच्छामो धर्मान् भागवतांस्तव ।
यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतोभयात् ॥ ७ ॥

अहं किल पुराऽनन्तं प्रजार्थे भुवि मुक्तिदम् ।
अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥

यथा विचित्रव्यसनाद् भवेऽस्मिन् विश्वतोभयात् ।
मुच्येम ह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥

श्रीशुक उवाद–
राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

नारद उवाच–
सम्यगेतद् व्यवसितं भवता सात्वतर्षभ ।
यत् पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥

श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥

त्वया परमकल्याण पुण्यश्रवणकीर्तनः ।
स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥

प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥

तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ।
अवतीर्णं सुतशतं तस्यासीद् ब्रह्मपारगम् ॥ १६ ॥

तेषां वै भरतः श्रेष्ठो नारायणपरायणः ।
विख्यातं वर्षमेतद् यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥

स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥

तेषां नव नवद्वीपपतयोऽस्य समन्ततः ।
कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥

नवाभवन् महाभागा मुनयो ह्यर्थशंसिनः ।
श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥

कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥

त एते भगवद्रूपं विश्वं सदसदात्मकम् ।
आत्मनो व्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥ २२ ॥

अव्याहतेष्टगतयः सुरसिद्धसाध्य-
गन्धर्वयक्षनरकिन्नरनागलोकान् ।
मुक्ताश्चरन्ति मुनिचारणभूतनाथ-
विद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥

त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ।
वितायमानमृषिभिरञ्जनाभा महात्मनः ॥ २४ ॥

तान् दृष्ट्वा सूर्यसङ्काशान् महाभगवतान् नृप
यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥

विदेहस्तानभिप्रेत्य नारायणपरायणान् ।
प्रीतः सम्पूजयाञ्चक्र आसनस्थान् यथार्हतः ॥ २६ ॥

तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान् नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

विदेह उवाच–
मन्ये भगवतः साक्षात् पार्षदान् वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥

अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ।
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥

धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।
यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥

नारद उवाच–
एवं ते निमिना पृष्टा वसुदेव महत्तमाः ।
प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥

कविरुवाच–
मन्येऽकुतश्चिद्भयमच्युतस्य
पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्
विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥

ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥ ३४ ॥

यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् ।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुध्यात्मना वाऽनुसृतः स्वभावम् ।
करोति यद्यत् सकलं परस्मै
नारायणायेति समर्पयेत् तत् ॥ ३६ ॥

भयं द्वितीयाभिनिवेशतः स्यात्
ईशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्माययाऽतो बुध आभजेत् तं
भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥

अविद्यमानोऽप्यवभाति हि द्वयो
ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत्कर्म सङ्कल्पविकल्पकं मनो
बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥

शृण्वन् सुभद्राणि रथाङ्गपाणेः
जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥ ३९ ॥

एवं व्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गायत्यु-
न्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥

खं वायुमग्निं सलिलं महीं च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित् समुद्रांश्च हरेः शरीरं यत्
किञ्च भूतं प्रणमेदनन्यम् ॥ ४१ ॥

भक्तिः परेशानुभवो विरक्तिः
अन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाऽश्नतः स्युः
तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥

राजोवाच–
अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ।
यथा चरति यद् ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥ ४४ ॥

हरिरुवाच–
सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ ४६ ॥

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥

गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिमां पश्यन् स वै भागवतोत्तमः ॥ ४८ ॥

देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥

यः कामकर्मबीजानि पश्यत्येषां च सम्भवम् ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥

न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जितेऽस्मिन्नहम्भावो देहे वै स हरेः प्रियः ॥ ५१ ॥

न यस्य स्वः पर इति वित्ते स्वात्मनि वाऽभिदा ।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥

त्रिभुवनविभवहेतुभिर्विकुण्ठ-
स्मृतिभिरजेशसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्धमपि स्म स वैष्णवाग्र्यः ॥ ५३ ॥

भगवत उरुविक्रमाङ्घ्रिशाखा-
नखमणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः स
प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥

विसृजति हृदयं न यस्य साक्षाद्
हरिरवशाभिहितोऽप्यघोघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥ ५५ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

राजोवाच–
परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ।
मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥

नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।
संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥

अन्तरिक्ष उवाच–
एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ।
ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥ ३ ॥

एवं सृष्ट्वा स भूतानि स्वविष्टैः पञ्चधातुभिः ।
एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ॥ ४ ॥

गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः ।
मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥ ५ ॥

कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत् ।
तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ॥ ६ ॥

इत्थं कर्मगतीर्गच्छन् बह्वभद्रावहः पुमान् ।
आभूतसंप्लवात् स्वर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥

धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ।
अनादिनिधनः कालो ह्यव्यक्ताय विकर्षति ॥ ८ ॥

शतवर्षमनावृष्टिर्भविष्यत्युल्बणा भुवि ।
तत्कालोपचितोष्णार्को लोकांस्त्रीन् प्रतपिष्यति ॥ ९ ॥

पातालतलमारभ्य सङ्कर्षणमुखानलः ।
दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः ॥ १० ॥

संवर्तको मेघगणो वर्षति स्म शतं समाः ।
धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥

ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ।
अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानिलः ॥ १२ ॥

वारिणा हृतगन्धा भूः सलिलत्वाय कल्पते ।
सलिलं तद् हृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥

हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ।
हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ १४ ॥

कालात्मना हृतगुणं नभ आत्मनि लीयते ।
इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ १५ ॥

प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि ॥ १६ ॥
एष माया भगवतः सर्गस्थित्यन्तकारिणी ।
त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि ॥ १७ ॥

राजोवाच–
यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।
तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १८ ॥

प्रबुद्ध उवाच–
कर्मण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १९ ॥

नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ २० ॥

एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
अतुल्यातिशयध्वंसाद् यथा मण्डलवर्तिनाम् ॥ २१ ॥

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शा(श)ब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २२ ॥

तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः ।
अमाययाऽनुवृत्त्या च तुष्येदात्माऽऽत्मदो हरिः ॥ २३ ॥

सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २४ ॥

शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २५ ॥

सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेत(नम्)ताम् ।
विविक्तचीरवसनं सन्तोषं येन केनचित् ॥ २६ ॥

श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
मनोवाक्काय(वाक्कर्म)दण्डं च सत्यं शमदमावपि ॥ २७ ॥

श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २८ ॥

इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् परस्मै सन्निवेदयेत् ॥ २९ ॥

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ ३० ॥

परस्परानुकथनं पावनं भगवद्यशः ।
मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३१ ॥

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्ताः सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३२ ॥

क्वचिद् रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३३ ॥

इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३४ ॥

राजोवाच–
नारायणाभिधानस्य ब्रह्मणः परमात्मनः ।
निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥ ३५ ॥

पिप्पलायन उवाच–
स्थित्युद्भवप्रलयहेतुरहेतुरस्य
यः स्वप्नजागरसुषुप्तिषु सन् बहिश्च ।
देहेन्द्रियासुहृदयानि चरन्ति येन
सञ्जीवितानि तदवेहि परं नरेन्द्र ॥ ३६ ॥

नैनं मनो विशति वागुत चक्षुरात्मा
प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः ।
शब्दोऽप्यबोधकनिषेधतयाऽऽत्ममूल-
मर्थोक्तमाह यदृते न निषेधसिद्धिः ॥ ३७ ॥

सत्त्वं रजस्तम इति त्रिवृदेकमादौ
सूत्रं महानहमिति प्रवदन्ति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति
ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥ ३८ ॥

नात्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते स च न विध्यति चारिणा हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥ ३९ ॥

अण्डेषु पेशिषु तरुष्वविनिश्चितेषु
प्राणेन जीव उपधावति तत्र तत्र ।
छन्ने मतीन्द्रियगणेऽहमि च प्रसुप्ते
कूटस्थ आस यमृते तदनुस्मृतिर्नः ॥ ४० ॥

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
चेतो मलानि विधमेद् गुणकर्मजानि ।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद् यथाऽमलदृशो सवितृप्रकाशः ॥ ४१ ॥

राजोवाच–
कर्मयोगं वदत नः पुरुषो येन संस्कृतः ।
विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४२ ॥

एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ।
नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४३ ॥

आविर्होत्र उवाच–
कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः ॥ ४४ ॥

परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४५ ॥

नाऽऽचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४६ ॥

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्थं फलश्रुतिः ॥ ४७ ॥

य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम् ॥ ४८ ॥

लब्ध्वा चाव्यग्रमाचार्यं तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ॥ ४९ ॥

शुचिः संमुख आसीनः प्राणसंयमनादिभिः ।
पिण्डं संशोध्य संन्यासकृतरक्षोऽर्चयेद् हरिम् ॥ ५० ॥

अर्चादौ हृदये चापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५१ ॥

पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः ।
हृदयादिकृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५२ ॥

साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ।
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥ ५३ ॥

गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ।
साङ्गं सम्पूज्य विधिवत् स्तवैःस्तुत्वा नमेद् हरिम् ॥ ५४ ॥

आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद् हरेः ।
शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५५ ॥

एवमग्न्यर्कतोयादावतिथौ हृदये च यः ।
यजेश्वरं स्वमात्मानमचिरान्मुच्यते हि सः ॥ ५६ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः

राजोवाच–
यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ।
चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥ १ ॥

द्रुमिल उवाच–
यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन् स तु बालबुद्धिः ।
रजांसि भूमेर्गणयेत् कथंचित् कालेन नैवाखिलसत्त्वधाम्नः ॥

भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥३॥

यत्काय एष भुवनत्रयसन्निवेशो
यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानांशकेन विशतो बलमोज ईहा
सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥

आदावभूच्छतधृती रजसाऽस्य सर्गे
विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ।
रुद्रोऽप्ययाय तमसा पुरुषः स आद्य
इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥

धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या
नारायणो नर इति स्वतपःप्रभावः ।
नैष्कर्म्यलक्षणमुवाच चचार योगं
योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥ ६ ॥

इन्द्रोऽपि नाक्यसुखमेष जिघृक्षतीति
कामं न्ययुङ्क्त सगणं (च) स बदर्युपाख्यम् ।
गत्वाऽप्सरोगणवसन्तसुमन्दवातैः
स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥

विज्ञाय शक्रकृतमक्रममादिदेवः
प्राह प्रहस्य गतविस्मय एजमानान् ।
मा भैर्विभो मदनमारुतदेववध्वो
गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥

इत्थं ब्रुवत्यभयदे नरदेवदेवे
सव्रीडनम्रशिरसः सघृणं तमूचुः ।
नेयं विभो त्वयि परेऽविकृतिर्विचित्रा
स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥

त्वां सुन्वतां सुरकृता बहवोऽन्तरायाः
कस्तान् विलंघ्य व्रजतात् परमं पदं ते ।
नान्यस्य बर्हिषि बलिं ददतः स्वभागं
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥

क्षुत्तृट्त्रिकालगुणमारुत जैह्वशैश्न्या-
दस्मादपारजलधेरतितीर्य केचित् ।
क्रोधस्य यान्ति विफलस्य वशे पदे गो-
र्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥ ११ ॥

इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।
दर्शयामास शुश्रूषां(षाः) स्वार्चने कुर्वतीर्विभुः ॥ १२ ॥

ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥

तानाह देवदेवेशः प्रणतान् प्रहसन्निव ।
आसामेकतमां वृङ्ध्वं सुवर्णां स्वर्गभूषणाम् ॥ १४ ॥

ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।
उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥

इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ।
ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥

हंसस्वरूप्यवददच्युत आत्मयोगं
दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयाऽवतीर्ण-
स्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥

गुप्ताऽप्यये मनुरिला ऋषधयश्च मात्स्ये
क्रोडे हतो दितिज उद्धरतोऽम्भसे क्ष्माम् ।
कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे
ग्राहात् प्रपन्नमिभराजममुञ्चदार्तम् ॥ १८ ॥

संस्तुन्वतोऽब्धिपतितांछ्रमणान् ऋषींश्च
शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा
जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥

देवासुरे युधि स दैत्यपतीन् सुरार्थे
हत्वाऽन्तरेषु भुवनान्यदधात् कलाभिः ।
भूत्वाऽथ वामन इमामहरद् बलेः क्ष्मां
याश्चाछलेन समदाददितेः सुतेभ्यः ॥ २० ॥

निःक्षत्रियामकृत गां च त्रिसप्तकृत्वः
रामस्तु हैहयकुलाप्ययभार्गवाग्निः ।
सोऽब्धिं बबन्ध दशवक्त्रमहन् स लङ्कां
सीतापतिर्जयति लोकमलंध्यकीर्तिः ॥ २१ ॥

भूमेर्भरावतरणाय यदुष्वजन्मा
जातः करिष्यति सुरैरपि दुष्कराणि ।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान्
शूद्रान् कलेः क्षितिभुजो न्यहनिष्यदन्ते ॥ २२ ॥

एवं विधानि कर्माणि जन्मानि च जगत्पतेः ।
भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः

राजोवाच–
भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ।
तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥

चमस उवाच–
मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानभ्रष्टाः पतन्त्यधः ॥ ३ ॥

दूरे हरिकथाः केचिद् दूरे चाच्युतकीर्तनाः ।
स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥ ४ ॥

विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ।
श्रौतेन जन्मना वाऽपि मुह्यन्त्याम्नायवादिनः ॥ ५ ॥

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ।
वदन्ति चाटुकान् मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥

रजसा घोरसंकल्पाः कामुका अभिमन्यवः ।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥

वदन्ति तेऽन्योन्यमुपासितस्त्रियो
गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणा
वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥

श्रिया विभूत्याऽभिजनेन विद्यया
त्यागेन रूपेण बलेन कर्मणा ।
जातस्मयेनान्धधियः सहेश्वरान्
सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥ ९ ॥

सर्वेषु शश्वत् तनुभृत्स्ववस्थितं
यथा स्वमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतं च न शृण्वतेऽबुधा
मनोरथानां प्रवदन्ति वार्तया ॥ १० ॥

लोके व्यवायामिषमद्यसेवा नित्यास्तु
जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विहाय यज्ञान्
सुराग्रहैरासुरवृत्तिरिष्टा ॥ ११ ॥

धनं हि धर्मैकफलं यतोऽस्य
ज्ञानं सविज्ञानमनुप्रशान्तिः ।
गृहेषु युञ्जन्ति कलेवरस्य
मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥

यद् घ्राणभक्षो विहितः सुरायाः
तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्यै
इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥

ये त्वनेवंविदोऽसन्तस्तथा सद(सि)भिमानिनः ।
पशून् द्रुह्यन्ति विस्रब्धान् प्रेत्य खादन्ति ते च तान् ॥१४॥

द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ।
मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥

यं (ये) कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम् ।
त्रैवर्गिकाभिजन्मानमात्मानं पा(घा)तयन्ति ते ॥ १६ ॥

ये तत्रात्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।
सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥

हित्वाऽत्यायासरचितगृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनुच्छ्वासं वासुदेवपराङ्मुखाः ॥ १८ ॥

राजोवाच–
कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥

करभाजन उवाच–
कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥

कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान् बिभ्रद् दण्डकमण्डलू ॥ २१ ॥

मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ।
यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥

हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥

त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥

तं तदा मनुजा देवं सर्वदेवमयं हरिम् ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥

विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥

द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥

तं तथा पुरुषं मर्त्या महाराजोपलक्षणम् ।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥

नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय रामाय सर्वभूतात्मने नमः ॥ ३० ॥

इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥

कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं
वन्दामहे पुरुष ते चरणारविन्दम् ॥ ३३ ॥

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्मिष्ठ(मा) आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्
वन्दामहे पुरुष ते चरणारविन्दम् ॥ ३४ ॥

एवं युगानुरूपाभ्यां भगवान् युगवर्तिभिः ।
मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥ ३५ ॥

कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
(त)यत्र सङ्कीर्तनादेव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥

न ह्यतःपरमो लाभो देहिनां भ्राम्यतामिह
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ३७ ॥

कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।
यत्र संकीर्तनान्नृणां हरिर्दास्यत्यसम्भवम् ॥ ३८ ॥

कलौ तथा भविष्यन्ति नारायणपरायणाः ।
क्वचित् क्वचिन्महाराज द्रमिलेषु च भूयशः ॥ ३९ ॥

ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
कावेरी च महापुण्या प्रतीची च महानदी ॥ ४० ॥

ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ ४१ ॥

देवर्षिभूताप्तनृणां पितॄणां
न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिचर्यया च ॥ ४२ ॥

स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः ॥ ४३ ॥

नारद उवाच–

धर्मान् भागवतानित्थं श्रुत्वा स मिथिलेश्वरः ।
जायन्तेयान् मुनीन् प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४४ ॥

ते चान्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ।
राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४५ ॥

त्वमप्येतान् महाभाग धर्मान् भागवतान् श्रुतान् ।
आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥ ४६ ॥

युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् ।
पुत्रतामगमद् यद् वां भगवानीश्वरो हरिः ॥ ४७ ॥

दर्शनालिङ्गनालापैः शयनासनभोजनैः ।
आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥ ४८ ॥

वैरेण यं नृपतयः शिशुपालपौण्ड्र-
साल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियः पुनः किम् ॥ ४९ ॥

माऽपत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ।
मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥ ५० ॥

भूभारासुरराजन्यहन्तवे गुप्तये सताम् ।
अवतीर्णोऽस्य निर्वृत्यै यशो लोके वितन्यते ॥ ५१ ॥

श्रीशुक उवाच–

एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः ।
देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५२ ॥

इतिहासमिमं पुण्यं धारयेद् यः समाहितः ।
स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५३ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः

बादरायणिरुवाच–

अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ।
भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥ १ ॥

इन्द्रो मरुद्भिर्भगवानादित्यो वसवोऽश्विनौ ।
ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥

गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ।
ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥

द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ।
वपुषा येन भगवान् नरलोकमनोरमः ।
यशो वितन्वन् लोकेषु सर्वलोकमलापहम् ॥ ४ ॥

तस्यां विभ्राजमानायां समृद्धायां महर्धिभिः ।
व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥ ५ ॥

स्वर्गोद्यानोद्भवैर्माल्यैश्छादयन्तो यदूत्तमम् ।
गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥

देवा ऊचुः–

नताः स्म ते नाथ पदारविन्दं
बुद्धीन्द्रियप्राणमनोवचोभिः ।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैः
मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं
व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।
नैतैर्भवानजित कर्मभिरज्यते वै
यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥ ८ ॥

शुद्धिर्नृणां न तु तथेड्य दुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः ।
सत्वात्मनामृषभ ते यशसि प्रवृद्ध-
सच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ ९ ॥

स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः
क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।
यः सात्वतैः समविभूतिभिरात्मवद्भि-
र्व्यूहार्चितः सवनशः समविक्रमै(र्यः)श्च ॥ १० ॥

यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ
त्रय्या निरुक्तविधिना स्वहविर्गृहीत्वा ।
अध्यात्मयोग उत योगिभिरात्ममाया-
जिज्ञासुभिः परमभागवतैः परीष्टः ॥ ११ ॥

पर्युष्टया पतितया वनमालयेयं
संस्पर्धिनी भगवती प्रतिपक्षवच्छ्रीः ।
यः सुप्रणीतममुयाऽर्हणमाददानो
भूयात् सदाऽङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥

केतुस्त्रिविक्रमसतस्त्रिपतत्पताको
यस्ते भयाभयकरोऽसुरदेवचम्वोः ।
स्वर्गाय साधुषु खलेष्वितराय भूम्नः
पादः पुनातु भगवन् जगतामघं नः ॥ १३ ॥

नस्योतगाव इव यस्य वशे भवन्ति
देवाश्च यस्तनुभृदायुषि रज्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य
शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥

अस्यासि हेतुरुदयस्थितिसंयमानां
अव्यक्तजीवमहतामपि कालमात्रः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः
कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥

त्वत्तः प्रधानमधिकृत्य पुमान् स्ववीर्यं
धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं त्वयाऽनुगत आत्मन आण्डकोशं
हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥

तत् तस्थुषश्च जगतश्च भवानधीशो
यन्माययोत्थगुणविक्रिययोपनीतान् ।
अर्थान् जुषन्नपि हृषीकपते न लिप्तो
येऽन्ये स्वतः परिहृतानपि बिभ्यति स्म ॥ १७ ॥

स्मायावलोकलवदर्शितभावहारि-
भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणै-
र्यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ १८ ॥

बिभ्रत् तवामृतकथोदवहास्त्रिलो(काः)क्याः
पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गै-
स्तीर्थद्वयं शुचिषदस्तदुपस्पृशन्ति ॥ १९ ॥

बादरायणिरुवाच–
इत्यभिष्टूय विबुधैः सेशः सत्यधृतिर्हरिम् ।
अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥

ब्रह्मोवाच–
भूमेर्भारावतराय पुरा विज्ञापितः प्रभो ।
त्वमस्माभिरशेषात्मंस्तत् तथैवोपपादितम् ॥ २१ ॥

धर्मश्च स्थापितः सत्सु सत्यसन्धेषु (सत्वं साधुषु) वै त्वया ।
कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥

अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ।
कर्माण्यु(द्दाम)दारवृत्तानि हितानि जगतोऽकुथाः ॥ २३ ॥

यानि ते चरितानीश मनुष्याः साधवः कलौ ।
शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥

यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ॥ २५ ॥

नाधुना तेऽखिलाधार देवकार्यावशेषितम् ।
कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥

ततः स्वधाम परमं विशस्व यदि मन्यसे ।
सलोकं लोकपालान् नः पाहि वैकुण्ठकिङ्करान् ॥ २७ ॥

श्रीशुक उवाच–
संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ।
प्रतिनन्द्याह तान् राजन् मायामनुज ईश्वरः ॥ २८ ॥

श्री भगवानुवाच–
अवधारितमेतन्मे यदात्थ (यदर्थे) विबुधेश्वराः ।
कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २९ ॥

तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षत्यूर्ध्वं मे वेलामिव महार्णवः ॥ ३० ॥

यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुल्वणेन विनंक्ष्यति ॥ ३१ ॥

इदानीं नाश आरब्धः कुलस्य द्विजशापतः ।
यास्यामि भवनं ब्रह्मन्नेतदन्ते तवा(ज्ञया)नघ ॥ ३२ ॥

श्रीशुक उवाच–
इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ।
सह देवगणैर्देवः स्वं धाम समपद्यत ॥ ३३ ॥

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ।
विलोक्य भगवानाह यदुवृद्धान् समागतान् ॥ ३४ ॥

श्रीभगवानुवाच–
एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः ।
शापस्य नः कुलस्यासीद् ब्राह्मणेभ्यो दुरत्ययः ॥ ३५ ॥
न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ।
प्रभासं सुमहापुण्यं यास्यामोऽद्यैव मा चिरम् ॥ ३६ ॥

यत्र स्नात्वा दक्षशापात् गृहीतो यक्ष्मणोडुराट् ।
विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥ ३७ ॥

वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान् ।
भोजयित्वो(त्वाऽर्थिनो)षिजो विप्रान् नानागुणवतान्धसा ॥

तेषु दानानि पात्रेषु श्रद्धयाऽर्प्य महान्ति वै ।
वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ ३९ ॥

श्री शुक उवाच–
एवं भगवताऽऽदिष्टा यादवाः कुरुनन्दन ।
गन्तुं कृतधियस्तीर्थं स्यन्दनान् समयूयुजन् ॥ ४० ॥

तान् निरीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितम् ।
दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ ४१ ॥

विविक्त उपसंगम्य जगतामीश्वरेश्वरम् ।
प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥ ४२ ॥

उद्धव उवाच–
देवदेवेश योगेश पुण्यश्रवणकीर्तन ।
संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते (सम्पयते) भवान् ॥
विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ ४३ ॥

नाहं तवाङ्घ्रियुगलं क्षणार्धमपि केशव ।
त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥ ४४ ॥

तव विक्रीडितं कृष्ण नृणां परममङ्गलम् ।
कर्णपीयूषमासाद्य त्यजत्यन्यस्पृहां जनः ॥ ४५ ॥

शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ।
कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ ४६ ॥

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ ४७ ॥

वातरशना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥४८॥

वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकै(र्दुस्त्यजं) दुस्तरं तमः ॥ ४९ ॥

स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ।
गत्युत्स्मितेक्षणोक्ष्वेलि यन्नृलोकविडम्बनम् ॥ ५० ॥

श्री शुक उवाच–
एवं विज्ञापितो राजन् भगवान् देवकीसुतः ।
एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥ ५१ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः

श्रीभगवानुवाच–
यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ।
ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः ॥ १ ॥

मया निष्पादितं ह्यत्र देवकार्यमशेषतः ।
यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः ॥ २ ॥

कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात् ।
समुद्रः सप्तमे ह्येनां पुरीं च प्लावयिष्यति ॥ ३ ॥

यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ।
भविष्यत्यचिरात् साधो कलिनापि निराकृतः ॥ ४ ॥

न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ।
जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥ ५ ॥

त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ।
मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम् ॥ ६ ॥

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ ७ ॥

पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ।
कर्माकर्मविकर्मेति गुणदोषधियो(धिया) भिदा ॥ ८ ॥

तस्माद् युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥

ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यते ॥ १० ॥

दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥ ११ ॥

सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ।
पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥

श्रीशुक उवाच–
इत्यादिष्टो भगवता महाभागवतो नृप ।
उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥ १३ ॥

उद्धव उवाच–
योगेश योगविन्यास योगात्मन् योगसम्भव ।
निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥

त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः ।
सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥

सोऽहं ममाहमिति मूढमतिर्विगाढ-
स्त्वन्मायया विरचितात्मनि सानुबन्धे ।
तत्त्वञ्जसा निगदितं भवता यथाहं
संसाधयामि भगवन्ननुशाधि भृत्यम् ॥ १६ ॥

सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं
वक्तारमीश विबुधेष्वपि नानुचक्षे ।
सर्वे विमोहितधियस्तव माययेमे
ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥

तस्माद् भवन्तमनवद्यमनन्तपारं
सर्वज्ञमीश्वरमखण्डविकुण्ठधिष्ण्यम् ।

निर्वेदधीरहरहर्वृजिनाभितप्तो
नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥

श्री भगवानुवाच–
प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ।
समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥

आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।
यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥

पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ।
आविस्तारं प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥

एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ।
बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥

अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ।
गृह्यमाणैरात्मलिङ्गैः (स्वग्राह्य) अग्राह्य मनुमानतः ॥२३॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अवधूतस्य संवादं यदोरमिततेजसः ॥ २४ ॥

अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।
कविं निरीक्ष्य निपुणं यदुः पप्रच्छ धर्मवित् ॥ २५ ॥

कुतो बुद्धिरियं ब्रह्मन्नकर्तुस्ते विशारदा ।
यामासाद्य भवान् लोकान् विद्वांश्चरति बालवत् ॥ २६ ॥

प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ।
हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥

त्वं तु कल्पः (कल्यः) कविर्दक्षः सुभगोऽमृतभाषणः ।
न कर्तुमीहसे किञ्चिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥

जनेषु दह्यमानेषु कामलोभदवाग्निना
न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः ॥ २९ ॥

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥

श्री भगवानुवाच–
यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ।
पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥

ब्राह्मण उवाच–
सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥ ३२ ॥

पृथिवी वायुराकाश आपोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः ॥ ३३ ॥

मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥

एते मे गुरवो राजन् चतुर्विंशतिराश्रिताः ।
शिक्षावृत्तिभिरेतेषामन्वशिक्षमहं ततः ॥ ३५ ॥

यतो यदनुशिक्षामि यथा वा नाहुषात्मज ।
तत् तथा पुरुषव्याघ्र निबोध कथयामि ते ॥ ३६ ॥

भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।
तद्विदान् न चलेन्मार्गादनुशिक्षन् क्षितेर्व्रतम् ॥ ३७ ॥

शश्वत् परार्थसर्वेहां परार्थैकान्तसम्भवम् ।
साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥

प्राणवृत्त्यैव सन्तुष्येन् मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥

विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ४० ॥

पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ।
गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ ४१ ॥

अन्तर्बहिश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो
मुनिर्नभोवद् विततस्य भावयेत् ॥ ४२ ॥

तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ।
न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान् ॥ ४३ ॥

स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ।
मुनिः पुनात्यपां मित्रमीक्षणस्पर्शकीर्तनैः ॥ ४४ ॥

तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ४५ ॥

कचिच्छन्नः कचित् स्पष्ट उपास्यः श्रेय इच्छताम् ।
भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम् ॥ ४६ ॥

स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ।
प्रविष्ट ईयते तत्तत्स्व(स)रूपोऽग्निरिवैधसि ॥ ४७ ॥

विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः ।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥

कालनद्योघवेगेन भूतानां प्रभवाप्ययौ ।
नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथाऽर्चिषाम् ॥ ४९ ॥

गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ।
न तेषु सज्जते योगी गोभिर्गा इव गोपतिः ॥ ५० ॥

बुद्धिसंस्थेन भेदेन व्यक्तस्थ इव तद्गतः ।
लक्ष्यते स्थूलमतिभिरात्मा चाप्सुस्थितार्कवत् ॥ ५१ ॥

नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन् विन्देत सन्तापं कपोत इव दीनधीः ॥ ५२ ॥

कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ।
कपोत्या भार्यया सार्धमुवास कतिचित् समाः ॥ ५३ ॥

कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ।
दृष्टिं दृष्ट्याऽङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥ ५४ ॥

शय्यासनाटनस्थानवार्ताक्रीडाशनादिषु ।
मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥

यद्यद् वाञ्छति सा राजन् तदर्थमनुकम्पितः ।
तं तं (ततः) समानयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६

कपोती प्रथमं गर्भं गृह्णती काल आगते ।
अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ॥ ५७ ॥

तेषु काले व्यजायन्त रचितावयवा हरेः ।
शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहा ॥ ५८ ॥

प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ।
शृण्वन्तौ कूजितं तासां रुवन्तौ कलभाषितैः ॥ ५९ ॥

तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ।
प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ६० ॥

स्नेहबद्धानुहृदयावन्योन्यं विष्णुमायया ।
विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥ ६१ ॥

एकदा जग्मतुस्तासामशनार्थं कुटुम्बिनौ ।
परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥

दृष्ट्वा तान् लुब्धकः कश्चिद् यदृच्छातो वनेचरः ।
जगृहे जालमातत्य चरतः स्वालयान्तिके ॥ ६३ ॥

कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ।
गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥

कपोती स्वात्मजान् वीक्ष्य बालकान् जालसंवृतान् ।
तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥

साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ।
स्वयं चावध्यत शिचा (सिचा) बद्धान् पश्यन्त्यपस्मृतिः ॥

कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकप्रियान् ।
भार्यां चात्मसमां दीनां विललापातिदुःखितः ॥ ६७ ॥

अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ।
अतृप्तस्याकृतार्थस्य गृ(गे)हास्त्रैवर्गिका हताः ॥ ६८ ॥

अनुरूपाऽनुकूला च यस्य मे पतिदेवता ।
शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥

सोऽहं शून्यगृहे दीनो मृतदारो मृतप्रजः ।
जिजीविषे किमर्थं वा विदुरो दुःखजीवनः ॥ ७० ॥

तांस्तथाऽऽवृतान् शि(सि)ग्भिर्मृत्युग्रस्तान् विचेष्टतः ।
स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥

तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ।
कपोतकान् कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥

एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् ।
पुष्णन् कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ७३ ॥

यः(यं) प्राप्य मानुषं लोकं मुक्तिद्वारमनावृतम् ।
गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः ॥ ७४ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे सप्तमोऽध्यायः ॥

यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ।
तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३६ ॥

शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३७ ॥

नहि तस्य विकल्पाख्या क्रिया मद्दीक्षया हता ।
आदेहा(न्तं)न्तात् कचित् ख्यातिस्ततः सम्पद्यते मया ॥ ३८ ॥

दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३९ ॥

तावत् परिचरेद् भक्तः श्रद्धावाननसूयकः ।
यावद् ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ४० ॥

यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४१ ॥

सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ४२ ॥

भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ।
गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४३ ॥

ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम् ।
गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥ ४४ ॥

इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् ।
सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते चिरात् ॥ ४५ ॥

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ४६ ॥

इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ।
ज्ञानविज्ञानसम्पन्नो विरक्तो समुपैति माम् ॥ ४७ ॥

वर्णाश्रमवतां धर्म एष आचारलक्षणः ।
स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४८ ॥

एतत् तेऽभिहितं साधो भवान् पृच्छति यच्च माम् ।
यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम् ॥ ४९ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टादशोऽध्यायः ॥

## अथ एकोनविंशोऽध्यायः

श्रीभगवानुवाच–
यो विद्याश्रुतसम्पन्न आत्मवानानुमानिकः ।
मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्यसेत् ॥ १ ॥

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥

ज्ञानविज्ञानसम्वद्धाः (सम्बन्धात्) पदं श्रेष्ठं विदुर्मम ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥

तपस्तीर्थं जपो दानं पवित्राणीतराणि च ।
नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता ॥ ४ ॥

ज्ञानविज्ञानसहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥ ५ ॥

ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽन्वगुः ॥ ६ ॥

त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो
मायाऽन्तराऽपतति नाद्यपवर्गयोर्यत् (यः) ।
जन्मादयोऽस्य वद मां तव तस्य किं स्यु-
रायन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥

उद्धव उवाच–
ज्ञानं विशुद्धं विपुलं यथै(दे)तद्
वैराग्यविज्ञानयुतं पुराणम् ।
आख्याहि विश्वेश्वर विश्वमूर्ते
त्वद्भक्तियोगं च महद्विमृग्यम् ॥ ८ ॥

तापत्रयेणाभिहतस्य घोरे
सन्तप्यमानस्य भवाध्वनीश ।
पश्यामि नान्यच्छरणं तवाङ्घ्रि-
द्वन्द्वातपत्रादमृताभिवर्षात् ॥ ९ ॥

दष्टं जनं सम्पतितं बिलेऽस्मिन्
कालाहिना क्षुद्रसुखोरुतर्षम् ।
समुद्धरैनं कृपयाऽपवर्ग्यैः
वचोभिरासिञ्च महानुभाव ॥ १० ॥

श्रीभगवानुवाच–
इत्यमेतत् पुरा राजा भीष्मं धर्मभृतां वरम् ।
अजातशत्रुः पप्रच्छ सर्वेषामनुशृण्वताम् ॥ ११ ॥

निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ।
श्रुत्वा धर्मान् बहून् भीष्मं मोक्षधर्मानपृच्छत ॥ १२ ॥

तानहं तेऽभिधास्यामि देवव्रतमुखाच्छुतान् ।
ज्ञानविज्ञानवैराग्यश्रद्धाभक्त्युपबृंहितान् ॥ १३ ॥

नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।
ईक्षेतान्येकमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १४ ॥

एतदेव हि विज्ञानं न तथैकेन येन यत् ।
स्थित्युत्पत्त्यप्यया नः स्युर्भावानां त्रिगुणात्मनाम् ॥ १५ ॥

आदावन्ते च मध्ये च यज्ज्ञं सृज्यं यदन्वयात् ।
पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ॥ १७ ॥

कर्मणां फलरूपत्वादाविरिश्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥

भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥

श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २० ॥

आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।
मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥ २१ ॥

मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।
मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥

मदर्थे च परित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं हुतं भुक्तं मदर्थं यद् व्रतं तपः ॥ २३ ॥

एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिना(दन)म् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥

यदा मय्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम् ।
धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २५ ॥

यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति ।
रजस्वलमसन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥

धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।
गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ २७ ॥

उद्धव उवाच–
यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ।
कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥ २८॥

किं दानं किं तपः शौर्यं किं सत्यं कमलेक्षण ।
किमन्नं तृप्तिजननं किञ्च शौचं जनार्दन ॥ २९ ॥

कस्त्यागः किं धनं श्रेष्ठं को यज्ञः का च दक्षिणा
पुंसः किंस्विद् बलं श्रीमद् भगो लाभश्च केशव ॥ ३० ॥

का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ।
कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ ३१ ॥

कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ।
क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ ३२ ॥

एतान् प्रश्नान् मम ब्रूहि विपरीतं च सत्पते ॥ ३३ ॥

श्रीभगवानुवाच–
अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३४ ॥

शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३५ ॥

एते यमाः सनियमा उभयोर्द्वादश स्मृताः ।
पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥ ३६ ॥

शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ।
तितिक्षा दुःखसम्मर्दो(र्षो) जिह्वोपस्थजयो धृतिः ॥ ३७ ॥

दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ।
स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३८ ॥

ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ।
कर्मस्वसङ्गमः शौचं त्यागः सन्न्यास उच्यते ॥ ३९ ॥

धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ।
दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम् ॥ ४० ॥

भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ।
विद्याऽऽत्मनि भिदाबोधो जुगुप्सा हीरकर्मसु ॥ ४१ ॥
श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः ।
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥ ४२ ॥
मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः ।
उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४३ ॥
नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखा ।
गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४४ ॥
दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ।
गुणेष्व(सक्तः स्ववशः) सक्तधीरीशो गुणसङ्गी विपर्ययः ॥
एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः ।
किं वर्णितेन बहुना लक्षणं गुणदोषयोः ॥ ४६ ॥
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जनम् ॥ ४७ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे एकोनविंशोऽध्यायः ॥

# अथ विंशोऽध्यायः

उद्धव उवाच–
विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।
अवेक्षतेऽरविन्दाक्ष गुणदोषं च कर्मणाम् ॥ १ ॥
वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ।
द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥ २ ॥
गुणदोषभिदादृष्टिमन्तरेण वचस्तव ।
निःश्रेयसं कथं नु स्यान्निषेधविधिलक्षणम् ॥ ३ ॥
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ।
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥
गुणदोषभिदादृष्टिर्नियमात् तेन हि स्वतः ।
नियमेनापवादश्च भिदाया इति हि भ्रमः ॥ ५ ॥
श्रीभगवानुवाच–
योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥ ७ ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥
तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥
स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव ।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥
अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥
स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।
साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥
न नरः स्वर्गतिं काङ्क्षेन्नारकीं च विचक्षणः ।
नेमं लोकं च काङ्क्षेत देहावेशात् प्रमाद्यति ॥ १३ ॥
एवं विद्वान् पुरा मृत्योरभावाय घटेत सः ।
अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥
छिद्यमानं कालावयवैः कृतनीडं वनस्पतिम् ।
खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥
अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ।
मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥
नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं
सुकल्पं (सुकल्प्य) गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं
पुमान् भवाब्धिं न तरेत् स आत्महा ॥ १७ ॥
यदाऽऽरम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥
मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।
सत्त्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥

एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।
हृदयज्ञत्वमन्विच्छन् दमय्यैवेच्छतो मुहुः ॥ २१ ॥

साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत् प्रसीदति ॥ २२ ॥

निर्विण्णस्य विरक्तस्य पुरुषस्यात्मवेदिनः ।
मनस्त्यजति दौरात्म्यं (दौर्भाग्यं) चिन्तितस्यानुचिन्तया ॥

यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥

यदि कुर्यात् प्रमादेन योगी कर्म विगर्हितम् ।
योगेनैव दहेदंहो नान्यं यत्नं (यन्त्रं) कदाचन ॥ २५ ॥

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः ॥ २६ ॥

कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन त्वंहसां त्याजनेच्छया ॥ २७ ॥

जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥ २८ ॥

ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।
जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ २९ ॥

प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।
कामा हृदिस्था नश्यन्ति सर्वे मयि हृदि स्थिते ॥ ३० ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३१ ॥

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानान्न च वैराग्यात् प्रायः श्रेयो भवेदिह ॥ ३२ ॥

यत् कर्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३३ ॥

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ ३४ ॥

न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३५ ॥

नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमकल्पम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३६ ॥

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः (पर)पारमुपेयुषाम् ॥ ३७ ॥

एवमेतान् मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥ ३८ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे विंशोऽध्यायः ॥

## अथ एकविंशोऽध्यायः

श्रीभगवानुवाच–
य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ।
(य एतां मत्कथां हित्वा भक्तिज्ञानक्रियात्मिकाम् ।)
क्षुद्रान् कामान् खलैः (चलैः) प्राणैर्जुषन्तः संसरन्ति ते ॥

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।
द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥

धर्मार्थं व्यवहारार्थं यात्रार्थमिति वाऽनघ ।
दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥

भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ।
आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥

भेदेन नामरूपाणि विषमाणि समेष्वपि ।
धातुशुद्धयै विकल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥

देशकालादिभावानां वचनान्मम सत्तम ।
गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥

कृष्णसारोऽथ देशानां ब्राह्मणानां शुचिर्भवेत् ।
कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणः ॥ ८ ॥

कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा ।
यतो निवर्तते कर्म सदोषोऽकर्मकः स्मृतः ॥ ९ ॥

द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन वा ।
संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथ वा ॥ १० ॥

शक्त्याऽशक्त्या च वाग्बुद्ध्या समृद्ध्या च तथाऽऽत्मनः ।
अन्ये शुद्ध्यन्ति हि तथा देशावस्थानुसारतः ॥ ११ ॥

धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ।
कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥

अमेध्यलिप्तं यद् येन गन्धलेपं व्यपोहति ।
भजते प्रकृतिं तस्य तच्छौचमुपदिश्यते ॥ १३ ॥

स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः ।
मदस्यासान्मनःशौचं कृत्वा कर्माचरेद् बुधः ॥ १४ ॥

मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।
धर्मः सम्पाद्यते सद्भिरधर्मस्तु विपर्ययैः ॥ १५ ॥

क्वचिद् गुणोपि दोषः स्याद् दोषोऽपि विधिना गुणः ।
गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥

समानकर्माचरणेऽपतितानां न पातकम् ।
औत्पत्तिको गुणैः सङ्गो न शयानः पतत्यधः ॥ १७ ॥

यतो यतो निवर्तेत विमुच्येत ततस्ततः ।
एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥

विषयेषु गुणध्यानात् पुंसः सङ्गस्ततो भवेत् ।
सङ्गादेव भवेत् कामः कामादेव कलिर्नृणाम् ॥ १९ ॥

कलेर्दुविषहः क्रोधस्तमस्तदनुवर्तते ।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी ततः ॥ २० ॥

तया च रहितः साधो जन्तुः शून्याय कल्पते ।
ततोऽस्य स्वार्थविभ्रंशो(ऽ)मूर्च्छितस्य मृतस्य च ॥ २१ ॥

विषयाभिनिवेशेन नात्मानं वेद नापरम् ।
वृक्षजीविकया जीवन् व्यर्थं ग्रस्तवयाः श्वसन् ॥ २२ ॥

फलश्रुतिरियं नृणां नः श्रेयोरोचनं परम् ।
श्रोतुर्विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥

उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।
आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥

न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।
कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ॥ २५ ॥

एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ।
फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि ॥ २६ ॥

कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।
अग्निमुग्धा धूमतान्ताः स्वलोकं न विदन्ति ते ॥ २७ ॥

न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ।
उक्थशास्रो ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥

ते मे मतमविज्ञाय परोक्षविषयात्मकाः ।
हिंसायां यदि कामः स्याद् यज्ञ एव न चोदना ॥ २९ ॥

हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।
यजन्ते देवता यज्ञैः पितॄन् भूतपतीन् खलाः ॥ ३० ॥

स्वप्नोपममम्मुं लोकमसन्तं श्रवणप्रियम् ।
आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥३१॥

रजःसत्वतमोनिष्ठा रजःसत्वतमोजुषः ।
उपासते इन्द्रमुख्यान् देवादी(नयथैव)न् न यथैव माम् ॥

इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।
तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥

एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ।
मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥

वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपि ।
परोक्षवादो वेदोऽयं परोक्षं मम च प्रियम् ॥ ३५ ॥

शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥

मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ।
भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥

यथोर्णनाभिर्हृदयादूर्णामुद्वहते मुखात् ।
आकाशाद् घोषवान् प्राणो मनसाऽऽस्पर्शरूपिणा ॥ ३८॥

छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ओङ्कारेव्यञ्जितां स्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ३९ ॥

विचित्रभाषावितातां छन्दोभिश्चतुरुत्तरैः ।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद् विराट् ॥ ४१ ॥

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके (साक्षात्) नान्यो मद् वेद कश्चन ॥

मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम् ॥ ४३ ॥

एतावान् सर्ववेदार्थः शब्द आस्थाय मांऽभिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यति ॥ ४४ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे एकविंशोऽध्यायः ॥

## अथ द्वाविंशोऽध्यायः

उद्धव उवाच–
कानि तत्त्वानि विश्वेश सङ्ख्यातान्यृषिभिः प्रभो ।
नवैकादशपञ्चत्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥

केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ।
सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ।
केचित् सप्तदश प्राहुः षोडशैके त्रयोदश ॥ २ ॥

एतावत्त्वं हि सङ्ख्यानामृषयो यद्विवक्षया ।
गायन्ति पृथगायुष्मन्निदं नो वक्तुर्महसि ॥ ३ ॥

श्रीभगवानुवाच–
युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।
मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥

नैतदेवं यथाऽत्थ त्वं यदहं वच्मि तत् तथा ।
एवं विवदतां हेतुः शक्तयो मे दुरत्ययाः ॥ ५ ॥

यासां व्यतिकरादासीद् विकल्पो वदतां पदम् ।
प्राप्ते शमदमे व्येति वादस्तमनुशाम्यति ॥ ६ ॥

परस्परानुप्रवेशात् तत्त्वानां पुरुषर्षभ ।
पौर्वापर्यप्रसङ्ख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥

एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ।
पूर्वस्मिन् वाऽपरस्मिन् वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥

पौर्वापर्यमथोऽमीषां प्रसङ्ख्यानमभीप्सताम् ।
यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसम्भवात् ॥ ९ ॥

अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ।
स्वतो न सम्भवेद् यस्मात् ततोऽन्यः पुरुषो भवेत् ॥ १०॥

पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।
तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥ ११ ॥

प्रकृतेर्गुणसाम्ये तु प्रकृतेर्नात्मनो गुणाः ।
सत्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥

सत्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥

पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥

श्रोत्रं त्वग् दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।
वाक्पाण्युपस्थपाय्वङ्घ्रिकर्माण्यङ्गोभयं मनः ॥ १५ ॥

शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥

सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ।
सत्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्तमीक्षते ॥ १७ ॥

व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ।
लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥

सप्तैव धातव इति यत्रार्थाः पञ्च खादयः ।
ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥ १९ ॥

षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ।
तैर्युक्तात्मसम्भूतैः सृष्ट्वेदं समुपाविशत् ॥ २० ॥

चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ।
जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥

सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ।
पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥

तद्वत् षोडशसङ्ख्यानि आत्मना मन उच्यते ।
भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥ २३ ॥

इति नानाप्रसङ्ख्यानं तत्वानामृषिभिः कृतम् ।
सर्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम् ॥ २४ ॥

उद्धव उवाच–
प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।
अन्योन्यापाश्रयात् कृष्ण दृश्यते न भिदा तयोः ॥ २५ ॥

प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि ।
एतन्मते पुण्डरीकाक्ष महान्तं संशयं हृदि ।
छेत्तुमर्हसि पद्मेश वचोभिस्तत्वनैपुणैः ॥ २६ ॥

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तनुशक्तितः ।
त्वमेव ह्यात्ममायाया गतिं वेत्थ नचापरः ॥ २७ ॥

श्रीभगवानुवाच–
प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ।
एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २८ ॥

ममाङ्ग माया गुणमय्यनेकधा
विकल्पबुद्धिं च गुणैर्विधत्ते ।
वैकारिकस्त्रिविधोऽध्यात्ममेकं
अथाधिदैवमधिभूतमन्यत् ॥ २९ ॥

दृग् रूपमर्कश्च परत्र रन्ध्रे
परस्परं सिध्यति न स्वतोऽसौ ।
आत्मा यदेषामुपराम आद्यः
स्वयाऽनुभूत्याऽखिलसिध्यसिद्धिः ॥ ३० ॥

एवं त्वगादि श्रवणादि चक्षुः
जिह्वादिना सादि च चित्तयुक्तम् ॥
योऽसौ गुणक्षोभकृतो विकारः
प्रधानमूलो जगतः प्रसूतिः ।
अहं त्रिवृन्मोह विकल्पहेतुः
वैकारिकः तामस ऐन्द्रियश्च ॥ ३१ ॥

आत्मा परिज्ञानमयो विवादो
ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां
मत्तः परावृत्तधियां स्वलोकात् ॥ ३२ ॥

उद्धव उवाच–
त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ।
उच्चावचान् यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥

तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ।
न ह्येतत् प्रायशो लोके विद्वांसोऽ(वन्ति)श्नन्ति वञ्चिताः ॥

श्री भगवानुवाच–
मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ।
लोकाल्लोकं प्रयात्यन्यमात्मा तदनुवर्तते ॥ ३६ ॥

ध्यायन्मनो हि विषयान् दृष्टान् वाऽनुश्रुतानथ ।
उद्यत् सीदत् कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ॥ ३७ ॥

विषयाभिनिवेशेन नात्मानं यत् स्मरेन्मनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥

जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ।
विषयस्वीकृतिं प्राहुर्यथा स्वप्न(प्नो)मनोरथः ॥ ३९ ॥

स्वप्नं मनोरथं चार्थं प्राक्तनं न स्मरत्यसौ ।
तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥ ४० ॥

ईदृशायास विज्ञाय त्रैविध्यं भाति वस्तुनि ।
बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद् यथा ॥ ४१ ॥

नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥ ४२ ॥

यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ।
तथैव सर्वभूतानां वयोऽवस्था च तत्कृता ॥ ४३ ॥

सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम् ।
सोऽयं पुमानिति नृणां मृषागीर्भिर्मृषायुषाम् ॥ ४४ ॥

आद्यः स्वकर्मबीजेन जायते सोऽव्ययः पुमान् ।
म्रियते चामरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥

निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ।
वयो मध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥

एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ।
गुणसङ्गादुपादत्ते क्वचित् कश्चिज्जहाति च ॥ ४७ ॥

आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।
भवाप्ययौ हि भूतानामभिज्ञाद्वयलक्षणौ ॥ ४८ ॥

तरोर्बीजविकाराभ्यां यो विद्वान् जन्मसंयमौ ।
तरोर्विलक्षणो द्दष्ट एवं द्रष्टा तनोः पृथक् ॥ ४९ ॥

प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ।
तत्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते ॥ ५० ॥

सत्वसङ्गाद् ऋषीन् देवान् रजसाऽऽसुरमानुषान् ।
तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥

नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ।
एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥

यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन द्दश्यते भ्रमतीव भूः ॥ ५३ ॥

यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्नद्दष्टश्च दाशार्ह तथा संसार आत्मनः ॥ ५४ ॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयान् पुंसः स्वप्नेऽप्यर्थागमो यथा ॥ ५५ ॥

तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः ।
आत्माग्रहणनिष्पन्नं पश्यन् वैकल्पिकं भ्रमम् ॥ ५६ ॥

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धः शापितोपि वा ।
ताडितः सन्निरुद्धो वा वृत्या वा परिहापितः ॥ ५७ ॥

विष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥ ५८ ॥

उद्धव उवाच–
यथैवमनुबुध्येयं वद नो वदतां वर ।
सुदुःसहमहं मन्ये आत्मन्यसदतिक्रमम् ॥ ५९ ॥

विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी ।
ऋते त्वद्धर्मनिरतान् शान्तास्ते चरणालयान् ॥ ६० ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे द्वाविंशोऽध्यायः ॥

# अथ त्रयोविंशोऽध्यायः

श्री शुक उवाच–
स एवमाशंसित उद्धवेन भागवतमुख्येन दशार्हवर्यः ।
सभाजयन् भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥१॥

श्रीभगवानुवाच–
वाह्यान्तर्भज(भर्ज,भंञ्ज)नो ह्यत्र साधुर्वै दुर्जनेरितैः ।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥

न तथा तप्यते विद्धः पुमान् बाणैर्हि मर्मगैः ।
यथा तुदन्ति मर्मस्था असतां परुषेषवः ॥ ३ ॥

कथयन्ति महापुण्यमितिहासमिहोद्धव ।
तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥

केनचिद् भिक्षुणा गीतं परिभूतेन दुर्जनैः ।
स्मरता धृतियुक्तेन विपाकं निजकर्मणः ॥ ५ ॥

अवन्तीषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ।
वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥

ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणाप्यनर्चिताः ।
शून्यावसथ आत्माऽपि काले कामैरनर्चितः ॥ ७ ॥

दुःशीलस्य कदर्यस्य द्रुह्यतः पुत्रबान्धवान् ।
दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ॥ ८ ॥

तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ।
धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः ॥ ९ ॥

तदव(ज्ञान)ध्यानविस्रस्त-
पुण्यस्कन्धस्य भूरिद ।
अर्थोऽप्यगच्छन्निधनं
बह्वायास(परिभ्रमात्) (परिश्रमः)परिष्कृतः ॥ १० ॥

ज्ञातयो जगृहुः किञ्चित् किञ्चिद् दस्यव उद्धव ।
दैवतः कालतः किञ्चिद् ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥

स एवं द्रविणे नष्टे धर्मकामविवर्जितः ।
उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥

तस्यैवं ध्यायतो दीर्घमगादायुस्तपस्विनः ।
खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥

स चाहेदमहो कष्टं वृथाऽऽत्मा मे सुतापितः ।
न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥

प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ।
इह चात्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥

यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥१६॥

अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥

स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ।
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥

एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् ।
तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ १९ ॥

भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ।
एकयाऽर्थेच्छया सद्यः सर्वे चाप्यरयः कृताः ॥ २० ॥

अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ।
त्यजन्त्यसून् वृथा घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥

लब्ध्वा जन्मामरैः प्रार्थ्यं मानुष्यं तद् द्विजाग्र्यताम् ।
तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥

स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ।
द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥

देवर्षिपितृभूतानि ज्ञातीनन्यांश्च भागिनः ।
असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥

व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम् ।
कुशलाय न सिध्यन्ति जरठः किन्नु साधये ॥ २५ ॥

तस्मात् संक्लिश्यतेऽविद्वान् व्यर्थयाऽर्थेहयाऽसकृत् ।
कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥

किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ।
मृत्युना ग्रस्यमानस्य कर्मभिर्वेति जन्मदैः (जन्मभिः) ॥

नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ।
येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८ ॥

सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ।
अप्रमत्तोऽखिलार्थेषु यदि स्यां सिद्ध आत्मनि ॥ २९ ॥

तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ।
मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥

श्रीभगवानुवाच–
इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ।
उन्मुच्य हृदयग्रन्थिं शान्तो भिक्षुरभून्मुनिः ॥ ३१ ॥

स चचार महीमेतां संयतात्मेन्द्रियानलः ।
भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥ ३२ ॥

तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ।
दृष्ट्वा पर्यभवन् भद्र बह्वीभिः परिभूतिभिः ॥ ३३ ॥

केचित् त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् ।
पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३४ ॥

प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ।
अन्नं च भैक्षसम्पन्नं भुञ्जानस्य सरित्तटे ॥ ३५ ॥

मूत्रयन्ति च पापिष्ठा निष्ठीवन्त्यस्य मूर्धनि ।
यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत् ॥ ३६ ॥

तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ।
बध्नन्ति रज्ज्वा तं केचिद् बध्यतां बध्यतामिति ॥ ३७ ॥

क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः ।
क्षीणवित्त इमां वृत्तिमग्रहीत् स्वजनोज्झितः ॥ ३८ ॥

अहो एष महासारो धृतिमान् गिरिराडिव ।
मौनेन साधयत्यर्थं बकवद् दृढनिश्चयः ॥ ३९ ॥

इत्येके विहसन्त्येनमेके दौर्वादयन्ति च ।
तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥ ४० ॥

एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ।
भोक्तव्यमात्मनो(ऽनिष्टं) दिष्टं प्राप्तं प्राप्तमबुध्यत ॥ ४१ ॥

परिभूत इमां गा(धा)थामगायत नराधमैः ।
पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम् ॥ ४२ ॥

भिक्षुरुवाच–
नायं जनो मे सुखदुःखहेतु-
र्न देवतात्मा ग्रहकर्मकालाः ।
मनः परं कारणमामनन्ति
संसारचक्रं परिवर्तयेद् यत् ॥ ४३ ॥

मनो गुणान् वै सृजते बलीय-
स्ततश्च कर्माणि विलक्षणानि ।
शुक्लानि कृष्णान्यथ लोहितानि
तेभ्यः सवर्णा गतयो भवन्ति ॥ ४४ ॥

अनीह आत्मा मनसा(मनसः) समीहितं
हिरण्मयो मत्सख उद्विचष्टे ।
मनः स्वलिङ्गं परिगृह्य (प्रतिगृह्य) कामान्
जुषन् निबद्धो गुणसङ्गतोऽसौ ॥ ४५ ॥

दानं स्वधर्मो नियमो यमश्च
श्रुतानि कर्माणि च सद्व्रतानि ।
सर्वे मनोनिग्रहलक्षणान्ताः
परो हि योगो मनसः समाधिः ॥ ४६ ॥

समाहितं यस्य मनः प्रशान्तं
दानादिभिः किं वद तस्य कृत्यम् ।
असंयतं यस्य मनो विनश्यद्
दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥

मनोवशेऽन्ये हि भवन्ति देवा
मनश्च नान्यस्य वशं समेति ।
भीमो हि देवः सहसः सहीयान्युञ्ज्याद्
वशे तं स हि देवदेवः ॥ ४८ ॥

तं दुर्जयं शत्रुमसह्यवेग-
मरुन्तुदं तन्न विजित्य केचित् ।
कुर्वन्त्यसद्विग्रहमत्र मर्त्यैः
मित्रैरुदासीनरिपुं विमूढाः ॥ ४९ ॥

देहं मनोमात्रमिमं गृहीत्वा
ममाहमित्यन्धधियो मनुष्याः ।
एषोऽहमन्योऽयमिति भ्रमेण
दुरन्तपारे तमसि भ्रमन्ति ॥ ५० ॥

जनोऽस्य हेतुः सुखदुःखयोश्चेत्
किमात्मनश्चात्र हि भौमयोस्तत् ।
जिह्वां क्वचित् सन्दशति स्वदद्भिः
तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥

दुःखस्य हेतुर्यदि देवतास्तु
किमात्मनस्तत्र विकारयोस्तत् ।
यदङ्गमङ्गेन निहन्यते क्वचित्
क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥

आत्मा यदि स्यात् सुखदुःखहेतुः
किमन्यतस्तत्र निजः स्वभावः ।
न ह्यात्मनोऽन्यद् यदि तन्मृषा स्याद्
क्रुध्येत कस्मै न सुखं न दुःखम् ॥ ५३ ॥

ग्रहा निमित्तं सुखदुःखयोश्चेत्
किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव वदन्ति पीडां
क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥

कर्मास्तु हेतुः सुखदुःखयोश्चेत्
किमात्मनस्तद् हि जडेऽजडत्वे ।
देहे स्ववित् पुरुषोऽयं सुपर्णः
क्रुध्येत कस्मै न हि कर्म मूलम् ॥ ५५ ॥

कालोऽस्तु हेतुः सुखदुःखयोश्चेत्
किमात्मनस्तत्र तदात्मनोऽसौ ।
नाग्नेर्हि तापो न हिमस्य तत्
स्यात् क्रुध्येत कस्मै न परस्य बोद्धुः ॥ ५६ ॥

न केनचित् क्वापि कथञ्चनास्य
द्वन्द्वोपरागः परतः परस्य ।
यथाऽत्मनः संसृतिरूपिणः स्यात्
एवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥

एतां समास्थाय परात्मनिष्ठा-
मध्यासितां पूर्वतनैर्महर्षिभिः ।
अहं तरिष्यामि दुरन्तपारं
तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥

श्रीभगवानुवाच–
निर्विद्य नष्टद्रविणो गतक्लमः
प्रव्रज्य गां पर्यटमान इत्थम् ।
निराकृतोऽसद्भिरपि स्वधर्मात्
कम्पितोऽसौ मुनिराह गाथाम् ॥ ५९ ॥

सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ।
मित्रोदासीनरिपवः संसारः स्वमनस्ततः ॥ ६० ॥

तस्मात् सर्वात्मना तात निगृहाण मनो धिया ।
मय्यावेशितया युक्त एतावान् योगसङ्ग्रहः ॥ ६१ ॥

य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ।
धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रयोविंशोऽध्यायः ॥

# अथ चतुर्विंशोऽध्यायः

श्रीभगवानुवाच–
अथ ते सम्प्रवक्ष्यामि साङ्ख्यं पूर्वविनिश्चितम् ।
यद् विज्ञाय पुमान् सद्यो जह्याद् वैकल्पिकं मलम् ॥ १ ॥

आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगे जनाः ॥ २ ॥

तन्मया फलरूपेण केवलेन विकल्पितम् ।
वाङ्मनोगोचरं सत्यं द्विधा समभवद् बृहत् ॥ ३ ॥

तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भागः पुरुषः सोऽभिधीयते ॥ ४ ॥

तमो रजः सत्वमिति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन वा ॥ ५ ॥

तेभ्यः समभवत् सूत्रं महान् सूत्रेण च संयुतम् ।
ततो विकुर्वतो जातो योऽहंकारो विमोहकः ॥ ६ ॥

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥

अर्थस्तन्मात्रको जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद् देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥

मया सञ्चोदिता भावाः सर्वे संहत्य कारिणः ।
अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥

तस्मिन्नहं समभवमण्डे सलिलसंस्थिते ।
मम नाभ्यामभूत् पद्मं विश्वाख्यं तत्र चात्मभूः ॥ १० ॥

सोऽसृजत् तपसा युक्तो रजसा मदनुग्रहात् ।
लोकान् सपालान् विश्वात्मा भूर्भुवःस्वरिति त्रिधा ॥ ११॥

देवानामोक आसीत् स्वर्भूतानां च भुवः पदम् ।
मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात् परम् ॥ १२ ॥

अधोऽसुराणां नागानां भूमेरोकोऽसृजत् प्रभुः ।
त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ १३ ॥

योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः ।
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४॥

मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।
गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥

अणुर्बृहत् कृशः स्थूलो यो यो भावः प्रसिध्यति ।
सर्वं ह्युभयसंयुक्तं प्रकृत्या पुरुषेण च ॥ १६ ॥

यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य तत् ।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥

यदुपादाय पूर्वस्तु भावो विकुरुते परम् ।
आदिरन्तो यतो यस्मिंस्तत् सत्यमभिधीयते ॥ १८ ॥

प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः स्मृतः ।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत् त्रितयं त्वहम् ॥ १९ ॥

सर्गः प्रवर्तते तावत् पौर्वापर्येण नित्यशः ।
महान् गुणविसर्गोऽर्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥

विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।
पञ्चत्वायाविशेषाय कल्पते भुवनैः सह ॥ २१ ॥

अन्ने प्रलीयते मर्त्य अन्नं धानासु लीयते ।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥

अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ।
लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥ २३ ॥

रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ।
अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ॥ २४ ॥

योनिर्वैकारिके सौम्य लीयते महतीश्वरे ।
शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥

स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।
तेऽव्यक्ते सम्प्रलीयन्ते तत् काले लीयतेऽव्यये ॥ २६ ॥

कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥

एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥

एष साङ्ख्यविधिः प्रोक्तः संशयग्रन्थिभेदकः ।
प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥

# अथ पञ्चविंशोऽध्यायः

श्रीभगवानुवाच–
गुणानामप्यमिश्राणां पुमान् येन यथा भवेत् ।
तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥

शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीः क्षमा निस्तुतिर्धृतिः ॥ २ ॥

काम ईहा मदस्तृष्णा (मनस्तृष्णा) स्तम्भ आशीर्भिदाऽसुखम् ।
मनोत्साहो यशः प्रीतिर्हास्यं वीर्यबलोद्यमः ॥ ३ ॥

क्रोधो लोभोऽनृतं हिंसा माया दम्भोऽक्षमा कलिः ।
शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः ॥ ४ ॥

सत्वस्य रजसश्चैव तमसश्चानुपूर्वशः ।
वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥

सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ।
व्यवहारः सन्निपाते मनोमात्रेन्द्रियासुभिः ॥ ६ ॥

धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ।
गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥

प्रवृत्तिलक्षणां निष्ठां पुरुषो यर्हि गृहाश्रमे ।
स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥

पुरुषं सत्वसंयुक्तमनुमायाच्छमादिभिः ।
कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसाऽऽवृतम् ॥ ९ ॥

यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।
तं सत्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव च ॥ १० ॥

यदा आशिष आशास्य मां यजेत स्वकर्मभिः ।
तं रजःप्रकृतिं विद्यात् हिंसामाशास्य तामसम् ॥ ११ ॥

सत्वं रजस्तम इति गुणा जीवस्य नैव मे ।
चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥

यदेतरौ जयेत् सत्वं भास्वरं विशदं शिवम् ।
तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥

यदा जयेत् तमस्सत्वे रजः सङ्गभिदाचलम् ।
तदा(ऽसुखेन) दुःखेन युज्येत कर्मणा यशसा श्रिया ॥१४॥

यदा जयेद् रजस्सत्वे तमो मूढं (मूढो) ह्ययं जनः ।
युज्यते शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥ १५ ॥

यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ।
देहेऽभयं मनोऽसङ्गं तत् सत्वं विद्धि मत्पदम् ॥ १६ ॥

विकुर्वन् क्रियया चाधीरनिवृत्तिश्च चेतसः ।
गात्रास्वास्थ्यं मनो भ्रान्त रज एतैर्निशामय ॥ १७ ॥

सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ।
मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥

एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥ १९ ॥

सत्वाज्जागरणं विद्याद् रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिष्वसङ्गतम् ॥ २० ॥

उपर्युपरि गच्छन्ति सत्वेनाब्रह्मणो जनाः ।
तमसा अधोऽध आमुख्याद् रजसाऽन्तरचारिणः ॥ २१ ॥

सत्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥ २२ ॥

मदर्पणं निष्फलं वा सात्विकं निजकर्म तत् ।
राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥

कैवल्यं सात्त्विकं ज्ञानं कर्मनिष्ठं तु राजसम् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥

वनं तु सात्त्विको वासो ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥

सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥

सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥

पथ्यं युक्तमनायस्तमाहार्यं सात्त्विकं स्मृतम् ।
राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥

सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥

द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ।
श्रद्धाऽवस्था कृतिर्निष्ठा त्रैगुण्याः सर्व एव हि ॥ ३० ॥

सर्वे गुणमया भावा पुरुषाव्यक्तनिष्ठिताः ।
दृष्टं श्रुतमनुध्यायेद् बुध्या वा पुरुषर्षभ ॥ ३१ ॥

एताः संसृतयः पुंसां गुणकर्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ।
भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ ३२ ॥

सत्त्वं चाभिजयेत् युक्तो नैरपेक्ष्येण शान्तधीः ।
सम्पद्यते गुणैर्मुक्तो जीवं जीवो विहाय माम् ॥ ३३ ॥

तस्माद् देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ।
मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३४ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे पञ्चविंशोऽध्यायः ॥

## अथ षड्विंशोऽध्यायः

श्रीभगवानुवाच–
मल्लक्षणमिमं कायं लब्ध्वा मद्धर्ममास्थितः ।
आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥ १ ॥

गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।
वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥ २ ॥

सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ।
तस्यानुगस्तमस्यन्धे पतत्यन्धानुगोऽन्धवत् ॥ ३ ॥

ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ।
उर्वशीविरहान्मुह्यन् निर्विण्णः शोकसंयुतः ॥ ४ ॥

त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवनृपः ।
विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥ ५ ॥

कामानतृप्तोऽनुजुषन् क्षुल्लकान् वर्षयामिनीः ।
न वेद गणनां यान्तीमुर्वश्याऽऽकृष्टचेतनः ॥ ६ ॥

ऐल उवाच–
अहो मे मोहविस्तारः कामकश्मलचेतसः ।
देव्या गृहीतकण्ठस्य नायुः खण्डा अनुस्मृताः ॥ ७ ॥

नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितो मृषा ।
मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥

अहो मे आत्मसम्मोह येनात्मा योषिता हृतः ।
क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥

सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ।
यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद् रुदन् ॥ १० ॥

कुतस्तस्यानुभावः स्यात् तेज ईशित्वमेव वा ।
योऽन्वगच्छं स्त्रियं यान्तीं स्मरमबाणविताडितः ॥ ११ ॥

किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥

स्वार्थस्याकोविदं धिङ् मां मूर्खं पण्डितमानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥

सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।
न तृप्त आत्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥

पुंश्चल्याऽपहृतं चित्तं को न्वन्यो मोचितुं प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥

बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।
मनोगतो महामाहो नापयात्यजितात्मनः ॥ १६ ॥

किं न्वेतया म एकान्ते रज्वां वै सर्पचेतसः ।
द्रष्टुः स्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥

कायं मलीमसः कायो दौर्गन्धाद्यात्मकोऽशुचिः ।
क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥

पित्रोः किं स्विन्नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।
किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥

तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ।
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥

त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ।
विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥

अथापि नो विषज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ।
विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यदा ॥ २२ ॥

अदृष्टादश्रुताद् भावान्न भाव उपजायते ।
असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥

तस्माद् सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।
विदुषां चाप्यविश्रभ्यः षड्वर्गः किमु मादृशाम् ॥ २४ ॥

श्री भगवानुवाच–
एवं प्रगायन् नृपदेवदेवः स उर्वशीलोकमथो विहाय ।
आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥

ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।
सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥

सन्तोऽनपेक्षा मच्चिताः प्रशान्ताः समदर्श(र्शिनः)नाः ।
निर्ममा निरहङ्कारा निर्द्वन्द्वा निःपरिग्रहाः ॥ २७ ॥

तेषु नित्यं महाभाग महाभागेषु मत्कथाः ।
सम्भवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥

ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ।
मत्पराः श्रद्धधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥

भक्तिं लब्धवतः साधो किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥

यथोपाश्रयमाणस्य भगवन्तं विभावसुम् ।
शीतं भयं तमो व्येति साधुं संसेवतस्तथा ॥ ३१ ॥

निमज्योन्मज्जतां घोरे भवाब्धौ ते परायणम् ।
सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥

अन्नं हि प्राणिनां प्राणं (प्राणः) आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग् बिभ्यतोऽरणम् ॥ ३३ ॥

सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः पिता माताऽहमेव च ॥ ३४ ॥

चेतसेलासुतोऽप्येवमुर्वश्या लोकनिःस्पृहः ।
मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे षड्विंशोऽध्यायः ॥

## अथ सप्तविंशोऽध्यायः

उद्धव उवाच–
क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ।
येन त्वां ये यथाऽर्चन्ति सात्वताः सात्वतर्षभ ॥ १ ॥

एतद् वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ।
नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥

निःसृतं ते मुखाम्भोजाद् यदाह भगवानजः ।
पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥ ३ ॥

एतद् वै सर्ववर्णानामाश्रमाणां च सम्मतम् ।
श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥

एतद्धि कमलपत्राक्ष कर्मबन्धविमोचनम् ।
भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥

श्रीभगवानुवाच–
न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ।
संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समाचरेत् ॥ ७ ॥

यथा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तं निबोध मे ॥ ८ ॥

अर्चायां स्थण्डिलेऽग्नौ वा सूर्येऽप्सु हृदि वा द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥

पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ।
उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिभिः ॥ १० ॥

सन्ध्योपास्त्यादिकर्माणि वेदतन्त्रोदितानि मे ।
पूजां तैः कल्पयेत् सम्यक् सङ्कल्पः कर्मपावनः ॥ ११ ॥

शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥

चलाचलेति द्विविधा प्रतिष्ठा(प्रतिमा) जीवमन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥

अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् ।
स्नपनं तु विलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥

द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः(मायया) ।
भक्त्या चैव यथालब्धैर्हृदि भावेन चैव हि ॥ १५ ॥

स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव (मेतदुद्धव) ।
स्थण्डिले तत्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥

सूर्ये चाभ्यर्हणं (चार्घ्यार्हणं) प्रेष्ठं (श्रेष्ठं) सलिले सलिलादिभिः ।
श्रद्धयोपहृतं श्रेष्ठं भक्तेन मम वार्यपि ।
गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १७ ॥

शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः ।
आसीनः प्रागुदग्वाऽर्चेदर्चायां त्वथ सम्मुखः ॥ १८ ॥

कृतन्यासो मदार्चां च पाणिनाऽभिमृजेद् बुधः ।
कलशं प्रोक्षणीयं च यथावदुपसादयेद् ॥ १९ ॥

तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ।
प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च सादयेत् ॥ २० ॥

पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि देशिकः ।
हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाऽभिमन्त्रयेत् ॥ २१ ॥

पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ।
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २२ ॥

तयाऽऽत्मभूतया पिण्डे व्याप्ते सम्पूज्य तन्मयः ।
आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २३ ॥

पाद्योपस्पर्शनार्घ्यादीनुपचारान् प्रकल्पयेत् ।
धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २४ ॥

पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ।
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २५ ॥

सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २६ ॥

नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।
महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥ २७ ॥

दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ।
स्वे स्वे स्थाने त्वभिमुखान् पूजयेत् प्रोक्षणादिभिः ॥ २८ ॥

चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ।
सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ २९ ॥

स्वस्य घर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥ ३० ॥

वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलङ्कुर्वीत सप्रेम मद्भक्तो मां यथोचितैः ॥ ३१ ॥

पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् ।
धूपदीपोपहार्याणि दद्यान्मे श्रद्धयाऽर्चकः ॥ ३२ ॥

गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ।
संयावं दधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३३ ॥

अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।
अन्नादि(द्यं) नृत्यगीतादि पर्वणि स्युस्तथाऽन्वहम् ॥ ३४ ॥

विधिना विहिते कुण्डे मेखलागर्तवेदिभिः ।
अग्निमाधाय परितः समूहेत् पाणिनोदितम् ॥ ३५ ॥

परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ।
प्रोक्षण्यासाद्य द्रव्याणि प्रोक्ष्याग्नावावहेत माम् ॥ ३६ ॥

तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३७ ॥

स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३८ ॥

ध्यायन्नभ्यर्च्य दारूणि हविषाऽभिघुतानि च ।
प्रास्याज्यभागावाघार्य दत्वा चाज्यप्लुतं हविः ॥ ३९ ॥

जुहुयान्मूलमन्त्रेण षोडषर्चावधानतः ।
धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४० ॥

अभ्यर्च्याग्निं (अभ्यर्चायां) नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।
मूलमन्त्रं जपेद् ब्रह्म स्मरन् नारायणात्मकम् ॥ ४१ ॥

दत्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ।
मुखवासं सुरभिमत् ताम्बूलाद्यमथार्हयेत् ॥ ४२ ॥

उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम ।
मत्कथाः श्रावयन् शृण्वन् मुहूर्तक्षणिको भवेत् ॥ ४३ ॥

स्तवै(सर्वै)रुच्चावचैः श्रौतैः (स्तोत्रैः) पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४४ ॥

शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥ ४५ ॥

ततः शेषां मया दत्तां शिरस्याधाय सादरम् ।
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत् पुनः ॥ ४६ ॥

अर्चादिषु यथा यत्र श्रद्धा मां तत्र चार्चयेत् ।
सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥ ४७ ॥

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चानुभावतः सिद्धिं मत्तो विन्दत्यभिप्सिताम् ॥ ४८ ॥

मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद् दृढम् ।
पुष्पोद्यानानि रम्याणि पूजां तत्रोत्सवाश्रिताम् ॥ ४९ ॥

पूजादीनां प्रवाहार्थे महापर्वसु चान्वहम् ।
क्षेत्रापणपुरोग्रामान् दत्वा मत्सार्ष्टितामियात् ॥ ५० ॥

प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५१ ॥

मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।
स भक्तियोगं लभते एवं यः पूजयेत माम् ॥ ५२ ॥

यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ।
वृत्तिं स जायते विड्भुग् वर्षाणामयुतायुतम् ॥ ५३ ॥

कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ।
कर्मणां भागिनः प्रेत्य भूयो भूयसि तत् फलम् ॥ ५४ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे सप्तविंशोऽध्यायः ॥

# अथ अष्टविंशोऽध्यायः

श्रीभगवानुवाच–
परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥ १ ॥

परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रंशते स्वार्थादसत्याभिनिवेशतः ॥ २ ॥

तैजसे निद्रयाऽऽपन्ने पिण्डस्थो नष्टचेतनः ।
मायां प्राप्नोति मृत्युं वा तद्वि नानार्थदं मनः ॥ ३ ॥

किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥

छायाप्रत्युदकाभासा ह्यसन्तोऽप्यर्थकारिणः ।
एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥

आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥

तस्मान्न ह्यात्मनोऽमुष्मादन्यो भावो निरूपितः ।
अनिरूपितेयं त्रिविधा निर्मूला मतिरात्मनि ॥ ७ ॥
इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ८ ॥

एतद् विद्वान् मदुदितं ज्ञानविज्ञाननैपुणः ।
न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ९ ॥

प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ १० ॥

उद्धव उवाच–
नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ।
अनात्मस्वदृशोरीश कस्येयमुपलभ्यते ॥ ११ ॥

आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ।
अग्निवद् दारुवदचिद् देहः कस्येह संसृतिः ॥ १२ ॥

श्रीभगवानुवाच–
यावद् देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।
संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १३ ॥

अर्थेऽप्यविद्यमानेपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ १४ ॥

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्प(ल्प्य)ते ॥ १५ ॥

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः ॥ १६ ॥

देहेन्द्रियप्राणमनोभिमानो
जीवोऽन्तरात्मा गुणकर्ममूर्तिः ।
सूत्रं महानित्युरुधेह गीतः
संसार आधावति कालतन्त्रः ॥ १७ ॥

अमूलमेतद् बहुरूपरूपं
मनोवचःप्राणशरीरकर्म ।
ज्ञानासिनोपासनया शितेन
च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १८ ॥

ज्ञानं विवेको निगमस्तपश्च
प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं
कालश्च हेतुश्च तदेव मध्ये ॥ १९ ॥

यथा हिरण्यं स्वकृतं पुरस्तात्
पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं
नानापदेशैरहमस्य तद्वत् ॥ २० ॥

विज्ञानमेतत् त्रिपदस्थमङ्ग
गुणत्रयं कारणकार्यकर्तृ ।
समन्वयेन व्यतिरेकतश्च
येनैव तुर्येण तदेव सत्यम् ॥ २१ ॥

न यत् पुरस्तादुत यन्न पश्चान्
मध्ये च तन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यत्
तदेव सत् स्यादिति मे मनीषा ॥ २२ ॥

अविद्यमानोऽप्यवभासते यो
वैकारिको राजससर्ग एषः ।
ब्रह्म स्वयंज्योतिरतो विभाति
ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥ २३ ॥

एवं स्फुटं ब्रह्म विविच्य हेतुभिः
परापवादेन विवेकवुध्या ।
छित्त्वाऽऽत्मसन्देहमुपारमेत
स्वानन्दतुष्टोऽखिलकामुकेभ्यः ॥ २४ ॥

नात्मा वपुः पार्थिवमिन्द्रियाणि
देवा ह्यसुर्वायुजलं हुताशः ।
मनोऽन्नमात्रं धिषणा च सत्व-
महङ्कृतिः स्वं कृतिरर्थसाम्यम् ॥ २५ ॥

समाहितैः कः करणैर्गुणात्मभि-
र्गुणो भवेत् तत्सुविविक्तधाम्नः ।
विक्षिप्यमाणैरुत किं नु दूषणं
घनैरुपेतैर्विगतै रवेः किम् ॥ २६ ॥

यथा नभो वाय्वनलाम्बुभूगुणै-
र्गतागतैर्वा त्रिगुणैर्न सज्जते ।
तथाऽक्षरं सत्वरजस्तमोमलै-
रसङ्कतं संसृतिहेतुभिः परम् ॥ २७ ॥

तथापि सङ्गः परिवर्जनीयो
गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन यावत्
रजो निरस्येत तमःकषायम् ॥ २८ ॥

यथाऽमयोऽसाधुचिकित्सितो नृणां
पुनः पुनः सन्तुदति प्ररोहन् ।
एवं मनोऽपक्वकषायकर्म
कुयोगिनं विध्यति सर्वसङ्गम् ॥ २९ ॥

कुयोगिनो ये विहिता ह्यन्तरायै
मनुष्यभूतैस्त्रिदशोपसृष्टैः ।
ते प्राक्तनाभ्यासबलेन भूयो
युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥ ३० ॥

करोति कर्म क्रियते च जन्तुः
केनाप्यसौ चोदित आनिपातात् ।
न तत्र विद्वान् प्रकृ(तौ)तिस्थितोऽपि
निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३१ ॥

तिष्ठन्तमासीनमुत व्रजन्तं
शयानमुक्षन्तमदन्तमन्नम् ।
स्वभावमन्यत् किमपीहमान-
मात्मानमात्मस्थमतिर्न वेद ॥ ३२ ॥

यदि स्म पश्यत्यसदिन्द्रियार्थं
नानानुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी
स्वप्नं यथोत्थाय तिरोदधानम् ॥ ३३ ॥

पूर्वं गृहीतं गुणकर्मचित्र-
मज्ञानमात्मन्यविविक्तमङ्ग ।
निवर्तते तत् पुनरीक्षयैव
न गृह्यते नापि विसृज्य आत्मा ॥ ३४ ॥

यथा हि भानोरुदयो नृचक्षुषां
तमो निहन्यान्न च (तु)संविधत्ते
एवं समीक्षा निपुणा सती मे
हन्यात् तमिस्रं पुरुषस्य बुद्धेः ॥ ३५ ॥

एष स्वयंज्योतिरजोऽप्रमेयो
महानुभूतिः सकलानुभूतिः ।
एकोऽद्वितीयो वचसां विरामो
येनेरिता वागसवश्चरन्ति ॥ ३६ ॥

एतावानात्मसंमोहो यद् विकल्पस्तु केवले ।
आत्माऽमृते स्वमात्मानमचलं यन्न पश्यति ॥ ३७ ॥

यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।
व्यर्थो नाप्यर्थवादोऽयं द्वयं विन्दन्ति सूरयः ॥ ३८ ॥

योगिनो पक्वयोगस्य युञ्जतः काल उत्थितैः ।
उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३९ ॥

योगधारणया कांश्चिदासनैर्धारणान्वितैः ।
तपोमन्त्रौषधैः कांश्चिदुपसर्गान् विनिर्दहेत् ॥ ४० ॥

कांश्चिन्ममानुध्यानेन नामसङ्कीर्तनादिभिः ।
योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शुभैः ॥ ४१ ॥

केचिद् देहमिमं धार्यं सुकल्पं (सुकल्यं) वयसि स्थितम् ।
विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥ ४२ ॥

इह वर्षशताशीत्या तदायासो ह्यपार्थकः ।
अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४३ ॥

योगं निषेवतो नित्यं कायश्चेत् कल्प(ल्य)तामियात् ।
तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४४ ॥

योगचर्यामिमां योगी विचरन् मदपाश्रयः ।
नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४५ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टविंशोऽध्यायः ॥

# अथ एकोनत्रिंशोऽध्यायः

उद्धव उवाच–
सुदुश्चरामिमां मन्ये योगचर्यामनात्म(ना)नः ।
यथाऽञ्जसा पुमान् सिध्येत् तन्मे ब्रूह्यञ्जसाऽच्युत ॥ १ ॥

प्रायशः पुण्डरीकाक्ष युञ्जतो योगिनो मनः ।
विषीदत्यसमाधानान्मनोनिग्रहकर्शितम् ॥ २ ॥

अथो त आनन्ददुघं पदाम्बुजं
हंसाः श्रयेरन्नरविन्दलोचन ।
सुखं(तु) च विश्वेश्वर योगकर्मभि-
स्त्वन्माययाऽमी विहता न मानिनः ॥ ३ ॥

किं चित्रमच्युत तवैतदशेषबन्धो-
दासेष्वनन्यशरणेषु यदात्मदस्त्वम् ।
योऽरोचयश्च पशुपैः स्वयमीश्वराणां
श्रीमत्किरीटमणिघट्टितपादपीठः ॥ ४ ॥

तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां
सर्वार्थदं सुकृतविद् विसृजेत को नु ।
को वा भजेत् किमपि विस्मृतचित्तवृत्तिः
किं वा न वेद तव पादरजोऽमृताम्भः ॥ ५ ॥

नैवोपयान्त्यपचितिं कवयस्तवेश
ब्रह्मायुषाऽपि (ब्रह्मादयोऽपि) नतमूर्द्ध सदा स्मरन्तः ।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्व-
न्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्षि ॥ ६ ॥

श्री शुक उवाच–
इत्युद्धवेनात्यनुरक्तचेतसा
पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।
गृहीतमूर्तित्रय ईश्वरेश्वरो
जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥

श्रीभगवानुवाच–
हन्त ते वर्णयिष्यामि मम धर्मान् सुमङ्गलान् ।
यान् श्रद्धयाचरन् मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥

कुर्यात् सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।
मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥

देशान् पुण्यान् संश्रयेत मद्भक्तैः साधुभिः श्रितान् ।
देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥

पृथक् सत्रेण वा मह्यं मम यात्रामहोत्सवम् ।
कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिः ॥ ११ ॥

मामेव सर्वभूतेषु बहिरन्तरवस्थितम् ।
ईक्षे(यजे)तात्मनि चात्मानं यथा खममलाशयः ॥ १२ ॥

इति सर्वाणि भूतानि मद्भावेन महाद्युते ।
सभाजयेन्मन्यमानो ज्ञानं केवलमाश्रयन् ॥ १३ ॥

ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥ १४ ॥

नरेष्वभीक्ष्णं मद्भावः पुंसो भावयतोऽचिरात् ।
स्पर्द्धा माया तिरस्कारं साहंकाराऽपि याति हि ॥ १५ ॥

विसृज्य स्वयमात्मस्थां ह्यवव्रीडां च दैहिकीम् ।
प्रणमेद् दण्डवद् भूमावाश्वचण्डालगोखरम् ॥ १६ ॥

यावत् सर्वेषु भूतेषु मद्भावो नोपयुज्यते ।
तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥

सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।
परिपश्यन्ति च परं परमात्मानमच्युतम् ॥ १८ ॥

अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।
मद्भावः सर्वभूतेषु मनोवाक्कायकर्मभिः ॥ १९ ॥

नह्यङ्गोपक्रमे ध्वंसो न धूरस्योद्धवाण्वपि ।
मया व्यवसितं सम्यङ् निर्गुणत्वादनाशिषः ॥ २० ॥

यो योऽपरो मनोधर्मः कल्पते निष्फलाय ते ।
तदायासो निरर्थः स्यान्नयादेरिव सत्तम ॥ २१ ॥

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत् सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥ २२ ॥

एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः ।
समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥

अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ।
एतद् विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥

सुविविक्तं तव प्रश्नं मयोक्तमपि धारयन् ।
सनातनं ब्रह्म गुह्यं परब्रह्माधिगच्छति ॥ २५ ॥

य एतन्मम भक्तेषु सम्प्रदद्यात् सुपुष्कलम् ।
तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥ २६ ॥

य एतत् समधीयीत पवित्रं परमं शुचि ।
स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥

य एतच्छ्रद्धया नित्यमव्यग्रं शृणुयान्नरः ।
मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥

अप्युद्धव त्वया ब्रह्म सखे समुपधारितम् (समवधारितम्) ।
अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥

नैतत् त्वया दाम्भिकाय नास्तिकाय शठाय च ।
अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥

एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ।
साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥

नैतद् विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।
पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥

ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे ।
यावानर्थो नृणां तात तावान् मोहश्चतुर्विधः ॥ ३३ ॥

मर्त्यो यदा त्यक्तसमस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे ।
तदाऽमृतत्वं प्रतिपद्यमानो
मयाऽऽत्मभूयाय च कल्पते वै ॥ ३४ ॥

श्री शुक उवाच–
स एवमादर्शितयोगमार्ग
स्तदोत्तमश्लोकवचो निशम्य ।
बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो
न किञ्चिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥

विष्टभ्य चित्तं प्रणयेन पूर्णं
धैर्येण राजन् बहुमन्यमानः ।
कृताञ्जलिः प्राह यदुप्रवीरं
शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥

उद्धव उवाच–
विद्रावितो मोहमयोऽन्धकारो
य आश्रितो मे तव सन्निधानात् ।
विभावसोः किन्नु समीपगस्य
शीतं तमोऽभिप्रभवत्यजाद्य ॥ ३७ ॥

प्रवर्धिता मे भवताऽनुकम्पिता
दत्तो हि विज्ञानमयः प्रदीपः ।
हित्वा कृतज्ञस्तव पादमूलं
कोऽन्यः समीयाच्छरणं त्वदन्यम् ॥ ३८ ॥

वृक्णश्च मे सुदृढः स्नेहपाशो
(वृक्णश्च रूढः स्नेहपाशो मदीयः)
दाशार्हवृष्ण्यन्धकसात्वतेषु
प्रसारितः सृष्टिविवृद्धये त्वया
स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥

नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम् ।
यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ ४० ॥

श्रीभगवानुवाच–
गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं मदाश्रमम् ।
तत्र मत्पादतीर्थोदैः स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥

ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः ।
वसानो वल्कलान्यङ्ग वन्यभुक् सुखनिःस्पृहः ॥ ४२ ॥

तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः ।
शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥

मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ।
मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ॥ ४४ ॥

अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४५ ॥

श्रीशुक उवाच–
स एवमुक्तो हरिमेधसोद्धवः
प्रदक्षिणं तं परिवृत्य पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधीः
सिञ्चन् पदद्वन्द्वमथोऽनुचक्रमे (थो न चक्रमे) ॥ ४६ ॥

सुदुस्त्यजस्नेहवियोगकातरो
न शक्नुवंस्तं परिहर्तुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके
बिभ्रन्नमस्कृत्य ययौ पुनःपुनः ॥ ४७ ॥

ततस्तमन्तर्हृदि सन्निवेश्य
गतो महाभागवतो विशालाम् ।
यथोपदिष्टं जगदेकबन्धुना
तपः समास्थाय हरेरगाद् गतिम् ॥ ४८ ॥

यदे(य एत)तदानन्दसमुद्रसम्भृतं
ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा
सच्छ्रद्धयाऽऽसेव्य जगद् विमुच्यते ॥ ४९ ॥

भवभयमपहन्तुं ज्ञानविज्ञानसारं
निगमकृदुपजह्रे भृङ्गवद् वेदसारम् ।
अमृतमुदधितश्चापाययद् भृत्यवर्गान्
पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥ ५० ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥

# अथ त्रिंशोऽध्यायः

राजोवाच–
ततो महाभागवत उद्धवे वदरीं गते ।
द्वारवत्यां किमकरोद् भगवान् भूतभावनः ॥ १ ॥
ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥
प्रत्याक्रष्टुं नयनमबला यत्र लग्नं (मग्नं) न शेकुः
कर्णाविष्टं न सरति यशो यत् सतामात्मलग्नम् ।
यच्छ्रीवाचं(क्यं) जनयति रतिं कोऽनुमानः कवीनां
दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥
श्रीशुक उवाच–
दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ।
दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥
श्रीभगवानुवाच–
एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः (नाशहेतवः) ।
मुहूर्तमपि न स्थेयमत्र वो यदुपुङ्गवाः ॥ ५ ॥
स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ।
वयं प्रभासं यास्यामो यत्र प्रत्यक् सरस्वती ॥ ६ ॥
तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ।
देवताः पूजयिष्याम स्नपनालेपनार्हणैः ॥ ७ ॥
ब्राह्मणांस्तु महाभागान् कृतस्वस्त्ययना वयम् ।
गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥
विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ।
देवद्विजगवां पूजा भूतेषु परमा दया ॥ ९ ॥
इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ।
तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥
तस्मिन् भगवताऽऽदिष्टं यदुदेवेन यादवाः ।
चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥
ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु ।
दिष्टविभ्रंशितधियो यादवा नष्टमङ्गलाः ॥ १२ ॥
महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ।
कृष्णमायाविमूढानां सङ्घर्षः सुमहानभूत् ॥ १३ ॥
युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ।
धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥ १४ ॥
पतत्पताकैः रथकुञ्जरादिभिः
खरोष्ट्रगोभिर्महिषैर्नरैरपि ।
मिथः समेत्याश्वतरैः सु(श्व)दुर्मदा
न्यहञ्छरैर्दद्भिरिव द्विपा वने ॥ १५ ॥
प्रद्युम्नसाम्बौ युधिरूढमत्सरा-
वक्रूरभोजावनिरुद्धसात्यकी ।
सुभद्रसङ्ग्रामजितौ सुचारुगदौ
सुमित्रासुरथौ समीयतुः ॥ १६ ॥
अन्ये च ये वै निशठोल्मुकादयः
सहस्रजिच्छतजिद्भानुमुख्याः ।
अन्योन्यमासाद्य मदान्धकारिता
जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥ १७ ॥
दाशार्हवृष्ण्यन्धकभोजसात्वता
अध्वर्युदा माधुरशूरसेनाः ।
विसर्जनाः कुकुरा कुन्तयश्च
मिथस्तु जघ्नुः सुविसृज्य सौहृदम् ॥ १८ ॥
पुत्रास्त्वयुध्यन् पितृभिर्भ्रातृभिश्च
स्वस्रीयदौहित्रपितृव्यमातुलैः ।
मित्राणि मित्रैः सुहृदः सुहृद्भि-
र्ज्ञातींस्त्वहन् ज्ञातय एव मूढाः ॥ १९ ॥
शरेषु हीयमानेषु भज्यमानेषु धन्वसु ।
शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥ २० ॥
ता वज्रकल्पा अभवन् परिघा मुष्टिना हताः ।
जघ्नुर्द्विषस्ते कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥
प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।
हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥
अथ तावपि सङ्क्रुद्धावुद्यम्य कुरुनन्दन ।
एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥
ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।
स्पर्द्धाक्षोभः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥

एवं सर्वेषु नष्टेषु कुलेषु स्वेषु केशवः ।
उत्तारितो भुवोभार इति मेनेऽवशेषितः ॥ २५ ॥

रामः समुद्रवेलायां योगमास्थाय पौरुषम् ।
तत्यजे योगमाविश्य संयोज्यात्मानमात्मनि ॥ २६ ॥

रामनिर्याणमालोक्य भगवान् देवकीसुतः ।
निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥

बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णुप्रभया स्वया ।
दिशो वितिमिराः कुर्वन् विधूम इव पावकः ॥ २८ ॥

श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।
कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥

सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ।
पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥

कटिसूत्रब्रह्मसूत्रकिरीटकनकाङ्गदैः ।
हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥

वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ।
कृत्वोरौ दक्षिणं पादमासीनं पङ्कजारुणम् ॥ ३२ ॥

मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरः ।
मृगाकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥

चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ।
भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥

व्याध उवाच–
अजानता कृतमिदं पापेन मधुसूदन ।
क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥

यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।
वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं विभो ॥ ३६ ॥

तमाशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ।
यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥

यस्यात्मयोगरचितं न विदुर्विरिञ्चि-
रुद्रादयोऽस्य तनयाः पतयो गिरां ये ।
त्वन्मायया विहतदृष्टय एतदञ्जः
किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥

श्रीभगवानुवाच–
मा भैर्जर त्वमुत्तिष्ठ काम एष कृतो हि मे ।
याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥

श्री शुक उवाच–
इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ।
त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥

दारुकः कृष्णपदवीमन्विच्छन् नाधिगम्य तम् ।
वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥

तं तत्र तिग्मद्युतिमायुधैर्वृतं
ह्यश्वत्थमूले कृतकेतनं पतिम् ।
स्नेहप्लुतात्मा निपपात पादयो
रथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥

अदृष्टयतस्ते (य आश्रितस्ते) चरणाम्बुजं
प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ।
दिशो न जाने न लभे च शान्तिं
यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥

श्री शुक उवाच–
इति ब्रुवति सूते वै रथो गरुडलाञ्छनः ।
ख उत्पपात राजेन्द्र साश्वध्वज उदीक्षितः ॥ ४४ ॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च ।
तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥

श्रीभगवानुवाच–
गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः ।
सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥

द्वारकायां न च स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥

स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।
अर्जुनेनाविताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥

त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥

श्री शुक उवाच–
इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रिंशोऽध्यायः ॥

# अथ एकत्रिंशोऽध्यायः

श्रीशुक उवाच–
अथ तत्रागमद् ब्रह्मा भवान्या च समं भवः ।
महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥

पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥

द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।
गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥

ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।
कुर्वन्तः सङ्कुलं राजन् भक्त्या परमया युताः ॥ ४ ॥

भगवानपि तान् वीक्ष्य विभूतीरात्मनो विभुः ।
संयुज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥

लोकाभिरामां स्वतनुं धरणाध्यानमङ्गलाम् ।
योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत् स्वकम् ॥ ६ ॥

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।
सत्यं धर्मो धृतिर्भूतिः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥

देवादयो ब्रह्ममुखा आविशन्तं स्वधामनि ।
अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥

सौदामिन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम् ।
गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥

ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ।
विस्मितास्तां प्रशंसन्तः स्वंस्वं लोकं ययुस्तदा ॥ १० ॥

राजन् परस्य तनुभृज्जननाप्ययेहां
मायाविडम्बनमवैहि यथा नटस्य ।
सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते
संहृत्य चात्ममहिमोपरतः स आस्ते ॥ ११ ॥

मर्त्येन यो गुरुसुतं यमनीतलोकं
त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्येऽन्तकान्तक मपीशतनावनीशः
(जिग्ये पुरेऽन्तकमपीशतनावनीशः)
किं स्वावने स्वरनयन् मृगयोः स्वदेहे (मृगयुं सदेहम्) ॥
तथाप्यशेषस्थितिसम्भवाप्ययेषु-
अनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत् प्रणेतुं वपुरत्र शेषितं
मर्त्येन किं स्वस्थ (स्वस्य) गतिं प्रदर्शयन् ॥ १३ ॥

य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ।
प्रयतः कीर्तयेद् भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥

दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ।
पतित्वा चरणावस्रैर्न्यषिञ्चत् कृष्णविच्युतः ॥ १५ ॥

कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ।
तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १६ ॥

तत्र वै त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ।
व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आयुधैः ॥ १७ ॥

देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ।
कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥

प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ।
उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः ॥ १९ ॥

रामपत्न्यश्च तं देहमुपगुह्याग्निमाविशन् ।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः ।
कृष्णपत्न्योऽविशन्नग्निं रुग्मिण्याद्यास्तदात्मिकाः ॥ २० ॥

अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।
आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥

बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम् ।
हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥

द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् ।
वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ २३ ॥

नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः ।
स्मृत्याऽशेषाशुभहरः सर्वमङ्गलमङ्गलः ॥ २४ ॥

स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ।
इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥

श्रुत्वा सुहृद्वधं राजन्नर्जुनात् ते पितामहाः ।
त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥

य एतद् देवदेवस्य विष्णोः कर्माणि जन्म च ।
कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥

इत्थं हरेर्भगवतो रुचिरावतार
वीर्याणि चास्य चरितानि च सत्तमानि (मङ्गलानि) ।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो
भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥

॥ इति श्रीमद्भागवते एकादशस्कन्धे एकत्रिंशोऽध्यायः ॥

॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां
पारमहंस्यां संहितायां एकादशस्कन्धः ॥

# द्वादशस्कन्धः

## अथ प्रथमोऽध्यायः

श्री शुक उवाच–
योऽन्त्यो रिपुञ्जयो नाम भविष्यो बारुहद्रथः ।
तस्यामात्यस्तु मुनिको हत्वा स्वामिनमात्मजम् ॥ १ ॥
प्रयोतसञ्ज्ञं राजानं कर्ता यत् पालकः सुतः ।
विशाखयूपस्तत्पुत्रो भविता चाजकस्ततः ॥ २ ॥
नन्दिवर्धस्तु तत्पुत्रः पञ्चप्रयोतना इमे ।
अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीमिमाम् ॥ ३ ॥
शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः ।
क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ४ ॥
विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ।
दर्भकस्तत्सुतो भाव्यो दर्भकस्याजयस्ततः ॥ ५ ॥
नन्दिवर्धन आजेयो महानन्दिश्च तत्सुतः ।
शैशुनागा दशैते वै षष्ट्युत्तरशतत्रयम् ॥ ६ ॥
समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः ।
महानन्दिसुतो राजन् शूद्रागर्भोद्भवो बली ॥ ७ ॥
महापद्मपतिः कश्चित् कुलक्षत्रविनाशकृत् ।
ततो नृपा भविष्यन्ति शूद्रप्राया अधार्मिकाः ॥ ८ ॥
स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः ।
शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ ९ ॥
तस्य चाष्टौ भविष्यन्ति सुमालिप्रमुखाः सुताः ।
य इमां पृथिवीं राजन् भोक्ष्यन्ति स्म शतं समाः ॥ १० ॥
नवनन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति ।
तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ ११ ॥
स एव इन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ।
तत्सुतो वारिराजस्तु ततश्चाशोकवर्धनः ॥ १२ ॥
सुयशा भविता यस्य सङ्गतः सुयशःसुतः ।
शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १३ ॥
शतधन्वा ततस्तस्य भविता तु बृहद्रथः ।
मौर्या ह्येते नव नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ १४ ॥
समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ।
हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ ॥ १५ ॥
पुष्पमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति ।
अग्निमित्रस्ततस्तस्मात् सुधेष्ठो भविता ततः ॥ १६ ॥
वसुमित्रो भद्रकश्च पुलिन्दो भविता ततः ।
ततो घोषः सुतस्तस्माद् वज्रमित्रो भविष्यति ॥ १७ ॥
ततो भागवतस्तस्माद् देवभूतिः कुरूद्वह ।
शुङ्गाद् (शुङ्गा) दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥
ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान् नृपान् ।
शुङ्गं हत्वा देवभू(हू)तिं कण्वोऽमात्यस्तु कामिनम् ॥ १९॥
स्वयं करिष्यते राज्यं वसुदेवो महामतिः ।
तस्य पुत्रस्तु भूमित्रस्ततो नारायणः सुतः ॥ २० ॥
सुशर्माख्योऽस्य नृपतिः कण्वानां भविता ततः ।
काण्वायना इमे भूमिं चत्वारिंशच पञ्च च ॥ २१ ॥
शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ।
हत्वा कण्वं सुशर्माणं तद्भृत्यो वृपलो बली ॥ २२ ॥
गां भोक्ष्यत्यान्ध्रजातीयः कश्चित्कालमसत्तमः ।
कृष्णनामा च तद्भाता भविता पृथिवीपतिः ॥ २३ ॥
श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ।
लम्बोदरस्तु तत्पुत्रस्तस्माच्छिबिलको नृप ॥ २४ ॥
मेघस्वातिः शिबिलकाद्दृढमानस्तु तस्य च ।
अनिष्टकर्मा हालेयस्तलङ्कस्तस्य चात्मजः ॥ २५ ॥
पुरीषसेरुस्तत्पुत्रस्ततो राजा सुनन्दनः ।
चकोरो दृढकायोऽस्य (विवस्वाति) शिवख्यातिररिन्दमः ॥
तस्यापि गोमतिपुत्रः पुरीमान् भविता ततः ।
शिवशिराः शिवस्कन्दो जयश्रीस्तत्सुतस्ततः ॥ २७ ॥
विजयस्तत्सुतो भाव्यश्चन्द्रवीजः सुलोमधीः ।
एते त्रिंशन्नृपतयश्चत्वार्यष्टशतानि च ॥ २८ ॥

षट्पश्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन ।
सप्ताभीरा आन्ध्रभृत्या दश गर्दभिनो नृपाः ।
कङ्काः षोडशभूपाला भविष्यन्त्यतिलोलुपाः ॥ २९ ॥

ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्कराः ।
त्रयोदश(भूयो दश) सुरुण्डाश्च मौना एकादशैव तु ॥ ३०॥

एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च ।
नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥ ३१ ॥

भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि वै संस्थिते कुले ।
कि(कु)लकिलायां नृपतयो भूतवंशोपवङ्गिरः ॥ ३२ ॥

शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः ।
युक्ता एते वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३३ ॥

तेषां त्रयोदश सुता भवितारोऽथ बाह्लिकाः ।
पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३४ ॥

एककाला इमे भूपाः सप्तान्ध्राः सप्त कोसलाः ।
वैदूरपतयो भाव्या नैषधास्तत एव हि ॥ ३५ ॥

नैषधानां तु भविता विश्वस्फूर्जिः पुरञ्जयः ।
करिष्यत्यवरान् वर्णान् पुलिन्दयदुमद्रकान् ॥ ३६ ॥

प्रजाश्चा(श्च)ब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ।
वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ ३७ ॥

अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ।
सौराष्ट्रावन्त्याभीराश्च शूद्राश्चार्बुदमालवाः ॥ ३८ ॥

व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ।
सिन्धोस्तटं चन्द्रभागां कार्वी काश्मीरमण्डलम् ॥ ३९ ॥

भोक्ष्यन्ति शूद्रा व्रात्याश्च म्लेच्छा अब्रह्मवर्चसः ।
तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः ॥ ४० ॥

एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ।
स्त्रीबालगोद्विजघ्नाश्च परदारधनाहृताः ॥ ४१ ॥

उदितास्तमितप्रायाः अल्पसत्वाल्पकायुषः ।
असंस्कृताः क्रियाहीना रजसा तमसा वृताः ॥ ४२ ॥

प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ।
तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ॥ ४३ ॥

अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥ ४४ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः

श्रीशुक उवाच–
ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ।
कालेन बलिना राजन् नङ्क्ष्यन्त्यायुर्बलं स्मृतिः ॥ १ ॥

वित्तमेव कलौ नृणां जन्माचारगुणोदयः ।
धर्मन्यायव्यवस्थायां कारणं धनमेव (बलमेव) हि ॥ २ ॥

दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ।
स्त्रीत्वे पुंस्त्वे चातिरतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥

लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ।
अवृत्त्यन्यायदौर्बल्ये पाण्डित्ये चापलं वचः ॥ ४ ॥

अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ।
स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥

दूरे वार्य(ट)यनं तीर्थं लावण्ये केशधारणम् ।
उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥

दाक्ष्यं कुटुम्बभरणे यशोऽर्थे धर्मसेवनम् ।
एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ७ ॥

ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ।
प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥

आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ।
शाकमूलामिषक्षौद्रफलपुष्पादिभोजनाः ॥ ९ ॥

अनावृष्ट्या विनंक्ष्यन्ति दुर्भिक्षाकरपीडिताः ।
शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः ॥ १० ॥

क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्स्यन्ते च चिन्तया ।
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥

क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ।
वर्णा(धर्मा)श्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥

पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ।
चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १३ ॥

शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ।
गृहप्रायेष्वाश्रमेषु योनिप्रायेषु बन्धुषु ॥ १४ ॥

अणुप्रायेष्वोषधीषु शमिप्रायेषु स्थास्नुषु ।
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥

इत्थं कलौ गतप्राये जनेषु परधर्मसु ।
धर्मत्राणाय सत्वेन भगवानवतरिष्यति ॥ १६ ॥

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ।
धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥ १७ ॥

शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।
असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥

विचरन्नसिमान् क्षोण्यां हयेनाप्रतिमद्युतिः ।
नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥ २० ॥

अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।
वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ २१ ॥

पौरजानपदानां वै हतेष्वखिलदस्युषु ।
तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति ॥ २२ ॥

वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते ।
यदाऽवतीर्णो भगवान् कल्की धर्मपतिर्हरिः ।
कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥ २३ ॥

यदा चन्द्रश्च सूर्यश्च तथा तिष्ये बृहस्पतिः ।
एकराशौ समेष्यन्ति तदा भवति तत् कृतम् ॥ २४ ॥

येऽतीता वर्तमाना ये ये भविष्यन्ति पार्थिवाः ।
ते त उद्देशतः प्रोक्ता वंशजाः सूर्यसोमयोः ॥ २५ ॥

आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।
एतद् वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २६ ॥

सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ।
तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि ॥ २७ ॥

तेनैते ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।
ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाम् ॥ २८ ॥

विष्णोर्भगवतो भागः कृष्णाख्योऽसौ दिवं गतः ।
तदाऽविशत् कलिर्लोकं पापे यद् रमते जनः ॥ २९ ॥

यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ।
तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥

यदा देवर्षयः सप्त मघासु विचरन्ति हि ।
तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥

यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ।
तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ।
प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥

दिव्याब्दानां सहस्रे तु प्रतियाते पुनः कृतम् ।
भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥

इत्येवं मानवो वंशो यथा संख्यायते भुवि ।
तथा विट्शूद्रविप्राणां वंशा ज्ञेया युगेयुगे ॥ ३५ ॥

एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ।
कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३६ ॥

देवापिः शन्तनोर्भ्राता मरु(नु)श्चेक्ष्वाकुवंशजः ।
कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥

ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ ।
वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः ॥ ३८ ॥

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥

राजन्नेते मया प्रोक्ता नरदेवास्तथा परे ।
भूमौ ममत्वं कृत्वाऽन्ते हित्वेमां निधनं गताः ॥ ४० ॥

कृमिविड्भस्मसञ्ज्ञान्ते राजनाम्नोऽपि यस्य च ।
भूतध्रुङ् मनुते स्वार्थं किं वेद निरयो यतः ॥ ४१ ॥

कथं सेयमखण्डा भूः पूर्वैर्मत्पुरुषैर्धृता ।
मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥ ४२ ॥

तेजोऽबन्नात्मकं कायं गृहीत्वाऽऽत्मतया मुधा ।
मही ममतया चोभौ हित्वाऽन्तेऽदर्शनं गताः ॥ ४३ ॥

ये ये भूपतयो राजन् भुञ्जते भुवमोजसा ।
कालेन ते कृताः सर्वे कथामात्राः कथासु वै ॥ ४४ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

श्रीशुक उवाच–
दृष्ट्वाऽऽत्मनिर्जयव्यग्रान् नृपान् हसति भूरियम् ।
अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥

काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि ।
येन फेनोपमे पिण्डे येन विस्रम्भिता नृपाः ॥ २ ॥

पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ।
ततः सचिवपौराप्तकरीन्द्रानथ कण्टकान् ॥ ३ ॥

एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ।
इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥

समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा ।
कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥

यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ।
गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥

मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ।
जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥

ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ।
स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥ ८ ॥

पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ।
मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥ ९ ॥

तृणबिन्दुर्ययातिश्च संयातिः (शर्यातिः) शन्तनुर्गयः ।
भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः (नृपः) ॥

हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ।
नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥

अन्ये च बहवो दैत्या राजानो ये प्रजेश्वराः ।
सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥

ममतां मय्यवर्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः ।
कथावशेषाः कालेन ह्यकृतार्थाः कृता अहो ॥ १३ ॥

कथा इमास्ते कथिता महीयसां
विताय लोकेषु यशः परेयुषाम् ।
विज्ञानवैराग्यविवक्षया विभो
वचोविभूतीर्न तु पारमार्थ्यम् ॥ १४ ॥

यस्तूत्तमश्लोकगुणानुवादः
सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं
कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥

राजोवाच–
केनोपायेन भगवन् कलेर्दोषान् कलौ जनाः ।
विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥

युगानि युगमानं च धर्मं मानं च यद्युगे ।
कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥

श्रीशुक उवाच–
कृते प्रवर्तते धर्मश्चतुष्पात् तज्जनैर्धृतः ।
सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥

सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ।
आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥

त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ।
अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥

तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः ।
त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृपाः ॥ २१ ॥

तपः सत्यदयादानेष्वर्धं ह्रसति द्वापरे ।
हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥

यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः ।
आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तमाः ॥ २३ ॥

कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥

तस्मिन् लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरिदर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥

सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥

प्रसीदति यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ॥ २७ ॥

यदा धर्मेषु कामेषु भक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीत बुद्धिमन् ॥ २८ ॥

यदा लोभस्त्वसन्तोषो मनोदम्भोऽथ मत्सरः ।
कर्मणां चापि काम्यानां द्वापरं तद् रजस्तमः ॥ २९ ॥

यदा मायानृतं तन्द्री निद्रा हिंसा विषादनम् ।
शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ३० ॥

यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ।
कामिनो वृत्तिहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥

दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः ।
राजानश्च प्रजाभक्ष्याः शिश्नोदरपरा द्विजाः ॥ ३२ ॥

अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः ।
तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥ ३३ ॥

ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ।
शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥

पणयिष्यन्ति वै क्षुद्राः किराटान् (कटु) कूटकारिणः ।
अनापद्यपि मंस्यन्ते वार्तां साधुजुगुप्सिताम् ॥ ३५ ॥

पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।
भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥

पितृन् भ्रातृन् स्वसुहृज्ज्ञातीन् हत्वा सौरतसौहृदाः ।
श्वशुरश्यालसंवादा दीनाः स्त्रैणा कलौ नराः ॥ ३७ ॥

शूद्राः प्रतिग्रहीष्यन्ति तपो वेषोपजीविनः ।
धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥

वासोऽन्नपानशयनव्यवायस्नानभूषणैः ।
हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥

कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ।
त्यक्ष्यन्ति हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥४१॥

न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि ।
पुत्रीं भार्यां च कुलजां क्षुद्राः शिश्नोदरम्भराः ॥ ४२ ॥

कलौ न राजन् जगतां परं गुरुं
त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥ ४३ ॥

यन्नामधेयं म्रियमाण आतुरः पतन्
स्खलन् वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति
यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् ।
सर्वं हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ ४५ ॥

श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥

विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानज(जा)प्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥

तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥ ४९ ॥

म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसम्भवः ॥ ५० ॥

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥ ५१ ॥

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद् हरिकीर्तनात् ॥ ५२ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः

श्रीशुक उवाच–

कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप ।
कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥

चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
स कल्पो यत्र मनवश्चतुर्दश विशां पते ॥ २ ॥

तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता ।
त्रयो लोका इमे यत्र कल्पन्ते प्रलयाय हि ॥ ३ ॥

एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ।
शेतेऽनन्तासनो विश्वमात्मसात्कृत्य आत्मभूः ॥ ४ ॥

द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ ५ ॥

एष प्राकृतिको राजन् प्रलयो यत्र लीयते ।
आण्डकोशस्तु सङ्घातो विघात उपसादिते ॥ ६ ॥

पर्जन्यः शतवर्षाणि भूमौ राजन् न वर्षति ।
तदा निरन्ने ह्यन्योन्यं भक्ष्यमाणाः क्षुधार्दिताः ।
क्षयं यास्यन्ति शनकैः काले नोपद्रुताः प्रजाः ॥ ७ ॥

(अयमर्धपादः भागवनगरमुद्रापितकोशे नास्ति ।
वैष्णवपाठे गृहीतः ।
व्याख्यानं विजयध्वजभट्टारकैः काले नेति पदेन ।)

सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः ।
रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥ ८ ॥

ततः सांवर्तको वह्निः सङ्कर्षणमुखोत्थितः ।
दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ ९ ॥

उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ।
दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ॥ १० ॥

ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ।
परः सांवर्तको वाति धूम्रं खं रजसा वृतम् ॥ ११ ॥

ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः ।
शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ॥ १२ ॥

तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ॥ १३ ॥

तदा भूमेर्गन्धगुणं ग्रस(त्या)न्त्याप उपप्लवे ।
ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ॥ १४ ॥

अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ।
ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १५ ॥

लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ।
स वै विशति खं राजंस्ततश्च नभसो गुणम् ।
शब्दं ग्रसति भूतादिर्नभस्तम(द)नु लीयते ॥ १६ ॥

तैजसानीन्द्रियाण्यङ्ग देवा वैकारिका गुणैः ॥ १७ ॥

महान् ग्रसत्यहङ्कारं गुणाः सत्वादयश्च तम् ।
ग्रसतेऽव्याकृतं बीजं गुणान् कालेन चोदितम् ॥ १८ ॥

न तस्य कालावयवैः परिणामादयो गुणाः ।
अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥

न यत्र वाचो न मनो न सत्वं तमो रजो वा महदादयोऽमी ।
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ।
न स्वप्नजाग्रन्न च तत् सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।
सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २१ ॥

लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ।
शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥

बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ।
अन्वयव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥

दीपश्चक्षुश्च रूपं च तेजसो न पृथग् भवेत् ।
एवं धीः खानि मात्राश्च न स्युरप्युत मारुतात् ॥ २४ ॥

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति होच्यते ।
मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि ॥ २५ ॥

यथा जलधरा व्योम्नि भवन्ति न भवन्ति च ।
ब्रह्मणीदं तदा विश्वमुपयात्युदयाप्ययम् ॥ २६ ॥

एते ह्यवयवाः प्रोक्ताः सर्वावयविनामिह ।
विनार्थे न प्रतीयेरन् पटस्येवाङ्ग तन्तवः ॥ २७ ॥

यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ।
अन्योन्यापाश्रयात् सर्वमाद्यन्तवदवस्तु च ॥ २८ ॥

विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ।
न निरूप्यो ह्यणुरपि स्याच्चेत् स भ्रम आत्मनः ॥ २९ ॥

न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरपि ॥ ३० ॥

यथा हिरण्यं बहुधा समीयते
नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।
एवं वचोभिर्भगवानधोक्षजो
व्याख्यायते वैदिकलौकिकैर्जनैः ॥ ३१ ॥

यथा घनोऽर्कप्रभवोऽर्कदर्शितो
ह्यर्कांशभूतस्य च चक्षुषस्तमः ।
एवं त्वहं ब्रह्मगुणस्तदीक्षितो
ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥ ३२ ॥

घनो यदाऽर्कप्रभया विदीर्यते
चक्षुःस्वरूपं परमीक्षते तदा ।
यदा ह्यहङ्कार उपाधिरात्मनो
जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥ ३३ ॥

यदैवमेतेन विवेकहेतिना
मायामयाहङ्करणात्मबन्धनम् ।
छित्वाऽच्युतात्मानुभवोऽवतिष्ठते
तमाहुरात्यन्तिकमङ्ग सम्प्लवम् ॥ ३४ ॥

नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप ।
उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते ॥ ३५ ॥

कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ।
परिमाणावस्थास्ता जन्मप्रलयहेतवः ॥ ३६ ॥

अनाद्यन्तवताऽनेन कालेनेश्वरमूर्तिना ।
अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥ ३७ ॥

नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ।
आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥

एताः कुरुश्रेष्ठ जगद्विधातु-
र्नारायणस्याखिलसत्वधाम्नः ।
लीलाकथास्ते कथिताः समासतः
कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद् विविधदुःखदवार्दितस्य ॥ ४० ॥

पुराणसंहितामेतां ऋषिर्नारायणोऽव्ययः ।
नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥

स वै मह्यं महाराज भगवान् बादरायणः ।
इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥ ४२ ॥

एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिशालये ।
दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः ॥ ४३ ॥

अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः ।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ ४४ ॥

त्वं च राजन् मरिष्येति पशुबुद्धिमिमां जहि ।
न जातः प्रागभूतोऽद्य देहवत् त्वं न नंक्ष्यसि ॥ ४५ ॥

न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ।
बीजाङ्कुरवद् देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ४६ ॥

स्वप्ने यथा शिरश्छेदः पञ्चत्वाद्यात्मनस्तथा ।
यस्मात् पश्यसि देहस्य तत आत्मा ह्यजोऽमरः ॥ ४७ ॥

घटे भिन्ने यथाऽऽकाश आकाशः स्याद् यथा पुरा ।
एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥ ४८ ॥

मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः ।
तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥ ४९ ॥

स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ।
तावद् दीपस्य दीपत्वमेवं देहकृतो भवः ॥ ५० ॥

रजःसत्त्वतमोवृत्त्या जायतेऽथ नश्यति ।
न तत्रात्मा स्वयञ्ज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥ ५१ ॥

आकाशवद् ध्रुवाधारो ध्रुवो नानामितस्ततः ।
एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ॥ ५२ ॥

बुद्ध्याऽनुमानगर्भिण्या वासुदेवानुचिन्तया ।
चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ ५३ ॥

मृत्यवो नोपसर्पन्ति मृत्यूनां मृत्युमीश्वरम् ।
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ ५४ ॥

एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले ॥ ५५ ॥

दशन्तं तक्षकं पादे लेलिहानं विषाननैः ।
न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ ५६ ॥

एतत् ते कथितं तात यथा त्वं पृष्टवान् नृप ।
हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ ५७ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः

सूत उवाच–
एतन्निशम्य मुनिनाऽभिहितं परीक्षिद्
व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादपद्ममुपसृत्य नतेन मूर्ध्ना
बद्धाञ्जलिस्तमिदमाह स विष्णुरातः ॥ १ ॥

परीक्षिदुवाच–
सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥

नात्यद्भुतमिदं मन्ये महतामच्युतात्मनाम् ।
दीनेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥

पुराणसंहितामेतामश्रौषं भवतो वयम् ।
यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥

भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥ ५ ॥

अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥ ६ ॥

अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ।
भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥

सूत उवाच–
इत्युक्तस्तमनुज्ञाय भगवान् बादरायणिः ।
जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥

परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ।
समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥ ९ ॥

प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः ।
ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥ १० ॥

तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ।
हन्तुकामो नृपं गच्छन् ददर्श पथि काश्यपम् ॥ ११ ॥

तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ।
द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥

ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ।
बभूव भस्मसात् सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥

हाहाकारो महानासीद् भुवि खे दिक्षु सर्वतः ।
विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥ १४ ॥

देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः ।
ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥

जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ।
अथाजुहाव सङ्क्रुद्धः सर्पान् सत्रे सह द्विजैः ॥ १६ ॥

सर्पसत्रे समिद्धेऽग्नौ दह्यमानान् महोरगान् ।
दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥

नापश्यत् तक्षकं तत्र राजा पारिक्षितो द्विजान् ।
उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥

तं गोपायति राजेन्द्र इन्द्रः शरणमागतम् ।
तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥

पारिक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ।
सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥

तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ।
तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥

इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ।
बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥

तं पतन्तं विमानेन सहतक्षकमम्बरात् ।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥
नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् ।
अनेन पीतममृतमथायमजरामरः ॥ २४ ॥
जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा ।
राजंस्तेन विना नान्यो प्रदाता सुखदुःखयोः ॥ २५ ॥
सर्पचोरादिवह्न्यम्बुक्षुत्तृड्व्याध्यादिभिर्नृप ।
पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म च ॥ २६ ॥
तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम् ।
सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥
इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः ।
सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥
सैषा विष्णोर्महामाया बाध्यबाधकलक्षणा ।
यया मुह्यत्यसावात्मा भूतेषु गुणवृत्तिभिः ॥ २९ ॥
न यत्र दुर्भाव्यतया विराजते
मायात्मवादेऽसकृदात्मवादिभिः
न यद्विवादो विविधस्तदाश्रयो
मनश्च संकल्पविकल्पवृत्ति यत् ॥ ३० ॥
न यत्र सृज्यं सृजतोभयोः परं
श्रेयश्च जीवस्त्रिभिरन्वितः स्वयम् ।
तदेतदुत्सादितबाध्यबाधकं निषिध्य
चोर्मीन् विरमेत तन्मुनिः ॥ ३१ ॥
परं पदं वैष्णवमामनन्ति यन्नेतिनेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥
तदेतदधिगच्छन्ति विष्णोर्यत् परमं पदम् ।
अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥
अतिवादांस्तितिक्षेत नाव(मंस्येत)मन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥
नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे ।
यत्पादाम्बुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे पञ्चमोऽध्यायः ॥

## अथ षष्ठोऽध्यायः

शौनक उवाच–
पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ।
वेदा वै कतिधा व्यस्ता एतत् सौम्याभिधेहि नः ॥ १ ॥
सूत उवाच–
समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः
हृ(द्या)दाकाशादभूत्नादो वृत्तिरोधाद् विभाव्यते ॥ २ ॥
यदुपासनया ब्रह्मन् योगिनो मलमात्मनः ।
द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३ ॥
ततोऽभूत् त्रिवृदोङ्कारो यो व्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ ४ ॥
शृणोति य इमं स्फोटं सुप्तः श्रोत्रेव शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ५ ॥
स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥ ६ ॥
तस्य हासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥ ७ ॥
ततोऽक्षरसमाम्नायमसृजद् भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ८ ॥
तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान् सोङ्कारांश्चातुर्होत्रविवक्षया ॥ ९ ॥
पुत्रानध्यापयत् तांस्तु महर्षीन् ब्रह्मकोविदान् ।
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ १० ॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ११ ॥
क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः ।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतनोदिताः ॥ १२ ॥
अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ १३ ॥

पराशरात् सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ १४ ॥

ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ।
चतस्रः संहिताश्चक्रे सूत्रैर्मणिगणानिव ॥ १५ ॥

तासां स चतुरः शिष्यानुपहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ १६ ॥

पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥ १७ ॥

साम्नां जैमिनये प्राह तथा च्छन्दोगसंहिताम् ।
अथर्वाङ्गिरसां नाम स्वशिष्याय सुमन्तवे ॥ १८ ॥

पैलः स्वसंहितामूचे इन्द्रप्रम(मि)तये मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम्॥ १९॥

चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमित्रे इन्द्रप्र(म)मितिरात्मवान् ॥ २० ॥

अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविः (कविम्) ।
तस्य शिष्यो वेदमित्रः सौभर्यादिभ्य ऊचिवान् ॥ २१ ॥

शाकल्यस्तत्सुतस्तां तु पञ्चधा व्यस्य संहिताम् ।
वात्स्यमौद्गल्यशालीयगोसत्यशिशिरेष्वधात् ॥ २२ ॥

जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
व्यलीकयोगपैलालविरजेभ्यो ददौ मुनिः ॥ २३ ॥

बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ।
चक्रे बलायनिर्भज्य(वालायनिगार्ग्य)कासाराश्चैव तां दधुः ॥

बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ २५ ॥

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहःक्षपणाय गुरोर्व्रतम् ॥ २६ ॥

याज्ञवल्क्यस्तु तच्छिष्य आहाहो भगवन् कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुष्करम् ॥ २७ ॥

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ २८ ॥

देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥ २९ ॥

भूत्वा तित्तिरयो ब्रह्मन् तल्लोलुपतयाऽऽददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥ ३० ॥

याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ३१ ॥

याज्ञवल्क्य उवाच–
ओं नमो भगवते आदित्यायाखिलजगदात्मस्वरूपेण कालरूपेण
च चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु
बहिरप्याकाश इवोपाधिना व्यवधीयमानो भगवानेक एव
क्षणलवनिमेषावयवोपचितसंवत्सरगणेन तोयादानविसर्गाभ्या-
मिमां लोकयात्रामनुवहति ॥ ३२ ॥

यदिहवाव विबुधर्षभ सवितरदस्तप(त्य)नुसवनमहरहराम्नाय-
विधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनं भगवतः
समभिधीमहि तपन मण्डलम् ॥ ३३ ॥

य इह वाव स्थिरचरनिकराणां स्वनिकेतनानां मनइन्द्रिया-
सुगणाननात्मनस्तत्वं स्वयमात्माऽन्तर्यामी प्रचोदयति ॥३४॥

य एवेमं लोकमतिकरालवदनान्धकारसञ्ज्ञाजगरगृहीतं मृतकमिव
विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्या-
हरहरनुसवनं श्रेयसि स्वधर्माख्य आत्मावस्थाने प्रवर्तयत्य-
निमिषाधिपतिरसाधूनां भयमुदीरयन्नटति परित आशापालैस्तत्र
तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥ ३५ ॥

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिरभि-
वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ३६ ॥

सूत उवाच–
एवं स्तुतः स भगवान् वाजिरूपधरो रविः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥ ३७ ॥

यजुर्भिरकरोच्छाखा दशपञ्च शतैर्विभुः ।
जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ३८ ॥

जैमिनेः सामगस्यासीत् सुमन्तुस्तनयो मुनेः ।
सुमन्वांस्तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ३९ ॥

सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ।
सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजः ॥ ४० ॥

हिरण्यनाभः कोशल्यः पौष्यञ्जिश्च सुकर्मणः ।
शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥ ४१ ॥

उदीच्याः सामगाः शिष्या आसन् पञ्चशतानि वै ।
पौष्यञ्ज्यावन्त्ययोश्चापि तांश्चोदीच्यान् प्रचक्षते ॥ ४२ ॥

लौगाक्षिर्लाङ्गलिः कुल्यः कुसीदः कुक्षिरेव च ।
पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ॥ ४३ ॥

कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ।
शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥४४॥

अथर्ववित् सुमन्तुश्च शिष्यमध्यापयत् स्वकाम् ।
संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ ४५ ॥

शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ।
वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु
कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् ॥ ४६ ॥

बभ्रुः शिष्योऽप्यङ्गिरसः सैन्धवायन एव च ।
अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥ ४७ ॥

नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः ।
एते आथर्वणाचार्याः शृणु पौराणिकान् मुने ॥ ४८ ॥

त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
वैशंपायनहारीतौ षड् वै पौराणिका इमे ॥ ४९ ॥

अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।
एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ५० ॥

काश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ।
अधीमहि व्यासपुत्राच्चतस्रो मूलसंहिताः ॥ ५१ ॥

पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ।
श्रुणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ५२ ॥

सर्गश्चैव विसर्गश्च वृत्तिरक्षान्तराणि च ।
वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥ ५३ ॥

दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
क्वचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥ ५४ ॥

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ।
भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥ ५५ ॥

पुरुषानुगृहीतानामेतेषां वासनामयः ।
विसर्गो यः समाहारो जीवोऽजीवश्चराचरः ॥ ५६ ॥

वृत्तिर्भूतानि भूतानां चरणामचराणि च ।
कृतेशेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥ ५७ ॥

रक्षाऽच्युतावतारेहा विश्वस्यानु युगेयुगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥ ५८ ॥

मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः ।
ऋषयोंऽशावताराश्च हरेः षड्विधमुच्यते ॥ ५९ ॥

राज्ञां मनुप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ।
वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ ६० ॥

नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ।
संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥ ६१ ॥

हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ।
यं वाऽनुशायिनं प्राहुरव्याकृतमुतापरे ॥ ६२ ॥

व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु ।
मायामयासु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ ६३ ॥

पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु ।
बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥ ६४ ॥

विरमेत यदा चित्तं हित्वा वृत्तित्रयाश्रयम् ।
योगेन वा तदाऽऽत्मानं वेद नात्मा निवर्तते ॥ ६५ ॥

एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ।
मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥ ६६ ॥

ब्राह्मं पाद्मं वैष्णवं च शैवं लिङ्गं च गारुडम् ।
नारदीयं भागवतमाग्नेयं स्कन्दसञ्ज्ञितम् ॥ ६७ ॥

भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यं कौर्म्यं च ब्रह्माण्डाख्यमिति त्रिषट् ॥ ६८ ॥

ब्रह्मणैतत् समाख्यातं शाखाप्रणयनं मुने ।
शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविदीपनम् ॥ ६९ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे षष्ठोऽध्यायः ॥

# अथ सप्तमोऽध्यायः

शौनक उवाच–
सूत जीव चिरं साधो वद नो वदतां वर ।
तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥ १ ॥

आहुश्चिरायुषमृषिं मृकण्डुतनयं जनाः ।
यः कल्पान्तेऽप्युर्वरितो येन ग्रस्तमिदं जगत् ॥ २ ॥

स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः ।
नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते ॥ ३ ॥

एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल ।
वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥ ४ ॥

एष नः संशयो भूयान् जातः कौतूहलं यतः ।
तन्नश्छिन्धि महायोगिन् पुराणेष्वपि सम्मतः ॥ ५ ॥

सूत उवाच–
प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ।
नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥

प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् ।
छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥ ७ ॥

बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः ।
बिभ्रत् कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥

कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्धये ।
अग्न्यर्कगुरुविप्रांश्च स्वर्चयन् सन्ध्ययोर्हरिम् ॥ ९ ॥

सायंप्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ।
बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥ १० ॥

एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ।
आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥

ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे ।
नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥

इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ।
दध्यावधोक्षजं योगाद् ध्वस्तक्लेशोऽन्तरात्मना ॥ १३ ॥

तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः ।
व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥ १४ ॥

एतत् पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन् किलान्तरे ।
तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥

गन्धर्वाप्सरसः कामं वसन्तं मलयानिलम् ।
मुनये प्रेषयामास रजःस्तोभमदौ तथा ॥ १६ ॥

ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ।
पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥

तदाश्रमपदं पुण्यं पुण्यद्रुमलतान्वितम् ।
पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥

मत्तभ्रमरसङ्गीतं मत्तकोकिलकूजितम् ।
मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥

वायुः प्रविष्ट आदाय हिमनिर्झरसीकरान् ।
सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम् ॥ २० ॥

उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः ।
गायन्द्रुमलताजालैस्तत्रासीत् कुसुमाकरः ॥ २१ ॥

अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथपैः ।
अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥

हुत्वाग्निं समुपासीनं ददृशुः शक्रकिङ्कराः ।
मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥ २३ ॥

ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ।
मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥

सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा ।
मधुर्मनो रजःस्तोभ इन्द्रभृत्या व्यकम्पयन् ॥ २५ ॥

क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैः स्तनगौरवात् ।
भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥

इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दकम् ।
वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥

विससर्ज ततो बाणं मत्वा तं स्वजितं स्मरः ।
सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥

त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने ।
दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥

इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः ।
यन्नागादहमोभावं न तच्चित्रं महत्स्वपि ॥ ३० ॥

दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट् ।
श्रुत्वाऽनुभावं ब्रह्मर्षेर्विस्मयं समगात् परम् ॥ ३१ ॥

तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः ।
अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥

तौ शुक्लकृष्णौ नवकञ्जलोचनौ
चतुर्भुजौ रौरववल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत्
कमण्डलुं दण्डमृजुं च वैणवम् ॥ ३३ ॥

पद्माक्षमालामुत जन्तुमार्जनं
वेदं च साक्षात्तप एकरूपिणौ ।
तपत्तडिद्वर्णपिशङ्गरोचिषा
प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥

ते वै भगवतो रूपे नरनारायणौ ऋषी ।
वीक्ष्योत्थायादरेणोच्चैर्नमामाङ्गेन दण्डवत् ॥ ३५ ॥

एतत्सन्दर्शनानन्दनियतात्मेन्द्रियाशयः ।
हृष्टरोमाऽश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥

उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव ।
नमो नम इतीशानौ बभाषे गद्गदाक्षरम् ॥ ३७ ॥

तयोरासनमादाय पादयोरवनिज्य च
अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥

सुखमासनमासीनौ प्रसादाभिमुखौ मुनिः ।
पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥

मार्कण्डेय उवाच–
किं वर्णये तव विभो यदुदीरितासुः
संस्पन्दते तमनु वाङ्मनइन्द्रियाणि ।
स्पन्दन्ति वै तनुभृतामजशर्वयोश्च
स्वस्याप्यथापि भजतामनुभाववद्धः ॥ ४० ॥

मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः
क्षेमाय तापविरमाय च मृत्युजित्यै ।
नाना बिभर्ष्यनुपमान्यतनूर्यथेदं
सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥

तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं
यत्स्थं न कर्मगुणकालरजः स्पृशन्ति ।
यद् वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं
ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥

नान्यत् तवाङ्घ्र्युपनयादपवर्गमूर्ते
क्षेमं जनस्य परितोऽभय ईश विद्मः ।
ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः
कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥

तद् वै भजाम्यृतधियस्तव पादमूलं
हित्वेतदात्मभिदमात्मगुरोः परस्य ।
देहाद्यपार्थमसदित्यनभिज्ञमात्रं
विन्देय चेत् तर्हि सर्वमनीपितार्थम् ॥ ४४ ॥

सत्वं रजस्तम इतीश तवात्मबन्धो
मायामया स्थितिलयोदयहेतवोऽस्य ।
लीलाधृता यदपि सत्वमयः प्रशान्त्यै
नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥

तस्मात् तवेह भगवन्नथ तावकानां
शुक्लां तनुं स्वदयितां कुशला भजन्ति ।
यत् सात्वताः पुरुषरूपमुशन्ति सत्वं
लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥ ४६ ॥

तस्मै नमो भगवते पुरुषाय भूम्ने
विश्वाय विश्वगुरवे परदेवतायै ।
नारायणाय ऋषये च नरोत्तमाय
हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥

यं वै न वेद विततक्षपथैर्भ्रमद्धीः
सन्तं स्वखेष्वसुषु हृदयपि दृक्पथेषु ।
त्वन्मायया ऽऽवृतमतिः स उ एव साक्षा-
दा(द)द्यस्तवाखिलगुरोरुपपद्य वेदम् ॥ ४८ ॥

यद्दर्शनं निगम आत्मरहःप्रकाशं
मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ।
तं सर्ववादविषयप्रतिरूपशीलं
वन्दामहे पुरुषमात्मनि गूढबोधम् ॥ ४९ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः

सूत उवाच–
संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता ।
नारायणो नरसखः प्रीत आह भृगूद्वह ॥ १ ॥

श्रीभगवानुवाच–
भो भो ब्रह्मर्षिवर्यासि सिद्ध आत्मसमाधिना ।
मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥

वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ।
वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥

ऋषिरुवाच–
जितं ते देवदेवेश प्रपन्नार्तिहराच्युत ।
वरेणैतावताऽलं नो यद् भवान् समदृश्यत ॥ ४ ॥

वाञ्छन्त्यजादयो यस्य श्रीमत्पादाब्जदर्शनम् ।
मनसा योगपक्वेन स भवान् मेऽक्षगोचरः ॥ ५ ॥

अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे ।
ईक्षे मायां यया लोकः सपालो वेद सद्भिदाम् ॥ ६ ॥

सूत उवाच–
इतीरितोऽर्चितः काममृषिणा भगवान् मुने ।
तथेति सस्मयं प्रागाद् बदर्याश्रममीश्वरः ॥ ७ ॥

तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ।
वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् ।
क्वचित् पूजां विसस्मार भक्तिप्रसरसम्प्लुतः ॥ ९ ॥

तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुने ।
उपासीनस्य सन्ध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥

तं चण्डशब्दं समुदीरयन्तं
बलाहका अन्वभवन् करालाः ।
अक्षस्थविष्ठा मुमुचुस्तडिद्भि
स्तन्वन्त उच्चैरभिवर्षधाराः ॥ ११ ॥

ततो व्यदृश्यन्त चतुःसमुद्राः
समन्ततः क्ष्मातलमाग्रसन्तः ।
समीरवेगोर्मिभिरुग्रनक्र-
भयानकावर्तगभीरघोषाः ॥ १२ ॥

अन्तर्बहिश्चाद्भिरतिद्युभिर्घनैः
शतह्रदाभिरुपतापितं जगत् ।
चतुर्विधं वीक्ष्य महामना मुनि-
र्जलप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥

तस्यैवमुद्वीक्षत ऊर्मिभीषणः
प्रभञ्जनाघूर्णितवार्महार्णवः ।
आपूर्यमाणः प्रवृषद्भिरम्बुदैः
क्ष्मामप्यधाद् द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥

सक्ष्मान्तरिक्षं सदिवं सभागणं
त्रैलोक्यमासीत् सहसाऽद्भिराप्लुतम् ।
स एक एवोर्वरितो महामुनि-
र्बभ्राम विक्षिप्तजटो जडान्धवत् ॥ १५ ॥

क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलै-
रुपद्रुतो वीचिनभस्वता हतः ।
तमस्यपारे पतितो भ्रमन्दिशो न
वेद खं गां च परिश्रमोषितः ॥ १६ ॥

क्वचिन्मग्नो महावर्ते तरलैस्ताडितः क्वचित् ।
यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥

क्वचिच्छोकं क्वचिन्मोहं क्वचिद् दुःखं सुखं भयम् ।
क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुपद्रुतः ॥ १८ ॥

अयुतायुतवर्षाणां सहस्राणि शतानि च ।
व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥ १९ ॥

स कदाचिद् भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः ।
न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥

प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ।
शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥

महामरकतश्यामं श्रीमद्वदनपङ्कजम् ।
कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥

श्वासैजदलकव्रातमिश्रश्रीकर्णदाडिमम् ।
विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥

पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् ।
श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥
चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् ।
मुखे निधाय विप्रेन्द्र धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥
तद्दर्शनाद् वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ।
प्रहृष्टरोमाऽद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥
तावच्छिशोर्वै श्वसितेन भार्गवः
सोऽन्तःशरीरं मशको यथाऽविशत् ।
तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो
यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥
खं रोदसी भगणानद्रिसागरान्
द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान्
खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥
महान्ति भूतान्यथ भौतिकान्यसौ
कालं च नानायुगकल्पकल्पनम् ।
यत् किञ्चिदन्यद्व्यवहारकारणं
ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥
हिमालयं पुष्पवहां च तां नदीं
निजाश्रमं यत्र ऋषीनपश्यत् ।
विश्वं विपश्यन् श्वसिताच्छिशोर्वै
बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥
तस्मिन् पृथिव्याः ककुदि प्ररूढं
वटं च तत्पर्णपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन
निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥
अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ।
अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥
तावत् स भगवान् साक्षाद् योगाधीशो गुहाशयः ।
अन्तर्दधे ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥
तमन्वथ वटो ब्रह्मन् सलिलं लोकसम्प्लवम् ।
तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत् स्थितः ॥ ३४ ॥

॥ इति श्रीमद्भागवते द्वादशस्कन्धे अष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः

सूत उवाच–
स एवमनुभूयेदं नारायणविनिर्मितम् ।
वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥

ऋषिरुवाच–
प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे ।
यन्माययाऽपि विबुधा मुह्यन्त्यज्ञानकातराः ॥ २ ॥

सूत उवाच–
तमित्थं निभृतात्मानं वृषेण दिवि पर्यटन् ।
रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥
अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ।
पश्येमं भगवन् विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥
निभृतो नन्वृपिव्रातस्तपापाये यथाऽर्णवः ।
कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

श्रीभगवान् उवाच–
नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥
अथापि संवदिष्यामो भवान्येतेन साधुना ।
अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥
इत्युक्त्वा समुपेयाय भगवान् स सतां गतिः ।
ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥
तयोरागमनं साक्षादीशयोर्जगदात्मनोः ।
न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥
भगवांस्तदभिज्ञाय गिरिशो योगमायया ।
आविशत् तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥
आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् ।
त्र्यक्षमष्टभुजं शम्भुमुद्यन्तमिव भास्करम् ॥ ११ ॥

